# अथ माध्यन्दिनीयसंहिता-शुक्लयजुर्वेदः

॥ उवटभाष्यसहितः प्रारभ्यते ॥

ॐ श्रीगणेशाय नमः। श्रीमते यजुर्वेदाय नमः॥ हृदयं दक्षिणं चाक्षि मण्डलं † चाधिरुह्य यः। चेष्टते तमहं नौमि ऋग्यजुःसामविग्रहम् (१)॥ १॥ आदित्याल्लब्धवान्यस्तु शाखाः पञ्च-

श्रीगणेशाय नमः। श्रीम्॥ ऋग्यजुःसामतत्त्वज्ञान् सच्चिदानन्दविग्रहान्॥ सर्वतन्त्रस्वतन्त्रश्रीवामशास्त्रि-गुरून्नुमः॥ १॥ प्रणम्य श्रीबालकृष्णतातपादांश्च मातरम्। मन्दानां श्रीउवटभाष्येव क्रियते सूक्ष्मटिप्पणम्॥ २॥ अथ प्रजापतिपरम्परातः समधिगतं वेदब्रह्मराशिमिदानीं तनान् जनानालस्यानवधानताबुद्धिमान्द्यादिदोषदूषितान् आलोच्य परमकारुणिकः श्रीभगवान्नारायणावतारो बादरायणश्चतुर्धा विभज्य अध्यापयामास पैलं, वैशम्पायनं, जैमिनिं सुमन्तुश्चेति महर्षिभ्यस्ते च स्वशिष्येभ्यः। केचित्तु, पद्यं गद्यं गीतिभेदेन ऋग्यजुःसामाख्यास्त्रय एव विभागाः अथर्ववेदस्तु त्रिभ्य एतेभ्यः समुच्चितोऽथर्वाङ्गिरस इति वदन्ति, तत्रमानमन्वेष्यम्। ततो वैशम्पायनादधीतवेदो महर्षिर्याज्ञवल्क्यो दैवयोगात्क्रुद्धं गुरुं प्रत्यर्पयामास योगबलेन वेदराशिमधीतम्। ततो निर्वेदी निर्विण्ण आदित्यात्तपसा तोषिताद्वाजिरूपधरादधिगतवानस्तं वेदराशिमिति स्पष्टं शौनीरभाष्यादौ। तमिमं शुक्लयजुर्वेदब्रह्मराशिं व्याचिख्यासुस्तत्र भगवानुव्वटाचार्यो निर्विघ्नपरिसमाप्तिकामो मङ्गलादीनि मङ्गलमध्यानीत्यादि पस्पशाह्निकस्थमहाभाष्यादिप्रमाणकशिष्टाचारप्राप्तं मङ्गलं भाष्यादौ निबध्नाति। (१) हृदयमिति।

हृदयस्यादित्यब्रह्माधिकरणत्वस्य श्रुतत्वात्तया तदधिष्ठातारम्। एवं दक्षिणाक्ष्णः सूर्यमण्डलस्य च "तदेतद्यत्स-

† मण्डलं दक्षिणं चाक्षि हृदयं—१ पु पाठः।

दयापरः। (२) तं याज्ञवल्क्यं वन्देहं मन्त्रभाष्यप्रसिद्धये ॥२॥ गुरुतस्तर्कतश्चैव तथा शातपथश्रुतेः। मटपीन्वक्ष्यामि मन्त्राणां देवताश्छान्दसं च यत् *॥३॥ ऋचो यजूंषि सामानि तथार्थः पदवाक्ययोः। श्रुतयश्चात्र याः प्रोक्ता योर्थवादश्च कर्मणः॥ ४ ॥ तत्र पूर्वस्मिन्कल्पे विशिष्टकर्मजनितस्मृतिसंस्कारसन्तानानुच्छित्तिधर्माणः (३) सुप्तप्रबुद्धन्यायेन हिरण्यगर्भप्रभृतयः कल्पादौ सह विद्य-

त्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुष एतदुभयं सत्यम्" इत्यादिश्रुतिभिरादित्याधिकरणतया उक्तत्वेन तदधिष्ठातारं चेत्यर्थः।

(२) जाबाल, १ गौधेय, २ काण्व, ३ मध्यंदिन, ४ शापीय, ५ तापनीय, ६ कापाल, ७ पौण्ड्रवत्स, ८ आवटिक, ९ परमावटिक, १० पाराशर, ११ वैणेय, १२ वैनेय, १३ औधेय, १४ गालव, १५ इत्येते पञ्चदश शिष्यास्तैः प्रवर्तिताः पञ्चदश शाखाः। तदुक्तं होलीरभाष्ये 'तेन याज्ञवल्क्येन तानि यजूंषि महर्षिभ्यः पञ्चदश समर्पितानि' तेषां चिन्मते सप्तदश शाखाभेदाः॥

(३) (विशिष्ट-धर्माणः) अत्र पूर्वपदानां समासं कृत्वा पश्चात् धर्मशब्देन बहुव्रीहिः तेन धर्मादनिच् केवलादिति समासान्तानिच्सिद्धिः।

* मन्त्रदेवतयेत्र—२ पु० पाठ।

याभिव्यज्यमानाः स्मर्तारो द्रष्टार ऋषय उच्यन्ते। सोयं हिरण्यगर्भपरम्पराऽभिव्यक्तो नित्यो वेदः। हिरण्यगर्भपरम्परा ब्रह्मपङ्क्तिः ‡। तेच श्रुतौ व्यज्यमाना ज्ञायन्ते। तद्यथा। "तत एतं परमेष्ठी प्राजापत्यो यज्ञमपश्यद् यद्दर्शपूर्णमासाविति"। तत्र दर्शपूर्णमासद्रव्यदेवतामन्त्रादि परमेष्ठिना दृष्टमित्यर्थः। तथा "दध्यङ् ह वा आथर्वण एतं शुक्रमेतं यज्ञं विदांचकार" इत्युपक्रम्य "न तदुहाश्विनोरनु श्रुतमास" इत्येवमादिनेतिहासेन प्रवर्ग्यगतानां मन्त्राणां दध्यङ्ङाथर्वण ऋषिरिति गम्यते। ऋषिश्च ज्ञातव्य इति दर्शयति। "प्रजापतिः प्रथमां चितिमपश्यदि" त्युपक्रम्य "स यो हैतदेवं चितीनामार्षेयं वेदे" त्यादिना ग्रन्थेन फलं दर्शयति। अथ देवता मन्त्रवाक्याभिधेयाः। यथा "अग्निर्मूर्द्धा दिवः ककुदि" त्यत्राग्निः। "इषेत्वे" ति शाखा। नन्वग्निर्मूर्द्धेत्यत्राग्नेर्महाभाग्यत्वाद्देवतात्वमुपपद्यते शाखादीनां तु स्थावरत्वाद्देवतात्वं दुर्लभमिति यश्चोदयेत् तं प्रतिब्रूमः। यस्य यत्र हविर्भाक्त्वं स्तुतिभाक्त्वं वा विद्यते सा तत्र देवता न तु रूक्षा। एवं च सति

‡ हिरण्यगर्भपरम्परा ब्रह्मपङ्क्ति।—२ पु० नास्ति।

शाखादीनां देवतात्त्वमुपपद्यतएव। यदुक्तं स्थावरत्वादिति, अत्र ब्रूमः। अधिष्ठात्र्यो देवताः विद्यन्ते, प्रतिमाभूतास्तु शाखादयस्ताः फलं (४) साधयन्तीत्यदोषः। मन्त्रस्य वाच्यं देवतेति श्रुतिर्दर्शयति। "आयुः शिशानो वृषभो न भीम" इत्युपक्रम्य "ऐन्द्रोभिरूपा" इति इन्द्रस्य देवत्वं दर्शयति। छन्दोपिज्ञेयमित्यनेनैव दर्शयति येनैवमाह "दक्षिणतोऽसुरान्रक्षांसि अपहन्ति त्रिष्टुभिर्वज्रो वै त्रिष्टुबित्युपक्रम्य ता द्वाविंशतिर्गायत्र्यः संपद्यन्ते तदाग्नेय्यो भवन्तीति। नक्षत्रच्छन्दोविद्देवतामाग्नेयीं संपदं वेदेति"। ऋचो यजूंषि चात्र विद्यन्ते तानि च ज्ञेयानीत्यत्र श्रुतिर्भवति। "यां वै देवतामृगभ्यनूक्ता यां यजुः सैव देवतासर्वा देवता तद्यजु" रिति, उपासनार्थञ्च ऋग्यजुषयोः पृथग्ग्रहणमतो ज्ञेयं ऋग्यजुषमिति। नियताक्षरपादावसानाऋक्। अनियताक्षरपादा-

(४) ऋषिच्छन्दोदेवताविनियोगार्थज्ञानपूर्वकमेव स्वाध्यायाध्ययनं कर्त्तव्यमन्यथा दोषः एतान्यविदित्वा योधीतेऽनुब्रूते जपति जुहोति यजते याजयते तस्य ब्रह्म निर्वीर्यं यातयामं भवत्यथान्तरायश्च गर्त्तं वा प्रपद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयान् भवतीति कात्यायनेनोक्तः। तत्र यजुषां षडुत्तरशताक्षरावसानानामेकाक्षरादीनां पिङ्गलेन दैव्येकम् आसुरीपञ्चदशेत्यादुक्तं छन्दो बोद्धव्यम्।

वसानं यजुः। प्रगीतं मन्त्रवाक्यानाम् *। अथ पदार्थः। तत्र 'चत्वारि पदजातानि नामाख्यातोपसर्गनिपाता'इति नैरुक्ताः पठन्ति। तत्र नाम पञ्चप्रकारं पठन्ति। 'धातुजं धातुजाज्जातं समर्थार्थजमेव च। वाक्यजं व्यतिकीर्णं च निर्वाच्यं पञ्चधा पदम्'। तत्र धातुजम्। वन्दारुः, (५) पचमानः †। धातुजाज्जातं तद्धितपदम्। आग्नेयः, याजमानम्, ऐन्द्राय। समर्थार्थजः समासः। स च संक्षेपतश्चतुःप्रकारः। अव्ययीभावस्तत्पुरुषो द्वन्द्वो बहुव्रीहिः। अथोदाहरणानि। उपरिनाभि, बहिष्पिण्डम्। प्रजापतिः, पशुपतिः। अग्नीषोमौ, इन्द्राग्नी। कृष्णग्रीवः, सितिकण्ठः। यथासंख्यं द्वे द्वे उदाहरणे। वाक्यजम् "क्रयस्य रूपं सोमस्य लाजा" इत्यत्र सोमस्य क्रयस्य रूपं लाजा इत्येवं प्राप्ते रूपशब्देन व्यवधानं व्यत्ययश्च। व्यतिकीर्णमन्यत्र प्रसिद्धं यत्पदत्त्वेन तत्प्रतिरूपका ये वर्णास्तैः सहोच्चार्यते यत्तत्। पार्श्वतः श्रोणितः शितामत इत्यत्र शितामतइति। त्वमग्नेद्युभिस्त्वमा-

(५) वन्दारुरित्यत्र शृवन्द्योरारुरितिपा॰सूत्रेण वन्दधातो रारुप्रत्ययः।

---

* नियताक्षरैर्व्यारभ्य—वाक्यानाम्—इत्यन्त वाराणसेयपुस्तके नास्ति।

† यजमानः, यक्ष्मानः इति १ पु॰ अधिकम्।

गयचणिरित्यत्राग्रचणिरिति। तत्र नाम्नां सामान्यतोऽर्थवचनं सत्त्वप्रधानानि नामानि। सतो भावः सत्त्वमस्तिता। तद्यत्र प्रधानन्तन्नाम, गुणभूता क्रिया, विभक्त्यर्थः कारकञ्च। तानीमानि सत्त्वप्रधानानि नामानीतिनाम्नोऽर्थः। अथ भावप्रधानमाख्यातम्। भावो नाम क्रियायाः फलम्। तद्यथा ओदनं पचति देवदत्त इत्यत्र देवदत्ताख्यया ओदनाख्यस्य भावस्य गुणभूता पाकक्रिया, अतो भावप्रधानमाख्यातमित्युच्यते। यद्वा भावप्रधानं भावनाप्रधानं, भावना च पुरुषपरिस्पन्दः पुरुषप्रयत्नः आत्मनो व्यापारः। परिस्पन्दस्तु भूतानां सा यत्र प्रधानं गुणभूता क्रिया तदिदं भावप्रधानमाख्यातम्। अथवा भावो धात्वर्थः क्रियेत्यनर्थान्तरं, सा यत्र प्रधानं गुणभूतानि षट्कारकाणि तदिदम्भावप्रधानमाख्यातम् इत्याख्यातार्थः। तानि च पचति पठतीत्यादीनि। अथ विंशतिरुपसर्गाः क्रियाविशेषकरा इति सामान्यतोऽर्थः। विशेषार्थस्त्वनन्त इति। ते च प्र-परा-अप-सम-अनु-अव-इत्याद्यः। अथ निपातानामर्थः सामान्यतोऽसत्त्ववचनता। सत्त्वं द्रव्यमसत्त्वमद्रव्यम्। तद्वचनाश्चाद्यो निपाता असत्त्ववचनाः ‡। अथ त्रैराश्यम्। उपमार्थीयाः, कर्मोपसंग्रहार्थीयाः, पादपूरणा इति।

‡ एवं पूर्व्वमित्यारभ्य वचना इत्यन्तं १ पुस्तके नास्ति।

तत्रोपमार्थीयाः सादृश्यवचनाः इव-न-इत्यादयः। तद्यथा-"देव इव सविता सत्यधर्मा। इन्द्रो न"॥ कर्मोपसंग्रहार्थीयास्सहायत्ववचनाः च वा अह इत्यादयः। तद्यथा "वातो वा, मनो वा, अग्निश्च पृथिवी चे"त्यादयः। पादपूरणाः पादमेव पूरयन्ति न त्वर्थान्तरं वदन्ति अनर्थान्तरवचना इत्यर्थः। ईं कम् इत्यादयः। "सद्योजज्ञानो विहो, इमानु कं सुवना"। उक्तं च 'क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् (१)। सत्त्वाभिधायकं नाम निपाताः पादपूरणा' इति। अथ वाक्यार्थं व्याख्यास्यामः। नामाख्यातोपसर्गनिपातसमुदायो वाक्यम्। तस्यार्थो वाक्यार्थः। ननु यदि पदान्येव संहतानि वाक्यमुच्यते एवं तर्हि य एव पदार्थः स एव वाक्यार्थस्ततः पृथग्वाक्यार्थव्याख्या नोपपद्यत इति यश्चोदयेत् तं प्रत्याह। साकाङ्क्षः पदार्थो निराकाङ्क्षो वाक्यार्थः। गौरित्युक्ते किमित्याकाङ्क्षा भवति ततो गच्छतीत्युक्ते निराकाङ्क्षं भवति। तथा गच्छतीत्युक्ते किमित्याकाङ्क्षा भवति ततो गौरित्युक्ते निराकाङ्क्षं भवति। अथेदानीं गौर्गच्छतीत्युक्ते यत्र गौर्वाहदोहादिभ्यो व्यावृत्य

(१) (विशेषकृत्) विशेषार्थप्रतिपादक। तदुक्तं। उपसर्गेण धात्वर्थो बलादन्यत्र नीयते। प्रहाराहारसंहारविहार परिहारवत् इति। (कर्म) द्रव्यं तच्च लिङ्ग संख्यान्वितं भवति।

गमनेनातिष्ठते, गमनं चान्यगन्तृभ्यो व्याहृत्य गव्येवावतिष्ठते अयं वाक्यार्थः। स एव प्रकरणाविरोधी वाक्यार्थः पदार्थनियमे हेतुः। पदं तु पदार्थपरिज्ञानहेतुः। अयं पदार्थवाक्यार्थयोरर्थविशेषः। नन्वस्य पदचतुष्टयस्य वाक्यगतस्य कथं गुणप्रधानभाव इति, उच्यते। पदार्थद्वारकः सम्बन्धो गुणप्रधानभावश्च पदानाम्। तत्र प्रधानमाख्यातं गुणभूतान्यन्यानि, आख्यातार्थस्य साध्यत्वाद् इतरेषां पदार्थानां स्वभावसिद्धत्वात्। तत्र सिद्धार्थसाध्यार्थयोर्यदेकस्मिन्वाक्ये समुच्चारणं तत्साध्यार्थं भवितुमर्हति न सिद्धार्थम्। तथाच भूतं सिद्धं भव्यं साध्यम्। 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते न भव्यं भूतायेति न्यायविदः पठन्ति। एते च वाक्यार्था इषेत्वादिके मन्त्रगणे प्रायशो दृश्यन्ते। 'विध्यर्थवादयाच्ञाशीः स्तुतिप्रैषप्रवल्हिकाः। प्रश्नो व्याकरणं तर्कः पूर्ववृत्तानुकीर्त्तनम्। अवधारणञ्चोपनिषद्वाक्यार्थाः सुस्त्रयोदश। मन्त्रेषु ये प्रदृश्यन्ते, व्याख्या च श्रुतिचोदिता'। अथैतेषामुदाहरणानि। तत्र विधिः परमेष्ठ्यभिधीतः "अश्वस्तूपरो गोमृग" इत्यादिः। अर्थवादः "देवा यज्ञमतन्वते"त्यादि। याच्ञा "तनूपा अग्नेऽसि तन्वं मे पाहि"। आशीः "आ वो देवास ईमहे"। स्तुतिः "अग्निर्मूर्द्धा दिवः ककुत्"। प्रैषः "होता यक्षत्समिधाग्निमि"त्यादिः।

प्रवल्हिका "इन्द्राग्नी अपादियमि"त्यादि। प्रश्नः "कः स्विदेकाकी चरती"त्यादि। व्याकरणम् "सूय एकाकी चरती"त्यादि। तर्कः "मापृधः कस्य स्विद्धनम्"। पूर्वेष्टानुकीर्त्तनम् "ओषधयः समवदन्ते"त्यादि। अवधारणम् "तमेव विदित्वातिमृत्यु,मेति"। उपनिषत् "ईशावास्यमि'त्यादि। अथ व्याख्याधर्माः। 'अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत्। विप्रकृष्टं तु सन्दध्यादानुपूर्व्यञ्च कल्पयेत्। लिङ्गं धातुं विभक्तिं च योज्यं वाक्यानुलोमतः *। यद्यत्स्याच्छान्दसं वाक्यं † कुर्य्यात्तत्तु लौकिकम्। अथोदाहरणानि। अतिरिक्तं पदं त्याज्यमिति यथा,—'इमा नु कं भुवनासीषधामा', कमित्यनर्थको निपातः। हीनं वाक्ये निवेशयेत्—'अस्मादन्नादिति भागमवेक्षते' इत्यत्राधस्तनो मन्त्रशेषः इहाप्यभिसन्धानीयः अस्मादन्नान्निर्भक्त इत्यादि। विप्रकृष्टं तु संदध्यादिति—"सं रेवतीर्जगतीभिः पृच्यतामि"त्यत्र संपृच्यतामिति व्यवहितसंबन्धः। आनुपूर्व्यं च कल्पयेदिति—"मानो मित्रो वरुणो अर्यमायु"रित्यत्र "यद्वाजिनोदेवजातस्येति" द्वितीयोऽर्द्धर्चः प्रथमं व्याख्येयः। यतो हि यद्वृत्तं ‡ वाक्ये प्रथमं भवति। लिङ्गं धातुं विभक्तिं च यथार्थं § सन्त-

* वाक्यानुलोम्यत.—पा० वा० पु०। † वाक्यं—पा० वा० पु०। ‡ वृत्तं पा० वा० पु०। § वाक्यविशेषार्थं—पा० वा० पु०।

2

मयेत्। लिङ्गं तु वाक्यवशात्सन्नमयेत् *। 'पवित्रे स्थो वैष्णव्यौ'। अत्र पवित्रे इति नपुंसकलिङ्गं वैष्णव्याविति पुंलिङ्गम्, तत्र वैष्णव्यावित्यस्य सन्नतिराविष्टलिङ्गत्वात्पवित्रशब्दस्य। धातुं धात्वर्थं च सन्नमयेत्। "अग्रेगुवो अग्रेपुव" इति। अत्र अग्रेपुव इति संदेहः किमत्र पिबते-रूपमुत पवतेः, तत्र श्रुतितो निर्णयः "ता यत्प्रथमाः सोमस्य राज्ञो भक्षयन्ती"ति व्याख्या-नात्पिबतेरेव रूपमिति। "कस्मै देवाय हविषा विधेमे"ति हविषेति तृतीयाया द्वितीयास-न्नतिः वाक्यसंयोगात्। अन्यदपि यत्किञ्चिच्छान्दसं तत्सर्वं लोकविदतैः शब्दैर्व्याख्येयमित्ययं सामान्यो व्याख्याक्रम उक्तः। अतः परं वैशेषिकमनुक्रमिष्यामः। अथ (१) इषे त्वा द्वाव-ध्यायौ दर्शपूर्णमासमन्त्राः। परमेष्ठिनः प्राजापत्यस्यार्षं देवानां वा प्राजापत्यानां, "तत एतं परमेष्ठी प्राजापत्यो यज्ञमपश्यद्यद्दर्शपूर्णमासावि"तिश्रुतेः। परमेष्ठिन आर्षम्। तथा "ते देवा

(१) अत्र महीधरभाष्ये तत्राद्याध्यायद्वितीयाध्यायाष्टाविंशतिकण्डिकायेति दर्शपूर्णमासमन्त्राः, तेषां परमेष्ठी प्रजापतिऋषिर्देवता, प्राजापत्या वा। द्वितीयाध्यायान्तिमकण्डिकाषट्कं पितृयज्ञमन्त्रास्तेषां प्रजापतिऋषिः।

* लिङ्गं तुवाक्यवशात्सन्नमयेत्—इति १ पु नास्ति।

अकामयन्ते"त्युपक्रम्य "तत एतं हविर्यज्ञं ददृशुर्यद्दर्शपूर्णमासावि"ति देवानामार्षं कथ्यते। तत्रास्मिन्नध्याये सर्वाण्येव यजूंषि। पुरा क्रूरस्येतीयं त्रिष्टुप्। तत्र यजुषां केचिद्वैशेषिकं छन्दइच्छन्ति पिङ्गलपरिपठितं दैव्येक (२) मित्यादिनेति। तत्र च सर्वसंख्याया व्यवहारः,

## ॥ ॐ वेदपुरुषाय नमः ॥ हरिः ॐ ॥ * इषेत्वा। इषेत्वोर्जे त्वा

"पाद" इत्युपरिष्टादधिकारात्। (३) तत्र 'इषे त्वा' द्विपदो मन्त्रः अक्षरत्वाद्दैवत्यनुष्टुप्। त्युत्या शाखाच्छेदे विनियुक्तः। न चाख्यातमुपलभ्यतेऽत्र, न चाख्यातं विना वाक्यं किञ्चिद्विवक्षितं

(२) तत्र छन्दः। गायत्री। इत्यधिकृत्य, दैव्येकम्। आसुर्यापञ्चदश। प्राजापत्याष्टौ। यजुषां षट्। साम्नां द्विः। ऋचां त्रिः। इत्युयताम्।

(३) अवेदं बोद्धव्यम्। प्रथमतः प्रकृतित्वाद् दर्शपूर्णमासमन्त्रा अत्र पठ्यन्ते। यत्र च साकल्येनाङ्गानामुपदेशः सा प्रकृतिः। यत्र केवलं विशेषाङ्गोपदेशोऽङ्गान्तराणि च प्रकृतेरतिदिश्यन्ते सा विकृतिः। प्रकृतिश्च अग्निहोत्रेष्टिसोमभेदेन

---

* प्रथमाध्यायस्यानुवाकसूत्रम्। इषेत्वैका १, वसोः पवित्रं तिस्रो ३, अग्ने व्रतपते सप्त ७, पवित्रे स्थोद्वे २, धर्मासि-तिस्रो ३, धृष्टिरसिग्रावासि द्विके २, देवस्य त्वा तिस्रो ३, देवस्य त्वा पञ्च ५, प्रत्युष्टं रक्षस्तिस्रो ३ एकविंशत्।

इत्यध्याहारेणानुषङ्गेण वा वाक्यपरिपूर्त्तिः कर्त्तव्या। नन्वध्याहारानुषङ्ग्योः को विशेषः। लौकिकोध्याहारः यथा "भूताय त्वा नारातये परिशेपयामि पिनष्टि," प्राणायत्त्वेति प्रतिमन्त्रम्। प्राणाय त्वा पिनष्टि। अनुषङ्गस्तु मन्त्रावयव एव। यथा "अस्मादन्नान्निर्भक्तो योस्मान्द्वेष्टि यं च वयं द्विष्मः"। तथा "अस्यैप्रतिष्ठायै निर्भक्त" इत्यादिविष्णुक्रममन्त्रेषु पठितमिहाभिसंबध्यते परिपूर्णत्वाद्वाक्यस्य। अयं विशेषोध्याहारानुषङ्ग्योः। इह त्वन्यशाखापरिपठितेनाख्यातेन सूत्रका-

# व्वायवंस्थदे वोवंः सवितापार्पयतुश्रे छ्ठतमायकर्म्मगाऽआप्या-

रेण वाक्यपरिपूर्तिः कृता 'छिनद्मीति चोभयोः साकाङ्क्षत्वात्सन्नमयामीतिचोत्तर' इति। अथ कोर्थः। यास्त्रा उच्यते। इषे, अन्नाय त्वां छिनद्मीति। इषु इच्छायाम्, तस्य क्विपि इट् इति रूपं भवति तस्य तादर्थ्ये च चतुर्थी "इषे" श्रुतयत्तामभिधेयं दृष्टेः तदाह 'यदाह इषे त्वेति दृष्टिः सर्वैर्णैवेप्यते'। अतोभिधानगतस्य धातोरभिधेयक्रिया विद्यतइति। इषं इत्यभिधानम् अभिधेया दृष्टिः।

विधा। अथ कृताधानस्यैव दर्शपूर्णमासयोरधिकारादाधानमन्त्रा एव प्रथमं पठनीया सत्यम्' आधानेऽपि पावमान्यादीष्टीनाग्तसाम्ना च दर्शपूर्णमासविकृतित्वात्त एव प्रथमं पठनीया इति सामञ्जस्यात्।

न्याय्योऽभिधानाभिधेयलक्षणसंबन्धः। "त्वा" इति। युष्मदो द्वितीयैकवचनस्य स्थाने आदेशः। नन्वेवं तत्र यदि एषणक्रियायोगादिह इष्टिरभिधीयते न तु रूढ्या तदानीं यद्यद्धिरण्यादि किञ्चिदिष्यते तत्तत्सर्वमिडित्युच्येत, तथा सति संव्यवहारोच्छेद इत्येवमादीन्दोषान्के चिद्विदधति, तदसत्। सिद्धे हि शब्दार्थसंबन्धे पश्चादभिधानाभिधेयभावं क्रियाद्वारकं प्रकाशयितुं व्युत्पत्तिः क्रियते। सा च क्रियमाणा तस्मिन्नेवाभिधेये ऽवतिष्ठते मगधाधिपतिवत्। यथा मगधाधिपतेर्मगधेषु

## यध्वमघ्न्याऽ इन्द्राय भागम्प्रजावतीरनमीवाऽअयक्ष्मामावस्ते-

देशेष्वाधिपत्यमस्ति न कान्यकुब्जेषु, एवमिहापि जात्यादिपरिच्छिन्नेष्वभिधेयेषु क्रियाप्रवृत्तिरस्ति न सर्वत्रेत्यदोषः। व्युत्पत्तिद्वारेण च शब्दानां परिज्ञानमभ्युदये हेतुरिति श्रुतिर्दर्शयति। "तत्प्रणीतानां प्रणीतात्वं प्रति ह प्रतिष्ठति, य एवमेतत्प्रणीतानां प्रणीतात्वं वेदे"ति प्रणीताशब्दस्य निर्वचनपरिज्ञानद्वारेण फलं दर्शयति। तथा पुरुषशब्दव्युत्पत्तिं प्रकृत्याह। "स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुष ओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य

एवं वेद"। एवं तत्र तत्र। एतच्च स्थालीपुलाकभक्तावसथन्यायेन * (४) सर्वेष्वभिधेयेषु द्रष्टव्यम्। आह च। 'क्रियाकारकसंबन्धमभिधानाभिधेययोः। ज्ञात्वा फलमवाप्नोति श्रुतिर्वक्ति पुनः पुनः'॥ "ऊर्ज्जे त्वा" द्विपदत्र्यक्षरो मन्त्रः। दैव्यनुष्टुप् यदि यजुषां छन्दोस्ति। एवं सर्वेषु यजुःष्वृक्षु च वक्तव्यं, ग्रन्थगौरवभयात्तु नोच्यते। उक्तं च-स्वरो वर्णोक्षरं मात्रा

# नऽईं भ्रतुमाघशं꣡ऽसोईशाऽअस्मिन्गोपतौस्यातबह्वीर्य्यजमानस्य

तत्प्रयोगोऽर्थ एव च। मन्त्रं जिज्ञासमानेन वेदितव्यं पदेपदे'। शाखासंनमने विनियुक्तः। सन्न मयामीति वाक्यशेषः(५)। 'यो वृष्टादूर्ग्रसो जायते तस्मै तदाहे' तिश्रुतिः। ऊर्ज्ज बलप्राणनयोः। क्विप्। ऊर्ज्जे। तादर्थ्ये चतुर्थी। व्रीह्यादेर्धान्यस्य क्षीरादेश्च सेचनस्य उत्पत्त्यर्थं त्वां सन्नमयामि।

(४) स्थालीपुलाकन्यायो भक्तावसथन्यायश्च द्वावपि समानार्थौ। यथा कश्चित् पाकं कुर्वन्नपि क्लित्तिर्निष्पन्ना नवेति निश्चयाय स्थालीस्थितसिक्थसमूहमध्यादेकं सिक्थं विक्लित्तियुक्तमालोच्य सर्वत्र तथैव जानीते, एवमेकत्रोक्तमन्यत्रापि बोध्यम्। (५) संनमनं च शाखालग्नधूल्याद्यपनयनम्।

* भक्तावसथेति—पा० पु० नास्ति।

यज्ञपरिणामो हि वृष्टिरन्नादिकञ्च तदभिप्रायौ मन्त्रौ। श्रुतिश्चास्मिन्नर्थे भवति। "अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद्वृष्टि" रिति। तथा "इतः प्रदानाद्ध वृष्टिरितो ह्यग्निर्वृष्टिं वनुते स एतैः स्तोकैरेतान्स्तोकान्वनुते तएतेस्तोका वर्षन्तीति॥ "वायवस्थ"। वत्सं शाखयोपस्पृशति। यथा वायुर्वृष्टिद्वारेण गवामाप्यायकः एवं यूयमपि प्रस्नुतिद्वारेणाप्यायका भवथेत्यर्थः (१)। एकस्यापि वत्सस्योपस्पर्शने सर्वेषां संस्कारो बहुवचनोपदेशात्। पूजार्थं वा बहुवचनम्॥ "देवो वः सविता" अथ मातॄणामेकां शाखयोपस्पृशति। देवो दानादिगुणयुक्तः। देवो दानाद्ध द्योतनाद्दीपनाद्वेति यास्कः *। बहुवचनस्य वस्नसाविति युष्मदो द्वितीयाबहुवचनस्थाने वसादेशः। युष्मान् सविता सर्वस्य प्रसविता प्रार्प्पयतु समर्प्पयतु सङ्गमयतु श्रेष्ठतमाय कर्म्मणे। "यज्ञो वैश्रे ष्ठ-

(१) वान्ति गच्छन्तीति वायवो गन्तारः हेवत्सा यूयं मातृसकाशादन्यत्र गन्तारो भवथ। मातृभिः सार्धं गमने स्तनपाय दोषो न भवेदित्याशय। यद्वा वायुर्यथा पादचालनादुपहता भूमिमुपशोष्य पुनाति तद्वत्सा अपि गोमयादिदानद्वारा भूमिं पुनन्तीति वायुसादृश्यादत्सानां वायुत्वं, अथ वा यथा नृणां गृहाद्यावृतं भवति नैवं पशूनामिति निरावरणेऽन्तरिक्षे संचरणादन्तरिक्षमेव पशूनां देवता तदधिष्ठाता च वायुरिति स स्वावयवानिव पशून् रक्षतीति ते पालनाय वायवे समप्यन्त इति वायुरूपत्वं तेषामापाद्यते। तदुक्तं तैत्तिरीये "वायवस्थेत्याह वायुर्वान्तरिक्षस्याध्यक्षोऽन्तरिक्ष-

* देवो दानात् द्योतनाद्दीपनाद्वेति यास्कः इति १ पु० नास्ति।

तमं कर्मे"ति श्रुतिः। प्रशस्ततमाय कर्मणे(७) तादर्थ्ये चतुर्थी। यज्ञार्थमित्यर्थः। यूयमपियज्ञार्थं सविता सन्नमिताः सत्यः आप्यायध्वम्। ओप्यायी वृद्धौ णिचोलोपः। आप्याययत। हे अघ्न्याः (८) गावः। कम् इन्द्राय भागम्। तादर्थ्ये चतुर्थी। इन्द्रार्थं यो भागस्तमिति संबन्धः। इन्द्रोव हविर्भाक्। कथंभूताः सत्यः "प्रजावतीः"। छन्दसीति दीर्घत्त्वम्। प्रजावत्यः जीववत्साः। "अन-मीवाः" अमृरोगे। अमीवा व्याधिविशेषः। न विद्यते अमीवा यासां तास्तथोक्ताः। यक्ष्मा व्याधीनां राजा स यासां न विद्यते ता अयक्ष्माः। आदरार्थं पुनर्वचनम्। अथवा अयन-मयः गमनं, क्ष्मा पृथिवी, अयः क्ष्मायां यासां विद्यते घासभक्षणार्थं ता अयक्ष्माः। अनिवारित-गोमचारा इत्यर्थः। किञ्च मा वः युष्माकं स्तेनः चौरं ईशत। "माङि लुङ्"। मा युष्माकं चौरः ईशनं कार्षीदित्यर्थः। मा वः अघशंसः अघं पापं यः शंसति भक्षणार्थं वृकोवा चाण्डालो

ईशतः खलु पशवो वायवेएतान् परिददातीति। यद्यहनि तत्र तत्रारण्ये तृणानि भक्षयित्वा सायंदोहसमये वायुप्रेरणेन यजमानगृहे प्राप्तयं वायुस्त्वगत्प्रेषते वत्सानाम्। इति महीधरभाष्यम्।

(७) चतुर्विधं भवति कर्म अप्रशस्तं, प्रशस्तं, श्रेष्ठं, श्रेष्ठतमं, च। चौर्यादिकमप्रशस्तं, बन्धुवर्गपोषणादिकं प्रशस्तं, कृत्युक्तं वापीकूपतडागारामादिकं श्रेष्ठं, श्रुत्युक्तं यज्ञरूपं श्रेष्ठतमम् इति।

(८) अघ्न्याः गोवधस्योपपातकरूपत्वादनुमचोगता।

वा † मा ईशत । किञ्च "ध्रुवाः" शाश्वतिकाः । "अस्मिन्" गोपतौ यजमाने "स्यात" भवत "बह्वीः" बह्वः ॥ शाखामुपगूहति ‡ (८) "यजमानस्य पशून् पाहि" । यजमानस्य संबन्धिनः पशून् ; प्रकृतं गोवत्समभिप्रेतं दोहाङ्गभूतं पाहि गोपाय ॥ १ ॥ तस्यां पवित्रं करोति (१) । "वसोः पवित्र-

पुशून्पाहि* ॥ १ ॥ वसोः पवित्रम् । वसोः पवित्रमसि द्यौरसि पृथिव्यसि मातरिश्वनो घर्मोऽसि विश्वधा असि ॥ परमेण धा

मसि" । वसोर्वासयितुर्यज्ञस्य (२) । यज्ञसाधनभूते पयसि, अत्र यज्ञशब्दः । पयसः पवित्रं परि-

(८) हे पलाशशाखे त्वमुन्नतप्रदेशे स्थिता यजमानस्यारण्ये संचरतः पशून् व्याघ्रादिभयत्वाद्धि रक्ष । शाखाभिमानिनीं देवतामुद्दिश्योक्तिः शाखायामभिलायां विष्णुं संबोध्य षोडशोपचारपूजनवत् ॥ १ ॥ 'पर्णशाखां छिनत्ति शमिशों वेति' त्यादि ४ । २ । ११ । का० सू० अत्र मन्त्रे द्रष्टव्यम् ।

(१) 'वसोः पवित्रमिति पवित्रमस्यां बध्नाति कुशौ त्रिवृदे' ति' का० ४,२,१५ ।

(२) वासयति हृष्ट्यादिद्वारा स्थापयति विश्वमिति वसुर्यज्ञः "यज्ञो वै वसुः" इति श्रुतेः । तेन च हविर्द्रव्यरूपं क्षीरं लक्ष्यते । "वसोः पवित्रमसि" इति मन्त्रेण कुशद्वयरूपं कुशत्रयरूपं वा पवित्रं शाखायां बध्नातीति तात्पर्यम् ।

† शाखाआदिवा—पा० भा० पु० । ‡ गूहति आकारयति—पा० भा० पु० ।

पावनं भवसीत्यर्थः। उखामादत्ते। "द्यौरसि पृथिव्यसि"। "उपस्तौत्येवैनामेतदि"ति श्रुतिः। सा यद्दिवोऽवयवभूतेनोदकेन क्रियते तेन द्यौरित्युच्यते। यत्पृथिव्यवयवभूतया मृदा क्रियते तेन पृथिवीत्युच्यते। मातरिश्वन इत्यभियजति। उखोच्यते। "मातरिश्वनो घर्मोसि"। मातरिश्वा वायुः मातर्यन्तरिक्षे श्वसितीति। वायोः संबन्धी त्वं घर्मोसि। त्रयो घर्मा अग्निवायुसूर्यदेवत्याः। तत्र मध्यमघर्मः साधवे त्वेति "अयं वै साधुर्योयं पवते" इति। वायुदेवत्यः

# स्मा ह॒ठ॒ᳬ॑ह॒स्व॒ मा॒ह्वा॒स्मा॒तिं॑ य॒ज्ञप॑ति॒र्ह्वा॒र्षी॒त् ॥२॥ वसो॑: प॒वित्र॑म् ॥

स त्वमसीत्यर्थः। यतश्च त्वं वायुरतो "विश्वधा असि" सर्वस्य धारयिता भवसि (३)। किञ्च "परमेण धाम्ना दृꣳहस्व"। धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति। उत्कृष्टेन नाम्नाभिहिता सती घर्मोसीत्यादिना आत्मानं दृꣳहस्व दृढीकुरुष्वेत्यर्थः (४)। "माह्वाः" ह्वृ कौटिल्ये। माह्वार्षीः। दृढीभूतायामपि लुठितायां * पयःस्कन्दनं भवति तन्मा (५) भूदित्येवमु-

(३) तदेवं द्युपृथिव्यन्तरिक्षाणां त्रयाणां लोकानां धारणात् त्वं विश्वधा विश्वधारणसामर्थ्यं त्वयीत्यर्थः।

(४) चौरस्य स्रवणं वारयितुमेतत्। (५) लब्धिढचौरस्कन्दनोऽनुष्ठानविघ्ने यजमानस्य पृथग्वनं भवेदित्याशयः॥२॥

* वाकुटिलोभूः। कुटिलीभूतायां चलितायां—पाठ मा० पुर्व।

चरते। मा च तव यज्ञपतिरधिष्ठानात्प्रचरवतु ॥ २ ॥ 'तस्यां पवित्रं निदधाति' (६)। "वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम्"। अभ्यासे तुभयं समर्थं मन्यते। अनन्तधारमित्यर्थः। आसिच्यमाने जपति "देवस्त्वासविता"। पय उच्यते। देवस्त्वा सविता पुनातु दोषात्पृथक्करोतु निर्दोषं करोतु। वसोः अग्निष्टोमयज्ञस्य संबन्धिना आविकेन

वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् ॥ देव

अनेकधारेण पवित्रेण। "सुप्वा"। शोभनं पुनातीति सुपूः तेन सुप्वा साधुपवनेन पवित्रेण। अथाह "कामधुक्ष"इति। अन्नोयं गवां मध्ये त्वं कां गाम् अधुक्षः। दुह प्रपूरणे, दुग्धवा-

(६) 'वसो' पवित्रमिति पवित्रमस्यां करोत्युदङ्मेति कात्यायन ४।२।२१। तत्र प्रागग्रत्वं तु सामन्यत प्राप्तमेवेतुदगग्रत्व विकल्प्यते। "वसो" इन्द्रदेवतानिवासहेतोः पयस "पवित्र" शोधक त्वमसि। पवित्रेण व्यवधाने सति क्षीरेण सहपातिना तृणपर्णादीनां प्रतिबन्धकत्वात्पवित्रत्वम्। तच्च पवित्रं "शतधारं" शतसङ्ख्या धारा यस्मिन् तथा "सहस्रधारं" पवित्रच्छिद्रैः स्थाल्यां पतन्तीनां क्षीरधाराणां शतसहस्रसङ्ख्याकानां सद्भावात्। शोधकत्वमादृतं द्विरुक्तिः 'अभ्यासे भूयांसमर्थं मन्यन्ते' इति निरुक्तम्।

गु० नमि ॥ ३ ॥ अनुमितरक्ते दोग्ध्रा "साविश्वायु"रित्यध्वर्युराह (१)। सा गौः विश्वस्य जगत १
च० आयुषो दात्री। द्वितीयामाह। सा गौः "विश्वस्य" जगतः "कर्म्म" कर्त्री। तृतीयामाह। अ०
सं० सा गौः "विश्वस्य" जगतः धायाः। धायतेर्णिजन्तस्यासुनि रूपम्। पाययित्री। यस्मादेव कं०
१० स्त्वांसविताप्नातुव्वसोःप्वित्तेणशतधारेणसुप्वा कामंधुक्षः ॥३॥
उ० साव्विश्वायुः। साव्विश्वकर्म्मा साव्विश्वधायाः
भा० साव्विश्वधायाः

सर्वाः प्रजा उत्पद्यन्ते आयुर्भोजनसहिताः स गवासुपचर्य्यते। आतनक्ति (२)। "इन्द्रस्य त्वा भागम्"। इन्द्रस्य त्वा भागं सोमेन दध्ना आतनच्मि। तञ्चतिः कठिनीकरणार्थः। दोध-

(१) पूर्वोक्तमन्त्रोत्तरे यम्रं गामदुक्षमिति दोग्ध्रा प्रदत्तोऽध्वर्युर्दोग्धारं प्रति यागोसुषा दुग्धा मया च पृष्टा सा विश्वधीः विश्वमायुर्यस्याः, यजमानस्य पूर्णायुः प्रदात्रीत्यर्थः एवं द्वितीयतृतीयगावोरपि क्रमेण विश्वकर्मा विश्वधाया इत्युत्तरणीयम्। 'एवमितरे उत्तराभ्याम्' इति कात्यायनोक्तेः। विश्वधाया इत्यस्य विश्वान् सर्वान् देवान् दधाति क्षीरदध्यादिहविर्दानेन पुष्णातीत्यर्थो महीधरभाष्ये उक्तः।

(२) क्षीरमभ्रेरदाय्य कदुष्णे तस्मिन्प्रातःकालीनहोमावशिष्टदधा सन्नंकुर्यादित्याशयः। तदास्यातनक्ति प्राग्भुत-

विषय १०

भावमापादयामीत्यर्थः। अपिदधाति। "विष्णो हव्यं रक्ष" (३)। "यज्ञो वै विष्णु" रिति श्रुतिः। हविर्गोपाय ॥ ४ ॥ व्रतमुपैति (१)। "अग्नेव्रतपते" हे भगवन्नग्ने व्रतस्य पते व्रतं सत्यादिकं चरिष्यामि। तद्व्रतं तव प्रसादात् शकेयं शक्नुयाम्। शक्तं च तन्मे मम राध्यताम् सिध्द्याद् ॥ इन्द्रस्यत्वाभागꣳसोमेनातनच्मिविष्णोहव्यꣳरक्ष ॥४॥ अग्नेव्रतपते। व्रतञ्चरिष्यामितच्छकेयन्तन्मेराध्यताम् ॥ इदमहमनृतात्सत्यमुपैमि ॥५॥ कस्त्वा। युनक्तिसत्त्वायुनक्ति-

ताम्। यज्ञफले सद्भिराशास्यते। अनेन वा अग्निरुच्यते। इदमहं त्वत्साक्षिकम् अनृताद् असत्यात् सत्यमुपगच्छामि (२) ॥ ५ ॥ अपः प्रणयति। "कस्त्वा युनक्ति"। यज्ञस्यारम्भकर्माणि

पिधिपोन्द्रस्य त्वेति कात्यायनोक्तेः। 'आतनच्मि" दध्यर्थं कठिनीकरोमीत्यर्थः। अतातञ्चनहेतुभूत दध्येव सोमत्वेन कल्पयते भावनया। (३) अत्र विष्णुं संबोध्य हविषो रक्षाप्रार्थनं रक्षणे विष्णोरेव प्रसिद्धेः सृष्टिपालनसंहारेषु ॥ ४ ॥

(१) अपरेणाहवनीयं प्राङ्तिष्ठन् अग्निमीक्षमाणोऽप उपस्पृश्य व्रतमुपैत्यग्नेव्रतपते इदमहं मितिवेति कात्यायनोक्तेः २।१।११।

(२) अनृतादसत्यादहं सत्यं वदनमुपैमीतितात्पर्यम्। सत्यवदनं यावश्यमेव कर्मकाले पालनीयमितियावत। वहा अनृतं

आत्मनः कर्तृत्वमपनीयाध्वर्युः प्रजापतेर्यज्ञस्य कर्तृत्वमाह। अत्र चत्वारि सर्वनामानि तत्र प्रथमतृतीये प्रश्नभूते द्वितीयचतुर्थे प्रतिप्रश्नभूते। "कस्त्वा युनक्ति" (१)। हे यज्ञपात्र प्रजापते न मनुष्यः सन् * यज्ञः प्रजापतिः त्वां युनक्ति। कस्मै प्रयोजनाय युनक्तीत्यध्वर्युराशङ्क्योत्तरं ददाति। "तस्मै" प्रयोजनाय "युनक्ति"। यस्मादुत्पत्तिः स्थितिश्च जगतः अतोनेन सर्वनाम्ना तदेव

**कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति॥ कर्मणे वां वेषाय वाम् ॥६॥**

निर्दिश्यते(२)। सूर्पं चाग्निहोत्रहवणीं चादत्ते। "कर्मणे वाम्"। यज्ञकर्मणे वां युवाम् अहमा-

मनुष्यजन्म शीघ्रविनाशित्वात्। सत्यं देवजन्म बहुकालस्थायित्वात्। तथाच श्रुतिः। "समनुष्येभ्यो देवानुपावर्तते इति। अपाम सोममसृता अभूमे"ति च। प्रश्नायतनं निरस्येमानं सूचयतीति वाचस्पतिमिश्राः॥ ५॥

(१) एवं प्रसङ्गमित्य प्रकाशं हवींषि प्रणयनं कुर्यात्। "ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेत्यादानुज्ञात उत्तरेणाहवनीयं निदधाति कस्त्वायुनक्तीति" कात्यायनः। (२।३।१-२)

(२) हे प्रणीतानामपां धारक पात्र त्वां कः पुरुषो युनक्ति आहवनीयोत्तरभागे स्थापयति। इति प्रश्नः। सर्वेषु वेदेषु जगन्निर्वाहकत्वेन प्रसिद्धो कः प्रजापतिरस्ति स एव परमेश्वरः हे पात्र त्वां युनक्तीति उत्तरम्। इति महीधरभाष्ये व्याख्यातम्॥ ६॥

* यथा प्रजापतिर्मनुष्यः स य—षा० १३०।

ददे इति वाक्ययोजः। "व्याप्य"। विप्लृ व्याप्तौ। यज्ञव्याप्त्यर्थं वां युवाम् अहमाददे इति च ॥६॥ प्रतपति (१) "प्रत्युष्टम्"। उष दाहे प्रतिज्ञाय दग्धं रक्षः, प्रतिज्ञाय च दग्धा अरातयः (२)। न विद्यते रातिर्दानं येषां ते अरातयः। अनेन वा "निष्टप्तम्"। तप संतापे निरेतस्य स्थाने नितरां तप्तं रक्षः न तु यज्ञतत्साधनमित्यभिप्रायः। उक्तमन्यत्। गच्छति। "उर्वन्तरिक्षम्"।

प्रत्युष्टꣳ रक्षः। प्रत्युष्टा अरातयो निष्टप्तꣳ रक्षो निष्टप्ता अरातयः॥ उर्वन्तरिक्षमन्वेमि ॥ ७ ॥

यद्यपि रक्षोभिराकुलमन्तरिक्षं (३) तथाप्यनेन यजुषा उरु विस्तीर्णं कृत्वा अन्वेमि प्रतिगच्छामि ॥ ७ ॥ धुरमभिमृशति (१)। "धूरसि"। अनसोऽवयवं धुरं स्तौति (२)। तत्र

(१) "प्रतपनं प्रत्युष्टं निष्टप्तमिति वेति" कात्यायन २।३।११।

(२) अनेनाग्निहोत्रहवण्योपूर्पयो प्रतपनेनात् स्थिता राक्षसा दग्धा इत्यर्थः। प्रत्युष्टं निष्टप्तमि तत्रमयोर्विकल्पः, अनेनवेति कात्यायनेन वेत्युक्तेः। (३) गच्छतः पुरुषस्य पार्श्वयोः स्थितं रक्षोऽनेन मन्त्रेण निराक्रियते इत्यर्थः॥७॥

(१) "अपरास्य" पुरोडाशपाकहेतोर्गार्हपत्यस्य "पश्चादनः" शकटं व्रीहियुक्तं "समङ्गि" सर्वाङ्गोपेतं, "धूरसीति "धूरभिमर्षनमिति" तस्य धुरं धूरसीतिमन्त्रेण स्पृशेत्। कात्यायनः।२।३।१२। (२) शकटस्य बलीवर्दवहनप्रदेशे

स्तुतिः "अग्निर्वा एष धुर्यस्तमेतदध्येष्यनुब्रवीतीति"। हविर्ग्रहीष्यन् धुर्यमग्निं ब्रवीति। "धूरसि"। धूर्वतेर्वधकर्मणः। धूर्वणक्रियानिमित्तं हि ते नाम अतो ब्रवीमि "धूर्व धूर्वन्तम्"। हिन्धि हिंसन्तम्। "धूर्व तम्" हिन्धि तम् "योऽस्मान्धूर्वति"। योऽस्मान् हिनस्ति।

धूरसि ॥ धूर्वसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्व यं वयं धूर्वामः ॥ देवानामसि वह्नितमं सस्नितमं पप्रितम-

"तं धूर्व यं वयं धूर्वामः" (३) तं पुरुषं हिन्धि यं वयं हिंस्मः। अनस उपस्तम्भनमभिव्यधाति "देवानामसि"। अन उच्यते देवानामग्न्यादीनां त्वं भवसि। "वह्नितमम्" वह्निर्वोढा * वोढृतमम्। सर्वे तमपः अतिशयार्थाः। "सस्नितमम्" ष्णै वेष्टने। आदृगमहनेत्यादिना किन्प्रत्ययः। चर्मणा स्नायुना परिवेष्टिततमम्। अथ वा पार्श्वतः कार्ष्णगौणपटैश्च परिवेष्टित-

रुधिदिंसकोऽग्निः "अग्निर्वा एष धुर्य" इति श्रुतिदृष्टोऽसि स प्रार्थ्यते दृत्याशय। (३) यमनालस्यादिरूपं वैरिणं वयं धूर्वामो नाशयितुमिच्छामस्तमपि धूर्वं विनाशय। (४)शकटस्थितान्नातिक्रमरूपापराधापमार्जनार्थं धूरेतेन मन्त्रेण स्पृश्यते।

* वह्नतमे वह्नितम इत्यधिक पु०।
* कार्ष्णगौणपटे —पा० भा० ख्र।

(४) तमम्। "प्रप्रितमम्"। प्रापूरणो पूर्ववत्क्तिन् प्रत्ययः। हविषा पूर्णतमम्। "जुष्टतमम्"। जुषी प्रीतिसेवनयोः। अभिप्रेततमम् *। सेवितमम वा। "देवहूतमम्"। देवानाह्वयतीति देवहूः देवानामाह्वातृतमम् (५) ॥ ८ ॥ "अह्रुतमसि"। 'ह्रु ह्वरेश्छन्दसी'ति ह्वरतेर्लुण्ठनार्थस्य निष्ठायां ह्रुरादेशः। अकुटिलं पूर्णमसि (१)। "हविर्धानम्"। हविषां निधानम् (२)। अत

म॒ जु॒ष्ट॑तमन्दे॒व॒हूत॑मम् ॥८॥ अह्रु॑तमसि। ह॒वि॒र्धान॒न्दृꣳह॑स्व॒

आत्मानम् "दृꣳहस्व" दृढीकुरु। ममाकम्पत्ते अवहितं भव। "मा ह्वार्मा ते यज्ञपतिह्वार्षी"दिति।

(४) "देवानामुपस्तम्भनस्य पश्चादीषामिति" कात्यायनः। २।३।१४। शकटदीर्घकाष्ठस्य भूमिस्पर्शो माभूदिति तदाधारकाष्ठमुपस्तम्भनं तत्पश्चाद्गमनेन मन्त्रेण स्पृशेत्।

(५) व्रीहिपूर्णं शकटं दृष्ट्वा देवा शीघ्रमागच्छन्तीत्याशयः ॥ ८ ॥

(१) महीधरभाष्ये तु अह्रुतमसि त्वमकुटिलम्। आरोहणेपि भग्नभीतिर्नास्तीत्यर्थं इत्युक्तम्।

(२) हविषो व्रीह्यादेरपस्याधारकं पोषकं, डुधाञ् धारणपोषणयोः।

---

* यद्वा जुषी प्रीतौ भवते। अतिशयितमम। पा० १५०।

शु० य० सं० उक्तार्थः। आरोहति (३)। "विष्णुस्त्वाक्रमताम्" † आरोहतु। अहं त्वरूमघं इत्यभिप्रायः। प्रोक्षते १

हविष्यात्। "उरु वाताय"। उरु महत् वाताय प्राणाय त्वां करोमीति प्रोक्षते। अपद्रव्यं अ०

माह्वार्म्मातेयज्ञपतिर्ह्वार्षीत् ॥ विष्णुस्त्वाक्रमतामुरुवातायाप

१३ उ० भा० निरस्यति (४)। "अपहतम्"। हन हिंसागत्योः। अत्र गतौ वर्त्तते। अपगतम्। अस्मा-

(३) "विष्णुस्त्वारोहति" १।२१ "प्रोक्षते उरु वातायेति हविष्यात्" १।३।१६। इति कात्यायन। वाता-येतितादर्थ्ये चतुर्थी। वातसञ्चारार्थं विस्तीर्णोभव। शकटस्यप्रोहोणा' तृणाद्याच्छादितत्वेन वायुप्रवेशाभावात्, यथावायु प्रविशति तथा विस्तीर्णं भवेत्यर्थः। इत्थं च वायुरूपप्राणप्रवेशादवि' अप्राणं क्रियते इत्याशयः। यदि च वायुप्रवेशरहितं हविः स्यात्तदा वरुणदैवताकं भवेद्वरुणस्य बन्धकारित्वात् यज्ञनिरोधकस्तन्निवृत्त्यर्थोयं मन्त्रः। "यद्वै किञ्च वातो नाभिवाति तत्सर्वं वरुणदेवत्यमिति तावरुणमेवैतत्करोतीति तित्तिरिवचनात्।

(४) 'अपहतमिति निरस्यत्यन्यद् ग्रोहिभ्योन्यतृणाद्यनेन मन्त्रेण निरस्येत्तदभावेतु 'अविद्यमानेऽभिमृशेत्" तृणाद्यभावे ग्रोहीनेव स्पृशेत्। का २।३।२०।१८। अत्र तृणादिकमेव रक्ष इत्युच्यते। ८ ।मिश्रम

† विष्णुर्यज्ञो शकट आक्रमतात्। मा० श० पु०। ८ १३

हविषो रक्षः। 'आलभते (५)। "यच्छन्तामपञ्च"। यम उपरमे। नियच्छन्तु त्वां हविष्यम् पञ्च अङ्गुल्यः॥ ८॥ 'गृह्णाति (१)। "देवस्य त्वा"। त्वा शब्देन हविरुच्यते। "देवस्य सवितुः प्रसवे" अभ्यनुज्ञायां वर्त्तमानः। देवेन सवित्रा प्रसूतः। "अश्विनोर्बाहुभ्याम्" न स्वाभ्याम्। अश्विनौ हि देवानामध्वर्यू। "पूष्णो हस्ताभ्याम्" न स्वाभ्याम्। पूषा हि देवानां भागधुक् भागपूरकः।

हतꣳ रक्षो यच्छन्तां पञ्च ॥ ८ ॥ देवस्य त्वा। सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्॥ अग्नये जुष्टं गृह्णाम्यग्नी-

'अग्नये जुष्टम्" जुषी प्रीतिसेवनयोः। अत्र जुषिः प्रीतौ वर्त्तते। तथा हि 'रुच्यर्थानां प्रीयमाणः' इत्यग्निशब्दस्य चतुर्थी संजाता। अग्नये जुष्टं रुचितमभिप्रेतं गृह्णामि। एतदुक्तं भवति। योऽग्निः सर्वेशः * सर्वात्मा तस्य तथाभूतमेतदन्नं भवितुमर्हति। नच तथाभूतं

(५) यच्छन्तामित्यालभते। का० २।३।१८ अनेन पश्चाङ्गुलियुक्तेन मुष्टिना प्रोक्षीन् गृह्णीयादित्यर्थः॥ ८॥

(१) देवस्य त्वेति गृह्णात्याग्नेयं चतुरो मुष्टीन् एवमग्नीषोमीयं यथादैवतमन्यदिति। का० २।३।२०–२२।

* सर्वेश्वर — पा० पा० पु०।

मनुष्येण तद्ग्रहीतुं शक्यते। ततोऽहं सावित्रे प्रसवमास्थायाश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां (२) त्वां हविष्यमग्नयेऽभिरुचितं गृह्णामि। अग्नीषोमाभ्यां त्वां हविष्याभिरुचितं गृह्णामि ॥ १० ॥ भूताय त्वेति शेषाभिमर्शनम् (१)। "भूताय" भवनाय (२) त्वां परिशेषयामीति शेषः। "नारातये" न अदानाय, उप्तं रोपितं सत् व्रीह्यादि पुनरेव बहु भविष्यतीति परिशेषयामि न कृपण-

षोमाभ्यां जुष्टं गृह्णामि ॥१०॥ भूताय त्वा ॥ भूताय त्वा नारातये स्व-

तायै। स्वरिति प्रकाशोच्यते। "स्वरभिविख्येषम्"। पश्येयम्। स्वशब्देन यज्ञोऽभिधीयते। स हि शोभनं प्रकाशोरितो भवति। यज्ञार्हदेवाः सूर्यः यज्ञोऽपि स्वःशब्देनोच्यते। "यज्ञो वै स्वः अहर्देवाः सूर्यः" इति श्रुतेः। दृंह०हन्तामित्यवरोहति। दृंहि दृंहि दृढाविति यद्यपि दृढार्थौ

(२) प्रकोष्ठमणिबन्धयोर्मध्यभागो दीर्घदण्डाकारो बाहुः, पञ्चाङ्गुलियुक्ताग्रभागो हस्तः इति। अश्विनौ हि देवानामध्वर्यू, पूषा हि देवानां भागधुक्। यतो ग्रहणसाधनयोरस्मदीयाः स्वहस्तयोरश्विबाहुपूषहस्तभावना कार्या। किञ्च "सत्यं देवा अनृतं मनुष्याः" इतिश्रुतेस्तदनुमतिपुरस्सरं हविर्ग्रहणं फलपर्यवसायि अन्यथा निष्फलमिति देवतास्मरणमिति तात्पर्यमिति महीधरभाष्ये ॥ १० ॥

(१) का० २।३।२३।२४। (२) यागान्तरार्था सिद्धौ ब्राह्मणभोजनस्य च सद्भावाय।

घातस्तथापि मन्त्रेषु दृढीकरणार्थः प्रयुज्यते। दृह्यन्तामितिप्राप्ते "दृठं॰हन्तामि"ति विकरणव्यत्ययः। दिवादित्वात् श्यन्प्रत्ययः। "दुर्याः"। दुरः द्वाराणि अर्हन्तीति दुर्या गृहा उच्यन्ते। दुर्या दृढा भवन्तु। "पृथिव्यां" भूयां गच्छति। "उर्वन्तरिक्षमि"तिव्याख्यातम्। पृथिव्यास्त्वेति सादयति। हविरुच्यते। पृथिव्याः त्वा त्वां नाभौ मध्ये अवसादयामि। "अदित्या" देवमातुः "उपस्थे" उत्सङ्गे। "अग्ने हव्यं रक्ष" (३)। † अपथं गार्हपत्यमग्निमाह ॥ ११ ॥ पवित्रे

रभिविवरव्ये घन्ह ऽंहंन्ताम्दुर्य्याःपृथिव्यामुर्व्वन्तरिक्षमन्वेमिपृथिव्यास्त्वा नाभौसादयाम्यदित्याऽउपस्थेऽग्नेहव्यठं रक्ष॥११॥*

छिनत्ति (१)। "पवित्रे स्थः"। पवित्रे पवनक्रियायोग्ये युवां भवथः। वैष्णव्ये इति प्राप्ते वैष्णव्याविति लिङ्गव्यत्ययः। "यज्ञो वै विष्णुर्यज्ञियेस्थ" इति श्रुतिः। अपउत्पुनाति (२)। "सवि-

(३) स्वपुत्रमिव वायवेभ्यः पालयेतदर्थः ॥ ११ ॥

(१) कुशौ समावप्रयोगाग्रौ अनन्तर्गर्भौ कुशैश्छिनत्ति पवित्रे स्थ इति मौन्वेति। का॰ २।३।२१।

(२) हविर्ग्रेहस्यामयः कृत्वा ताभ्यामुत्पुनाति सवितुर्व इति। का॰ १।२।२६।

* वायव्यत्यधिक। पुस्तके।

तुवः” आप उच्यन्ते। सवितुः प्रसवे वर्तमानः अहं वः युष्मानुत्पुनामि ऊर्द्ध्वं नीत्वा शोधयामि। केन, “अच्छिद्रेण पवित्रेण”। “यो वा अयं पवन एषोऽच्छिद्रं पवित्रमि”ति श्रुतिः। वायोः सर्वगतत्वादच्छिद्रत्वम्। “सूर्यस्य” च “रश्मिभिः”। उदिङ्गयति (३)। “देवीराप” इति। आप उच्यन्ते। हे देव्य आपः “अग्रे गुवः अग्रेपुवः”। “अग्रे शब्दः पूर्वपदं द्वयोः। पूर्वस्य गमिरुत्तरप-

प॒वित्रे॑ स्थो वैष्ण॒व्यौ᳚ सवि॒तुर्व॑: प्रस॒वऽउत्पु॑ना॒म्यच्छि॑द्रेण प॒वित्रे॑ण॒ सूर्य॑स्य र॒श्मिभि॑:॥ देवी॑रापोऽअग्रेगुवोऽअग्रेपु॒वोऽग्र॑ऽइ॒मम॒द्य य॒ज्ञं न॑य॒ताग्रे॑ य॒ज्ञप॑तिꣳ सु॒धातुं॑ य॒ज्ञप॑ति-

दम। उत्तरस्य तु पिबतिः। उभयोरपि डुप्रत्ययः। अग्रेयाः समुद्रं गच्छन्तीत्यग्रेगुवः। अग्रे प्रथमाः सोमस्य राज्ञो भज्जयन्तीत्यग्रेपुवः। अग्रे उत्कृष्टे। “इमं” दर्शपूर्णमासाख्यम्। “अद्य” अस्मिन्

(३) सव्येहस्ता दक्षिणेनोदिङ्गयति देवीराप इति। का० ११३१२५। उत्पूताभिरद्भिः पूरितामग्निहोत्रहवणीं सव्यहस्ते स्थापयित्वा मन्त्रमुच्चार्य्य दक्षिणहस्तेनोर्ध्वं चालयेदिति सूत्रार्थः।

द्यवि "यज्ञं नयत" प्रापयत। "अग्रे यज्ञपतिं नयत। 'सुधातु" (४) शोभनदक्षिणं यज्ञपतिम्। 'देवयुवम्"। देवान्कामयते इति देवयुः। 'इदं युरिदंकामयमान' इति यास्कः। एतदुक्तं भवति। यज्ञं यजमानं पुष्कलदक्षिणं देवकामं च अग्रे नयत॥ १२॥ "युष्माइन्द्रोऽवृणीतवृत्रतूर्ये"। युष्मान् इन्द्रः साहाय्यार्थमवृणीत। किम्पुरस्कृत्य वृत्रतूर्ये तूर्येतिर्वधकर्मा वृत्रवधाय। "यूय" च "इन्द्रमवृणीध्व" वृत्रवधः वृत्रतूर्ये तस्मिन्नेवावसरे अतिमनुष्यतया। "प्रोक्षिताः स्थे"ति तासां प्रोक्षणम्।

न्देवयुवम्॥ १२॥ युष्माऽइन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये प्रोक्षितास्थ॥ अग्नये त्वा जुष्टं प्रो

क्षम्। प्रोक्षिता यूयं तावद्भवथ। न ह्यसंस्कृता अन्यसंस्कारक्षमा इति निह्नवः। हविः प्रोक्षति (५)। "अग्नये त्वा जुष्टम्"। अभिरुचितम्। अग्निशब्दस्य रुच्यर्थानां प्रीयमाणः इति चतुर्थी। अग्नीषोमाभ्यामित्युक्तम्। पात्राणि प्रोक्षति। "दैव्याय कर्मणे" देवसंबन्धिने कर्मणे।

(४) सुष्ठु दक्षिणादिना दधाति यज्ञं पुष्णातीति सुधातुरिति महीधरभाष्ये व्याख्यातम्॥ १२॥

(५) हविष्यान्यौ त्वाग्नीषोमाभ्यां त्वेति यथादेवतमन्यत, पात्राणि दैव्यायेति। का॰ २।३।३५-३८।

तादर्थ्ये चतुर्थी। 'शुन्धध्वम्' । शुध्यध्वमिति कर्मणि यकिप्राप्ते विकरणव्यत्ययः। "देवयज्यायै"। देवयागाय। एताभिरद्भिः शुन्धध्वमितिसंबन्धः। "किञ्च यद्वोशुद्धाः पराजघ्नुः"। यद्वः युष्माकं त्वयक्षाः भग्नमभ्नतयः *(१) पराजघ्नुः पराहतवन्तः। इदमिति प्रत्यक्षनिर्देशः। वः युष्माकं तत् शुन्धामि शोधयामि अपनयामि ॥ १२ ॥ कृष्णाजिनमादत्ते (१)। "शर्मासि"। चर्मासीति प्राप्ते

चाम्म्युग्ग्नीषोमाँभ्यान्त्वाजुष्ट्म्प्रोक्षामि ॥ दैव्याय कर्म्मणे शुन्ध-ध्वन्देवयज्ययायै यद्वोशुद्धाःपराजघ्नुरिदंव्वस्तच्छुन्धामि ॥ १३ ॥*

चकारस्य शकारः। "शर्म देवव्चेति" श्रुतिः। अवधुनोति। "अवधूतं रक्षः"। धूञ् कम्पने। अवकम्पितं रक्षः अवकम्पिताश्च अरातयः अदानशीलाः पुरुषाः। न त्वेतद् यज्ञसाधनमित्यपन्हवः।

(१) महीधरभाष्ये तु अशुद्धा नीचजातयस्तक्षादयो वो युष्माकं यदङ्गं पराजघ्नुः पराहतं कृतवन्तः छेदन-तक्षणादि काले स्वकीयहस्तस्पर्शेनापमशुचित्वं चक्रुरितिव्याख्यातम् ॥ १२ ॥

(१) शर्मासि इति कृष्णाजिनादानम्, अपेतम् पात्रे व्योऽवधुनोत्यवधूतमिति, प्रतग्ग्रीवमास्तृणाति आदित्यास्त्व-मिति, सव्यागून्ये निदधातुग्लूखलमद्रिरसि ग्रावासीति वा प्रतिब्ले तुरभयोरिति। का० २।४।२-५।

* तक्षप्रभृतयः—पा० का० पु०।

कृष्णाजिनमास्तृणाति (२)। "अदित्यास्त्वगसि"। अदित्याः पृथिव्यास्त्वं त्वग्भवसि। अतः "प्रतिवेत्तु"। विद ज्ञाने। प्रतिजानातु त्वाम् अदितिः पृथिवी। "प्रतिरूपः संजानीत" इति श्रुतिः। तस्मिन्निदधात्युलूखलम्। "अद्रिरसि"। आ दृणाति विदारयति आदृणात्यनेन व्रीह्यादिकमित्यद्रिः। त्वं भवसि। "वानस्पत्य"श्च। वनस्पतेर्विकारो वानस्पत्यः। अनेन वा निद-

**धर्म्मासि। धर्म्मास्यवधूतꣳ रक्षोऽवधूताऽअरातयोऽदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु॥ अद्रिरसि वानस्पत्यो ग्रावासि पृथुबुध्नः प्रति त्वादित्यास्त्वग्वेत्तु॥१४॥ अग्नेस्तनूरसि वाचो विस-**

धाति। "ग्रावासि"। हन्ति व्रीह्यादिकमनेनेति ग्रावा त्वमसि। "पृथुबुध्नः"। बृहन्मूलः। अतः "प्रति त्वादित्यास्त्वग्वेत्तु"। प्रतिवेत्तु त्वामुलूखल अदित्यास्त्वक् कृष्णाजिनम्। कथम्, अहं च पृथिव्यास्त्वक् अयं चोलूखलः पृथिव्यास्त्वगिति। त्वगेवात्मनात्मानं हिनस्ति॥ १४॥

(२) पुरा यज्ञो देवेषु रुष्टः कृष्णमृगो भूत्वाऽगमत्तदा देवा ज्ञात्वा तदीयां त्वचमुत्पाट्य जगृहुः तस्मात्तमास्त-रणम्॥ १४॥

हविरावपति (१)। "अग्नेस्तनूरसि"। आहवनीयोवाग्निरुच्यते। तत्र हविः प्रक्षिप्तमग्निर्भवति। अत एवमुच्यते अग्नेस्तनुः शरीरमसीति। अथवा अग्निशब्देन यस्यै देवतायै हविर्गृह्यते सा लक्ष्यते। तस्या अपि हविस्तनूर्भवतीति। "वाचो विसर्जनम्"। वाक् यस्मिन्हविषि प्रक्षिप्ते विसृज्यतेऽध्वर्युणा तदिदं वाचो विसर्जनम्। "देववीतये"। देवतर्पणाय "त्वा

# त्वा॑ गृह्णामि बृ॒हद्ग्रा॑वासि॒ वान॑स्पत्यः॒ सऽइ॒दं दे॒वेभ्यो॑ ह॒विः श॑मीष्व सु॒शमि॑ श॒मीष्व॒ हवि॑ष्कृ॒देहि॒ हवि॑ष्कृ॒देहि॑॥

गृह्णामि"। आददामीत्यर्थः। मुषलमादत्ते "बृहद्ग्रावासि"। दीर्घत्वापेक्षं बृहत्त्वं, हन्त्यपेक्षं ग्रावत्वम्। दीर्घग्रावा त्वमसि। "वानस्पत्यः" वनस्पतेर्विकारश्च वानस्पत्यः। स इदमित्यवदधाति। स"त्वमिदं"देवेभ्योर्थाय "हविः शमीष्व"। शम्यतिः संस्कारार्थः। "सुशमि" क्रियाविशेषणमेतत्। साधु यथा संस्कृतं भवति तथा शमीष्वेति। हविष्कृदेहीति त्रिराह्वयति। हविष्करो-

(१) पवित्रावपत्यग्नेस्तनूरसि वृहद्ग्रावेति मुषलमादत्ते सइदमित्यवदधाति, हविष्कृदेहीति त्रिराह्वयति। का॰ १।४।६-१२।

तीति "हविष्कृत्" (२)। "एहि" आगच्छ। अधिदेवं वागुच्यते। अधियज्ञं पत्नी ॥ १५ ॥ आह्वन्ति अन्यो दृषदुपले (१)। "कुक्कुटोसि"। अत्र मनोर्ह वा ऋषभ आसेत्यादीतिहास उत्प्रेक्षितव्यः (३)। कुत्सितं शब्दमसुरगमसुराणां तनोतीति कुर्कुटः। अथवा असुरभौ

वेभ्यो हविरिदं शमीष्व शमिष्व शमीष्व॥ हविष्कृदेहि हविष्कृदेहि ॥१५॥

कुक्कुटोसि। मधुजिह्व इषमूर्जमावद त्वया वयं संघातं संघातं

वाचमुपादाय क्व क्व असुरा एवं योऽटति असौ कुक्कुटः। अस्मिन्पक्षे कुशब्दस्य संप्रसारण-

(२) यजमानः पत्नी जान्योवा यो ब्रीहीनवहन्ति स संबोध्यते। विवारमुत्तमर्थं देवा मन्यन्त इति विज्ञानम् ॥१५॥

(१) 'आहन्त्यन्यो दृषदुपले कुक्कुटोऽसीति त्रिःमन्यया हिंदं पदं सकृदुपलमिति' २। ४। १५।

(३) मनो राज एक ऋषभ आसीत्तस्मिन्नासुरघ्नी वाक् स्थिता, तस्मिन्शब्दं कुर्वति तं श्रुत्वैवासुरा म्रियन्ते, ततः किलाताकुलीनामानौ असुरयाजकौ गत्वा तेनैवर्षभेन याजयाता मनुं, इतीतस्मिन् ऋषभे सा वाङ्मनोर्जायां प्रविष्टा, तोपुनस्तयापि मनुमयाजयातां, ततः सा वागसुरपराभवाय यज्ञपात्राणि प्रविष्टा, तद्वाक्प्रकटनार्थं शम्यया दृषदुपहनन-मिति, इतिहास।

मटतेश्चाकारस्य 'संप्रसारणाच्चे'ति पूर्वरूपत्वम्(३)। कुक्कुटस्त्वमसुराणां, देवानां "मधुजिह्वः"(४)। अत "इषं" इष्टिम् "ऊर्जं" अन्नं च "आवद" आभिमुख्येन वद (५)। त्वया च सहायभूतेन "वयं संघातम्"। संपूर्वस्य हन्तेः संघातेन संग्रामः समुदायो वाभिधेयः। वीप्सार्थं द्विर्वचनम्। संग्रामं संग्रामं जेष्म। शूर्पमादत्ते(६)। "वर्षवृद्धम्"। इष्टया हृद्धं त्वमसि(७)। हविरुद्धमति। "प्रति त्वा वर्षवृद्धं

# तज्ज्ञेम्मवृषवृद्धमसि प्रतित्वा वृषवृद्धं वेत्तु परापूतं रक्षः परापूता अरातयोपहतं रक्षो वायुर्वो विविनक्तु देवो वः सविता हिरण्य-

वेत्तु"। प्रतिवेत्तु प्रतिजानातु त्वा इष्टया हृद्धं हे हविः। समानजन्मत्वाद्धविःशूर्पयोर्भ्रातृत्वार्थं

(३) कुक्कुटाख्यपक्षिवद् ध्वनिविशेषमसुराणां भीत्यर्थं तनोतीति कुक्कुट इति वेति महीधरभाष्यम्।
(४) मधुमधुरभाषिणी जिह्वा यस्य सः।
(५) तत्प्रसादेनासुरेषु पराभूतेषु (वृष्टिं) रसमन्नं च यजमानः प्राप्नोतीति तात्पर्यम्।
(६) वर्षवृद्धमस्यीति सूर्पमादत्ते। २।४।१५।
(७) वर्षवृद्धवेणुशलाकाभिर्मितत्वाच्छूर्पस्य वर्षवृद्धत्वम्।

वचनम् । निष्पुनाति(८)। "परापूतं रक्षः"। पराक्षिप्तं रक्षः। "परापूता" पराक्षिप्ताश्च "रातयः" अदानशीलाः पुरुषाः। तुषान्निरस्यति। "अपहतम्"। हन्तिर्गत्यर्थः। अपगतं रक्षः। विविनक्ति। "वायुर्वः"। तण्डुला उच्यन्ते। वायुः वः युष्मान्विविनक्तु पृथक्करोतु व्रीहिभ्यः सकाशात्। पात्रग्रा-मोप्याभि मन्त्रयते। "देवोवः सविता"। वो युष्मान् हे तण्डुलाः। "हिरण्यपाणिः"। "तत्सवितुः प्राशित्रं परिजह्रुः। तस्य पाणी परिचिच्छेद। तस्मै हिरण्मयौ प्रतिदधुः तस्माद्धिरण्यपाणिरिति"

## पाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना* ॥ १६ ॥ धृष्टिरसि। धृष्टिरस्य

च्यते" इति बह्वृचानां श्रुतिः। "प्रतिगृभ्णातु" प्रतिग्रह्णातु कपे तु (९)। "अच्छिद्रेण" शिथिलेन हस्तेन ॥ १६ ॥ उपवेषमादत्ते (१)। "धृष्टिरसि"। ञिधृषा प्रागल्भ्ये। अनेनाग्निर्धृष्टमुपचरतीति

(८) 'परापूतमिति पुनाति, अपहतमिति तुषान्निरस्यति, वायुर्व इति विविनक्ति, देवो व इति पात्रग्रामोप्याभिमन्त्रयते, इति। का० २।४।१७-२१।

(९) छन्दसि ग्रहोर्भश्छन्दसीति हस्य भः ॥ १६ ॥

(१) मूलतः शाखां परिवास्योपवेषं करोति, धृष्टिरसीत्युपवेषमादाय, अपाग्ने इत्यङ्गारान् प्राचः करोति, पादेवयजमित्यङ्गारमाहृत्य, कपालेनावच्छादयति ध्रुवमसीति। का० २।४।२५-२।४।२९।

धृष्टिः। उपवेष (२) उच्यते। धृष्टिस्तुमसुपवेष। अङ्गारान्प्राञ्चः करोति। "अपाग्ने अग्निमामादं जहि"। अपजहि परित्यज *। हे भगवन्नग्ने अग्निमामादम् आममत्तीत्यामात् तम् (३) येनेदं-मनुष्या अपक्वमन्नमश्नन्ति स उच्यते। जहातिस्त्यागार्थः। "निष्क्रव्यादं"सेध। निःसेध क्रव्यादमग्निम्। येन पुरुषं दहन्ति स क्रव्यात्। सेधतिरपि † त्यागार्थः। अङ्गारमाह-रति। "आदेवयजं वह"। आवह ‡ देवयजमग्निम्। देवा यस्मिन्निज्यन्ते स देवयट् तं देव-

पाग्ने ऽअग्निमामादं जहि निष्क्रव्यादंꣳ सेधा देवयजं वह। ध्रुव-मसि पृथिवीन्दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृ-

यजमग्निम्। कपालेनाच्छादयति। "ध्रुवमसि पृथिवीं दृꣳह"। त्रिभिः कपालैस्त्रीँल्लो-कान्यजमानो जयति चतुर्थेन दिशः। यज्ञेषु संस्कृतेषु पुरोडाशः सोप्याधारवशात्तिलोक-

(२) पलाशमयास्तया मूलदेशेच्छिन्न. काष्ठभाग: उपवेष: ।

(३) त्रिविधा हि भवन्त्यग्नय. आमात् लौकिकोऽग्नि., क्रव्यात् चिताग्निः, श्रौतस्मार्तोऽग्नि यागयोग्य । एत-

* परित्यजेति—पा० पु० नास्ति। † सेधति परित्यागार्थं —पा० पा० पु०। ‡ आवहानय—पा० १ पु० १

त्रिगृह एव भूत्वा देवान्प्रीणातीति प्रकरणार्थः। "यद्वा आत्मसंमितमन्नं तदवति तन्न हिनस्तीति" श्रुतिः। "ध्रुवमसि" *। ध्रुवं स्थिरं त्वमसि। अतः पृथिवीं दृंह। दृढीकुरु। न हि स्वयमप्रतिष्ठितोन्यस्य प्रतिष्ठां कर्तुं समर्थः। किंच इत्थं भूतं त्वामुपदधामि। "ब्रह्मवनित्वा" ब्रह्मीयद्वनोति संभजति संश्रयते तत्कपालं ब्रह्मवनि। एवं क्षत्रवनि। सजातवनि समान-

व्यास्यव्बुधायं ॥ १७ ॥ अग्नेब्रह्म। गृभ्णीष्व धरुणमस्यन्तरि

जाताः सजाताः भ्रातृप्रभृतय उच्यन्ते। भ्रातृव्यंन्सपत्ने इति आद्युदात्तत्वाद्भ्रातृव्यशब्देन शत्रुरभिधेयः। ग्रवोश्च वधाय त्वामुपदधामीत्यनुषङ्गः ॥ १७ ॥ सव्याङ्गुल्या भ्रत्न्येऽङ्गारं निदधाति (१)। "अग्ने ब्रह्म"। हे भगवन्नग्ने ब्रह्म ब्राह्मणमङ्गुलिप्रदानेन व्याहृत्तमनुगृह्णीष्व अनुग्रहं कुर्विदिदान् अङ्गारान् गार्हपत्यात्प्राग्भागे पृथक्कृत्य तेषां मध्ये यागयोग्यताहीनो आमातक्रव्यात्संज्ञो त्याजयितुं गार्हत्ये मनुरथते अमाद जहीत्यादि ॥ १७ ॥

(१) सव्याङ्गुल्यामुन्येऽङ्गारं निदधात्यमे ब्रह्मेतीति, धरुणमिति पश्चात्, पुरस्ताद्धर्त्रमिति, विश्वाभ्य इतिदक्षिणतः। का० २।४।२०-२२।

* ध्रुवमसि—१ पु० नास्ति।

गु० य० स० २० उ० भा० 

त्यर्थः (२)। द्वितीयं निदधाति। "धरुणमसी"ति साधारणं धारकमसि। 'अन्तरिक्षं दृꣳह'(३)। शेषं पूर्ववत् *। तृतीयं निदधाति। "धर्त्रमसि"। धारयितृ असि। "दिवं दृꣳह"। चतुर्थं निदधाति †। "विश्वाभ्यस्त्वा" सर्वाभ्य "आशाभ्यो" दिग्भ्य "उपदधामि"। इतराणि कपालान्युपदधाति। "चितस्थ"। चिञ् चयने। क्विबन्तस्य रूपमिदं बहुवचनं च पूर्वोपहितकपाल-

चन्दृꣳह ब्रह्म वनिं त्वा क्षत्र वनिं सजातवन्न्युपदधामि भ्रातृव्यस्य वधाय॥ धर्त्रमसि दिवं दृꣳह ब्रह्म वनिं त्वा क्षत्र वनिं सजातवन्न्युपदधामि भ्रातृव्यस्य वधाय॥ विश्वाभ्यस्त्वाशाभ्य उपद-

विषयम्। चितानि यूयं भवथ। "ऊर्ध्वचितः" पश्चादुपहितकपालेषु चित इति ऊर्द्ध-

(२) शत्रुनिदानासक्तं मा माह इत्यर्थः। अथ मौढं कर्मास्माभिः क्रियमाणं नायकश्चौविधेनानुगृह्णीष्वेत्यर्थो वा।

(३) अन्तरिक्षं दृढीकुरु। पुरोडाशपाकोत्पन्नज्वालया यथान्तरिक्षलोकोप द्रवो न भवति तथा कुरु इत्या-शयः। अत्र कपालदेवता प्रार्थ्यते।

* शेष पूर्ववत्। तृतीयं निदधाति—भा० पु० नास्ति।    † चतुर्थं निदधाति—भा० पु० नास्ति।

नित् तस्योर्द्धचित: उपचीयमानस्येति शेष:। अङ्गारैरभ्यूहति। "भृगूणामङ्गिरसाम्"। भृगोरपत्यानि बहूनि भृगव: तथा अङ्गिरस: 'तद्राजस्य बहुषु' लुक्। भृगूणामङ्गिरसां च तपसा यूयं कपालानि तप्यध्वम् (४) ॥ १८ ॥ घर्मासीत्यादि त्रीणि यजूंषि व्याख्यातानि। कृष्णाजिने दृषदं निदधाति (१)। "धिषणासि"। धी: (२) कर्म बुद्धिर्वा तदुभयं सीदति सनोति

धासिचितस्त्थोर्द्ध्वचितोभृगूणामङ्गिरसान्तपसातप्यध्वम् ॥ १८ ॥*
धर्म्मासि। धर्म्मास्यवधूतꣳरक्षोवधूताऽअरातयोदित्यास्त्वगसिप्रति-
त्त्वादितिर्व्वेत्तु ॥ धिषणासिपर्व्वतीप्रतित्त्वादित्यास्त्वग्वेत्तु दिवस्क-

व्याप्नोति ददाति वा * कर्मोक्तत्वात् दृषद् धिषणोच्यते। धिषणा त्वमसि "पर्वती" पर्वषती।

(४) अग्नेस्तदीयतपोरूपत्वं भावनीयमिति पर्यवसितम् ॥ १८ ॥

(१) कृष्णाजिनमादत्ते पूर्ववत्, तस्मिन्दृषदं दृषणाभीति, पश्चाच्छम्यामुपोहत्यादीति दिव इति, दृषदुपला दृषणाभीति। का॰ २।४।२८ २।५।५। (२) धिषणापर्व्वेकान्तयो ऊह्यः ॥ १८ ॥

* व्याप्नोति ददाति वा—१४० मांश।

अतः "प्रतिवेत्तु" प्रतिजानातु "त्वामदित्यास्त्वक्" पृथिव्यास्त्वक्। कृष्णाजिने शम्यामुपदधाति। "दिवस्कम्भनीरसि"। दिवोद्यावापृथिव्योः दृषदुलूखलयाः पृथिवी। दृग्भ्यामुपलक्षितत्वात् शम्याया अन्तरिक्षभक्तित्वमुपपद्यते। दिवोर्द्यावापृथिव्योः "स्कम्भनी:" स्कभ्नोतिः संस्तम्भनकर्मा। संस्तम्भनोभवसि। "अन्तरिक्षमेव रूपेण हीमे द्यावापृथिवी विस्तब्धे" इतिश्रुतिः। दृषदुपलमुपदधाति। "धिषणासि"। व्याख्यातम्। "पार्वतेयी"। पर्वत्या अपत्यम् पार्वतेयी। "कनी-

स्कम्भनीरसिधिषणासिपार्व्वतेयीप्प्रतित्त्वापर्व्वतीव्वेत्तुधान्न्यमसि॥१९॥
धान्न्यमसि। धिनुहिदेवान्न्प्राणायत्त्वोदानायत्त्वाव्व्यानायत्त्वा॥

यसौ ह्येषा दुहिता पार्वतेयी भवती'तिश्रुतिः॥ १९॥ दृषदि तण्डुलानावपति (१)। "धान्य-मसि"। धिनोतेः प्रीणनार्थस्य धान्यमिति भवति। तदभिप्रायेणैवमाह। यतस्त्वमेवं

(१) धान्यमसीति तण्डुलानोप्य, पिनष्टि प्राणायत्वेति प्रतिमन्त्रं, दीर्घामिति कृष्णाजिने प्रोहति, चक्षुषे त्वेतीक्षते, पिष्यमाणेषु निर्वपत्यन्योमक्षीनामित्याज्यम्। का० २।५।६ प०।

स्वभावमपि † अतः प्रीणीहि देवान्। पिनष्टि। "प्राणाय (२) त्वा"। अत्र श्रुतिः। "जीवं वै देवानां हविरमृतममृतानां" इत्युपक्रम्य "दृषदुपलाभ्यां हविर्यज्ञं मन्ता"ति प्रतिपाद्य यदाह "प्राणायत्वोदानायत्वेति तत्प्राणापानौ दधाती"त्येवमादिना ग्रन्थेन यथा हविषः पुनर्जीवनं क्रियते तथा श्रुतिः प्रतिपादयति। तदनुसारेण व्याख्यानं (३) करिष्यामः। प्राणाय त्वा पिनष्मि"। न तु हिंसायै। एवमुत्तरावपि मन्त्रौ व्याख्येयौ। कृष्णाजिने प्रक्षिपति। "दीर्घामनुप्रसि-

दीर्घामनुप्रसितिमायुषेधान्देवोवः सविताहिरण्यपाणिः प्रतिगृभ्णातु

तिम्"। षञ् समर्पणे। प्रसितिः प्रसवनात्तन्तुर्वा जालं वा। इह तु प्रसितिशब्देन कृष्णाजिनमभिधीयते, तदपि हि पिष्टानि गृह्णाति। दीर्घां कृष्णाजिनाख्यां प्रसितिमनु। "आयुषे" आयुर्दानाय त्वा "धां" दधामि। "देवो वः"। इति व्याख्यातम्। ईक्षते। "चक्षुषे त्वा" चक्षु-

(२) प्राणापानिति मुखिवेदा चेष्टते इति प्राणः श्वासवायुः, उत् अनिति ऊर्ध्वं चेष्टते उदानः उत्क्रान्तिवायुः, व्यानिति व्याप्य चेष्टते व्यानो बलप्रदो वायुः।

(३) महीधरभाष्ये तु प्रसवनं प्रसितिः कर्मसंततिः, षिञ् बन्धने, 'दीर्घामविच्छिन्नां प्रसितिमनु' कर्मसन्तति-

† प्रीणनस्वभावमपि—पा० १३०।

दीनाय त्वामहमीचे। "एतानि वै जीवतोभवन्त्येवसुपैतज्जीवमेव देवानां हविर्भवती"तिश्रुतिः। आज्यं निर्वपति। "महीनां पयोसी"ति। महीति गोनाम। महीनां गवां पयो भवसि। पयश्श-ब्देन् लक्षणया घृतमभिधीयते ॥ २० ॥ पात्र्यां पिष्टान्यावपति (१) "देवस्यत्वेति"। व्याख्या-तम्। ननु ग्रहणे देवस्येतियदुक्तं तेनैव दर्शनेनाब्राह्मणतर्पणान्तं कर्म करिष्यति किमनेन पुन-

त्वचिक्षुहे गापुाणिना चक्षुषेत्त्वामहीनाम्पयोसि ॥ २० ॥° देवस्य-त्वा। सवितुःप्प्रसुवे ऽश्विनोर्व्वाहुभ्यांम्पूष्णोहस्ताभ्याम् ॥ संव्व-

देवस्यत्वेति। संस्कारोज्ज्वलनार्थं हितं च पथ्यं च पुनःपुनरुपदिश्यमानं न दोषाय भवतीति। "संवपामि"। समित्येकीकृतामाचष्टे एकत्र क्षिपामि। आप उपसर्जनीः प्रतिगृह्णाति। "समाप ओषधीभिः संपृच्यन्ताम्"। पृची संपर्के। संगच्छन्ताम् आप ओषधीभिः पिष्टाभिः।

मनुलक्ष्य यजमानस्यायुषे आयुरभिवृध्यर्थं हे हवि. त्वा मा कृष्णाजिने स्थापि। यजमानस्यायुर्वृद्धौ सत्यां कर्मसंतति प्रवर्तत इति। एवं चक्षुषे त्वस्यापि यजमानस्य चक्षुरिन्द्रियपाटवार्थेतिवार्थं उक्त ॥ २० ॥

(१) पात्र्यां सपवित्रायां पिष्टान्यावपति देवस्येति, उपसर्जनीरानयत्यस्य पवित्राभ्यां प्रतिगृह्णाति समाप

"समोषधयो रसेन"। संगच्छतां च ओषधयः पिष्टाख्यरसेन उपसर्जनीभिः। आपो हि ओषधीनां रसः। "सꣳ रेवतीर्जगतीभिः पृच्यन्ताम्"। पृची संपर्के। "रेवत्य आपो जगत्य ओषधय" इति श्रुतिः। संपृच्यन्तां रेवत्य आपः जगतीभिरोषधीभिः पिष्टाख्याभिः। "संमधुमतीभिः पृच्यन्ताम्"। मधुशब्दो रसवचनः। संपृच्यन्तां मधुमत्स्वादोपेता आपः मधुमतीभिः। संपृच्यन्तां वा मधुमत्स्वादोपेताभिरोषधीभिः पिष्टाख्याभिः ॥ २१ ॥ संयौति (१)। "जनयत्यै त्वा"।

पामिसमापऽओषधीभिंꣳसमोषधयोरसेन ॥ सꣳरेवतीर्जगतीभिः पृच्यन्ताꣳसम्मधुमतीर्म्मधुमतीभिः पृच्यन्ताम् ॥ २१ ॥ जनय

त्यैयं मन्त्रः। श्रुतिर्व्याचष्टे। जनेर्ण्यन्तस्य क्तिन्। जनयतिः। यजमानस्य जनयत्यै श्रीप्रजापशुभिर्यजमानं जनयितुं संमिश्रयितुं त्वां संयौमि। अथवा पुरोडाश उच्यते। जनयत्यै उत्पादनाय त्वां संमिश्रयामि। यथा त्वं मिश्रितः पुरोडाशभावमासाद्य अधिश्रितः सन् इति। का० २।५।१-१३। पिष्टं वपनीया आप उपसर्जन्य इत्युच्यन्ते ॥ २१ ॥

(१) संयौति जनयत्यै त्वेति, संविभज्याङ्गारिष्यन्नालभते इदमग्नेरिदमग्नीषोमयोरिति, इषे त्वेत्याज्यमधिश्रयति, घर्मोऽसीति पुरुपायं, उरुप्रथा इति प्रथयति, यावत्कपालं, अग्निष्ट इत्यद्भिरभिमृशति, देवस्त्वेति श्रपणम्। का० २।५।९-१३

देवायोनेरन्ने धिनायस इति। न द्याते त्वां मर्त्यो जनयितुमर्हति। असंस्करिष्यन्नालभते।
शु० "इदमग्नेरिदमग्नीषोमयोः"। अर्द्धशब्दः समविभागवचनो नपुंसकलिङ्गः तदभिप्रायमिद-
य० मिति नपुंसकलिङ्गता। आज्यमधिश्रयति (२)। "इषे त्वा"। व्याख्यातम्। पुरोडाश-
सं० मधिश्रयति। "घर्मोसि"। प्रवर्ग्यस्त्वमसि (३)। "विश्वायुः"। सर्वायुः। विश्वं सर्वमायु-
२२ रस्येति विश्वायुः। "विश्वायुरिति तदायुर्दधाती"तिश्रुतिः। पुरोडाशं प्रथयति। उरुप्रथस्व
उ० त्यै त्वा। जनयत्यै त्वा संयौमि। इदमग्नेरिदमग्नीषोमयोरिषे
भा० त्वा घर्मोसि विश्वायुरुरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथता
उरुप्रथाः"। उरु विस्तीर्णं प्रथसे स्वभावतः तं त्वां ब्रवीमि "उरुप्रथस्व"। किञ्च उरु ते तव
यज्ञपतिर्यजमानः पुत्रान्नपश्वादिभिः प्रथतां विस्तारमाप्नोतु। अग्निरभिमृशति। "अग्निष्टे"
हे पुरोडाश अग्निः ते तव त्वचं माहिंसीदिति। श्रपयति। "देवस्त्वा"। देवः सविता
त्वां श्रपयतु वर्षिष्ठे उत्कृष्टे नाके स्वर्गे अधि उपरिस्थितम्। सविता वा नाके स्थितः। सविता

(२) आज्यप्रविलापनार्थं तत्पात्रस्याग्नौ स्थापनमधिश्रयणम्। (३)घर्मशब्देन दीप्यमान मग्निर उच्यते। घृतवर्णदीप्तो। १२२१।

न: संस्तर एष स ह्याधियज्ञिको यज्ञमभिक्रम्य वर्त्तते । देवलोकः पुरोडाशशरीरस्य च यद्दस्यै-तज्जन्म यज्ञपणास्, स यद्दिवलोके जायते अतस्तत्समानयोगक्षेमो यजमानोऽपि तत्रैव जनिष्यत इति तत्र अन्वाशास्त इति ॥२२॥ पुरोडाशमभिमृशति (१) । "माभेर्मासंविक्थाः" । मा त्वं भैषीः मा च त्वं संविक्थाः । ओविजी भयचलनयोः । तत्र भयं प्रतिषिद्धं चलनं त्वत्र निषिध्यते । न भेतव्यं न चलितव्यमित्यर्थः । पुरोडाशमभिधारयति । "अतमेरुर्यज्ञः" । तमु अभिकाङ्क्षा-

मग्निष्टेत्वचुमाहिंऽसीद्देवस्त्वासविताश्रपयतुवर्षिष्ठेऽधिनाके ॥२२॥

माभे÷ । माभेर्मासंविक्थाऽअतमेरुर्यज्ञोऽतमेरुर्यजमानस्य-

याम् । यद्यपि धातुरभिकाङ्क्षाभावे पठ्यते तथापि अत्राभिकाङ्क्षायां भविष्यति । तमनशीलस्तमेरुः न तमेरुः अतमेरुः यज्ञः । अतमेरुर्यजमानस्य प्रजा भूयात्[१] भवेत* । पाञ्यङ्गुलिप्रक्षालनमाप्त्येभ्यो निनयति । "त्रिताय त्वा द्विताय त्वा एकताय त्वा" । निनयामीति द्रव्यपरो निर्देशः ।

(१) माभेरित्यालभते, अतमेरुरिति शृतावभिधारयति भस्मना वेदेनोपवेषेण वा । का० २।५।२४-२५ ।

* भवेदिति १पु नास्ति ।

निनयामीति शेषः। एवं द्विताय एकमेकताय। तत आप्त्याः संबभूवुः त्रितो द्वित एकत इत्येव-मादिरितिहासोयमवगन्तव्यः (२) ॥ २२ ॥ स्फ्यमादत्ते (१)। "देवस्य त्वे"ति व्याख्यातम्। "आददे" गृह्णामि। अध्वरं करोतीति "अध्वरकृतम्* देवेभ्यो"र्थाय। आलभ्य जपति। "इन्द्रस्य बाहुर्दक्षिणस्त्वमसि"। एष वै वीर्यवत्तमो य इन्द्रस्य बाहुर्दक्षिणः "सहस्रभृष्टिः" वज्रभारः

प्प्र जाभू यात्त्रिताय त्वाद्द्विताय त्त्वै कताय त्वा ॥ २३ ॥ देवस्य त्वा। सवितुः प्प्रसवे ऽश्विनोर्ब्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ आददेऽध्व-रकृतन्देवेभ्य ऽइन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा वा-

"शततेजाः" बहूनि तेजांसि यस्य स शततेजाः। "वायुरसि तिग्मतेजाः"। तिग्मं तेजः। तेजतेरु-

(२) पूर्वं कृतयिर्ते(?)र्भातोभिरयः मानिषत्ततो देवास्तं जघ्नुस्तदाम्निना वीर्यमप्सु मृतं तत आप्त्या उत्पन्ना-स्त्रितद्वितैकतनामानो देवैः सह यज्ञो यज्ञे पात्रीमयानजनलक्षणं भागं लेभिरे इति श्रुतप्रसिद्धः इतिहासः। २२।

(१) देवस्येति स्फ्यमादाय, स दर्भं सव्ये कृत्वा दक्षिणेनालभ्य जपतीन्द्रस्य बाहुरिति। का० २।६।१२-१४।

त्याङ्कर्मणः उत्साह एव तेजो यस्य स तथोक्तः। "द्विषतः" शत्रोः "वधः" वधकः (२) ॥२४॥

प्रहरति (१)। "पृथिविदेवयजनि"। वेदिः संबोध्यते। हे पृथिवि देवयजनि देवा यस्यामिज्यन्ते सा तथोक्ता। "ओषध्यास्ते" तव संबन्धिन्या "मूलं माहिंसिषम्"। हिंसि हिंसायाम्। 'माङिलुङ्' माविनाशिषं वज्रेण प्रहरन्। पुरीषमादत्ते। "व्रजं गच्छ" व्रजन्त्यस्मिन्नाव इति व्रजो घोषः गोवाटो वा उच्यते। गोव्रजे वा परिहृतं वा गवां स्थानं गच्छ।

युरसितिग्ग्मतेजाद्विषतोव्वधः ॥२४॥ पृथिविदेवयजनि। पृथिविदेवयजन्न्योषद्ध्यास्तेमूलम्माहिंसिषंव्व्रजङ्गच्छगोष्ठानंव्वर्षतुतेद्यौ-

वेदिं प्रेक्षते। "वर्षतु ते द्यौः"। वर्षतु तव द्युलोकः। शान्त्यर्थं वचनम्। उत्करे करोति। "बधान"। बध बन्धने, बन्धनं कुरु। हे "देव सवितः परमस्यां पृथिव्याम्" इति। स्तुतिः

(२) शटिभंजनं पाको मारणमिति यावत्। वर्धेस्त्रसंखराकाना मनुष्यां मारक द्रव्ययों महीधरभाषे ॥ २४ ॥

(१) पृथिवी देवयजनीति वर्षेन्तर्हिते प्रहरति, व्रजं गच्छेति पुरीषमादत्ते, वर्षतु ते इति वेदिं प्रेक्षते, बधानेत्युत्करे करोति। २।१।१५-१८।

शु॰ य॰ सं॰ २५ उ॰ मा॰

१ अ॰

"परमस्यां पृथिव्यां" यत्र अन्धतामिस्रो नरकः (२) तत्र ध्वन्धेतमसि बधानेति यदाह"। "शतेन पाशैः"। बहुभिः पाशैः। "योऽस्मान्द्वेष्टि" शत्रुः। "यं च वयं द्विष्मः"। शत्रुं "तम्" "अतः"। अस्मात् अन्धतमसः "मा मौक्"। मुच्लृ मोक्षणे। मा मुञ्च ॥ २५ ॥ द्वितीयं प्रहरति। "अपारुम्"। अररुः असुरः तमपनीय। "पृथिव्यै" पृथिव्याः देवयजनाद्व

ध्वान देवसवितः परमस्यां पृथिव्या शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् ॥ २५ ॥ अपारुम्। अपारुं पृथिव्यै देवयजनाद्वध्यासं व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्या शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्म

अपारुं "वध्यासम्"। व्रजं गच्छेति समानम्। अभिन्यसात्यनोदुत्करमररोदिवमिति। हे "अररो" त्वं "दिवं" द्युलोकं "मा पप्तः"। मा गमः। तृतीयं प्रहरति द्रप्सस्तेयाम्। योऽसाः

(२) "धन्धे तमसि बधानेति यदाह परमस्यां पृथिव्यामिति" श्रुतिः परमस्यामित्यत्र छान्दसः स्यात् ॥ २५ ॥

पिप्पल २५

पृथिव्या उपजीवनीयो रसः स द्रप्सः ते तव द्युलोकम् "मा स्कान्" मास्कांसीत। मा स्कन्तु। व्रजं गच्छेति समानम्(१) ॥२६॥ पूर्वं* परिग्रह्णाति(१)। "गायत्रेण त्वा"। त्वाशब्देन विष्णुरुच्यते। ते

ष्मस्तमतोमामौ'क् ॥ अर'रोदिवम्माप'प्पतोद्र प्प्सस्तेद्यामारक्ष'-
न्न्न जङ्ग'च्छगोष्ठानंव्वषंतुतेद्यौर्व्वधानदेवसवितः परमस्यांम्पृथिव्या
ठेशतेनुपाशैर्व्योस्मान्द्वेष्टियञ्च'व्व यन्द्विष्मस्तमतोमामौ'क् ॥२६॥

"प्राञ्चं विष्णुं निपाद्ये"ति स्तुतिः (२)। "गायत्रेण त्वा छन्दसा परिगृह्णामि"। एवं सुत्तरयोः।

(१) अपारररुमिति द्वितीयं प्रहरति, अभिन्यस्यत्यमीदुत्करमररो दिवमिति, द्रप्सस्त इति तृतीयम्। का॰ २।६।२१—२४ ॥ २६ ॥

(१) पूर्वं परिग्रहं परिग्रह्णाति दक्षिणतः पश्चादुत्तरतः स्फ्येन गायत्रेणेति प्रतिमन्त्रं, उत्तरं परिग्रहं गृह्णाति रुचा श्रोणीर्जस्वतीति। २।६।२५-३१।

(२) प्रजापतिपुत्रा देवा असुराश्च स्पर्धां चक्रुस्तदा देवान् पराजयं प्राप्तान्मत्वा भूमिमसुरा विभेजुस्तदा देवा

* पूर्वं परिग्रहं पा० १ पु०।

वेष्टुं येन आगतेनेति विशेषः। उत्तरं परिग्रहं परिगृह्णाति। पूर्वेण परिग्रहेण विष्णुं यज्ञं परिगृह्य तेन इमां पृथिवीं लब्ध्वा चोत्तरेण परिग्रहेण वक्ष्यमाणैर्गुणैरयोजयन्देवाः। "सुक्ष्मा चासि शिवा चा सीति" दक्षिणतः। सुक्ष्मा इति पृथिवीनाम। शोभना पृथिवी त्वमसि। शिवा शान्ता च त्वमसि। पश्चिमतः। "स्योना चासि सुषदा चासि"। स्योनमिति सुख-

गायत्रेण त्वा। गायत्रेण त्वा छन्दसा परिगृह्णामि त्रैष्टुभेन त्वा छन्दसा परिगृह्णामि जागतेन त्वा छन्दसा परिगृह्णामि॥ सुक्ष्मा-

नाम। सुखनामरूपा च त्वमसि। शोभनं यस्यां सीदन्ति सा सुषदा। उत्तरतः। "ऊर्ज-

वामनरूपविष्णुमग्रे कृत्वासुरानागत्यास्मभ्यमपि भूम्यंशो दातव्य इति ताम् याचितुः, ततोऽसुरा असूयन्तोऽयं विष्णु-र्यावति भूभागे शेते तावान् भवदीयो भिन्तूयुस्ततो देवा वहेतदस्माकमित्युक्त्वा ते प्राञ्चं विष्णुं निपात्य गायत्रेणेत्यादि-मन्त्रैर्यज्ञभूमिं जगृहुः। यतो विष्णुस्तु यत्र तिष्ठति सैव यज्ञभूमिरितिविदितत्वादेवेति तद्रूपेणामीति श्रुति-व्याख्यानुसंधाय वेदिग्रहणं विधेयम्।

स्वती चासि पयस्वती च"॥ अन्नवती चासि पयोविकारै रसेस्वद्वती च ॥ २७ ॥ वेदिमनुमार्ष्टि (१)। "पुराक्रूरस्येति"। निदानवतां मन्त्राणां पूर्वं निदानं वक्तव्यं पश्चान्मन्त्रार्थः तथा क्षिप्रमवगमो भवतीति। देवा असुरैः सह संग्रामं करिष्यन्त इदमूचुः यदस्याः पृथिव्या अनुपहृतं देवयजनं तच्चन्द्रमसि स्थापयामः। तत्र यदि कथञ्चिदस्मानसुरा जयेयुः

चासि शिवा चासि स्योना चासि सुषदा चास्यूर्जस्वती चासि पयस्वती च ॥ २७ ॥ पुराक्रूरस्य। विसृपो विरप्शिन्नुदादाय पृथिवीं

ततस्तेनैव देवयजनेन पुनः प्रतिक्रियां करिष्यामः। तदेतच्चन्द्रमसि कृष्णमुपलभ्यते। एतद्वियत्कृत्विद्वुपवतावती। "पुराक्रूरस्य" क्रूरशब्दः संग्रामवचनः (२) पञ्चम्यर्थे षष्ठी। प्राक् संग्रामात्। "विसृपः" "सृपितृदोः कसुन्नि"ति कसुन्प्रत्ययान्तमुभयेऽव्ययं पञ्चम्यर्थे। विविधं सर्पन्ति योद्धारोऽस्मिन्निति विसृपाः "विरप्शिन्नि"ति आमन्त्रितं महन्नाम। स च विष्णुर्यज्ञो वेदिर्वा

(१) पुरा क्रूरस्येत्यनुमार्ष्टि रिपतो वध इति स्फ्यमुद्यत्य प्रहरति। का० २।६।२२-५२।

(२) संग्रामो वै क्रूरमिति श्रुतेः ॥ २७॥

मापन्नः सत्रिभिर्वेदैर्निर्वल्यमानो विविधं रम्यति शब्दं करोति। हेविरगिशन् विष्णोश्स्णु।
"उदादाय" उन्नित्य प्रहतात्माहे वा: "पृथिवीं जीवदानुम्"। जीवितस्य दात्रीं सारभूतामित्यर्थः।
"यामेरयंश्चन्द्रमसि स्वधाभिः" या मेरयन्। ईर गतौ। अनेकार्थत्वाद्धातूनामिह स्थापनार्थः।
चन्द्रमसि स्थापितवन्तः। "स्वधाभि."स्वधाशब्दोऽन्नवचनः, इह त्वन्नहेतुभूतास्तिस्रो विद्या गृह्यन्ते।

जीवदानुम् ॥ यामेरयँश्चन्द्रमसि स्वधाभिस्तामु धीरासोऽअनुदिश्य यजन्ते ॥ प्रोक्षणीरासादय द्विषतो वधोऽसि ॥ २८ ॥ प्रतुर्-

"यां चन्द्रमसि ब्राह्मणा दधु"रिति श्रुतेः। तयीलक्षणो ब्राह्मणाः संहितां यां पृथिवीं चन्द्रमसि न्यदधुः। "तामु धीरासो अनुदिश्य यजन्ते"। तां पृथिवीं धीरासो मेधाविनः अनुदिश्य दर्शनेन सम्यक्समाद्य अद्यापि यजन्ते इति दर्शनप्रशंसा। प्रैषः। "प्रोक्षणीरासादय"। प्रोक्ष्यते आभिरिति प्रोक्षण्यः ता आसादय स्थापय। स्फ्यं प्रहरति। "द्विषतो वधोऽसि।" द्विष्टु वधो जिनायक्षु मसि ॥२८॥ अथ स्रुवमादत्ते तं प्रतपति (१)। "प्रत्युष्ट" मिति। व्याख्या-

(१) स्रुवं प्रगृह्य पूर्ववत्, वैदाग्रेरन्तत मागमाष्टि अनिषिम इति प्रतप्य प्रतप्य प्रवच्छत्यनिषितेति स्रुच इति। का० २।३।४५-१२।

तम्। स्रुवंसंमार्ष्टि। "अनिशितोसि"। शोनूकरणे। निशितस्तीक्ष्णीकृतः न निशितः अनिशितः अतीक्ष्णीकृतस्त्वमसि। तथापि "सपत्नक्षित्" सपत्नान् क्षिणोतीतिसपत्नक्षित्। क्षिणक्षिणोहिंसायाम। क्षिणोहिंसार्थः। यतस्त्वं यजमानस्य सपत्नक्षित अतो "वाजिनं त्वा"। वाजशब्दोन्नवचनः इह तु यज्ञवचनः। यतोसि देवानामन्नम्। "यज्ञोदेवानाᳫ

षᳫं रक्षः। प्रत्युष्टᳫं रक्षः प्रत्युष्टाऽअरातयो निष्टप्तᳫं रक्षो-निष्टप्ताऽअरातयः। अनिशितोसिसपत्नक्षिद्वाजिनं त्वावाजेध्यायैसम्मार्ज्मि॥ प्रत्युष्टᳫं रक्षः प्रत्युष्टाऽअरातयो निष्टप्तᳫं र-

मन्नमि" तिश्रुतिः। तं वाजमन्नं यज्ञमर्हति योर्हति स वाजी अर्हार्थे इतिणिन। वाजिनं यज्ञियं त्वाम "वाजेध्यायै" अिद्ध्यौ दीप्तौ। यज्ञोज्ज्वलनार्थम्। "संमार्ज्मि"। संशोधयामि। ऋजूपूशुद्धौ। स्रुवं च प्रतपति। "प्रत्युष्टमि"ति। व्याख्याते यजुषी। संमार्ष्टि

(२) वाजस्य यज्ञस्य इध्यै दीप्तिर्वाजेध्यातस्यै मित्यर्थः।

(३) स्रुवस्य पुरस्तात्प्रथमं समार्गं स्रुचः खीलात्पश्चात्। "योषा वै स्रुक् वृषास्रुव इति श्रुतेः॥ २८॥

स्रुचम् (३) "अनिशितासि"। व्याख्यातम्। अनिशितेति स्त्रीत्वविवक्षायां टाप् प्रत्ययः (४) वानिनीमितिङीप् प्रत्ययः। एतावानेव विशेषः ॥२८॥ "योक्त्रं पत्नी०" संनह्यति (१)। "अदित्यै रास्नासि" अदित्याः संबन्धिनी या रास्ना सा त्वमसि। रास्ना रसना। ऊर्द्ध मुञ्च इति "विष्णोर्वेष्योसि"। विष्णोर्यज्ञस्य वेष्यः। विष्लृ व्याप्तौ वेष्ट वेष्टने। अनयोर्धात्वोरन्यतरस्य रूपम्। यज्ञस्य व्यापनं

च्नोनिष्ट्यताऽअरातयः॥ अनिशितासिसपत्नक्षिद्वाजिनीन्त्वावाजेद्वायैसम्मार्ज्मि॥ २९ ॥ अदित्यैरास्नासि विष्णोर्वेष्योस्य-

वेष्टनं वा त्वमसि। वेष्य आवर्त्त उच्यते इत्यपरम्। आज्यमुद्वासयति। "ऊर्जेत्वे"ति। व्याख्यातम्। पत्न्याज्यमवेक्षते। "अदब्धेनेति"। आज्यमुच्यते। "अदब्धेन"। दभ्नातिर्हिंसार्थः अनुपहिंसितेन त्वां चक्षुषा अर्वाचीनं पश्यामि। किञ्च "अग्नेर्जिह्वासि"। यदा वा एतदग्नौ जुह्वति

(१) पत्नीं संवयति प्रचरद्भिरपत उपविष्टा गार्हपत्यस्य, मुञ्जयोक्त्रेण त्रिवितापरिहरत्यभीवासोऽदित्यै रास्नासीति, दक्षिणं पाश्वमपरे मतिमुच्योर्ध्वमुञ्ज इति विष्णोर्वेष्य इति न ग्रन्थि करोति, ऊर्जेत्वेत्यनुमुद्रास्य, पत्नीमवेक्षयत्यदब्धेनेति। २।७।१-५ ॥ २८॥

अयाग्नेजि ह्वा इवोत्तिष्ठन्ति ज्वालोत्पत्तिनिमित्तमित्यर्थः। "सुहूर्देवेभ्यः"। साधु हूयतेऽनेनेति सुहूः। अथवा शोभनमाह्वानं यस्य देवेभ्योऽर्थाय तदाज्यं सुहूः। उपकृत्य प्रत्युपकारं प्रार्थयते। "धाम्ने धाम्ने मे भव यजुषे यजुषे"। धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति च। धाम्ने धाम्ने यजुषे यजुषे इति द्विर्वचनं वीप्सार्थम्। मम यज्ञस्य यावन्ति स्थानानि

वर्जं त्वादभ्येनत्त्वा चक्षुषावपश्यामि ॥ अग्नेर्जिह्वासि सुहूर्देवेभ्यो धाम्नेधाम्ने मे भव यजुषेयजुषे ॥ ३० ॥ सवितुस्त्वा । प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः ॥ सवितुर्वः प्रस

यावन्ति यजूंषि तावन्ति व्याप्नुहीत्यर्थः ॥ ३० ॥ आज्यमुत्पुनाति (१)। "सवितुस्त्वा" सवितुः प्रसवे (२) वर्त्तमानस्त्वामुत्पुनामि। व्याख्यातमन्यत्। प्रोक्षणीरुत्पुनाति। "सवितुर्व"

(१) सवितुस्त्वेत्याज्यमुत्पुनाति, प्रोक्षणं च पूर्ववत्, आज्यमवेक्षते तेजोऽसीति, स्रुवेणाज्यग्रहणं घृताची धामनामेति सकृन्मन्त्रः इति। का० २।६।७-१२।

(२) आज्ञाया वर्त्तमानः सन् त्वामुत्पुनामि। शोधयामीत्यर्थः।

इति। व्याख्यातम्। आज्यमवेक्षते। "तेजोसि शुक्रमसि अमृतमसि" योह्येतद्भक्षयति ददाति जुहोति वा तस्य तेजः प्रभृतीनि भवन्तीति वाक्यार्थः। यद्वा यत एवैतद्गुणयुक्तमाज्यम्(३)। आज्यं गृह्णाति। "धामनामासि"। धाम स्थानम्, अन्नम् आयतनम्। धीयतेऽस्मिन्निति धाम इति। धाम असि। नामयति सर्वाणि भूतानि आत्मानं प्रति अतो नाम। "प्रियं देवानाम्" इष्ट-

व॒ उत्पु॑ना॒म्यच्छि॑द्रेण प॒वित्रे॑ण॒ सूर्य॑स्य र॒श्मिभिः॑ ॥ तेजो॑सि

शु॒क्रम॑स्य॒मृत॑मसि॒ धाम॒ नामा॑सि प्रि॒यन्दे॒वाना॒मना॑धृष्टन्देव॒यज॑न-

मसि ॥ ३१ ॥ इति संहितापाठे प्रथमोऽध्यायः ॥ १ ॥

मभिप्रेतं देवानाम्। "अनाधृष्टम्"। अनाधर्षितम् अप्रतिहतं रक्षोभिः। "देवयजनमसि"। देवा अनेन इज्यन्ते इति देवयजनम् (४) ॥ ३१ ॥ इति मन्त्रभाष्ये उवटकृतौ प्रथमोऽध्यायः ॥ १ ॥

(३) शरीरकान्तिहेतुत्वात्तेजस्त्वम्। स्निग्धरूपत्वाद्दीप्तिमत्त्वम्। बहुदिवसावस्थानेप्योदनादिवत्पर्युषितत्वादिदोषाभावादविनाशित्वम्। (४) देहस्य त्वमतस्त्वां गृह्णामीति योजना।

भारद्वाजोपनाम्ना श्रीगोविन्दविदुषा कृते। अपाणीत् प्रथमोऽध्यायो मन्त्रभाष्यस्य टिप्पणे ॥ १ ॥

इमं प्रोक्षति (१) "कृष्णोस्याखरेष्ठः।" अस्ति कृष्णशब्दो वर्णवचनोन्तोदात्तः। अस्ति कृष्णशब्दो मृगवचन आद्युदात्तः। तदिहाद्युदात्तत्वात्कृष्णमृगो गृह्यते। तथाहि श्रुतिः। "यज्ञोह देवेभ्योऽपचक्राम स कृष्णो भूत्वा चचारेति।" इष्मपूलक उच्यते। कृष्णमृगो यज्ञस्तमपि यज्ञसाधनत्वात् यज्ञ इत्युच्यते। "आखरेष्ठः"। आङध्यर्थे। आहवनी-

ॐम् ॥ कृष्णोऽसि। कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामि वेदिरसि बर्हिषे त्वा जुष्टां प्रोक्षामि बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि।

याख्ये गर्ते, यं मृगं राति ददाति, (२) तव अधि उपरि तिष्ठतीत्याखरेष्ठः। एतदुक्तं भवति।

*ष्टम्। पूर्वाध्यायी माघाडिनमारभ्याग्न्याधानान्ता मन्त्रा व्याख्याता। द्वितीयेऽध्याये इध्मप्रोक्षणादयो दर्शपूर्णमासमन्त्राः पिण्डपितृयज्ञमन्त्राश्च व्याख्यास्यन्तेऽथोपक्रमते। अनुवाकस्तत्र कृष्णोऽसीत्यष्ट अग्नेवाजजित्तिस्रो ३, मयीदमग्नीषोमयोः षट्का ५, उभेदब्धा चतस्रः ४, संवर्चसा पञ्च ५, अग्नये कव्यवाहनाय षट्, सप्तचतुस्त्रिंशत्।

(१) 'इध्मं प्रोक्षति त्रिरस्य वेदिं च बर्हिः प्रतिगृह्य वेद्यां कृत्वा पुरस्ताद्ग्रन्थिं कृष्णोऽसीति प्रतिमन्त्रम्। का॰ २।७।१८। इध्मं त्रिरस्य प्रोक्षति वेदिं च प्रोक्षति, बर्हिरादाय वेद्यां पूर्वग्रन्थिं कृत्वा प्रोक्षेत्क्रमान्मन्त्रत्रयेणेति सूत्रार्थः।

आहवनीयाख्ये खरे स्थितस्त्वं लघणगो यज्ञो भवसि अतोऽग्नये त्वा जुष्टमभिप्रेतमभिरुचितं प्रोक्षामि। वेदिं प्रोक्षति। "वेदिरसि"। "तद्यदेतेनेमां सर्वं समविन्दत तस्माद्वेदिर्नामेति"। तां व्युत्पत्तिमङ्गीकृत्याह (३)। "वेदिः" त्वं "असि" अतो बर्हिषे त्वामभिरुचितां प्रोक्षामि। बर्हिः प्रोक्षति। बर्हिरसि" बर्हिस्त्वमसि। अतः स्रुग्भ्यस्त्वामभिरुचितं प्रोक्षामि॥ १॥ शेषं मूलेषूपसिञ्चति (१) "अदित्यै व्युन्दनमसि"। इयं वै पृथिव्यदितिः।

## म्म्रादित्यै व्युन्दनम् ॥ १॥ अदित्यै व्युन्दनमसि विष्णोस्तुपोस्यूर्ण-

षष्ठ्यर्थे चतुर्थी। अदित्याः पृथिव्याः व्युन्दनम्। उन्दी क्लेदने। क्लेदनं सेचनं भवसि। उदकमुच्यते। प्रस्तरं गृह्णाति। (१) "विष्णोस्तुपोसि"। विष्णोर्यज्ञस्य। स्तुपः। ष्टुपै शब्दसंघातयोः।

(२) आघमन्तात् खरे कठिने वृक्षे तिष्ठति भाखरेष्ठ इति नार्थः। यथा: कदाचिद्वैश्योपक्रान्तः स्वगोपनाय कृष्णमगोभूत्वा वने यज्ञियतरुरूपे प्रविश्य कुत्रचित्कठिने वृक्षे तस्थौ तमिममितिहासमुद्बोधयत्याखरेष्ठ इति।

(३) विद्यते लभ्यते देवैरसुरेभ्य इति वेदिरितिमहीधरभाष्यम् ॥ १॥

(१) शेषं मूलेषूपसिञ्चत्यदित्यै व्युन्दनम्, बर्हिर्विस्रंस्य पुरस्तात्प्रस्तरग्रहणं विष्णोरिति, वेदिस्तृणाति ऊर्ण-

स्यावते: संघात: शिखा अस्ति *। वेदिं स्तृणाति। "ऊर्णम्रदसम्" ऊर्णामिव मृद्वीं त्वां करोमि स्तृणामि। स्तृञ् आच्छादने। आच्छादयामि। "स्वासस्थां" साधु मर्यादया यस्यामासीदन्ति सा तथोक्ता। तां त्वां स्तृणामि देवेभ्योऽर्थाय। स्रुचमभिमृशति। "भुवनपतये-स्वाहा" †। अस्याग्नेर्ये भ्रातरः पूर्वं त्रयो बभूवुः ते वषट्कारभयादिमां पृथिवीं प्राविशन् प्रविष्टाः, अयं चाग्निः प्रपलाय्यास्सु प्राविविक्षत् ‡ प्रवेष्टुमैच्छत् तं देवैरानीय स्वाधिकारे नियुज्यमान

**ऊर्णम्रदसन्त्वास्तृणामिस्वासस्थान्देवेब्भ्यो भुवपतयेस्वाहा भुवनपतये-स्वाहा भूतानाम्पतयेस्वाहा ॥ २ ॥ गन्धर्वस्त्वा । विश्वावसुः**

एवमुवाच एतेऽग्नयोऽस्मिन् परिधत्त त एते परिधयः तेषां चायं भागः कृत्रोऽग्नीनाम्। भुवःशब्देन मध्यमा व्याहृतिरुच्यते, भुवनशब्देन जगदुच्यते, भूतानामितिशब्देन भूतान्येवोच्यन्ते तेषां येऽधिपतयोऽग्नयस्तेभ्यः स्वाहेति संबन्धः ॥२॥ परिधीन् परिदधाति(१)। "गन्धर्वस्त्वा"। परिधिरुच्यते मदसम्, स्रुचमभिमृशति भुवपतये स्वाहेति। का० २।७।२०-२३ ॥ २ ॥

(१) परिधीन् परिदधाति मध्यमदक्षिणोत्तरान् गन्धर्व इति प्रतिमन्त्रम्। २।८।५।

* संघातरूपः शिखास्ति भवति—पा० १७०। † भुवनपतये स्वाहा। भूतानांपतये स्वाहा पा० [illegible]। ‡ प्रवेष्टुमैच्छत्—नास्ति पा० ५०।

गन्धर्वोविश्वावसुस्त्वां (२) परिदधातु सर्वतः स्थापयतु "विश्वस्य" सर्वस्य "अरिष्ट्यै" अविनाशाय। रिषिरपि हिंसायाम्। रिषतिः हिंसार्थः। सा तव प्रतिषिद्धा। किञ्च "यजमानस्य परिधि-रसि" न केवलमाहवनीयस्य किन्तर्हि यजमानस्यापि परिधिरसि। किञ्च "अग्निरसि" आहवनी-यस्य माता। अत एवमुच्यते। "इडे" स्तोवाय। झोतभिप्रायमेतत् "इडितः"। इडस्तुतौ। स्तुत

परिदधातुर्व्विश्वस्यारिष्ट्यौ यजमानस्यपरिधिरस्यग्निरिडऽई-डितः ॥ इन्द्रस्यबाहुरसि दक्षिणोव्विश्वस्यारिष्ट्यै यजमा-नस्यपरिधिरस्यग्निरिडऽईडितः ॥ मित्रावरुणौत्वोत्तरतः

इत्यर्थः। दक्षिणं परिदधाति। "इन्द्रस्य बाहुरसि दक्षिणः"। इन्द्रस्य दक्षिणेन बाहुना परिधिरुप-मीयते। व्याख्यातः शेषः। उत्तरं परिदधाति। 'मित्रावरुणौ त्वोत्तरतः'। मित्रावरुणौ वायवादित्यौ त्वाम् उत्तरतः सर्वतः परिधत्ताम्। "ध्रुवेण" अचलेन "धर्मणा" धारकेण। "विश्वस्यारिष्ट्या"

(२) 'विश्वस्मिन् सर्वस्मिन् प्रदेशे वसतीति विश्वावसुः। द्युलोकस्थं सोमं रक्षितुं तत्पार्श्वे सर्वत्र गन्धर्वो

इति व्याख्यातम् ॥ ३ ॥ आहवनीये इध्मकाष्ठमादधाति (१)। "वीतिहोत्रम्"। आग्नेयी गायत्री। "वीतिहोत्रम्"। वी गतिप्रजननकान्त्यशनखादनेषु। वीतिः अभिलाषः होतृकर्म्मणि यस्य सवीतिहोत्रः। अथवा विविधा ईतिर्गतिर्होतृप्रशास्त्रादिषु होत्रासु यस्य स वीतिहोत्रः। हे भगवन्नग्ने वीतिहोत्रं त्वाम्। "कवे" क्रान्तदर्शन। अतीतानागतविप्रकृष्टविषयं युगपद्दर्शनं यस्य सः क्रान्ति-

परि॑दधातु॒ विश्व॑स्यारि॑ष्ट्यै॒ यज॑मानस्य परि॒धिर॑स्य-ग्निरि॒डऽई॑डि॒तः ॥ ३ ॥ वी॒तिहो॑त्रन्त्वा। कवे॒ द्यु॒मन्त॒ꣳ स॒मिधी॑महि ॥ अग्ने॑ बृ॒हन्त॑मध्व॒रे ॥ ४ ॥ स॒मिद॑सि। स॒मि-

दर्शनः। "द्युमन्तम्" दीप्तिमन्तम्। "समिधीमहि"। इन्धी दीप्तौ। सन्दीपयामः। अनेन इध्मकाष्ठेन "वृहन्तं" महान्तम् "अध्वरे" यज्ञे (२) ॥ ४ ॥ द्वितीयमादधाति। "समिदसि"।

यजत्यनिति युत्यन्तरकथा। इति महीधरभाष्ये ॥ २ ॥

(१) अथ॰ परिधिं समिधोपस्पृश्य वीतिहोत्रमित्यादधाति। का॰ २।८।२। (२) इष्णगतौ। इतिर्गतिः व्याप्तिः पुत्रपौत्रपशुधनादिभिः समृद्धिरित्यर्थः। इति महीधरभाष्यम् ॥ ४ ॥

(१) अङ्गप्रधानार्थस्याग्नेः* "समिन्धनमसि"। समित् स्तूयते। आहवनीयमीक्षमाणो जपति। "सूर्यस्त्वा पुरस्तात्पातु"। गोपायतु। गुप्त्यै वाभितः परिधयो भवन्ति। "अथैतत्सूर्यमेव पुरस्ताद्गो-प्तारं करोतीति" श्रुतिः(२)। "कस्याश्चिदभिशस्त्यै"। यः कश्चिदभिशापस्तस्मादित्यर्थः। अभिशस्त्या इति चतुर्थी पञ्चम्यर्थे। बर्हिस्तृणे तिरश्ची निदधाति। "सवितुर्बाहू स्थः"। अनेन प्रस्तरस्य

देसि सूर्य्यस्त्वापुरस्तात्पातुकस्याश्चिदभिशस्त्यै ॥ सवितुर्बाहू-स्थ ऊर्णम्म्रदसन्त्वास्तृणामिस्वासस्थन्देवेब्भ्य ऽआत्त्वा व्वसवो-

धारणकर्मणा युवां सवितुर्बाहू भवथः। तयोः प्रस्तरं स्तृणाति। "ऊर्णम्रदसम्"। ऊर्णामिव मृदुं त्वां स्तृणामि। "स्वासस्थम्, देवेभ्यः" साधु अस्मिन्नासीदन्ति तिष्ठन्ति इति स्वासस्थः प्रस्तरः। देवेभ्य इति षष्ठ्यर्थे चतुर्थी देवानामिति यावत्। प्रस्तरमभिनिदधाति। "आत्वा वसवः"।

(१) पञ्चपस्य द्वितीयं समिद्धि, सूर्यस्त्विति जपत्याहवनीयमीक्षमाणो, बर्हिस्तृणे तिरश्चो दधाति 'सवितु-रिति, तयोः प्रस्तरं स्तृणत्यूर्णम्रदसमिति अभिविदधात्यात्वा वसवइति। का०-३।४।१-११। (२) इतरद्विकृतये

*( आहवनीयं पश्चात्—का० ३० सङ्गतम्।

स्कन्दिरगति शोषणयोः। आसदन्तु आसीदन्तु त्वां सवनदेवता वसवो रुद्रा आदित्याः ॥ ५ ॥ जुहूं निदधाति (१)। "घृताच्यसि"। अञ्चु गतिपूजनयोः। घृतमञ्चितं प्राप्तं यस्यां स्रुचि घृतं वा अचते यया स्रुचा सा घृताची। "जुहूर्नाम्ना"। क्रियाभिप्रायमेतत्। हूयते अनयेति जुहूः। "सेदंप्रियेणधाम्ने"ति तदः यवणाद्यदोऽध्याहारः। या त्वं घृताच्यसि जुहूश्च नाम्ना

**रुद्राऽआदित्याः सदन्तु ॥ ५ ॥ घृताच्यसि। जुहूर्नाम्ना। सेदम्प्रियेणधाम्नाप्प्रियꣳसदऽआसीद घृताच्यस्युपभृन्नाम्नासेदम्प्रियेणधाम्नाप्प्रियꣳसदऽआसीद घृताच्यसि ध्रुवानाम्नासेदम्प्रि-**

सा इदं प्रियं सदः स्थानम् आसीद अधितिष्ठ। प्रियेण धाम्ना सहिता। "एतद्वै देवानां प्रियं धाम यदाज्यमि"ति श्रुतिः। आज्यसहितेत्यर्थः। अथ वा धामानि भवन्ति स्थानानि नामानि

रचकं भवति पूर्वस्या तदभावात्सूर्य इति श्रुति तात्पर्यम ॥ ५ ॥

(१) सव्याभून्ये जुहूं प्रतिगृह्य निदधाति घृताचीत्येवमितरे उत्तराभ्यां प्रतिमन्त्रम्, प्रियेण धाम्नेति हवींषि वेद्यां कृत्वा, ध्रुवा असदन्निति सर्वाण्यालभते पाहिमामित्यात्मानमिति। का॰ २।८।१२-२०।

जन्यानीति वा। अस्मिन् पक्षे प्रियेण नाम्ना सहिता सतीति योज्यम्। उपभृतं सादयति। "घृताची सुपभृन्नाम्ना"। उपभरणादुपभृत्। व्याख्यातमन्यत्। ध्रुवां सादयति। "घृताची सिध्रुवा-नाम्ना"। ध्रुवा स्थिरा (२)। व्याख्यातमन्यत्। अन्यद्धविः सादयति। "प्रियेण धाम्ना"। व्याख्यात-मन्यत्। तानि हवींष्यभिमृशति। "ध्रुवा असदन्"। ता विष्णो पाहीति तदः सम्बन्धादध्या-

ये॒ण॒ धाम्ना॑ प्रि॒यꣳ सद॒ऽआसी॑द प्रि॒येण॒ धाम्ना॑ प्रि॒यꣳ सद॒ऽआसी॑द॥ ध्रु॒वाऽअ॑सदन्नृ॒तस्य॒ योनौ॒ ता वि॑ष्णो पाहि पा॒हि य॒ज्ञं पा॒हि य॒ज्ञप॑तिं पा॒हि मां य॑ज्ञ॒न्य᳖म्॥ ६॥ ❀ अग्ने॒ वाजजि॒द्वाजं॑ त्वा सरि॒ष्य

कारः। यान्येतानि ध्रुवाणि असदन् आसादितानि "ऋतस्य योनौ" यज्ञस्योत्सङ्गे "ता विष्णो" तानि हवींषि पाहि गोपाय। किञ्च "पाहि यज्ञम्" गोपाय यज्ञम्। किञ्च "पाहि यज्ञपतिं" यजमानम्। आत्मानमुपस्पृशति। "पाहिमाम्"। अध्वर्युरात्मानं ब्रवीति। गोपाय माम्। "यज्ञन्यम्"। यज्ञं नयतीति यज्ञनीः। गोपाय मां यज्ञस्य नेतारमित्यर्थः॥ ६॥ अग्नेः संमार्गं

(२) यथा होमार्थं जुह्वपभृतोश्चलनं तद्वदस्याश्चलनाभावेन स्थिरतया नाम्ना ध्रुवत्वम्॥ १॥

करोति (१)। "अग्ने वाजजित्"। हे भगवन्नग्ने वाजजिद्‌ वाजस्यान्नस्य जेतः "वाजं त्वा सरिष्यन्तमि"ति। सृ गतौ। यज्ञं त्वां आपयिष्यन्तम् "वाजजितम्"। अन्नस्य जेतारं संमार्ज्मि। मृजूष् शुद्धौ। अञ्जलिं करोति। "नमोदेवेभ्य"देवेभ्यो निन्हवः। दक्षिणत उत्तानं पाणिं करोति। "स्वधापितृभ्यः"। पितृभ्योनिन्हवः। जुहूपभृतावादत्ते। "सुयमेमे"। स्रुचावुच्येते। साधु

# न्त्वा॒ वाजजित॒ꣳ सम्मा॑र्ज्मि॒ नमो॑ देवेभ्य॑ स्व॒धा पि॒तृभ्य॑ सु॒यमे॑ मे भूयास्त॒मस्क॑न्नम॒द्य ॥ ७ ॥ अस्क॑न्नम॒द्य। दे॒वेभ्य॒ऽआज्य॑-

यमे (२) मे मम "भूयास्तं" भवतम् ॥ ७ ॥ यथाहं सुसंयताभ्यां स्रुग्भ्याम् अस्कन्नं सकलम् अद्य अस्मिन् कर्मणि देवेभ्योर्थाय "आज्यम्" आज्यशब्देन यज्ञो लक्ष्यते यज्ञं "संभृयासं" संविभृयासम्। दक्षिणातिक्रामति। "अंघ्रिणाविष्णो" अंघ्रिर्गत्यर्थस्य अंघ्रिः पादः।

(१) इध्मसन्नहनैरनुपरिधिं समार्ष्ट्यग्ने वाजजिदिति त्रिस्त्रिः परिक्रामति, अपरमाहवनीयादञ्जलिं नमोदेवेभ्य इति, स्वधापितृभ्य इति दक्षिणत उत्तानम्, सुयमे म इति जुहूपभृतावादायेति। का० ३।१।१२-१६।

(२) सुयमे सयते इत्यर्थः ॥ ७ ॥

पादेन "विष्णो" यज्ञ। "मात्वावक्रमिषम्"। माङि लुङ् मात्वामवाचीनं क्रमिषम्। "वसुमती" मित्यस्याय, वसुमतीं धनवतीम् हे भगवन्नग्ने ते तव "छायाम्"। छायाशब्द आश्रयवचनः। युष्माकं पादच्छायायां वसामीति यथा आश्रयम्, "उपस्थेषम्" उपतिष्ठेयम्। विष्णो यज्ञस्थानं भवसि। यज्ञस्य ह्येतत्स्थानं यत्र स्थितैर्यागः क्रियते यत् *

ठँ सम्भृयास मा हि, गा विष्णो मात्वावक्रमिषं वसुमतीमग्ने ते च्छाया-

यामुपस्थेषं विष्णोस्स्थानमसीत इन्द्रो वीर्यमकृणोदूर्ध्वोऽध्वर आ-

जुहोति। "इतइन्द्रः" इत अस्मात् यजतिस्थानात् उत्थायेतिशेषः। "इन्द्रो वीर्यं" वीरस्य कर्म वीर्यम् "अकृणोत्"। कृञ् हिंसाकरणयोः। हतवान्। "अतो हीन्द्रस्तिष्ठन् वृत्रमहन्निति"श्रुतिः। किञ्च "ऊर्ध्वोऽध्वर आस्थात्" यतश्च यजतिस्थानादूर्ध्वः प्रगुणः यज्ञः आस्थात आस्थितः। अध्वर्युमुख यागाभिप्रायमेतत् (१)॥८॥ 'अग्ने वेर्होत्रं वेदूत्यम्'। हे अग्ने वेः।

(१) दक्षिणातिक्रामत्यदिग्णाविष्णाविति, वसुमतोमित्यवक्षाय, इत इन्द्र इति जुहोति। का ३।१।१७-१८।२।२।१ ॥८॥

* य१—इति क्षिपास्ति।

विद् ज्ञाने विद्धि जानीहि अवगतार्थो भव। मया हौत्रं कर्त्तव्यम्। "वेर्दूत्यम्"। विद्धि च दूत्यं दूतस्य कर्म मया कर्त्तव्यम्। "उभयं वा एतदग्निर्देवानां होता च दूतश्चेति" श्रुतिः। "अवतांत्वा द्यावापृथिवी"। त्वां कर्मणि प्रवृत्तं पालयेतां द्यावापृथिव्यौ "स्विष्टकृत्" साधु इष्टं करोतीति स्विष्टकृत् देवेभ्योऽन्येभ्यः सकाशात् प्रथमम्। "इन्द्र आज्येन" अवगतिश्च प्रणयोः। अजनेन हविषा हवस्त्यात् ॥ ८ ॥ अग्नेर्वेः। अग्ने वेर्होत्रं वेर्दूत्यमवतान्त्वां द्यावापृथिवीऽअवत्त्वं द्यावापृथिवी स्विष्टकृद्देवेभ्यऽइन्द्रऽआज्येन हविषाभूत्स्वाहा सञ्ज्योतिषा ज्योतिः ॥ ९ ॥ * मयीदम्। नेन भूत् भूयात् स्वाहा सुवाक् आह। "वाचे वा एतमाधारयतीन्द्रो वागित्यवाच आहु" रिति श्रुतिः। जुह्वाध्रुवां समनक्ति (१) "संज्योतिषाज्योतिः"। सं गच्छतामित्यध्याहारः। ज्योतिषा आज्येन ज्योतिः आज्यं सङ्गच्छताम् ॥९॥ यजमानो जपति "मयीदमिन्द्रः"। मयि इदम् इन्द्रः

(१) जुह्वाध्रुवा समनक्ति ज्योतिषेति। का ३।२।२ ॥ ९ ॥

† अथ—इति बा, पु, नास्ति।

इन्द्रियं वीर्यम् आधात् स्थापयतु । किञ्च "अस्मान् रायः" धनानि "मघवानः" सर्वधनं विद्यते येषां ते मघवानः धनिनः "सचन्तां" सेवन्ताम् । षच सेवने । एतदुक्तं भवति धनानि धनिनश्चास्मान् सेवन्ताम् । किञ्च अस्माकं सन्त्वाशिषः "सत्याः" अवितथाः "नः" अस्माकं भवन्तु आशिषः । अग्नीत् प्राश्नाति(१) । "उपहूता" अभ्यनुज्ञाता "पृथिवी माता" जगतो निर्मात्री । "उपमां पृथिवी

मयीदमिन्द्र ऽइन्द्रियन्दधात्वस्मान्रायो मघवानः सचन्ताम् ॥ अस्माकꣳ सन्त्वाशिषः सत्या नः सन्त्वाशिषऽउपहूता पृथिवी मातोप मां पृथिवी माता ह्वयतामग्निराग्नीध्रात्स्वाहा ॥ १० ॥ उप-

माता ह्वयताम्" । अभ्यनुजानातु मां पृथिवी माता भक्षणाय । अहं तु अग्निः सन् भक्षयामि । अग्नीत् द्वितीयं प्राश्नाति । "उपहूतो द्यौः पिता" अभ्यनुज्ञातो द्यौः पिता पाता । "उप मां द्यौः

(१) प्रगातुरुपहूता पृथिवीति । का० ३।४।१८-२० एतत्सूत्रार्थस्तु यदा होता द्यावापृथिव्योरुपह्वानं करोति तदोभयोः पुरोडाशयोरेकैकमंशं षड्वत्ते षड्वत्तेऽग्नीध्रे ददाति सचोपहूतेतिमन्त्रेण तत्प्राश्नातीति । (२) मयी-दमित्यार्थस्तु यजमानस्य इदं कर्माग्नीध्रं तथाहैतोरग्निः सन् तं भागं प्राश्नातीत्यर्थं उक्तः । (३) जठरेऽग्नावितियेष ॥१०॥

मिताह्वयताम्"। उपह्वयताम् अभ्यनुजानातु मां द्यौः पिता पाता। अहं तु "अग्निः" आग्नीध्रादिति समानम्। इत उत्तरं ब्रह्मत्व* प्रतिष्ठान्तं बृहस्पतिराङ्गिरसोपश्यत्। प्राशित्रं गृह्णाति (१) "देवस्यत्वेति"व्याख्यातम्। प्रति गृह्णामीत्युत्तमः पुरुषः। प्राश्नाति। "अग्नेस्त्वास्येन"। अग्नेः संबन्धिना आस्येन मुखेन त्वां प्राशित्रं प्राश्नामि भक्षयामि ॥११॥ समिदामन्त्रितः प्रासीति (१)।

हूतो द्यौः। उपहूतो द्यौष्पितोप मान्द्यौष्पिता ह्वयताम् अग्निराग्नीध्रात्स्वाहा॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। प्रतिगृह्णाम्यग्नेष्ट्वास्येन प्राश्नामि ॥११॥

"एतं ते देव"। अध्वर्युराह ब्रह्मन् प्रस्थास्यामीति। एतं यज्ञं ते तव हे "देव" दानादिगुणयुक्त सवितः प्रसवितः प्राज्ञः। एकवचनस्य स्थाने बहुवचनम्। प्राहब्रवीति। "ततसवितारं प्रसवायो-

(१) देवस्य त्वेति प्रतिगृह्णाति, अग्ने ष्ट्वेति प्राश्नाति दन्तैरनुपस्पृशन् इति। का॰ २।२।१६।१७ ॥ ११ ॥

* ब्रह्मवत्व—पा, वा, पु।

प्रथावतीति" श्रुतिः। किञ्च "बृहस्पतये ब्रह्मणे" प्राह बृहस्पतिर्वै देवानांब्रह्मा तदधिष्ठित एवायं मानुषो ब्रह्मत्त्वं करोति "तेन यज्ञमव"। तेन हेतुना यज्ञम् अवपालय। तेन च "यज्ञपतिं यजमानं च पालय। तेन च "माम्" अव पालय ॥१२॥ किञ्च "मनोजूति-

ए तन्ते। देवसवितर्य्यज्ञम्प्राहुर्बृहस्पतयेब्रह्मणे। तेनयुज्ञमव तेनयुज्ञपतिन्तेन मामव ॥ १२ ॥ मनोजूतिः। मनोजूतिर्जुषतामाज्ज्यस्यबृहस्पतिर्य्युज्ञमिमन्तनोत्वरिष्टंयुज्ञꣳ। समि-

र्जुषतामाज्यस्य" मनो जुषताम् सेवताम् आज्यस्य आज्यम्। कथंभूतं मनः जूतिः। जवतेर्गति-कर्मणो जूतिः। अतीतानागतवर्तमानेषु कालेषु पदार्थेषु यद्गन्तृ गच्छति। "किञ्च बृहस्पतिर्यज्ञ-मिमं तनोतु" विस्तारयतु "अरिष्टं यज्ञꣳ समिमं दधातु"। रिषतिर्हिंसार्थः। अरिष्टमविनष्टं

(१) एतमिति छमिदामन्वित प्रसौति, का०२।२।२७ समिधमाधातुमनुज्ञामरानाय बोधितो ब्रह्मा एत त इत्या-दिना ओं प्रतिष्ठत्यन्तेन मन्त्रेणानुजानीयात् ॥ १२॥

यज्ञमिमं दधातु । इडाभक्षणेन हि यज्ञोविच्छिन्नः इष्यत एवसुच्यते । किञ्च "विश्वे-
देवासः" देवा एव देवासः । 'आज्जसेरसुक्' । सर्वे देवा इह कर्मणि मादयन्ताम् (१) । मदी हर्षे ।
हर्षं कुर्वन्तु । स्वार्थिको णिच् । अवतेराप्नोतेर्वा । ओंकारः इहाभ्युपगमार्थः । "प्रतिष्ठ"
प्रकर्षेण तिष्ठ ॥ १३ ॥ "एषा ते अग्ने" (२) । इतः प्रभृति प्राकृतमार्षम् । आग्नेयी अनु-
ष्टुप् समिदनुमन्त्रणे विनियुक्ता । हे भगवन्नग्ने एषा ते तव "समित्" समिन्धनम् । "तया"

मन्दधातु ॥ विश्वेदेवासऽइह मादयन्तामो३म्प्रतिष्ठ ॥ १३ ॥

एषा ते । अग्ने समित्तया वर्द्धस्व चा च प्यायस्व ॥ वर्द्धिषीमहि

समिधा "वर्द्धस्व च आचप्यायस्व" । चकारो भिन्नक्रमः । आप्यायस्व च । वर्द्धमाना-
प्यायने समिधा कुर्वित्यर्थः । किञ्च त्वत्प्रसादाद्वयं "वर्द्धिषीमहि" । पुत्रपश्वादिभिः । "आचप्या-
सिषीमहि" । चकारो भिन्नक्रमः । आप्यासिषीमहि च । प्यायतेर्लिङि सीयुटि उत्तमपुरुषैक-

(१) मादयन्ताम् तृप्यन्ताम् । मदतृप्तौचुरादिरिति महीधरः ॥ १३ ॥

(२) एषाते इति होतानुमन्त्रयतइति । का० ३।५।२। ब्रह्मत्वं समाप्तम् ।

वचने एतद्रूपम्। तत्र सौयुटश्छान्दसोऽभ्यासः। अग्निं संमार्ष्टि (२)। "अग्नेवाजजित्"। "सस्वांस" (३) स्वन्तसितिविशेषः॥ १४॥ जुहूपभृतौ व्यूहति (१)। तत्र जुह्वायमानसंस्तवः अग्नीषोमयोः प्रधानदेवतयोः "उज्जितिमनु" उज्जयनमनु। "उज्जेषम्" उद्‌जयेयम्। किञ्च "वाजस्य" अस्य पुरोडाशादेः। "मा"मां "प्रसवेन" अभ्यनुज्ञया करणभूतया प्रोहामि

चक्षुष्यमा चं॒ण्या॑सिषी॒महि॥ अग्ने॑ वाजजि॒द्वाज॑न्त्वा सस॒वाᳫं᳘संवाज॒जितᳫं᳘ सम्मा॑र्ज्मि॥१४॥ * ॥ अ॒ग्नीषोम॑यो॒रुज्जि॑ति॒म्। अ॒ग्नीषोम॑यो॒रुज्जि॑ति॒मनू॒ज्जे॑षं॒ वाज॑स्य मा प्रस॒वेन॒ प्रोहा॑मि॥ अ-

मेष्यामि। प्रस्ततत्वादग्नीषोमयोरुज्जितिमनु हविषः प्रसवस्य करणत्वेन विवक्षितत्वात् मामि-

(२) संमार्ष्टि पूर्ववदपरिक्रामन् सकृत्सकृत्सर्वासमितीति। का० ३।५।८। पूर्व मग्नेवाजजिदितिमन्त्रेण यदेध्मसनहनैरग्नेः संमार्गः कृतस्तथावापि, परं पूर्वं त्रिस्त्रिः कृतः इह तु परिक्रमणमन्तरा एकवारमेव।

(३) अन्नमुद्दिश्य गतवन्तमन्नं सम्पादितवन्तमित्यर्थः॥ १४।

(१) जुहूपभृतौ व्यूहत्यग्नीषोमयोरिति। का० ३।५।१७-१८।

त्यात्मनः कर्मत्वं मोक्ष्यामीतिकर्तृत्वं चोपपद्यते (२)। उपभृतं प्रतीचीं प्रेरयति। "अग्नीषोमौ" प्रधानहविर्भाजौ "तं" शत्रुम् "अपनुदताम्"। णुद प्रेरणे। अपगमं नयताम्। "यो ऽस्मान्द्वेष्टि"। द्विष अप्रीतौ। योऽस्माभिर्न प्रीयते "यं च वयं द्विष्मः"। येन च वयं न प्रीयेमहि। किञ्च एवमग्नीषोमाभ्यामपनुद्यमानं शत्रुमन्नस्य "प्रसवेन अपोहामि" अपाञ्चं प्रेरयामि अधो

ग्नीषोमौतमपनुदतांय्योऽस्मान्द्वेष्टि यञ्चवयन्द्विष्मोव्वाजस्यैनम्प्रसवेनापोहामि ॥ इन्द्राग्न्योरुज्जितिमनूज्जेषंव्वाजस्यमाप्रसवेनप्प्रोहामि॥ इन्द्राग्नीतमपनुदतांय्योऽस्मान्द्वेष्टियञ्चवयन्द्विष्मोव्वाजस्यैनम्प्रसवेनापोहामि ॥ १५ ॥ व्वसुब्भ्यस्त्वारुद्रेब्भ्यस्त्वा

नयामीत्यर्थः। उत्तरौ मन्त्रौ समानव्याख्यानौ ॥ १५ ॥ परिधीनन‌क्ति अध्वर्युः। "वसुभ्यस्त्वा"

(२) तत्र जुहूं प्राचीं प्रेरयति यजमानः। व्यूहनं परस्परविपरीतत्वेनापनोदनम् अग्नीषोमयोः द्वितीयपुरोडाशदेवतयोरुज्जितिमनु अविघ्नेन हविः स्वीकाररूपमुत्कृष्टजयमनुसृत्याहमुज्जेषं उत्कृष्टं जयं प्राप्तवानस्मि। इति महीधरभाष्ये स्पष्टोऽर्थः उत्तरौ मन्त्रौ द्व्यर्थदेवताविषयौ समानार्थौ ॥ १५ ॥

परिधिमच्यते(१)। "वसुभ्यो"र्थाय "त्वा"मनज्मि। "रुद्रेभ्यो"र्थाय "त्वा"मनज्मि। "आदित्येभ्यो" र्थाय त्वामनज्मि। एतदुक्तं भवति। इत्थं भूता यूयं येन युष्मदभ्यञ्जनेन सवनदेवतानां तृप्तिः। प्रस्तरमादत्ते। "संजानाथाम्"। हे द्यावापृथिव्यौ युवां संजानाथाम्। अवगतार्थं भवतं युवाभ्यां वृष्टिर्दातव्येति। किञ्च "मित्रावरुणौ वां वृष्ट्यावताम्"। वायुर्वै वर्षस्येष्टे स चाध्यात्मम्। प्राणोदानभूतौ मित्रावरुणशब्दाभ्यामुच्यते। तद्रूपोयं वायुरध्यात्मगतः स प्रस्तररूपापन्नं यजमानं

दित्येभ्यस्त्वा । सञ्जानाथान्द्यावापृथिवी मित्त्रावरुणौत्त्वा वृष्ट्यावताम् ॥ व्यन्तु वयोक्त ऽँरिहाणा मरुताम्पृषतीर्गच्छवशापृश्निर्भूत्त्वा दिवङ्ग

त्वां वृष्ट्या अवतु पालयतु। "यजमानो वै प्रस्तर" इति श्रुतिः। अनक्ति। "व्यन्तु वय" इति। छन्दांस्यभिधीयन्ते गायत्र्यादीनि। वेतिर्गत्यर्थः। व्यन्तु गच्छन्तु। वयोरूपाणि छन्दांसि प्रस्तरमादायेतिशेषः। "अक्तं" दृतमेव प्रस्तरं "रिहाणाः" लिहाना आस्वादयन्तः।

(१) जुह्वां परिधीनक्ति यथापूर्वं वसुभ्य इति प्रतिमन्त्रमिति, संजानाथामितिप्रस्तरादानं, अनक्त्येनं व्यन्तु वय इत्यग्रं जुह्वामुपभृति मध्यं मूलमितरस्यामिति, मरुतामिति चोत्क्षिप्य। तृणमादायानुप्रहरति इति का, २।२।२४-२।३।८

नीचैर्हरति। "मरुतां पृषती:"। पृषती प्रस्तरदेवत्या चतुर्थः पादं आग्नेयः। आकृतिपरिणामं त्रिभिः पादैराह। अन्तरिक्षस्थाना मरुतः तेषामादिष्टोपयोजनं पृषत्यो गावो वाहनं मरुतां संबन्धिनीः पृषतीर्गच्छ। ततः अन्तरिक्षं तर्पयित्वा।† वशा त्वं पृश्निर्भूत्वा दिवं गच्छ। "इयं वै वशा पृश्निर्यदिदमस्यां" मूलि चामूलन्नानाद्यं प्रतिष्ठितं तेनेयं वशा पृश्निरितिश्रुतिः। पृथिवी संबन्धिभिर्भोगैर्द्युलोकं तर्पयित्वा, इत्युक्तं भवति। "ततो नो वृष्टिमावह"।

**ततो नो वृष्टिमावह॥ चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि॥१६॥**

ततस्तस्मात् द्युलोकात् नः अस्माकं वृष्टिमावह। वृष्ट्या इमां पृथिवीं तर्पयेत्यर्थः। आत्मानमुपस्पृशति "चक्षुष्पा"। हे भगवन्नग्ने यतस्त्वं चक्षुष्पा भवसि स्वरसामर्थ्यात् "अतश्चक्षुर्मे पाहि" गोपाय (२)॥ १६॥ परिधीननुहरति "यं परिधिम्"। त्रिष्टुप्विराट्रूपा यजुरन्ता। अग्नेः प्रियमितियजुः। आहवनीयोग्निरभिधीयते। हे आहवनीय यं परिधिं "पर्यधत्थाः"।

एक तृणं प्रस्तरात्पृथक्कृत्य प्रस्तर नीचैर्हत्वाग्नौ प्रक्षिपेदितिसूत्रार्थः।

(२) प्रस्तरप्रहरणप्रभव चक्षुष उपद्रव मे परिहरेत्यर्थः॥ १६॥

† स्वभावत प्रकाशा—पा० बा० पु०।

परिहितवानसि (१)। "अग्ने देव"। "पणिभि"रसुरैः प्रतिपक्षभूतैः "गुह्यमानः"। गुह्न संवरणे। संभ्रियमाणः अवरुद्ध्यमानः। "तन्त एतम्"। तमेतं परिधिं ते तव "अनुजोषं भरामि"। अनुरुपसर्गः भिन्नक्रमः। भरामीत्येतेन स बध्यते। 'हृग्रहोर्भश्छन्दसि'इत्येति हकारस्य भकारः। अनुहरामि "जोष"मभिमतम्। तथाच श्रुतिः। "वायुरेवाग्निः तस्माद्यदेवाध्वर्युरन्तसं कर्म करोति अथैतमेवाप्येतीति"। * एतत्क्रमात्प्रीतो भवति। "एषनेत्वदपचेतयातै"। एष

यम्परिधिम्। यम्परिधिम्पर्य्यधत्थाऽअग्ने देवपणिभिर्गुह्यमानः॥ तन्तऽएतमनु जोषम्भराम्येष नेत्त्वदपचेतयाताऽअग्नेः॥

परिधिः। न इत् नेत् निपातसमाहारः परिभवार्थः। त्वत् त्वत्तः सकाशात् अपचेतयातै। आशङ्कायां पञ्चमो लकारः। चिती संज्ञाने। अपचेतयतु। एतदुक्तं भवति। एष परिधिर्मा कथञ्चित्त्वत्तो वियुक्तः सन् मास्मान्विगतचेतस्कान् कुर्यात्। मास्मान्विमनस्कान् करोतु। इत-

(१) परिधीननुप्रहरति यं परिधिमिति प्रथमम् इतरौ च युगपदन्यं प्रियमिति। का० ३।६।१८-१८।

* तथाचैतत्स्थाने—'ध्रौ...' इति पाठ उ० मते।

रावनु समस्यति। "अग्नेः प्रियम्"। अग्नेः संबन्धि प्रियं "पाथः" पाथ इत्यन्ननाम अभिप्रेतमन्नम् "अपीतम" अधिगच्छतम् (२) ॥१७॥ जुह्वमञ्जलौ संस्रवान् जुहोति (१) "सꣳस्रवभागाः"। वैश्वदेवी त्रिष्टुप् यजुरन्ता। स्वाहावाडिति यजुः। संस्रवः भागो येषां ते संस्रवभागाः विश्वेदेवाः। यद्यपि यूयं संस्रवभागाः "स्थ" भवथ तथापि "इषा" अन्नेन संस्रवलक्षणेनबृहन्तो

प्रि॒यम्पाथो॒पी॑तम् ॥ १७ ॥ स॒ꣳस्र॒वभा॑गास्थे॒षाबृ॒हन्तः॑प्रस्त॒रेष्ठाः॒प॑रि॒धेया॑श्च॒देवाः॒ ॥ इ॒मांवाच॑म॒भिविश्वे॑गृ॒णन्त॑ऽआस

महान्तः। किञ्च "ये च प्रस्तरेष्ठाः" प्रस्तरस्थायिनः ये च "परिधेयाः" परिधिभवा देवास्तानुपशब्दमत्यलीकत्य ब्रवीमि "इमां" मदीयां "वाचम्"। "अभिगृणन्तः" अभिष्टुवन्तः "विश्वे" सर्वे "आसद्य" स्थित्वा "अस्मिन्बर्हिषि" "मादयध्वम्" तृप्यध्वम् मोदयध्वं वा। "स्वाहा"(२)। व्याख्यातम्।

(२) अन्नेरन्नं भवद्भ्यां प्राप्यतामित्यर्थः ॥ १७ ।

(१) संस्रवभागा इति संस्रवान् जुहोतीति। का० ३।६।१८।

(२) स्वाहेति वाडितिशब्दौ हविर्दानार्थौ, सर्वथा दत्तमित्यादरं दर्शयितुं शब्दद्वयप्रयोगः। यद्यपि स्वाहाकारेण

"वाट्" वषट्कारः परोक्षम् ॥ १८ ॥ "घृताची" इति धुरि स्रुचौ निदधाति (१)। घृतमञ्चतियोस्ते घृताच्याविति प्राप्ते घृताची इति पूर्वसवर्णदीर्घादेशः। ये युवां घृताञ्चने स्थः। ते यूयमपि "धुर्यौ" धुरि भवौ धुर्याविनश्वरौ तौ पातं गोपायतम्। किञ्च "सुम्ने स्थः" सुम्नमिति सुख नाम। यस्मात्सुखरूपे भवथः तस्मात्सुम्ने। सुखे। "मा" माम् "धत्त" स्थापयतम्। "यज्ञनमश्यते" इति वेदिमालभते यजमानः। सूयं पवमान् कपिलाक्षवान् धनान्तवानित्यते कपयोस्त

हृ।ास्मिन्न्बुर्हिषिमादयद्धु ॐ स्वाहुाव्वाट् ॥१८॥ घृताची स्त्थः ।
घृताची स्त्थु धुर्य्यौ पात ॐ सुम्ने स्त्थः सुम्ने मांधत्तम् ॥ यज्ञ नम प्र्च

यजुषो, यज्ञो देवता। हे यज्ञ नमश्च ते नमोस्तु ते नमस्कारश्चास्तु ते तुभ्यम। स यदतिरेचयति तन्नमस्कारेण शमयति। "उपच" उपचयश्च ते.स्तु। "अथ यद्भूनं करोत्युपचाति वा वषट्कारेण वेति श्रुतेर्वषट्कारो दानार्थः, तथापि देवाना "परोक्षप्रिया वै देवा" इतिश्रुतेः परोक्षप्रियत्वात्प्रत्यक्षपरिहाराय वाडिति शब्दः प्रयुक्तः ॥ १८ ॥

(१) घृताची इति धुरि निदधाति, यज्ञ नमश्च त इति वेदिमालभते इति। का० ३।४।१४।३।४।१४। ॥ १८ ॥

तेन तदनूनं भवतीति" श्रुतिः। "यज्ञस्य शिवे संतिष्ठस्व"। यद्वै यज्ञस्यान्यूनातिरिक्तं तच्छिद्रं तेन तदुभयं शमयति। "स्विष्टे मे संतिष्ठस्व"। साधु इष्टं स्विष्टं तस्मिन् मे मम संतिष्ठ समाप्तिं याहि॥ १८॥ स्रुक् स्रुचं प्रतिगृह्णाति (१)। "अग्नेदब्धायो"। गार्हपत्योग्निरुच्यते। हे भगवन्नग्ने अदब्धायो दभ्नोतिर्हिंसाकर्मा। आयुरितिमनुष्यनाम। अदब्धः अनवखण्डित आयुर्मनुष्यो यजमानो यस्य स तथोक्तः। तस्य संबोधनम् अदब्धायो।

तुऽउप चयज्ञस्य शिवेसन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्व ॥१८॥ * ॥ अग्ने दब्धायो। शीतमपाहिमादिह्योऽपाहिप्रसित्यैपाहिदुरिष्ट्यै

यद्वा अग्निरेव अनवखण्डितायुः। अस्मिन्पक्षे छान्दसी पुंलिङ्गता। "अशीतम" अशभोजने। अश्नात्यश्नौ। एतौ धातु संदिश्येते। अशीतम अतिशयेन भोक्तः। अतिशयेन व्यापक। अशीतमेति दीर्घत्वं छान्दसम्। एवं स्तुत्वा याचते। "पाहि मादिद्योः"। दिद्यु-

(१) स्रुक्स्रुच प्रतिगृह्णात्यग्ने दब्धायो इति, दक्षिणाग्नौ जुहोत्यमय इति सरस्वत्या इति चेति। का० २।७।१७-१८।

दिति वज्रनाम। गोपाय मां दिद्युतः। "पाहि प्रसित्यै" प्रसितिः प्रसयनात्तन्तुर्वा जालं वा। पाहि मां बन्धनात्। "पाहि दुरिष्ट्यै" (२)। दुर्यागात् पाहि। "पाहि दुरद्मन्यै" अन्नेत्यन्ननाम पाहि दुर्भोजनात्। भीतार्थानां भयहेतुरिति सर्वास्वतुर्थ्यः पञ्चम्यर्थे। "अविषन्नः पितुं कृणु" पितुरित्यन्ननाम। विषरहितमन्नमस्माकं कुरु। "सुषदा योनौ"। योनिरिति गृहनाम। साधु सद्ने गृहे स्थितानामस्माकमेतद्भवतु। "स्वाहा वाडि"ति व्याख्यातम्। दक्षिणाग्नौ जुहोति।

पा॒हि दु॑रद्म॒न्या अ॑वि॒षन्नः॑ पि॒तुं कृ॑णु सु॒षदा॒ योनौ॒ स्वाहा॒ वाड॒ग्नये॑ संवे॒शप॑तये॒ स्वाहा॒ सर॑स्वत्यै यशोभ॒गिन्यै॒ स्वाहा॑ ॥२०॥ वे॒दो॑सि।

"अग्नये संवेशपतये"। स्त्रीपुंसयोरभिलाषपूर्वकमेकत्र शयनं संवेशः। तस्य पतिः संवेशपतिः तस्मै। "सरस्वत्यै यशोभगिन्यै"। जीवतः प्रशंसा यशः। भगिनीति संबन्धिशब्दः स्वसेत्युच्यते ॥२०॥ पत्नी वेदं प्रमुञ्चति (१)। "वेदोसीति"। विद ज्ञाने। वेदिता त्वमसि। यो ह्युपग्रहः स

(२) दुष्टा इष्टिः दुरिष्टिः, दुर्यागः। पथ्यास्तीयो मार्गइत्यर्थः ॥ २० ॥

(१) पत्नीवेदं प्रमुञ्चति वेदोसीति, समिष्टयजुर्जुहोतिवेदागातुविद इति। का० ३।८।१-४।

सन्निकर्षोद्यज्ञं जानाति। यतस्त्वं वेदोसि अतस्त्वां ब्रवीमि। येन कारणेन त्वं देव वेद "देवेभ्यो" देवानामिति विभक्तिव्यत्ययः। "वेदः अभवः" भूतः तेनैव कारणेन मह्यं मम वेदो भूयाः भवेः। समिष्टयजुर्जुहोति। "देवागातुविद" इति। विराड्यं त्रिंशदक्षरा। अस्याः पूर्वेणार्द्धेन देवतां व्यवसृजति। हे "देवा गातुविदः"। गातुरिति यज्ञनाम। यज्ञविदः। युष्मत्प्रसादात्तथा भवतु यथा आगामिनं "गातु" यज्ञं "वित्त्वा" विदित्त्वा। "गातुमित"।

वेदोसि येन त्वन्देव वेद देवेभ्यो वेदो भवस्तेन मह्यं वेदो भूयाः ॥ देवा गातुविदो गातुं वित्त्वा गातुमित ॥ मनसस्पतऽइमन्देव यज्ञं

ततोविकालं यज्ञमित आगच्छत। यज्ञपरम्पराविच्छिन्नागमना यूयं भवतेत्यर्थः (२)। एवं देवान् यथापथं विसृज्य अथेदानीं मनसस्पतिमाह। हे "मनसस्पते" मनसोधिपतिश्चन्द्रमाः हे चन्द्रमः इमं यज्ञं देव "वातेधाः" धारय। वाते हि यज्ञोवतिष्ठते। तथाच श्रुतिः। वायुरेवाग्निस्तस्माद्यदेवाध्वर्युरुत्तमं कर्म करोत्यथैतमेवाप्येतीति ॥ २१ ॥

(२) गातुर्गन्तव्यो मार्गस्तं गच्छतेति वार्थो महीधरभाष्ये ॥ २१ ॥

बर्हि र्जुहोति (१)। "संबर्हिरङ्क्ताम्"। बर्हिर्दैवत्या विराड्रूपा त्रिष्टुप्। सं बर्हिरङ्क्ताम्। अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु। बर्हिरिति द्वितीया। समङ्क्तां बर्हिः, क, इन्द्र इत्युपरिष्टात् श्रूयते स इहाभि संबध्यते। इन्द्रः समङ्क्तां बर्हिः। केन "हविषाघृतेन" कैः सहितः समङ्क्ताम्। "आदित्यैर्वसुभिर्मरुद्भिः विश्वदेवैः" सहित इन्द्रो बर्हिः समङ्क्ताम्। तच्चाक्तं सत् दिव्यं

स्वाहाव्वातेधाः ॥ २१ ॥ सम्बर्हिः। सम्बर्हिरङ्क्ताᳪहविषाघृते नसमादित्यैर्व्वसुभिःसम्मरुद्भिः॥ समिन्द्रोव्विश्वदेवेभिरङ्क्ता न्दिव्यन्नभोगच्छतुयत्स्वाहा ॥२२॥ कास्त्वाव्विमुञ्चतिसत्वाव्विमु

नभो गच्छतु। यद्दिव्यं दिवि भवं नभः। नभ इत्यादित्यनाम। आदित्यलक्षणं ज्योतिस्तद्गच्छतु ॥२२॥ वेद्यां प्रणीतां निनयति। "कस्त्वाविमुञ्चति" व्याख्यातम्। अयं तु विशेषः। तत्र यन्त्रं

(१) बर्हिः संबर्हिरितीति। का० ३।८।१॥ २२॥

¹ आहवनीयलक्षणेन ज्योतिषा एकीभूतसत्सन्तु—पा० भा० पु०।

युनक्ति इह तु विमुञ्चति । "पोषाय" यजमानस्य पोषाय निनयामीति शेषः । कपालानपास्यति । "रक्षसां भागोसी"ति । निगदव्याख्यातम् (१) ॥२३॥ इत उत्तरं याजमानं, † पूर्णपात्रम्प्रतिगृह्णाति (१)। "संवर्चसेति" त्वाष्ट्री त्रिष्टुप्। समित्युपसर्गः अगन्महीत्याख्यातेन संबध्यते। समगन्महि। "ब्रह्मवर्चसा" ब्रह्मवर्चसेन। "पयसा" गोभिः "तनूभिः" भार्यापुत्रादिभिः।

ञ्चति कस्मै॑ त्वा॒ विमु॑ञ्चति तस्मै॑ त्वा॒ विमु॑ञ्चति ॥ पोषा॑य रक्ष॑सां भा॒गो॑सि ॥ २३ ॥ * सं वर्च॑सा । सं॒ वर्च॑सा॒ पय॑सा॒ सन्त॒नूभि॒रग॑न्महि॒ मन॑सा॒ सꣳ शि॒वेन॑ ॥ त्वष्टा॑ सु॒दत्रो॒ विद॑धातु॒ रायो॑नु॑मार्ष्टु॒

"मनसा" च "शिवेन" शान्तेन। यज्ञमुपगच्छतः पुरुषस्य सर्वमेवैतदुपैति वर्च आदि अतो-

(१) वेद्या प्रणीता निनयति, परित्य करोति, पुरोडाशकपालेन कपालानपास्यत्यधः कृष्णाजिनं रक्षसामितीति का० ३।८।४-७। नीचजातिलाक्षणसमूहरूपो भागो निकृष्टो रक्षसामितितात्पर्य्यम् ॥ २३ ॥

(१) पूर्णपात्रं निनयति परीत्यत्त्वतं यजमानोऽञ्जलिना प्रतिगृह्णाति संवर्चसेति मुखं विमृष्टे इति। का० ३।८।१-१०

† याजमानं कर्मोपक्रमते.—पा० [illegible] पु०।

नेन पुनराप्यायति (२)। किञ्च "त्वष्टासुदत्रः" कल्याणदानः विदधातु "रायो" धनानि। किञ्च "अनुमार्ष्टु" शुन्धयतु "तन्वः" शरीरस्य "यद्विलिष्टम्" विशिष्टम् ॥ २४ ॥ विष्णुक्रमान् क्रमते। (१) "दिविविष्णुः" द्युलोके विष्णुर्यज्ञो मदीयः "व्यक्रंस्त" विक्रान्तवान्। "जागतेन छन्दसा"

तन्वो यद्विलिष्टम् ॥ २४ ॥ दिवि विष्णुर्व्यक्रंस्त जागतेन छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽन्तरिक्षे विष्णुर्व्यक्रंस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मः पृथिव्यां विष्णुर्व्यक्रंस्त गायत्रेण

"ततोनिर्भक्तः"। ततो द्युलोकात् निर्भक्तो निर्गतभागः कृतः। "योऽस्मान् द्वेष्टि" हिनस्ति। "यं च वयं द्विष्मः" हि सः। अनेनोत्तरावपि मन्त्रौ * व्याख्यातौ। भागमवेक्षते। "अस्मादन्नात्

(२) यद्धमवगच्छतो मरस्यापगतं ब्रह्मवर्चसादि पुनरनेनाप्यायति ॥ २४ ॥

(१) विष्णुक्रमान् क्रमते दिविविष्णुरिति प्रतिमन्त्रमिति, अस्मादन्नादिति भागमवेक्षते अस्यै प्रतिष्ठायै इति भूमिम्।

* विष्णुक्रमणमन्त्रौ—[illegible]

अस्मात् यज्ञभागात्। निर्भक्त इत्यनुषङ्गः। भूमिमवेक्षते। "अस्यै प्रतिष्ठायै"। अस्या भूमेः प्रतिष्ठायाः निर्भक्त इत्यनुषङ्गः। प्राङीक्षते (२)। "अगन्मस्वः"। अनेन कर्मणा अगन्मगताः। कम्, स्वर्गं यत्र सूर्यं देवान्। स्वरव्ययमनेकार्थम्। आहवनीयमीक्षते। "संज्योतिषाभूम" समित्येकीभावमाचष्टे आहवनीयलक्षणेन ज्योतिषा एकीभूताः ॥ २५ ॥ सूर्यमुदीक्षते (१)।

च्छन्दस॒ ततो॒नि॑र्भ॒क्तो॒योस्मा॒न्द्वेष्टि॒यञ्च॑ व॒यन्द्वि॒ष्मोस्मा॒दन्ना॑द॒स्यैप्र॒ति॒ष्ठाया॒ऽअग॑न्म॒स्वः॒सञ्ज्योति॑षाभू॒म ॥ २५ ॥ स्व॒य॒म्भूर॑सि। स्व॒य॒म्भूर॑सि॒श्रेष्ठो॑र॒श्मिर्व्व॑र्च्चो॒दाऽअ॑सि॒व्वर्च्चो॑मेदेहि। सूर्य॑स्य॒

"स्वयं भूरसि"। अकृतकस्त्वं (२) भवसि। "श्रेष्ठः" प्रशस्ततमः "रश्मिः"। सप्त रश्मय आदि-

(२) अगन्मस्वरिति प्रागिति, संज्योतिषेत्याहवनीयमिति। का० ३।८।१३-१८ ॥ २५ ॥

(१) स्वयंभूरितिसूर्यं, सूर्यस्येत्यावर्तते प्रदक्षिणमिति। का० ३।८।१७-१८।

(२) (अकृतकः) स्वयं सिद्धः। (अनु) अनुवृत्य ॥ २६ ॥

स्यस्य तत्र चतसृषु दिक्षु चत्वारो रश्मयः। एकोधस्तादेक उपरिष्टात्। मण्डलशरीराहं-मानी * हिरण्यगर्भाख्यः पुरुषः सप्तमः श्रेष्ठोरश्मिरिति। तथाच श्रुतिः। "अथ यत्परं भाः प्रजापतिर्वा स सुवर्गो वा लोक" इति। यस्तुं स्वयं भूरसि श्रेष्ठ्य रश्मिस्तं त्वां ब्रवीमि। "वर्चोदा असि"। ब्रह्मवर्चसस्य स्वरसेनैव स्वभावेनैव दातासि, अतो वर्चोमे मह्यं "देहि"। आवर्तते। "सूर्यस्यावृतम्"। आवर्त्तनमावृत्। सूर्यस्यावर्त्तनं "अनु" अहम् "आवर्त्ते"। "त

वृतमन्वावर्त्ते ॥ २६ ॥ अग्ने गृहपते। सुगृहपतिस्त्वयाऽग्ने ऽहङ्गृहपतिना भूयास ᳪ᳭सुगृहपतिस्त्वम्मयाऽग्ने गृहपतिना भूयाः ।

देतां गतिमेतां प्रतिष्ठां गत्वैतस्यैवावृतमनु आवर्त्तत" इति श्रुतिः ॥ २६ ॥ गार्हपत्यमुपतिष्ठते (१)। "अग्ने गृहपते" हे भगवन्नग्ने गृहपते "सुगृहपतिः शोभनो गृहपतिः अहं त्वया गृहपतिना गृहाणां पालयित्रा भूयासं भवेयम्। किञ्च "सुगृहपतिस्त्वं मया अग्ने"

(१) गार्हपत्यमुपतिष्ठतेऽग्ने गृहपते सूर्यस्यावर्तते प्रदक्षिणम्। का० ३।८।२१-२२।

* शरीराभिमानी—पा० १ पृ०।

"सहायेन गृहपतिना भूयाः" भवेः (२)। एवमनेन प्रकारेण। "अस्थूरिणौगार्हपत्यानिसन्तु"। अन्यतरतो युक्तं शकटं स्थूरीत्युच्यते। तद्वतः * प्रतिषिध्यते अस्थूरीति। लुप्तोपमञ्चैतत्। यथा उभयतो युक्तं शकटम्, एवं नौ आवयोः "गार्हपत्यानि" गृहपतिसंयुक्तानि कर्माणि "सन्तु"। "शतं हिमाः"शतं वर्षाणि। अथावर्त्तते। "सूर्यस्यावृतमन्ववर्त्ते"इति। व्याख्यातम् ॥२७॥ व्रतं विसृजते (१)। "अग्ने व्रतपते" हे अग्ने व्रतपते "व्रतं" महम्। "अचारिषं"

# अस्थूरिणौगार्हपत्यानिसन्तुशतꣳ हिमाः सूर्यस्यावृतमन्वावर्ते ॥ २७ ॥ अग्नेव्रतपते। व्रतमचारिषन्तदशकन्त-

चरितवानस्मि। "तदशकं" शक्तवानस्मि। "तन्मे" मम "आराधि"राद्धं फलम् अभिसम्बद्धमित्यर्थः। द्वितीयोव्रतविसर्गमन्त्रः। "इदमहम्" हे अग्ने त्वत्साक्षिकं व्रतं गृहीत्वा

(२) त्वत्प्रसादेन सार्द्धं, त्वदमदीयया सेवया। गार्हपत्यानीत्यत्र गृहपतिना संयुक्ते जनः इति जनः ॥ २७ ॥

(१) व्रतं विसृजते येनोपेयादिति, का० ३।८-२८। व्रतग्रहणे मन्त्रद्वयं विनियुक्तं तत्र प्रथमं येन मन्त्रेण व्रत

* तद्वत आप्रतिषिध्यते—पा० का० पु०।

इदं कर्म समाप्य य एव कर्मणः पुरा अहमस्मि मनुष्यः स एवास्मि ॥ २८ ॥ अतः परं पिण्डपितृयज्ञिया मन्त्राः। प्रजापतेरार्षम्। अग्नौ जुहोति (१)। "अग्नयेकव्यवाहनाय स्वाहा"। कवयः क्रान्तदर्शनाः पितरस्तेषां संबन्धि हविः कव्यम्। तद्वोढव्यं यस्यायमधिकारः स कव्यवाहनः। "सोमायपितृमतेस्वाहा"। पितृमान् पितृसंयुक्तः। वषट्कारेण वा वै स्वाहाकारेण वा देवेभ्योन्नं प्रदीयत इति लिङ्गाद्देवावेतौ मन्त्रौ। उल्लिखति। "अपहताः" अपहताः अस्मात् स्थानात् "असुराः रक्षांसि च वेदिषदः" वेद्यां सीदन्तीति वेदिषदः ॥ २९ ॥ उल्मुकं

न्त्सो राध्वीदमहं य एवास्मि सोऽस्मि ॥ २८ ॥ अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा । अपहता असुरा रक्षांसि



ग्रहण प्रथमेन द्वितीयेन वा तेनैव क्रमेणाव व्रतं विसृजेत् इति सूत्रतात्पर्यम् ॥ २८ ॥

(१) सारतण्डुलमपूर्णं यथयित्वाभिघार्योद्वास्य मेक्षणेन जुहोत्यग्नय इति सोमायेति च, दक्षिणेनोल्लिखत्यपहता इति का॰ ४।१।७-३।

(२) तादृशा असुरा वेदिस्थानादपगता। असुरत्वं च देवविरोधि जातिविशेष ॥ २९ ॥

परस्तात्करोति ये रूपाणीति (१)। त्रिष्टुबाग्नेयी।' "ये रूपाणि प्रतिमुञ्चमानाः"। ये पितृरूपाणि आत्मनि प्रतिमुञ्चमानाः (२)। प्रतिपूर्वो मुञ्चतिर्बन्धने वर्त्तते। आत्मनि बध्नन्तः "असुराः सन्तो" भवन्तः "स्वधया" पितृप्रणान्नेन हेतुभूतेन अस्माभिरेतत्स्वादितव्यमिति "चरन्ति" सञ्चरन्ति। किञ्च "परापुरः" पराक्रान्ताः पुरः परापुरः। शरीराणि महान्तीति "निपुरः"

व्वे॑दि॒षदः॑ ॥ २९ ॥ ये रू॒पाणि॑ प्र॑ति॒मु॒ञ्चमा॑ना॒ असु॑राः॒ सन्तः॑ स्व॒धया॒ चर॑न्ति। प॒रा॒पुरो॑ नि॒पुरो॒ ये भर॑न्त्य॒ग्निष्टाँल्लो॒कात् प्रणु॑दात्य॒स्मात् ॥ ३० ॥ अत्र॑ पितरो मादयध्वं यथाभा॒गमावृ॑-

निकृष्टाः पुरो निपुरः। सूक्ष्माणि शरीराणि ये "भरन्ति" ये बिभ्रति धारयन्ति "अग्निस्तान्" सुपन् "लोकात्" स्थानात् "प्रणुदाति" प्रणुदतु प्रेरयतु। अस्मात्पितृलोकात् ॥ ३० ॥ उदङ्-

स्वीयमसरलं च प्रच्छादयितुं ये स्थूलसूक्ष्मशरीराणि बिभ्रतीत्यर्थः। प्रणुदतु प्रकर्षेणापसारयत्वित्यर्थः। (१) अत्र पितर इत्युक्तोदङ्भास्ते आतमनादावृत्याभीमदध्वेति जपतीति। का० ४।१।१२-१४।

(१) का० ४।१।८। (२) स्वीयं रूपं विहाय पितृसमानरूपाणि स्वीकुर्वन्तः ॥ ३० ॥

ङास्ते (१)। "अत्र पितरः"। बृहती। अत्र अस्मिन्बर्हिषि हे पितर "मादयध्व" मोदयध्वम्। निज्ञ "यथाभाग" यो यस्य भागः तं तथा भागम। "आवृषायध्वम्"। आङ्पूर्वाद्वृषयब्दा'ल-र्तुःक्यङ्सलोपश्चेतिक्यङ्। वृष इव स्वेच्छया महद्भिर्ग्रासैरेतान् पिण्डानश्नीत (२)। आवृष्यामी-मदन्तेति जपति। "अमीमदन्त" हृष्टं माप्नवन्तः पितरो "यथाविभाग" च "आवृषायिषत"। अशितवन्तः। "यथाभागमाशिषुरित्येवैतदाहेति" श्रुतिः ॥२१॥ नमो व इत्यञ्जलिं करोति(१)।

षायद्ध्वम्। अमीमदन्तपितरोयथाभागमावृषायिषत् ॥ २१ ॥

नमोवः पितरोरसायनमोवः पितरः शोषायनमोवः पितरोजीवायन

षट्कृत्वा नमस्करोति "षड्वा ऋतवः पितर" इति श्रुतिः। व्याख्यातम्। "नमो वः पितरो रसाय" हे पितरः वः युष्माकं संबन्धिने रसाय रसभूताय वसन्ताय नमः। वसन्तेहिमध्वा-दयो रसाः संभवन्तीत्यत एवं नमस्क्रियते। एवं वक्ष्यमाणा अपि मन्त्रा व्याख्येयाः। "शोषाय"

(१) आतमनात् श्वासनिरोधेन ग्लानिपर्यन्तमुदङ्मुख आस्ते इति सूत्रार्थः।

(२) यथा वृषः स्वाभीष्टं घासं भक्ष्य तृप्तिपर्यन्तमश्नाति तद्वत् खीकुरुत ॥ २१ ॥ (१) का० ४।१।१५।

शोषप्रभावाय ग्रीष्माय नमः। शुष्यन्ति हि ग्रीष्मे ओषधयः। "जीवाय" जीवनहेतुभूताय वर्षाभ्यो नमः। "स्वधायै" "स्वधावै शरत् स्वधावै पितृणामन्नमिति" श्रुतिः। शरदि हि प्रायशोऽन्नानि भवन्ति। "घोराय" विषमाय। विषमो हि हेमन्तः प्राणिनां शीतप्रचुरत्वात्। "मन्यवे" मन्युः क्रोधः। क्रोध इव हि शिशिरओषधीर्दहति। "नमो वः पितरः पितरोनमोवः"।

मोवःपितरः पितरोनमोवोगृहान्नःपितरोदत्तसतोवःपितरोदेष्मएतद्वःपितरोवासआधत्त ॥३२॥ आधत्तपितरोगर्भंकुमारम्पुष्क

अभ्यासे महत्प्रयोजनं समर्थं मन्यन्ते। "गृहान्नः पितरोदत्त"। भार्यापुत्रपौत्रादयो गृहा उच्यन्ते। गृहान्नः अस्मभ्यं हे पितरो दत्त। किञ्च तथा युष्मत्प्रसादादस्माकं भवतु यथा नः गृहे सतो विद्यमानान् द्रव्यान् "वो" युष्मभ्यं दद्म (२)। सूत्राणि ददाति (१)। "एतद्वः युष्माकं हे पितरो "वासः" परिधानम् ॥ ३२ ॥ मध्यपिण्डं प्राश्नाति पुत्रकामा (१)। "आधत्त"

(२) सतो धनादुरस्यमस्माभिर्देयं, ददतां चास्माकं कदापि धनक्षयो मा भवतु इति तात्पर्य्यम्।

(१) एतद्व इत्यु पास्यति सूत्राणि प्रतिपिण्डमूर्णां दशा वा वयस्युत्तरे यजमानलोमानि वेति ॥ ३२॥

(१) आधत्तेति मध्यमपिण्डं पत्नी प्राश्नाति पुत्रकामेति। ४।१।२२।

गायत्री। हे पितरः आधत्त "गर्भम्"। "कुमारं पुष्करस्रजम्"। स्रक्शब्देन मुण्डमालोच्यते। पुष्करशब्देन पद्मानि। अश्विनौ पुष्करस्रजौ अश्विभ्यां पुत्रोपमानं क्रियते (२)। किञ्च यथा येन प्रकारेण "इह" अस्मिन्नेव महतौ "पुरुषः" पूरयिता देवपितृमनुष्याणाम्। "असत्"। भूयात् तथा आधत्तेति संबन्धः॥ ३३॥ अपो निनयति (१)। "ऊर्जंवहन्ती"। अब्दैवत्या

रस्रजम्॥ यथेहपुरुषोसत्॥ ३३॥ ऊर्जुंवहन्तीः। ऊर्ज्जुं व्वहन्तीरमृतङ्घृतम्पयः कीलालंपरिस्रुतम्। स्वधास्त्थतर्पयतमे

विराट्। हे आपः यूयम् ऊर्जमन्नं वहन्त्यो नानाविधम् "अमृतं घृतं पयः कीलालम्"। अन्नरसम्। कीलं अलं पर्याप्तः समर्थोन्नमिष्टं कर्तुं रस इति कीलालः। कीलं बन्धनम्। अलमत्यन्तमन्नस्येति वा कीलालम्। "तस्माद्यावन्मात्र इवान्नस्य रसः सर्वमन्नमवतीत्यादि" श्रुतिः।

(२) अश्विनौकुमारसादृश्यकथनेन नीरोगत्वं सुन्दरत्वं च पुत्राणां प्रार्थ्यते इति द्योतितम्॥ ३२॥
(१) ऊर्जमित्यापोनिषिञ्चति। का० ४।१।१८।

“परिस्रुत” । सुराम् । “स्वधास्थ” “स्वधावैपितृणामन्नमि”ति श्रुतिः । डुधाञ् धारणपोषणयोः । स्वमात्मीयं पितॄणां धानं पोषणं स्वधास्थ । “तर्पयत मे पितॄन् ।” स्वधा भवथ ततस्तर्पयत मे पितॄन् ॥ ३४ ॥ * इति संहितायां द्वितीयोऽध्यायः ॥ २ ॥

* ॐम् । * समिधाग्निम् । समिधाग्निन्दुवस्यतघृतैर्बोधय-

पितॄन् ॥ ३४ ॥ इति उवटकृतौ मन्त्रभाष्ये द्वितीयोऽध्यायः ॥ २ ॥

(२) ईदृशस्य सर्वरोगनाशकस्य मृत्युनाशकस्य च त्रिविधस्य रसस्य वचनानां पितृतर्पकत्वं साध्यपपन्नं भवति ॥ ३४ ॥ भरद्वाजोपनाम्ना श्रीगोविन्दविदुषा कृते । द्वितीयोयमथाध्यायोऽपाणीड्राष्यस्य टिप्पणे ॥ २ ॥

---

* समिधाग्निम्, भूर्भुवःस्वयतुष्का, वग्निर्ज्योतिरे, सप्तयन्तपङ्क्तिः ठं॰श्रति, भूर्भुव स्वःयतसो, गृहामातिस्रः,प्र- वासिनः पंच, पूर्वादर्शि दे,अयनमीमन्तपड्, पतेयम, १॰ विपष्टीः । अ॰ सू॰ ॥

ऋ० य० सं० ४८ उ० भा०

"समिधाग्निम्"। आधानमन्त्राः (१)। प्रागग्निर्ज्योतिरित्येतेभ्यः। देवानामार्षं प्रजापतेर्वाग्नेर्वा। आग्नेय्यश्चतस्रो गायत्र्यः। आश्वत्थीस्तिस्रः। समिधो घृताक्ता आदधाति। "समिधाग्निं दुवस्यत"। समिधाश्वत्थसमिधा अग्निं दुवस्यत। दुवस्यतिः परिचरणार्थः। परिचरत। ततो जातं सन्तम् पूर्णाहुतिसम्बन्धिभिर्घृतै"र्बोधयत" अवगतार्थं कुरुत। "अतिथिम्" अतिथिधर्माणम्। ततोनन्तरं तनुहविःसम्बन्धिनि "आस्मिन्हव्याजुहोतन"। आजुहोत अस्मिन्नग्नौ हव्या हवींषि॥ १॥

# तातिथिम्॥ आस्मिन्हव्याजुहोतन॥ १॥

(१) पूर्वाध्यायाभ्यां दर्शपौर्णमासेष्टिपिण्डपितृयज्ञमन्त्रा उक्ता इदानीमाधानमन्त्रान्वक्तुमुपक्रमते। कात्यायनेन अमावास्यायामग्न्याधेयमित्यादिना ब्रह्मौदनपाकपर्यन्तानि कर्माण्युक्ता पश्चात् तच्चातुष्प्राश्यं पचतुब्रह्मास्यासेचनं मध्ये कृत्वा सर्पिरासिच्याश्वत्थीस्तिस्रः समिधो घृताक्ता आदधाति समिधाग्निमिति प्रत्यृचमिति ४।८।४-५। चतुष्प्राशित्रा प्राशनयोग्यमोदनं पक्वौदनस्य तदोदनमध्ये घृतसेचनाय निम्नं स्थानं कृत्वा तत्सर्पिषापूर्य तस्य समिधस्तिस्रोऽपिष्टम्य तिसृभिः समिधाग्निमित्यादिकाभिः ऋग्भिरस्मिन्नाधत्तेति सूत्रार्थः॥ १॥

जपति "सुसमिद्धाय" साधु समिद्धाय। "शोचिषे" शोचिष्मते दीप्तिमते ज्वलनाय। "घृतं तीव्रम्" पटुतरं गव्यं गृहयोद्वासनाविश्ययणावेक्षणादिभिः संस्कारैः संस्कृतमित्यर्थः। "जुहोतन"। जुहुत कुरुत। नेत्यनर्थका उपजना भवन्ति। कर्त्तन हन्तन यातनेति (१)। "अग्नये जातवेदसे" जातप्रज्ञानाय ॥ २ ॥ "तन्त्वासमिद्भिः"। यस्तुमुक्तगुणस्तं त्वां समिद्भिः। हे "अङ्गिरः"। अङ्गतिर्गत्यर्थः। रो मत्वर्थीयः। गमनवन्। "अङ्गिरा उह्यग्निरिति" श्रुतिः।

# सुसमिद्धाय शोचिषे। घृतन्तीव्रं जुहोतन॥ अग्नये जातवेदसे ॥२॥

# तन्त्वा। समिद्भिरङ्गिरो घृतेन वर्द्धयामसि॥ बृहच्छोचा यविष्ठ्य ॥३॥

"घृतेन वर्द्धयामसि"। वर्द्धयाम। इदन्तो मसीति सिकारश्छान्दसः। "बृहत्" महत् "शोच" दीप्यस्व। "यविष्ठ्य" युवतम। इष्ठनि परभूतेटैः स्थूलदूरयुवह्रस्वादिना यविष्ठ इति सिद्धम्। स्वार्थिको यकारस्तद्धितः ॥ ३ ॥ (१) "उपत्वा"। उप "एन्तु" त्वां हे "अग्ने हविष्मती"

(१) जुहोतनेत्यत्र तप्तनप्तनथनाश्चेति पा॰ सू॰ तनवादेशोव बोध्य इतितत्त्वम् ॥ २—२ ॥

(१) उपत्वेति जपति का॰ ४।८।६ ॥ ४ ॥

शु० य० सं० ४९ उ० भा०

स्त्रिया संयुक्ताः "घृताचीः" घृताञ्चनाः समिधः। "हर्यत"। हर्य क्रान्तौ हर्यतिः प्रेप्साकर्मा। प्रेप्सन् ताश्च त्वां प्रत्युपगच्छतीः "जुषस्व" आसेवस्व "समिधः मम" संबन्धिनीः ॥ ४ ॥ (१) "भूर्भुवः स्वः"। महाव्याहृतयः, प्रजापतेरार्षम्। गार्हपत्याहवनीययोराधानमन्त्राः। पृथिव्यन्तरिक्षद्युलोका अभिधेयाः, महाव्याहृतिशो वा वर्णाः। अन्नप्रजापतयो वा। श्रुतितो व्याख्यातमेतत्। इमपूर्वाङ्गं गृहीत्वा यजमानो जपति। "द्यौरिवभूम्ना उपरिष्टादारभ्य तद्युव्य स्वे दं, तथाहि

३ अ०

उपत्वा। ग्ग्ने हविष्मतीर्घृताचीर्यन्तु हर्य्यत ॥ जुषस्वसमिधोमम ॥ ४ ॥ * भूर्भुवः। भूर्भुवः स्वर्द्यौरिवभूम्ना पृथिवीव-

सुगोधं भवति। "तस्याः" ते तव हे "पृथिविदेवयजनि" देशा यस्यामिज्यन्ते इति देवयजनी तस्याः संबोधनं क्रियते हे देवयजनि। ते "पृष्ठे" उपरि "अग्निमन्नादम्" अन्नस्यात्तारम्।

(१) दारुभिर्ज्वलन्तमादधाति भूर्भुव इति संभारेष्विति भूर्भुव स्वरिति पूर्ववदितिचेति। का० ४।१।८।१६। आपो हिरण्यमूषाखूत्करं शर्करेति पञ्चसम्भारास्तान् संपाद्य स्फ्येनोल्लिखिताया शुक्षाया भूमौतान् सम्भारानवस्थाप्य तेषु शुष्ककाष्ठैर्ज्वलन्तमग्निं भूर्भुव स्वरिति पञ्चाक्षराण्युच्चारयन्नादधात् इदमाहवनीयाधानम्। इति सूत्रार्थः

"अन्नाद्याय" अन्नादनाय अन्नभक्षणाय। "आदधे" स्थापयामि। तस्याः पृथिव्याः पृष्ठेऽग्निमाधाय। "द्यौरिवभूम्ना"। यथा द्यौर्भूम्ना नक्षत्रबहुत्वेन बह्वी एवं प्रजादिभिर्बहुभिर्भूयासम्। "पृथिवीवव्वरिम्णा"। यथा पृथिवी वरिम्णा उरुत्वेन सता सर्वप्राणिनामाश्रयभूता एवमहं महत्वेन सता सर्वप्राणिनामाश्रयभूतो भूयासम्। अथवा यथाक्रममेव व्याख्यायते। द्यौरिव भूम्ना भूयासम्, पृथिवीव वरिम्णा भूयासम, हे अग्ने त्वत्प्रसादात्। पृथिवुच्यते। तस्याः

रिम्णा ॥ तस्यांस्तेपृथिविदेवयजनिपृष्ठेऽग्निमन्नादमन्नाद्यायाऽ

ते तव पृथिवि देवयजनि पृष्ठे उपरि अग्निमन्नादमन्नभक्षणाय आदधे। यस्यास्तव मन्वादयोपि अन्नदाः आधाय संहृताः संजाताः ॥ ५ ॥ (१) "आयं गौः पृश्निः"। सार्पराज्ञ आर्षम्। गायत्र्यस्तृचः। आहवनीयाग्न्युपस्थानेविनियुक्ताः। अग्निः परापररूपेण स्तूयते। "आयंगौः पृश्निः इत्यपूर्वार्धं गृहीत्वा द्यौरिव भूम्नेत्याहेति। ४।८।१७। पूर्वार्धस्यार्थान्तर, किम्भूतमग्निं भूम्ना द्यौरिव वर्त्तमानम्। यथा द्यौर्नक्षत्रादि बहुत्वेन युक्ता तथा ज्वालाबाहुल्येन विराजमानम्। किञ्च यथा पृथिवी सर्वाश्रयभूता श्रेष्ठा एवं सर्ववस्तुशोधक श्रेष्ठोऽग्निरिति महीधरभाष्ये उक्तम् ॥ ५ ॥

(१) आयङ्गौरिति चोपतिष्ठते सार्पराज्ञी।महंद्क्षिणाग्निमादधातीति का० ४।८।१८-१९।

रक्रमीत्"। आक्रमीत् आक्रमते ऐश्वर्यरूपेणायमग्निः गौः, गन्ता (२) सर्वासु तासु तासु क्रिया-प्रश्निनीनीरूपः "असदन्मातरं पुरः" इमं लोकमग्निरूपेणानुगृह्य ततः प्रातरादित्यात्मना सीदति मातरं पृथिवीं पुरः पुरस्तात्प्राच्यां दिशि। "पितरं च प्रयन्स्व" पितरं द्युलोकं च प्रयन् गच्छन् सीदतीत्यनुवर्त्तते। स्वः आदित्यः॥ ६॥ एवमादित्यरूपेणाग्निं स्तुत्वा अथेदानीं वायुरूपेणाग्निं स्तौति। "अन्तश्चरतिरोचनास्य"। द्यावापृथिव्योरन्तरन्त-रति अग्नेर्दीप्त्याख्या शक्तिः। "अन्तरिक्षेयं तिर्यङ् वायुः पवत इति" श्रुतिः। "रोचना"।

दंधे ॥ ५ ॥ आयम्। आयङ्गौः पृश्निरक्रमीदसदन्मातरं-म्पुरः॥ पितरञ्च प्रयन्त्स्वः॥ ६॥ अन्तश्चरति। रोचनास्य-

दीप्ती। दीपना "अस्य अग्नेः। किं कुर्वाणा चरति। "प्राणादपानती"। अन प्राणने। सर्वप्राणिषु प्राणादनन्तरम अपानती चरति अपानादनन्तरं प्राणती चरतीति समर्थ्योदय-मर्थी लभ्यते (१)। एवं वाय्वादित्याभ्यां स्वशक्तिभ्यामिदं जगदनुगृह्याथ य एनामेव-

(२) यज्ञनिष्पत्तये तेषु तेषु यजमानसदनेषु गन्तेति तात्पर्यम्॥ ६॥

(१) सामर्थ्यात्प्राणापानयोः प्रेरिकेत्यर्थः। स तद्विनाऽदरेऽग्नौ जीवनहेतोरौष्ण्यस्य शरीरे सद्भावात् प्राणापानौ

"मामाहिꣳसीः" ॥ ८ ॥ मेखलां बध्नीते (१)। "ऊर्गसि"। अङ्गिरसामार्षमस्मिन्नपि। ऊर्गसि अन्नं भवसि। "आङ्गिरसी" अङ्गिरोभिर्दृष्टा। "ऊर्णम्रदाः"। ऊर्णेव म्रदी। यतस्त्वमधस्तनैर्गुणैर्युक्तासि अत "ऊर्ज"मन्नं "मयि धेहि" स्थापय। नीवीं कुरुते। "सोमस्य नीविरसि"। पितृदेवत्या वै नीविरित्यदीक्षितस्योक्तम्। इह तु सोमयागार्था नीविः सोमेन व्यप-

सुम्नस्योद्दृचः॥ शर्म्मासि शर्म्म मे यच्छ नमस्तेऽअस्तु मा मा हिꣳसीः॥८॥ ऊर्गस्याङ्गिरस्यूर्णम्रदाऽऊर्ज्जं मयि धेहि। सोमस्य नीविरसि विष्णोः शर्म्मासि शर्म्म यजमानस्येन्द्रस्य योनिरसि सुसस्याः कृषी-

दिश्यते। शिरः प्रोर्णुते। "विष्णोः शर्मासि"। "उभयं वा एषोऽत्र भवति यो दीक्षिते

यमार्थं तिष्ठमाने कृष्णमृगरूपं कृत्वापक्रम्य तिष्ठतामेषवा ऋचोवर्णो यच्छक कृष्णाजिनमस्य शर्म्मो यत्कृष्णामिति ॥८॥

(१) मेखलां बध्नीते वेणिं त्रिवृतं शणामुञ्जमिश्रमन्तरा वासस ऊर्गसीति, नीविं कुरुते सोमस्य नीविरिति, शिरः प्रोर्णुते विष्णोः शर्मेति, कृष्णविषाणां त्रिवलिं पञ्चवलिं योक्त्राणा दशाया बध्नीते, तयाकण्डूयनमुपस्पृश्यत्वेनया इन्द्रस्य योनिरसीति, भूमौ चोल्लिखति सुसस्याः कृषीति, मुखसंमितमौदुम्बरं दण्डं प्रयच्छत्युच्छ्रयस्वेत्येन

विष्णुश्च यजमानश्चेत्यादि" निदानम्। "विष्णोः शर्म्मासि" दीक्षितस्य शरणं भवसि शरणं च "यज-मानस्य"। कृष्णाविषाणां शिचि बध्नीते। "इन्द्रस्ययोनिः"। "देवाश्च वा असुराश्चेत्यादि" निदानम्। यथा इन्द्रस्य योनिर्जन्मस्थानं पूर्वं त्वमसि एवमिदानीं यजमानस्येति दर्शना-भिप्रायः। भूमौ लिखति। "सुसस्याः कृषीस्कृधि"। कल्याणधान्याः कृषीः कृषि जनानां कुरु। दण्डमुच्छ्रयति। "उच्छ्रयस्व"। ऊर्ध्वो भव। हे "वनस्पते" ऊर्ध्वो भूत्वा मां पाहि

स्कृधि॥ उच्छ्रयस्व वनस्पत ऊर्ध्वो मां पाह्यꣳहस आस्य यज्ञस्योदृचः॥ १०॥ व्रतं कृणुत। व्रतं कृणुताग्निर्ब्रह्माग्निर्यज्ञो

गोपाय। "अꣳहसः पापात्। कियन्तं कालम्। "आस्ययज्ञस्योदृचः"। आ अस्य यज्ञस्य समाप्तेः॥ १०॥ वाचं विसृजते (१)। "व्रतं कृणुत"। व्रतशब्देन पयोभिधीयते। मम

मुच्छ्रयतीति। का० ७।३।२६-२२। (२) पुराकदाचिद्यज्ञपुरुषो दक्षिणां देवीं समभवत्तस्मादिन्द्रोऽजायत तदानीं मतान्यस्योत्पत्तिर्माभूदिति विचार्येन्द्रः स्वां योनिं दक्षिणाया आच्छिद्य मृगेषु न्यदधात् निहिता सा योनिः कृष्णाह-पणाभूदिति तित्तिरिश्रुतौ यज्ञो दक्षिणामभ्यध्यादित्याख्याने कथा सा चानुसंधेया॥ १०॥

(१) व्रतं कृणुतेति वाग्विसर्जनं विसृजेति, अग्निर्ब्रह्मेति च एवं, देवीं धियमिति व्रतायोपसर्जनं स्नासने, ये

चिप्रं भोजनार्थं पयः कुरुत। "अग्निः ब्रह्म वयोलक्षणम्।" "अग्निः यज्ञः" अग्निं प्रत्याख्याय यज्ञो न प्रवर्त्तत इत्याशयः। "वनस्पतिर्यज्ञियः"। "न हि मनुष्या यजेरन्यद्वनस्पतयो न सुरिति" श्रुतिः। "देवीं धियम्"। शक्वरी अतिशक्वरी वा। अघाश्च पूर्णनार्द्धर्चेन प्रतायोपसृ-यति(२)"देवीं धियं मनामहे"। मनामहे इति याच्ञाकर्मसु पठितम्। देवसंबन्धिनीं धियं याचामहे। "सुमृडीकाम्"। मृडसुखने। सुसुखाम्। "अभिष्टये"। अभिपूर्वस्य यजतेरादिलोपः

ज्योव्वनुस्प्पतिर्य्युज्ञियं÷॥ दैवीन्धियम्मनामहेसुमृडीकामभिष्टं
येव्वर्च्चोधाव्यज्ञवाहसर्ठं सुतीर्त्थानोऽअसद्वशे॥ येदेवामनोजाता

अभिष्टिः अभियागाय। अथवा अभिपूर्वस्य सिञ्चतेः अभिष्टिः। "अभिषेकाय" मच्चा-

देवा इति प्रतयत्यमन्वये इति। का० ७।४।१५-१६-२२-२३। मौनोपस्थितस्य यजमानस्यैतन्मन्त्रोच्चारणं वाग्विसर्जन-साधनम्। वाक्यावृत्तिरादरार्था। (२) पूर्वार्धं नाचामतीत्यर्थः। (३) रूपादिदर्शनकाले मनसा युताः, अन्यमनस्कस्य रूपादिप्रतिभासाभावात्॥ २१॥

लनाय। "वर्चोधाम्" ब्रह्मवर्चसो धारयितारम्। "यज्ञवाहसम्" यज्ञस्य वोढारम्। सा च "सुतीर्थानोऽसत्"। यज्ञं प्रति शोभनावतारा अस्माकं भवतु। "वशे"। वश्या भवतु। व्रतं व्रतयति। "ये देवाः"। अत्राग्निहोत्रसंपदं यजमानः करोति। ये मयि प्राणेषु देवाः "मनोजाताः" मनसो जाताः। मनः पूर्विका हि तेषां प्रवृत्तिः। "मनोयुजः"। मनसा युज्यन्ते स्वभावस्थायामिति मनोयुजः। "दक्षक्रतवः"। क्रतुः संकल्पः। तस्यैव समृद्धिर्दक्षक्रतुशरीरा।

मनोयुजो दक्षक्रतवस्तेनोऽवन्तु ते नः पान्तु तेभ्यः स्वाहा ॥११॥ श्वात्राः पीताः ॥ श्वात्राः पीता भवत यूयमापोऽअस्माकमन्तरुदरे-

वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वेदेवाः" य एते अध्यात्मश्रुतौ पठ्यन्ते त इहोच्यन्ते। "ते नः" अस्मान् "अवन्तु" ते अस्मान् पान्तु पालयन्तु "तेभ्य"श्च स्वाहा सुहुत-मस्तु। सुहुतमेतद्धविर्भवतु ॥ ११ ॥ "श्वात्राः पीता" (१)। जगत्याद्देवत्यया नाभिमुपस्पृशति। हे आपः "यूय" श्वात्राः। श्वात्रमिति क्षिप्रनाम। क्षिप्रपरिणामाः। "पीता भवत"

(२) श्वात्रा पीता इति नाभिमालभते। का० ७।४।२५। (२) महीधरपादास्तु हे आपः यूयं देवा द्योतमानाः

"अस्माकमन्त"र्मध्ये। पुनरपि विशिनष्टि "उदरेविशेवाः"। शेवइति सुखनाम। सुसुखाः। "ता अयक्ष्मम् अयक्षाः अनमीवा अनागसः"। आगइत्यपराधनाम। अनपराधाः। "स्वदन्तु देवीः"। ष्वदस्वर्द आस्वादने। देवीरिति निःसंशयं द्वितीयान्तम्। एतत्पदसामानाधिकरण्यात्तु ता इत्येतदादीन्यपि द्वितीयान्तान्येव। ता युष्मान् अयक्ष्मम् असदर्थम् अयक्षाः सतीः। यक्ष्मा व्याधिराजः। तद्रहिताः "अनमीवाः" अमीवा व्याधिरेव आदरार्थं तु यक्ष्मग्रहणम्। "अना-

सुशेवाः॥ ताऽअस्मभ्यमयक्ष्माऽअनमीवाऽअनागसः स्वदन्तु देवीरमृताऽऋतावृधः॥ १२॥ इयन्ते। यज्ञियातनूरपोमुञ्चा

गसः" अनपराधाः सतीः। आग इत्यपराधनाम। स्वदन्तु। स्वदस्वर्द आस्वादने। आस्वादयन्तु। कामादयन्तु, "अमृताः" प्राणाः वागेवाग्निरित्यादयः। "ऋतावृधः" सत्यवृधः यज्ञवृधो वा (२) ॥१२॥

प्रबलरोगरहिताः सामान्यरोगरहिता अपराधदारिण्यो यज्ञवृद्धिहेतवो मरणनिवर्तका अस्मदुपकारार्थं स्वदन्तः स्वादयन्तः स्वादयन्तः इति प्रथमान्तमपि सोऽकुर्वन्ति। ऋतान्तपदत्वव दीर्घं आर्षं ऋतं यज्ञः॥ १२॥

मेचरम् "लोष्टं किंचिदादत्ते (१)। इयं "ते यज्ञिया तनूः"। पृथिव्यभिधीयते। इयम् तव यज्ञार्हतनूः तामाददे इति शेषः। मेहति। "आपोमुञ्चामि"। अपो मूत्रं मुञ्चामि त्यजामि न तु प्रजाम्। उभयं वा। अत एवापश्चरितश्च स एतदाप एव मुञ्चति न प्रजाम्। "अꣳहोमुचः"। अंहः पापमसुखं तस्मात्पुरुषं मुचन्ति पृथक्कुर्वन्तीत्यंहोमुचः। हे मूत्राख्या आपः

मि नप्र जाम् ॥ अꣳहोमुचः स्वाहाकृताः पृथिवीमाविशत पृथिव्या सम्भव ॥ १३ ॥ अग्ने त्वम्। अग्ने त्वꣳसुजागृहि वयꣳसुमन्दि

यूयम् अंहोमुचः ताः "स्वाहाकृताः" सत्यः "पृथिवीम् आविशत" प्रविशत। आत्तं निदधाति (२)। "पृथिव्या संभव। भूम्या सहैकीभव ॥ १३ ॥ स्वपिति। (१) "अग्ने-त्वम्"। अनुष्टुबाग्नेयी। हे अग्ने त्वं "सुजागृहि"। साधु जागृहि। "वयꣳ सुमन्दिषी

(१) मेघ्नन् कृष्णविषाणया लोष्टं किंचिदादत्ते इयं त इति, आपो मुञ्चामीति मेहति, पृथिव्या संभवत्यात्तं निदधातीति। का० ७।४।२६-२८। (२) आत्तं गृहीतं लोष्टादिकं मूत्रस्थाने क्षिपतीत्यर्थः ॥ १३ ॥

महि"। मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। वयं स्वप्स्यामः। मन्दतिः स्वप्नार्थः। किञ्च "रक्षनः" अस्मान् "अप्रयुच्छन्"। युच्छप्रमादे। किञ्च "प्रबुधे: प्रबोधाय "नः" अस्मान् "पुनः" कृधि"कुरु ( २ ) ॥ १४ ॥ विबुद्धमस्वप्स्यन्तं पुनर्मन इति वाचयति। "पुनर्मनः"। मे मम

षीमहि ॥ रक्षाणोऽअप्रयुच्छन्प्रबुधे नः पुनस्कृधि ॥१४॥ पुनर्मनः। पुनर्मनः पुनरायुर्म्मऽआगन्पुनः प्राणः पुनरात्मा मऽआगन्पुनश्चक्षुः पुनः श्रोत्रम्म ऽआगन् ॥ वैश्वानरोऽअ

मनः आगन् आगतम्। "पुनरायु" र्जीवितं मम आगमम्। "पुनः प्राणो" ममागतः। मुख नासिकासंचारीवायुः प्राणः। "पुनः श्रोत्र" मम आगतम्। "सर्वे ह वा एते स्वपतोपक्रामन्तीति" श्रुति। किञ्च "अग्निर्वैश्वानरो" "अदब्धः" अनुपहिंसितः "तनूपाः" शरीरस्य गोपायिता

(१) अग्ने त्वमित्यस्त्रा स्वपित्यथ. प्राङ् इच्छियात इति। का० ७।४।२५। (२) स्वपतोऽग्ने प्रार्थनं रक्षसा मायाय, तदुक्तं तित्तिरिणा–अग्निमेवाधिपं कृत्वा स्वपिति रक्षसामपहत्यै इति ॥ १४ ॥

'न' अस्मान् "पातु" रक्षतु "दुरितात्" अशुभात् "अवद्यात्" अवदनीयात् (२) ॥ १५ ॥

अवत्थं व्याहृत्य जपति (१)। "त्वमग्ने"। आग्नेयी गायत्री। हे अग्ने त्वं व्रतस्य पालयिता भवसि। "देव आमर्त्येष्वा"। आकारौ समुच्चयार्थीयौ। देव "आ" त्वं च मर्त्येषु मनुष्येषु च "व्रतपा" इति शेषः। त्वं च यज्ञेष्वीड्यः। सत्कारपूर्वो व्यापारोऽध्येषणा। ईडिरध्येषणाकर्मा वा पूजाकर्मा वा। अध्येषितव्यः याचितव्यः। त्वमतो व्रतं पाहीतिशेषः। लब्धमालभ्य वाचयति (२)।

दे॒वस्त॒न्पा॒ऽअ॒ग्निर्न॒ः पा॒तु दु॒रि॒ताद॑व॒द्यात् ॥१५॥ त्वम॑ग्ने। व्र॒त॒पाऽअ॑सि दे॒वऽआ मर्त्ये॒ष्वा ॥ त्वं य॒ज्ञेष्वीड्य॑ः। रास्वे-

"रास्वेयत्"। सोम उच्यते। "रास्व"। रादाने देहि। इयदिति लब्धद्रव्यपरिमाणवचनम्। हे सोम। किञ्च "आभूयोभर" 'हृग्रहोर्भश्छन्दसी'ति हकारस्य भकारश्छा-

(१) ७।४४।१ का०। (२) अवद्यात् दुःखदात् दुरितात् पात्विति वा योजना ॥ १५ ॥

(१) त्वमग्ने इत्यादि ऋग्ध्याप्रत्यं वा-वावहृत्य,- लब्धमालभ्य जपति रास्वे य इति। का० ७।५।१२-१६। (२) अनौ मासं धन सृष्ट्वा मन्त्रमिम पठेदित्यर्थ ॥ १६ ॥

न्दसः। धाष्टर भूयो वक्ततरम्। किञ्च "देवः सविता नः" अस्माकम् "वसोर्दाता" धनस्य दाता "वस्वदात्" धनमदात् दत्तवान् पूर्वमेवेत्यभिप्रायः ॥ १६ ॥ "एषाते" (१)। अनुष्टुभौ पूर्वार्द्ध चों हिरण्यदेवत्यः उत्तरो वाग्देवत्यः विनियोगोभौवाज्ये। आज्यं गृह्णां चसुः चिमृत्वा तत्र हिरण्यं निदधाति। आज्यमुच्यते। एषा हिरण्यलक्षणा ते तव शुक्राज्य तनुः शरीरम्। "समानजन्म वै पयश्च हिरण्यं चोमयर्ठ०ह्यग्निरेतसमिति" श्रुतिः। एतच्च हिरण्य-

यत्सोमाभूयोभरद्देवोनः सविताव्वसोर्दाताव्वस्वदात् ॥१६॥ एषा-
तेशुक्रतनूरेतद्वर्चस्तयासम्भवभ्राजङ्गच्छ। जूरसिधृतामन-

लक्षणं वर्चस्तेजः "तया" तन्वा "संभव" एकीभव, एकीभूय च भ्राजं सोमं गच्छ। जुहोति "जूरसि" जीव प्राणधारणे। अस्य क्विबन्तस्यापि ड प्रत्यये जूरिति भवति। या त्वं जीवनमसि। "धिया धिया ह्येतया मनुष्या जुजूषन्तीति" श्रुतिः। अथवा जवत इति जूः। "एतठ०ह्याकाशमनुजवत" इति

(१) माजारारात्ययिषाय धौवं शुक्रं चतुर्विंशत्याति बर्हिस्तपेन हिरण्यं बध्वावद्धात्य धारा त इतीति, जूरसीति जुहोतीति। का० ७।१।७-८।

स्रुतेः। या च त्वं "घृता" धारिता "मनसा"। अयी प्रीतिर्वनयोः। अभिरक्षिता च। "विष्णवे" विष्णोः सोमस्य (२) ॥ १७ ॥ "तस्यास्ते" तव "सत्यसवसः" अवितथाभ्यनुज्ञायाः। "प्रसवे" अभ्यनुज्ञायां वर्तमानाः। "तन्वोयन्त्रम् अशीय"। शरीरस्य यमनं दार्ढ्यम् अशीय व्याप्नुयाम् आ यज्ञसमाप्तेः। हिरण्यमुद्धरति (१)। "शुक्रमसि" अग्ने रेतोसि। "चन्द्र-

# सा जुष्टा विष्णवे ॥ १७ ॥ तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहा ॥ शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसि ॥ १८ ॥

मसि"। चदि आह्लादने। "अमृतमसि" अमरणधर्मासि। "वैश्वदेवमसि" सर्वदेवत्यमसि

(२) महीधरभाष्ये तु हे शुक्र दीप्यमानाग्ने ते तव एषा तनूः अभिनमात्यं शरीरं, आज्ये क्षिप्यमाणं हिरण्यवर्णः तयाज्यरूपया तन्वा एकीभवति च व्याख्यातम्। एतन्मन्त्रपाठेनाग्नेः सतेजस्त्वं सतनुस्त्वं च संपद्यते। तदुक्तं तित्तिरिणा सतेजसमेवैनं सतनुं करोतीति ॥ १७ ॥

(१) शुक्रमसीति हिरण्यमुद्धृत्य बेधां रूपं निदधाति। का० ७।६।१०। (२) अग्निसंयोगेऽपि हिरण्यस्य विनाशाभावः धर्मो सुवर्णमयोपमिति याज्ञवल्क्यः। वैश्वदेवं सर्वदेवसम्बन्धि सर्वोपि देवो हिरण्यदानेन तुष्यतीत्याशयः ॥ १८ ॥

इति ॥ १८ ॥ (२) सोमक्रयणीमभिमन्त्रयते वाग्रूपाध्यारोपकल्पनया। त्वं "चिदसि"। चित्तस्य मनसोनुवादिनी भवसि। या च "मनोसि" प्रज्ञासि। या च "धीरसि" धृतिर्भवसि। "धिया ह्येतया मनुष्याजुजूपन्ति जीवितु मिच्छन्ति" श्रुतिः(२)। या च त्वं "दक्षिणासि"। भूमिदानात्परं नास्ति विद्यादानं ततोधिकमित्येतदभिप्रायम्। तेभ्योवाच दक्षिणामानयन्त्वित्येतदभिप्रायं वा। या च "क्षत्रियासि"। क्षतात् त्रायत इति क्षत्रियः। जात्या स्तूयते वा। या च "यज्ञि-

चिदसि। मनासि धीरसि दक्षिणासि क्षत्रियासि यज्ञियास्यदितिर-स्युभयतःशीर्ष्णी॥ सा नःसुप्राची सुप्रतीच्येधि मित्रस्त्वा पदि-

यासि"। यज्ञार्हासि। या च "अदिति रसि"। अदीनासि। या च "उभयत शीर्ष्णी"। उभ-

(१) चिदसीत्येनामभिमन्त्रयते। का० ७।६।१५। (२) अन्तःकरणस्य चित्तमनोबुद्धयस्तिस्रो वृत्तयः। तत्र चेतनरहितादिषयातस्य चेतनत्वं सम्पादयन्ती वाह्यवस्तुषु वानिर्विकल्परूपं सामान्यज्ञानं जनयन्ती वृत्तिश्चित्तं तदेवात्र चिदित्युच्यते। एवं कश्चित्पदार्थमालोच्यैव भवति न वेति संकल्पविकल्पौ कुर्वाणा वृत्तिर्मनस्तदेवात्र मनेत्युच्यते। इदमित्थं भवत्येवेति निश्चयरूपा वृत्तिर्बुद्धि सैवात्र धीशब्देनोच्यते। एवं च वागात्मिका सोमक्रयणी चिन्मनोधीरूपत्वेन

थतोभुखी । वाक्ये पदानामन्यथाचान्यथा च क्रमो भवतीत्येतदभिप्रायम् । "सयदेनया सयानर्ठ० सविपर्यासं वदतीत्यादि" श्रुतिः । "सानः सुप्राची सुप्रतीच्येधि" । या त्वमुक्तगुणासि सास्माकं सुप्राची भव सोममभिगच्छेत्यर्थः । सुप्रतीच्येधि । साधु अस्मान् प्रति सोमं गृहीत्वा आगच्छे-त्यर्थः । "सुप्राची न एधि सोमं नोच्छेहीत्येवैतदाह सुप्राची न एधि सोमेन नः सह पुन-र्गृहीत्येवैतदाह" इति श्रुतिः । किञ्च । "मित्रस्त्वापदि बध्नीताम्" । मित्र आदित्यस्त्वां । पदि

बध्नीताम्पूषाध्वनस्पात्विन्द्रायाध्यक्षाय ॥ १९ ॥ अनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः । सा देवि देवमच्छेहीन्द्राय सोमं

पादे बध्नातु अप्रणाशाय । किञ्च "पूषाध्वनस्पातु" इयं वै पृथिवी पूषा सा त्वामध्वनः मार्गात् पातु रक्षतु । किञ्च "इन्द्रायाध्यक्षाय" । चतुर्थ्यां षष्ठ्या विपरिणामः । अधि उपरि अक्षिणी यस्य सो-ध्यक्षः । इन्द्रस्याध्यक्षस्य सतः ॥ १९ ॥ किञ्च सोमाहरणाय प्रवृत्तां त्वामेते "अनुमन्यन्तां त्वा माता प्रशंसते । (२) क्षत्रियजात्यभिमानिसोमक्रयसाधनत्वेनेत्यर्थः । सोमस्य क्षत्रियजात्यभिमानिता च "यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्र" इति बृहदारण्यके सुस्पष्टा ॥ १९ ॥

अनुमन्यतां त्वा पिता अनुमनतां त्वा माता "सगर्भ्यः" । समानगर्भभवः । अनुमनतां त्वा भ्राता 'सयूथ्यः' समानयूथप्रभवः सखा अनुमनतताम् । किञ्च यात्वं कृतसामग्रीका त्वाभिः सोम प्रति गमने सा त्वं हे "देवि" दानादिगुणयुक्ते "देवमच्छेहि" इच्छाभिरामामिति शाकपूणिः । "देवं सोममच्छेहि" अभिगच्छ । इन्द्राय सोमम् आहर्तुमिति शेषः । किञ्च । "रुद्रस्त्वावर्त्तयतु" रुद्रः त्वाम् आवर्त्तयतु । रुद्राज्ञां नातिक्रामन्ति पशवः । ततः "स्वस्ति" अविनाशेन

वमच्छेहीन्द्राय सोमꣳ रुद्रस्त्वावर्त्तयतु स्वस्ति सोमसखा पुनरेहि ॥२०॥

व्वस्व्यसि । व्वस्व्यस्यदितिरस्यादित्यासि रुद्रासि चन्द्रासि ॥

सोमसखा सती पुनरागच्छ ॥ २० ॥ उदीचीं नीयमानामनुगच्छति (१) । "वस्व्यसि" । अनष्टप्रवृत्ती वा । वसुरूपेणादितिरूपेणादित्यरूपेण रुद्ररूपेण चन्द्ररूपेण स्तूयते गौः । किञ्च "बृहस्पतिः त्वा सुम्ने" सुखे "रम्णातु" स रमयतु । रम्णातिः स यमकर्मा । "रुद्रो वसुभिः" सहितः

(२१) का० ७।६।१३ ॥ २१ ॥

"ग्रावकं" कामयतु । रचितुमितिशेषः । ग्रावक इति कान्तिकर्मसु पठितम् ॥ २१ ॥ पदे जुहोति (१)। "अदित्यास्त्वा"। अदित्याः पृथिव्यास्त्वाम् हे आज्य "मूर्द्धनि" शिरसि "आजिघर्मि"। इ चरणाटौ मर्गः। आचारयामि। "देवयजने पृथिव्या: इडाया:" गोः पदं यतस्त्वमसि अतो "घृतवत् घृतयुक्तं त्वां कर्तुं जुहोमीतिशेषः। पदं लिखति। "अस्मे रमस्व"।

बृहस्पतिष्ट्वा सुम्ने रम्णातु रुद्रो वसुभिराचके ॥ २१ ॥ अदित्यास्त्वा। मूर्द्धन्नाजिघर्म्मि देवयजने पृथिव्या इडायास्पदमसि घृतवत्स्वाहा ॥ अस्मे रमस्वास्मे ते बन्धुस्त्वे रायो मे रायो माव

अस्मासु रतिं कुरु। पदं स्थाल्यामावपति। "अस्मे ते बन्धुः"। वयं ते तव बन्धुभूताः।

(१) षट्पदान्यतीत्य सप्तमं पर्युपविशन्ति हिरण्यमभिनिधायाभि जुहोत्यदित्यास्त्वेति, स्फ्येन पदंलिः परिलिखत्यस्मे रमस्वेति, समुधृत्य पदं स्थाल्यामावपत्यस्मे ते बन्धुरिति, यजमानाय पदं प्रयच्छति त्वे राय इति, मे राय इति यजमानः प्रतिगृह्णातीति, मावयमित्यध्वर्युरात्मानं स्पृशति, कृत्वा पत्न्यै पदं प्रयच्छति मैष्यन्तेन इत्येनां वाचयतीति। का॰ ७।६।१८-२६। पञ्चस्वे पष्ठे इत्यस्य वयमर्थो तोत: शब्द: कथनवाची अव्ययं, स्पष्टमन्यत् ॥ २२ ॥

यजमानाय पदं प्रयच्छति। "त्वे रायः"। "पशवो वै रायः"। त्वयि पशवः सन्त्विति शेषः। पदं यजमानः प्रतिगृह्णाति। "मेरायः"। मयि पशवः सन्त्विति शेषः। अध्वर्युरात्मानमुपस्पृशति। "मा वयं रायस्पोषेण वियौष्म"। मा वियोष्म मा विभक्ताः स्माम वयं धनस्य पोषेण। गृहीतपदां पत्नीं वाचयति। "तोतोरायः"। त्वयि रायः पशवः सन्त्विति-शेषः॥ २२॥ सोमक्रयण्या समीक्षयति (१)। "समख्ये"। पत्न्याशीः। आस्तारपङ्क्तिः

यठँ॒ रा॒यस्पोषे॑ण॒ वियौ॑ष्म॒ तोतो॒राय॑ः ॥ २२॥ सम॑ख्ये । दे॒व्या धि॒या सन्द॑क्षिणयो॒रुच॑क्षसा ॥ मा म॒ऽआयु॑ः॒ प्रमो॑षी॒र्मोऽअ॒

सोमक्रयणीतः पत्न्याशिषमाशास्ते। यया त्वया अहं "समख्ये"। ख्या प्रकथने। संदर्शनं कृतवती। "देव्या" दानादिगुणयुक्तया। "धिया" प्रज्ञया सहार्थे तृतीया। "सं दक्षिणया उरुचक्षसा" समख्ये च दक्षिणया सह गौर्हि प्रायशो दक्षिणा दीयते। उरुचक्षसा विस्तीर्णदर्शनया। वाचाभिस्तोता नागत वर्तनविप्रकृष्टं ज्ञायते। सा त्वं "मामऽ आयुः प्रमोषीः"। क्षप

(१) सोमक्रयण्या च समीक्षमाणां समख्ये इतीति। का० ७।४।२१ ॥ २२ ॥

स्तवे। "मा प्रमोषीः" मापहार्षीः मम आयुः। मा अहं तवायुः प्रमोषिषम्। किञ्च "वीरं विदेय"। विद्लाभार्थः। पुत्रं लभेय। "तव देवि संदृशि"। हे देवि तव संदर्शने सति ॥२३॥ यजमानं वाचयति (१)। "एषते गायत्रो भागः"। हे सोम एष ते तव गायत्रीसंबन्धी भागः अंशः इति एवं "मे" यजमानाभिधायकं पदम्। "सोमायेति षष्ठ्यर्थे चतुर्थी। मम वचनमेव सोमस्य "ब्रूतात्" कथयत हे अध्वर्यवः। छन्दोर्थं तव अंशो न यथार्थम्। एवं यज-

ह्नतंवीरंविदेय तव देविसन्दृशि ॥ २३ ॥ एषते। गायत्रो भागऽइतिमेसोमायब्रूतादेषतेत्रैष्टुभोभागऽइतिमेसोमायब्रूता

मानाभिप्रायः। एतदध्वर्यवः सोमस्य कथयन्तीति वाक्यार्थः। "एष ते त्रैष्टुभो भागः"। एष ते जागत इत्यनेनैव व्याख्यातौ। "छन्दोनामानाम्"। नाम शब्दोनर्थकः। अन्येषामपि छन्दसां "साम्राज्य" माधिपत्यं "गच्छ" इति एवं मे ममाभिप्रायं सोमस्य ब्रूतात् कथयत हे

(१) एषते इति-वाचयतीति प्राक्स्वविद्याआक्रोशीति सोममालभते। का० ७।७।८-९ ॥ (२) यः सोमायछन्दसामाधिपत्यं दत्वा क्रीणाति स सामानामाधिपत्यं प्राप्नोति। तदुक्तं तित्तिरिणा—"यो वै सोमं राजानं साम्राज्यलोकं

ध्वर्युः । अत्रापि मे इत्येतत्पदं यजमानवाक्यमेव । सोममालभते । "आस्माकोसि" । यस्मात् हे सोम क्रयार्थमुपागतः स आस्माको मदीयः संजातः । "शुक्रस्ते ग्रह्यः" । उपलक्षणार्थः शुक्रप्रभृतयो ग्रहास्तव गृहीष्यन्ते । किञ्च "विचितः" विचयनकर्त्तारः त्वां "विचिन्वन्तु" विविक्तं कुर्वन्तु ॥ २४ ॥ सोमं मिमीते (१) । "अभित्यं देवम्" । सावित्र्यत्यष्टिः । "अभ्यर्चामि"

एषतेजागतोभागऽइतिमेसोमायब्रूताच्छन्दोनामानाꣳसाम्राज्यङ्गच्छेतिमेसोमायब्रूतादास्माकोसिशुक्रस्तेग्रह्योविचितस्त्वाविचिन्वन्तु ॥ २४ ॥ अभित्यम् । अभित्यन्देवꣳसवितारमोण्योः

अभिपूजयामि । "त्यम्" तम् । "देवं" दानादिगुणयुक्तम् । "सवितारम् ओण्योः" द्यावापृथिव्योरन्तरा वर्त्तमानम् "कविक्रतुं" मेधाविकर्माणम् "सत्यसवम्" अवितथप्रसवम् "रत्नधाम्" गमयित्वा क्रोषाति गच्छति स्वानां साम्राज्यमिति ॥ २४ ॥

(१) सोमोपनहनं द्विगुणं चतुर्गुणं वा स्तृणाति प्राग्दशमुदग्वा तस्मिन्सोमं मिमीते दशकृत्वोऽभित्यमितीति । का० ७।७।१२-१३ ।

रमणीयानां धनानां दातारम्। अभिरनर्थकः। "प्रियम्" सर्वजनानां प्रियम्। "मति" बुद्धिव्याप्यावस्थितम्। मतीनां हि सविताऽधिष्ठात्री देवता। "कवि" क्रान्तदर्शनम्। किञ्च "ऊर्द्ध्वा यस्यामतिः भा अदिद्युतत् सवीमनि"। यस्य सवितुः ऊर्द्ध्वा गमनाभिमुखी अमतिः आत्ममयी मतिः अनन्यभूता। कतरा भा दीप्तिः अदिद्युतत् द्योतयते सवीमनि प्रसवे पूर्णे हि दातव्ये। स सविता "हिरण्यपाणिः" सुवर्णपाणिः "अमिमीत"। मिमीते सोमं परिच्छिनत्ति। "सुक्रतुः"

**कविक्रतुमर्च्चामि सत्यसवꣳरत्नधामभिप्रियम्मतिङ्कविम्। ऊर्द्ध्वायस्यामतिर्भाऽअदिद्युतत्सवीमनि हिरण्यपाणिरमिमीतसुक्रतुः॥**

साधु कर्मा शोभनयज्ञो वा। "कृपा" कल्पनया सोमस्य कल्पना। "सुः" आदित्यः सु अरणः। अन्तान् संगृह्णोष्णीषेण बध्नाति (२)। "प्रजाभ्यस्त्वाम्"। बध्नामीति शेषः। उत्पत्तये स्थितये च प्रजानां हे सोम त्वां बध्नामि। अङ्गुल्या मध्ये विहृणोति। "प्रजास्त्वा नुप्राणन्तु"। हे

(२) अन्तात् संगृह्णोष्णीषे बध्नाति प्रजाभ्यास्त्विति, अङ्गुल्यामध्ये विहृणोति प्रजास्त्वानुप्राणन्त्विति। का० ७।७।२०-२१॥ २५॥

सोम त्वां प्राणन्तमुच्छ्वसन्तम् "प्रजा अनु प्राणन्तु" उच्छ्वसन्तु। त्वं च प्रजाः उच्छ्वसतीः "अनुप्राणिहि" अनूच्छ्वसिहि। "तमयतीतिवा एनमेतत्प्रमायन्त्वं प्राणमिव करोति तस्यैतद्दत एव मध्यतः प्राणमुत्सृजति तं ततः प्राणन्तं प्रजा अनुप्राणन्ती" त्यादिब्राह्मणम् ॥२५॥ हिरण्यमालभ्यवाचयति (१)। "शुक्रं त्वा"। हे सोम शुक्रमक्लिष्टकर्माणं त्वां शुक्रेण हिरण्येन क्रीणामि। एवं सर्वमपि व्याख्येयम्। सोमविक्रयिणं हिरण्येनाभिकम्पयति। "अस्मे-

क्रपास्वं ॥ प्रजाभ्यंस्त्वाप्प्रजास्त्वानुप्राणन्तुप्रजास्त्वमनुप्रा

णिहि ॥ २५ ॥ शुक्रन्त्वा। शुक्रेणक्रीणामिचन्द्रञ्चन्द्रेणामृतम्

तेगोः" गौरिति विपरिणामः॥ मम गवा वर्त्तत इति सम्भो यजमानः। तत्र संबन्धिनी या गौः सा यजमाने वर्त्तत इति। सोमक्रयिणं निराशं करोति। यजमानसहितं निदधाति। "अस्मेते"। हे सोम क्रयिन् अस्मासु तव संबन्धीनि हिरण्यानि वर्त्तन्ते। अना-

(१) शुक्रं त्वेति हिरण्यमालभ्य वाचयति, क्रमीत इति सोमविक्रयिणं हिरण्येनाभिकम्पयतीति, अस्मे त इति यजमानसहितं निदधातीति, अजा मधस्व सुखीमालभ्य प्राचयति, तपसस्तनूरिति। का० ७।८।२२। (२) "तपसोच्छ्वा

न एहि"। हे सोम मित्रस्त्वं सन्नोऽस्मानभ्येहि। मित्रशब्देन हादिग्यो गृह्यते पुंलिङ्गाधीत्। "सुमित्रधः"। शोभनानि मित्राणि दधाति पुष्णातीति सुमित्रधः। यस्त्वं सुमित्रधः। यजमानस्य दक्षिण ऊरौ निदधाति "इन्द्रस्योरुम्"। स इन्द्रस्य यजमानस्य ऊरुं दक्षिणं "माविश" उपविश (२)। "एष वा अत्रेन्द्रो भवति यद्यजमान" इति श्रुतिः। "उशन्न् उशन्तम्"। वश कान्तौ। कामयमानस्त्वं कामयमानमेव। यजमानस्योरुमाविश इत्यनुवर्त्तते। "स्योनः

मित्रो न ऽएहि सुमित्रधऽइन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳ स्योनः स्योनम्॥ स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशान

स्योनम्"। स्योनमिति सुखनाम। सुखरूपस्त्वं सुखरूपम्। यजमानस्योरुमाविश इत्यनु-

(१) सर्वं नाना प्रमच्छन् मित्रो न इति दक्षिणेन सोममादायेति, दीक्षितोरौ दक्षिणे प्रत्युग्र वासो निदधातीन्द्रस्योरुमितीति, स्वानभ्राजेति जपति सोमविक्रयिणमासमाप्य इति। का० ७।८।२३-२४। (२) पुरादेवाः सो० क्रीतमिन्द्रस्योरावुपवेशयन् तस्मादयं न्द्रशब्देन यजमानः। तदाह तित्तिरिः "देवा वै सोममक्रीणंस्तमिन्द्रस्योरौ दक्षिण आसादयन् स खलु वा एष इन्द्रो यो यजते तस्मादेवमाहे" ति॥ २७॥

वर्त्तेते। एवं परस्परप्रीत्या अवियुक्तौ भवेतामित्यभिप्रायः। सोमक्रयणाननुदिशति। "स्वान-भ्राज"। सप्तदयानां मध्यात्मप्त तावत्सोमक्रयणाननुदिशति। हे स्वान भ्राज "अंघारेबंभारे हस्त सुहस्त कृशानो"। एवं सप्तधिष्ण्यान् संबोध्य अथेतरानाह। "एते वः सोम-क्रयणाः"। एते वः युष्माकं मध्ये तावत् सोमक्रयणाः "तान्रक्षध्वम्" तान् गोपायत। "धिष्ण्यान् मावोदभन्" एते होत्रका अपि स्वानभ्राजादयः युष्मान् मा दभन्।

ते वंः सोमक्रयणास्तान्रक्षध्वं मावोदभन् ॥ २७ ॥ परिमा। ग्ने दुश्चरिताद्बाधस्वामा सुचरिते भज। उदायुषास्वायुषोदंस्थाम्

दभ्नोतिर्हिंसाकर्मा। मा युष्मान् दभन्तु ॥ २७ ॥ गृहीतसोमं वाचयति (१)। "परि-माग्ने"। आग्नेयी पुरस्ताद्बृहती। हे भगवन्नग्ने "परिबाधस्व" परित्रायस्व मां "दुश्च-रितात्" पापाचरणात्। "आभजमाम्" आसेवस्व माम् "सुचरिते" वर्त्तमानम्। उत्तिष्ठति। "उदस्थाम्" उत्तिष्ठामि आयुषानिमित्तभूतेन चिरं जीवनाय स्वायुषा निमित्तभूतेन शोभनेन

(१) गृहीतसोमं परिमाग्ने इति वाचयति, उदायुषेत्युत्थानमिति ॥ का० ७।९।१-२ ॥ २८ ॥

प्रकारेण दानहोमयागादिभिः। येनास्मदीयमायुर्यात्यनेन च हेतुना उदस्थाम। उत्तिष्ठामि च। "अमृतान्" देवा "ननु" अतः। परिमाम्ने दुश्चरिताद्यपस्वेति संबन्धः। अमृतशब्देनात्र बहुवचनान्तेन सोमोभिधीयते। आगते सोमे दीक्षित उत्तिष्ठति। तस्यैषा प्रायश्चितिः ॥२८॥ अनोम्येति(१)। "प्रतिपन्थाम्" अनुष्टुप्। पन्थानं स्तौति। "प्रत्यपद्महि" प्रतिपद्येमहि पन्था-

मृक्षत॒रं॑ ॥ ऽअनु॑ ॥ २८ ॥ प्रति॒ पन्था॑म् । प्रति॒ पन्था॑मपद्म
हि स्व॒स्ति॒ गाम॑ने॒ हसं॑म् ॥ येन॒ विश्वा॒: परि॒ द्विषो॑ वृ॒णक्ति॑ वि॒न्दते॑
वसु॑ ॥ २९ ॥ अदि॑त्या॒स्त्वक् । अदि॑त्या॒स्त्वग॒स्यदि॑त्यै॒ सद॒ऽआ

नम्। "स्वस्तिगाम्"। अविनाशेन यत्र गम्यते तं स्वस्तिगाम्। "अनेहसम्"। एह इत्यपराधनाम्। न विद्यते यत्र गतानामपराधः स तथोक्तः। किंच। "येन पथा गच्छन् विश्वाः" सर्वाः "परिद्विषः" परिवर्जयति। वृजी वर्जने। "द्विषः" द्विष्टान्। किञ्च "विन्दते वसु"। लभते धनम् ॥२९॥

(१) योर्यि सोमं कृत्वा पाणिमन्तधाय प्रतिपन्थामित्यतोऽन्येति। का० ७।८।४॥ शकटमभिकम्य गच्छेदित्यर्थः ॥२९॥

कृष्णाजिनमास्तृणाति (१)। "अदित्यास्त्वगसि"। व्याख्यातः शेषः। सोमं निदधाति। "अदित्यै सदः" स्थाने "मासीद"। सोममालभ्य वाचयति। "अस्तभ्नाद् द्याम्" त्रिष्टुभौ वारुण्यौ। योयं "वृषभः" वर्षिता "अस्तभ्नाद्द्याम्"। स्तम्भितवान् द्युलोकम्। यश्चा"न्तरिक्ष"मस्तभ्नात्। यश्च "मिमीतवरिमाणं पृथिव्याः"। मिमीते वरिमाणं गुरुत्वं पृथिव्याः (१)। यश्च "सम्राट्" देवताविशेषः। "आसीदद्विश्वाभुवनानि"। आसीदति हि सर्वाणि भूतजातानि

सीद। अस्तभ्नाद्द्यांवृषभोऽअन्तरिक्षममिमीतव्वरिमाणम्पृथिव्याः॥ आसीदद्विश्वाभुवनानिसम्राड्विश्वेत्तानिव्वरु

आत्मत्वेनाधिपत्येन च। "विश्वेत्तानि"। इच्छब्द एवार्थे (२)। सर्वाण्येवैतानि "वरुणस्य व्रतानि" कर्माणि। ये इमान् लोकान् स्तभ्नुवन्ति ये च सर्वजनानाविशन्ति तेपि च वरु-

(१) कृष्णाजिनमस्मिन्नास्तृणाति अदित्यास्त्वगितीति, तस्मिन्सोमं निदधात्यदित्यै सद इतीति, अस्तभ्नाद् द्यामिति सोममालभ्य वाचयतीति। का० ७।९।८। मिमीते एतावती भूरिति परिमाणं जानातीत्यर्थः। (२) यद्वा इदिति इत्यमर्थे, इत्थं प्रकारेण द्युलोकस्तम्भनादीनि करोतीत्यर्थः॥ ३०॥

स्यात्तां कुर्वन्तीति परब्रह्मरूपेण वरुणस्य स्तुतिः ॥ ३० ॥ (१) "वनेषुवि"। व्यत्ययमुपसर्गस्सा- तानेत्यनेन संबध्यते। यो वरुणः "वनेषु" वृक्षाग्रेषु "विततान" वितनो"त्यन्तरिक्षमा"काशम्। यद्यपि सर्वगतमन्तरिक्षं तथापि तत्र भूतद्रव्याभावादुपलभ्यत एव। "वाजमर्वत्सु"। "वीर्यं वै वाजः पुमांसोऽर्वन्तः" इति श्रुतिः। वाजं वीर्यम्। अर्वत्सु पुरुषेषु। ततानेत्यनुवर्त्तते। "पयउस्रियासु"। उस्रियासु गोषु पयो विततान। "हृत्सुक्रतुम्"। क्रतुः संकल्पः हृदयेषु

शस्यन्तानि ॥ ३० ॥ वनेषुवि। वनेषु व्यन्तरिक्षन्ततान वाजमर्वत्सु पय उस्रियासु॥ हृत्सु क्रतुं वरुणो विक्ष्वग्निन्दिवि सूर्यमदधात्सोममद्रौ ॥ ३१ ॥ सूर्यस्य चक्षुः सूर्यस्य चक्षुरा

संकल्पं विततान। "विक्ष्वग्निम्"। प्रजास्वग्निं विततान। "दिवि" द्युलोके "सूर्यमदधात्" स्थापितवान्। "सोममद्रौ"। अद्रिषु सोमं स्थापितवान् (२)। य एवं परब्रह्मलक्षणो वरुणस्तं

(१) वनेषु व्यन्तरिक्षमिति सोमपर्याणहनेन परिसत्यति। का० ७।८।८। (२) तथाच तित्तिरिः—सोममद्रावित्याह ग्रावाणो वा अद्रयस्तेषु वा एष सोमं निदधाति ॥ ३१ ॥

वयं स्तुम इतिशेषः ॥ ३१ ॥ कृष्णाजिनं सोमस्य चिन्हं करोति (१)। "सूर्यस्यचक्षुः"। अनुष्टुप्। कृष्णाजिनमुच्यते। सूर्यस्य संबन्धि चक्षुः "आरोह"। तथाभ्युच्छ्रितं भव यथा सूर्यश्चक्षुषा पश्यतीत्यभिप्रायः। "अग्ने" श्चक्षुः "कनीनक" मारोह। "यत्रै" ताभ्यां दृष्टो लक्षितः (२)। "एतशेभिः"। एतश इति अश्वनामसु पठितम्। एतशैरश्वैः "ईयसे" नीयसे। "भ्राजमानः" देदीप्यमानः। "विपश्चिता" सूर्येण सहितः। अग्निना वा विपश्चिता सहितः ॥ ३२ ॥ अन-

**रोहाग्नेरक्ष्णः कनीनकम् ॥ यत्रैतशेभिरीयसे भ्राजमानो विपश्चिता ॥ ३२ ॥ उस्रावेतंधूर्षाहौयुज्येथामनश्रू ऽअवीरहणौ**

डुहौ युनक्ति (१) "उस्रावेतम्"। ऊर्द्ध्वबृहती। हे उस्रौ अनड्वाहौ आ इतम् आगच्छतम्। एत्य च स्वयमेव "युज्येथाम्" योगं कुरुतम् हे "धूर्षाहौ"। षह मर्षणे। धुरं सोढु-

(१) कृष्णाजिनं पुरस्तादाजति सूर्यस्य चक्षुरितीति। का० ७।८।१०। (२) सूर्याग्निभ्यां दृष्टो मार्गो रक्षोबाधारहितो भवति। "एष वाव खलु रक्षोहणः पन्था योऽग्नेश्च सूर्यस्य चेति तित्तिरिणोक्तेः ॥ ३२ ॥

(१) अनड्वाहौ युनक्त्युस्रावेतमितीति। का० ७।८।११।

यो यश,तस्तौ तयोक्तौ। "अनघू"। अमुरहितौ हृष्टावित्यर्थः। "अवीरहणौ"। वीराणां यो युवां वधं न कुरुतं ताववीरहणौ (२)। प्रशस्तावित्यर्थः। "ब्रह्मचोदनौ"। ब्राह्मणानां यज्ञं प्रति प्रेरयितारौ। एवमनड्वाहौ संबोध्य अथेदनौ प्रयोजनमाह। "स्वस्ति" 'अविनाशेन "यजमानस्य गृहान् गच्छतम्" ॥ ३२ ॥

वाचयति (१)। "भद्रोमेसि"। भदि कल्याणे सौख्ये च। सोम उच्यते। भन्दनीयः स्तुत्यः

ब्रह्मचोदनौ॥ स्वस्तियजमानस्यगृहान्गच्छतम् ॥ ३२ ॥ भद्रोमे। सिप्रच्यवस्वभुवस्पतेविश्वान्यभिधामानि ॥ मात्वापरिपरि

यतस्त्वं मे मम भवसि अतो ब्रवीमि। "प्रच्यवस्व"। च्युङ् ज्युङ् जिङ् किङ् प्रुङ् प्लुङ् सेङ् गाङ् गतौ। गच्छ। "भुवस्पते" भूतजातस्य पते। "विश्वान्यभिधामानि"। सर्वाणि स्थानानि यज्ञशालाहविर्धानप्रभृतीनि। किञ्च त्वां प्रच्यवमान"माविदन्" मा जानन्तु। "परिपरिणः"। परिशोतारो दुर्जनाः। मा च त्वां "परिपन्थिनः"। सर्वतः पन्थानं ये

(२) वीराणां मिथुनाम ॥ ३२ ॥ (१) भद्रोमे इति वाचयतीति। का० ७।८।१८॥ ३४ ॥

तिष्ठन्ति ते माविदन्। "मा" त्वां "वृका अघायवो विदन्" वृका विकर्त्तनशीलाः अघायवः अघं पापं ये परस्य कर्तुमिच्छन्ति ते अघायवः। एते च त्वां गच्छन्तं मा जानन्तु। किञ्च त्वमपि "श्येनो भूत्वा परापत"। श्येन रूपमवस्थायोत्पत। ततो "यजमानस्य गृहान् गच्छ। तत् नौ" आवयोः तव च मम च "संस्कृत" सर्वोपकरणयुक्तं स्थानं विद्यते ॥ ३४ ॥ वाच-

# यो॑ऽविदन्मा त्वा॑ परिप॒न्थिनो॑ऽविदन्मा त्वा॒ वृका॑ऽअघा॒यवो॑ऽविदन् ॥ श्ये॒नो भू॒त्वा परा॑पत॒ यज॑मानस्य गृ॒हान्ग॑च्छ॒ तन्नौ॑ स॒ꣳस्कृ॒तम् ॥३४॥ नमो॑ मि॒त्रस्य॑। नमो॑ मि॒त्रस्य॒ वरु॑णस्य॒ चक्ष॑से म॒हो दे॒वाय॒ तदृ॒तꣳस॑

यति (१)। "नमो मित्रस्य"। सौरी जगती। ऋषिर्दृष्टार्थः। परब्रह्मरूपेणादित्यमवगम्य स्वं नमस्कारं छन्दान्येषां कथयति। "नमः सूर्याय"॥ कथं भूताय "मित्रस्य वरुणस्य चक्षसे"। मित्र आदित्यो वरुणश्च। उपलक्षणार्थं चैतत्। सर्वद्यावापृथिवीनिवासिलोकग्रहणार्थं वा। तदेव

(१) शालापूर्वं ण प्रतिमस्थाताग्नीषोमीयं पशुमादाय तिष्ठति- कृष्णसारङ्गं मेध्यमभावे लोहितसारङ्गं नमो मित्रस्ये-त्यनुमाखम्य वाचयति। ७।८।२१-२२ ॥ ३५ ॥

श्रुतिः "अयं वै लोको मित्रोऽसौ वरुण इति"। "चक्षसे" द्रष्ट्रे ईश्वररूपेणावस्थिताय। "मह्हे-देवायतद्दृतं सपर्यंत"। महते देवाय तत्सत्यं पूजयत हे ब्राह्मणाः। सपर्यतीत्यर्चाकर्मसु पठितम्। किञ्च "दूरेदृशे" दूरे स्थितो दृश्यत इति दूरेदृक्। यद्वा अतीतानागतवर्त्तमानकालस्थ-स्थान् प्राणिनो दूरेवस्थितान्पश्यतीति दूरेदृक्। "देवजाताय" देवानुग्रहार्थं जातो देवजातः। यद्वा जाता देवा अस्मादिति देवजातः। "निष्ठाव्याहिताग्न्यादिष्वि"ति बहुव्रीहौ परनिपातः। "केतवे"

पश्यंत॥ दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शंस-
त॥३५॥ वरुणस्योत्तम्भनमसि। वरुणस्योत्तम्भनमसि-

केतुरिति प्रज्ञानामसु पठितम्। प्रज्ञानसत्त्वाय। विज्ञानघनानन्दस्वभावादित्यर्थः। "दिवस्पुत्राय" द्युलोकाद्धि सूर्यो विजायते। द्युलोकं वा बहुधा त्रायत इति दिवस्पुत्रः सूर्यः। "सूर्याय शंसत"। शंसु स्तुतौ। इत्थं स्वरूपाय सूर्याय स्तुतीरुच्चारयत। किमन्यैर्देवताविशेषैः॥३५॥ उत्तम्भनेनोपस्तभ्नाति (१)। "वरुणस्योत्तम्भनमसि"। वरुणस्य त्वमुत्तम्भनं भवसि न

(१)- शमीपेनोपस्थाप्योत्तम्भनेनोपस्तभ्नाति' वरुणस्योत्तम्भनमसीति, मन्त्रे चोद्दति वरुणस्य स्कम्भसर्जनीस्थ

त यकारस्य । 'उदस्थास्तम्भोः पूर्वस्ये'ति स्तम्भनसकारस्य तकारः । यस्ये उदहतेति । "वरुणस्य स्कम्भसर्जनीस्थः" । स्कभ्नोतिः स्तभ्नोतिना समानार्थः। अर्ज सर्ज अर्जने। स्कम्भशब्देनात्र युगमुच्यते । तस्य सर्जनौ वशीकरण्यौ "स्कम्भसर्जनौ" वरुणस्य युवां स्कम्भसर्जनौ शम्ये "स्थः" भवथः । आसन्दीमभिमृशति । "वरुणस्य ऋतसदनी" सत्यसदनी त्वं भवसि । कृष्णाजिनमस्यामास्तृणाति । "वरुणस्य ऋतसदनमसि" । वरुणस्य सत्यसदनं त्वं भवसि । सीद-

वरु॑णस्य स्कम्भ॒सर्ज॑नीस्थो॒ वरु॑णस्य ऋत॒सद॑न्यसि॒ वरु॑णस्य ऋत॒सद॑नमासी॑द ॥३६॥ याते॑ । याते॒ धामा॑नि ह॒विषा॒ यज॑न्ति॒ ता ते॒

न्त्यस्मिन्निति सदनम् । तस्मिन् सोमं निदधाति । "वरुणस्य ऋतसदनमासीद" । सत्यसदनम् । आसीद उपविश ॥ ३६ ॥ सोमं प्रवेशयन्वाचयति (१) । "यातेधामानि" । सौमी त्रिष्टुप् । हे सोम "या ते धामानि" । धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति । यानि तव

इति, औदुम्बरीमासन्दीं नाभिदघ्नामरत्निमात्रशीर्षण्यामाहरति चत्वारोऽभिमृशन्त्येना वरुणस्य ऋतसदन्यसीति, तस्मिन्सोमं निदधाति वरुणस्य ऋतसदनमासीदेतीति । का० ७।८।२५-२६ ॥३६॥ (१) या त इति वाचयति । का० ७।८।२७ ।

सर्वाणि धामानि नामानि "हविषायजन्ति" यष्टारः। "ता ते विश्वा" तानि ते सर्वाणि। "परिभूः"(२)। नपुंसकबहुवचनस्थाने पुंलिङ्गैकवचनम्। परिभूर्भव सर्वतो भवितृ णि। "अस्तु" यदपि बहुवचनं वाच्यसंयोगात्। सन्तु। "यज्ञं" यज्ञं सर्वतो गृह्णो भवन्त्वित्यर्थः। यद्वा यज्ञ-देन प्रथमान्तानि च धामानि तव विश्वानि नामानि यज्ञः परिभूः भवतु यज्ञः परिगृह्य वर्तता-मित्यर्थः। त्वं च। "गयस्फानः" गृहस्य पुत्रपशुभूहिरण्यादिभिर्वर्द्धयिता। "प्रतरणः" प्रतरन्ति-

विश्वापरिभूरस्तुयज्ञम्॥ गयस्फानःप्रतरणःसुवीरोवीरहा प्रचरासोमदुर्य्यान्॥ ३७॥ इतिसंहितापाठेचतुर्थोध्यायः॥

नापदः स प्रतरणः। "सुवीरः" शोभनवीरः। "अवीरहा"। अहन्ता वीराणाम्। "प्रचर" इत्थंभूतस्त्वं परिभ्रम। "सोमदुर्य्यान्" गृहानस्मदीयान्॥ ३७॥ इति उवटकृतौ मन्त्रभाष्ये चतुर्थोध्यायः॥ ४॥

(२) परितो भवति प्राप्नोति परिभूः। भूमाप्तौ। प्रतरण इत्यस्य प्रतारयति यज्ञपारं प्रापयतीति वार्थो बोध्यः॥ ३७॥

भारद्वाजोपनाम्ना श्रीगोविन्दविदुषाकृते॥ चतुर्थोयं गतोध्यायो मन्त्रभाष्यस्य टिप्पणे॥

आतिथ्य हविर्गृह्णाति पञ्चभिर्व्याख्यातैः। "अग्नेस्तनूरसि" (१)। "अग्निशब्देन परोक्ष गायत्र्युच्यत" इति श्रुतिः। अग्नेस्तनूः शरीरं भवसि। उत हविरग्नेः शरीरं भवत्येव। "विष्णवे त्वा जुष्टं गृह्णामि। सोमस्य शरीरमसि विष्णवे त्वां जुष्टं गृह्णामि। "सोमः परोक्षेण त्रिष्टुब्भवत" इति श्रुतिः। "अतिथेरातिथ्यमसि"। अतिथेः सोमस्य आतिथ्यं भोजन-

ॐ * अग्नेस्तनूरसि विष्णवे त्वा सोमस्य तनूरसि विष्णवे त्वातिथेरातिथ्यमसि विष्णवे त्वा श्येनाय त्वा सोमभृते विष्णवे-

मसि। "विष्णवे" त्वां जुष्टं गृह्णामि। "श्येनाय त्वा सोमभृते"। गायत्र्यै त्वां सोमहारिण्यै

ॐ तुरीयेऽध्याये प्रवर्ग्ययजमानस्य शालाप्रवेशमारभ्य क्रीतस्य सोमस्य राज्ञः शालाप्रवेशपर्यन्ता मन्त्रा उक्ताः। अथ पञ्चमे आतिथ्येष्टौ हविर्ग्रहणादिमन्त्रा उच्यन्ते। निर्वपत्यग्नेस्तनूरिति पञ्चकृत्वः प्रतिमन्त्रमिति। का० ८।१।१४। अग्नि-सोमयोर्नमस्काः सोमराजानुचरास्तत्प्रीत्यर्थं निर्वपामि। तिथिविशेषं विनैव सुधया पीड़ितेऽतिथौ समागते तत्-

* अग्नेस्तनू, रापतयेचतुष्को,तस्यायनोद्दे, इन्द्रघोषस्तिस्रो,युञ्जतेष्टौ, देवस्यत्वाचतस्रो, देवस्यत्वापंच, विभूरसिचतस्रो, ज्योतिरसिपद्युरविष्णोतिस्रो, दशमिष्कारिंशत् ॥

"मा च यज्ञपतिं" यजमानम्। किञ्च "शिवौ" शान्तौ "भवतं" भवथः "अद्य" अस्मिन्यज्ञे "नः" अस्माकम् ॥ ३ ॥ जुहोति (१)। "अग्नावग्निः"। आहवनीयनिर्मथ्यावुच्येते। विराट्। अग्नौ आहवनीयाख्ये योयमग्निः निर्मथ्यः "चरतिप्रविष्टः"। "ऋषीणां" विदुषामग्निहोत्रिणां पुत्रः। "स यदग्नौ आधत्ते तदेनं जनयतीति" श्रुतिः। "अभिशस्तिपावा" अभिशंसनमभिशस्तिः अभि-

वेदसोऽशिवौर्भवतमद्यनः ॥ ३ ॥ अग्नावग्निः। अग्नाव-ग्निश्चरतिप्रविष्टऽऋषीणाम्पुत्त्रोऽअभिशस्तिपावा॥ सनःस्यो

शस्तेः पाति गोपायति यः सोभिशस्तिपावा। "स नः" सोऽस्माकमग्निः "स्योनः" सुखरूपः। "सुयजा" सुयागेन। "यज"। परोक्षकृतत्वान्मन्त्रस्य प्रथमपुरुषेण व्यत्ययः। यजतु। "इह" अस्मिन् यज्ञे। "देवेभ्यो हव्यं" हविः। "सदम्" सदा। "अप्रयुच्छन्"। युच्छीप्रमादे।

(१) अग्नावग्निरिति जुहोति आज्याः स्रुवेणेति। का० ५।१।६। देवेभ्यइन्द्रादिभ्योहव्यं सोमादि यज प्रापयेत्यर्थोता महीधरभाष्ये ॥ ४ ॥

ध्रममादधन्। "स्वाहा" सुहुतं हविर्जुहोमि ॥ ४ ॥ तनूनपृत्तमाज्यं गृह्णाति (१)। "आपतयेत्वा"। वायुदेवत्यं यजुः। आ पततीत्यापतिः परितः पततीति परिपतिः। उभयगुणविशिष्टाय वायवे हे आज्यं त्वा गृह्णामि। "तनूनप्त्रे"। तनूशब्देनात्माभिप्रेतः। तन्यते हि तस्मादाकाशः ततो वायुर्भवति। तस्मादाकाशो जायते शक्वरनामा आकाशाद्वायुः। एत-

नः॒ सु॒यजा॑ य॒ज॒ दे॒वेभ्यो॑ ह॒व्यꣳ स॑दुमप्र॑युच्छ॒न्त्स्वाहा॑ ॥ ४ ॥ आ॒प॑तये त्वा। आप॑तये त्वा परि॑पतये गृह्णामि तनू॒नप्त्रे॑ शाक्व॒राय॑ शक्व॑न॒ ओजि॑ष्ठाय ॥ अना॑धृष्टमस्यनाधृ॒ष्यं दे॒वाना॒मोजो

दभिमेत्योक्तम्। तनूनप्त्रे ब्रह्मणः पौत्रायेत्यर्थः। "शाक्वराय"। शक्वानुवन्त्याकाशे भूतानि

(१) ध्रौवं प्रतप्रशने गृह्णात्यापतय इति दिव स्वाहा: स्रुवेणेति। येन पात्रेण व्रतं प्रदीयते तत्र ध्रुवास्थमाज्यं गृह्णीयादिति सूत्रार्थः। का० ८।१।१८-२०। (२) यद्यपि मन्त्रस्य व्याख्यान्तरं तित्तिरिव्याख्यातं, हे आज्य त्वामापतये प्राणदेवताप्रीत्यै गृह्णामि। प्राणो वा आपतिः प्राणमेव प्रीणातीति तित्तिरिः। परिपतिर्मनस्तत्प्रीत्यै। मन एव परिपतिर्मन एव प्रीणातीति तित्तिरिः। तनूं शरीरं न पातयतीति तनूनपा जाठराग्निस्तत्प्रीतये। शक्वनीक्षः

य० अ० सं० २५ छ० भा०

स्यातमिति शक्वर आकाशस्तस्यापत्यं शाक्वरो वायुस्तस्मै। "तस्माद्वा एतस्मादाकाशः संभूत आकाशाद्वायुरिति" श्रुतिः। "शक्वने"। शक्लृ शक्तौ। 'अन्येपि दृश्यन्ते' इतिवनिप्। शक्ताय। "ओजिष्ठाय" बलिष्ठाय। आज्यमवस्थाप्यन्त्यृत्विजःपरस्परमद्रोहाय शपथयन्तः। "अनाधृष्टमसि"। अनाधर्षितमनुल्लङ्घितस्त्वं भवसि। हे आज्य शपथकारिभिः पूर्वमधृष्टमिदानीमप्यनाधृष्य-मनुल्लङ्घनीयं त्वं भवसि। "अनभिशस्ति"। अभिपूर्वः शंसतिर्गर्ह्यार्थे वर्त्तते। न विद्यते अभि-

न॑भिशस्त्यभिशस्तिपाऽअ॑नभिशस्तेन्न्यमञ्ज॑सासत्त्यमुप॑गेषꣳस्व-

शस्तिर्यस्य तत्तथोक्तम्। "अभिशस्तिपाः" अभिशस्तेः पाति रक्षतीत्यभिशस्तिपाः। अनभिशस्ते प्रदेशे स्वर्गादौ नयतीति "अनभिशस्तेन्यम्"। यतस्त्वमित्थंभूतमतः त्वामभिलक्ष्य। "अञ्जसा-सत्यमुपगेषम्"। अञ्जसा प्रगुणेन मार्गेण यथास्वरूपं सत्यमुपगच्छेयम्। त्वं चानेन स्वितेन

शक्वर शक्तिमान् पुरुषस्तस्येदं शाक्वरं शक्तिस्वरूपाभिमानिदेवतायैत्यर्थः। शक्वने ओजिष्ठाय। शक्वने इति चतुर्थी सप्तम्यर्थे। शक्वनि शक्तिमति यदोजिष्ठं सारं तस्मै त्वा त्वां गृह्णामीति सर्वत्र। तानूनप्त्रमेतद्दक्षिणस्या वेदिश्रोण्यां निधा यावन्तस्तानूनप्त्रिणो यजमानश्चानाधृष्टमित्यद्रोहश्लोक्य इति। का० ८।२।२४-२६ ॥ ५ ॥

"स्वितेमाधाः"। सु इति साधुगते कल्याणे लोके स्वर्गे मां निदध्याः ॥ ५ ॥ आहवनीये समिधमादधाति (१)। "अग्ने व्रतपाः"। यजमानोनेन यजुषा अग्निशरीरात्मशरीरयोः व्यत्यासं करोति। "हे अग्ने व्रतपाः"। हे अग्ने व्रतं पातिरक्षतीति व्रतपाः। व्रतमिति कर्मनाम। "त्वे व्रतपाः" अवधारणार्थं पुनः संबोधयति। त्वमेव व्रतस्य गोपायिता। तं शरणं व्रजाम इति शेषः। केन प्रकारेणेतिचेत्। "या तवतनूरियꣳसामयि"। या इयं तव तनूः सा मयि भवत्विति-

# तेमांधाः ॥ ५ ॥ अग्ने व्व्रतपास्त्वेव्व्रतपायातवतनूरियꣳसामयि योममतनूरेषासात्वयि ॥ सहनौव्व्रतपतेव्व्रतान्यनुमेदीक्षान्दी

शेषः। "या मम तनूरेषा सात्वयि"। या चैषा मम तनूः सा त्वयि भवत्विति शेषः। एवं कृतशरीरव्यत्ययोरावयोः "सहनौव्रतपतेव्रतानि"। एकत्र आवयोः हे व्रतपते व्रतानि कर्माणि सन्त्विति शेषः। किञ्च "अनुमेदीक्षांदीक्षापतिर्मन्यताम्"। अनुमन्यतां मे मम दीक्षां दीक्षापतिः सोमः। अनुतपस्तपस्पतिः। अनुमन्यतां च तपःशब्देन च। उपसद उच्यन्ते।

(१) - अग्ने व्रतपा इत्याहवनीये समिधमाधायेति। का० ८।२।४ ॥ ६ ॥

तपस्पतिः सोमः ॥ ६ ॥ सोममाप्याययन्ति (१)। "अंठं॰शुरंठं॰शुः"। चतुरवसाना चतुरशीत्यक्षरा प्रकृतिरुच्यते सौमी। चतुर्थोऽर्द्धर्चो लिङ्गोक्तदेवताकः। हे "सोम अंशुः"। वीप्सा। "ते तव "आप्यायतामुपचीयताम् (२)। कस्मै "इन्द्राय"। तादर्थ्ये चतुर्थी। "एकधनविदे"। एकधनान् वेत्ति एकधनवित् तस्मै एकधनविदे (३) कथंभूतान् वेत्ति। "एकैकोंऽशुः सोमस्य

चापतिम्मंन्न्यंतामनु तपस्तपंस्पतिः ॥ ६ ॥ अंठं॰शुरंठं॰शुष्टे। देवसोमाप्प्यांयतामिन्द्रांयैकधनविदें ॥ आतुब्भ्यमिन्द्रःप्प्याय

देवान् प्रति भक्षत्वेन गच्छन् शतमेकधनानाप्याययति दशदश वा सोमस्य इंशवोंशक्ति"रितिश्रुतिः।" (४) "आतुभ्य"मिन्द्रःप्यायताम्"। आप्यायतामुपचीयताम् इन्द्रः हे सोम तुभ्यं त्वदर्थम्।

(१) यजमानपठाः सोममाप्याययन्त्यंशुरंशुरिति। का० ८।२।२६। (२) चिरावस्थानतो यत्सोमास्यावयवस्थानः शुष्कस्य तदुभयं मन्त्रेणाप्यायितं भवति। यद्वै वस्य शुष्यति यन्म्लायते तदेवास्यैतेनाप्याययतीति तित्तिरिः।(३) एकं मुख्यं सोमरूपं धनं वेत्ति तस्मै, सोमरूडनाय जलाहरणकुम्भाएकधना' तानानीतान् जानाति तस्मै वा। (४) अनेन सोमवोरपि वृद्धि। अतएव उभावेवेन्द्रं च सोमं चाप्याययतीति तित्तिरिः। ऋत्विजो वास्य सखाय इत्युक्तेः ऋत्वि-

उपचितोऽहमिन्द्रो बहु सोमं पिबति। "आत्वमिन्द्रायप्यायस्व"। आप्यायस्व त्वमिन्द्रार्थमात्मानम्। सोम "आप्यायय"वर्द्धय "अस्मान् सखीन्"समानख्यानान् परिचारकान्। "सन्या" धनलोभेन "मेधया" प्रज्ञया च। "स्वस्तितेदेवसोम"। स्वस्ति अविनाशः अस्तु तव हे देव सोम। अहं च "सुत्यामशीय" व्याप्नुयाम्। यद्वा स्वस्त्यविनाशेन तव संबन्धिसवनं सुत्यां हे देव सोम अहं व्याप्नुयाम्। प्रस्तरे निन्हुवते (१)। "एष्टारायः"। यजतेः कृतसंप्रसारणस्यैतद्रूपं निष्ठा-

तामात्त्वमिन्द्रायप्प्यायस्व॥ आप्प्यायय्ास्मान्त्सखीन्त्सुन्न्या

मेधयास्वस्तितेदेवसोमसुत्यामशीय॥ एष्टारायःप्प्रेषेभगायऽऋत

मत्वये परतो दानार्थस्य। आ इष्टा रायः मर्यादया इष्टानि धनानि। दक्षिणाभिप्रायमेतत्। तिमर्थमितिचेत् "प्रेषेभगाय"। प्रकृष्टाय इषेन्याय्याय भगाय धनाय च। "ऋतमृतवादिभ्यः" सत्यमेतद्भिन्तितमस्माकं भूयात्सत्यवादिनामिति विभक्तिव्यत्ययः षष्ठ्यर्थे चतुर्थी। "नमो द्यावा

जो वा। (१) प्रचेत्य प्रस्तरे निन्हुवत उत्तानहस्ता दक्षिणोत्ताना येष्टाराय इति का॰।८।१।२८। सर्वेपि ऋत्विजः प्रस्तरे निजहस्तानुत्तानान् कृत्वा दक्षिणहस्तं वोत्तानमुपर्यवस्थाप्य निन्हुवते सोमं परिचरन्तीति सूत्रार्थः।

पृथिवीभ्याम्"। द्यावापृथिव्यो संभोगमनुसर्वं सिध्यतीति नमस्कारः (७) ॥ ७ ॥ उपसदं जुहोति (१)। "ततोऽसुरा एषु लोकेषु पुरश्चक्रिरे अयस्मयीमेवास्मिंल्लोके रजतामन्तरिक्षे हरिणीं दिवी"त्यादी"तिहासो निदानभूतः। "या ते अग्ने"। हे अग्ने या ते तव "अयः-शया" अयसि शेते इत्ययःशया "तनूः" शरीरम् "वर्षिष्ठा उरुतमा विस्तीर्णतमा। "गह्वरेष्ठा"

तम्न्तवादिवभ्यो नमो द्यावापृथिवीभ्याम् ॥ ७ ॥ याते॑ऽअग्ने यःशया तनूर्वर्षिष्ठा गह्वरेष्ठा। उग्रं वचोऽअपावधीत्त्वेषं वचोऽअपावधीत् स्वाहा ॥ याते॑ऽअग्ने रजःशया तनूर्वर्षिष्ठा गह्वरेष्ठा।

निगूढदेशस्थायिनी। सा असुरसंबन्धिनी। "उग्रं वचः" उद्गूर्णवचः जहिजहि मारयमारय इतीत्थंभूतं वचनम् "अपावधीत्" अपहन्तु "त्वेषं" दीप्तं धृष्टं बलेन उर्जस्वितया च युक्तमपहन्तु।

(७) द्यावा पृथिवीभ्यामेव नमस्कृत्यास्मिंल्लोके प्रतितिष्ठतीति तित्तिरिः ॥ ७ ॥

(१) उपसद्जुहतिध्रुवेष यास इति। का० ८।२।२५। एवमितरे मन्त्रद्वं रजःशया हरिशया चेति। का० ८।२।२८ ॥ ८ ॥

एतमर्योद्यमा निर्यांच: असुरा सन्त्विर्थ्यं: । यद्वा या तवाग्ने ऽय:शया तनू: विस्तीर्णानिगूढ-देगस्थायिनी च यद्वृर्णमयच्च वचनमपहृतवती दीप्तं वचनमपहृतवती । सैनां पुनरपहन्त्विति शेष: । "रज:शया" रजतशायिनी । "हरिशया" हरितसुवर्णशायिनी । एतावदुत्तरयोर्मन्त्रयोर्विशेषव्याख्यानम् ॥ ८ ॥ चात्वालं परिलिखति (१) । "तप्तायनीमेऽसि" । चत्वारो मन्त्रा:

उग्रं वचोऽअपावधीत्त्वेषं वचोऽअपावधीत्स्वाहा ॥ याते॑ऽअग्ने हरिशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचोऽअपावधीत्त्वेषं वचोऽअपावधीत्स्वाहा ॥ ८ ॥* तप्ताय नौमि । तप्ताय नौमे सिवित्तायनीमेस्यवतान्मा नाथितादवतान्मा व्यथितात् ॥ विदेदग्नि

र्पृथिवीदेवत्या. । तत्र द्रव इत्यर्थं पुरुषोस्यामेतीति तप्तायनी पृथिवी । "मे" मम "असि" ।

(१) यस्यामादाय चात्वालं मिमीते पूर्वेणोत्करं सञ्चर परिहाय यस्यामुदीचीं निदधाति पुरस्ताद्दक्षिणत: प्राचीगुत्तरतश्च स्फ्येनान्तर्लिखतितप्तायनीति मतिमन्त्रमिति, (उत्तरवेदिनिचयार्थं यत्र भूप्रदेशे मृदं खनति स प्रदेशश्चात्वाल ।

द्वितीयं परिलिखति। "वित्तायनी"। अस्यां हि विविदानोऽर्थमुपलभमानः पुरुषएतीति वित्तायनी। वित्तशान्त्या भवतीति वित्तायनी "मे" मम "असि"। तृतीयं परिलिखति। "अवतात् मा नाथितात्"। अवतु रक्षतु मां नाथितात्। नाथतिर्याञ्चार्थः। परियाचनात्। यथाहं न याचेयं तथा पृथिवी मां करोत्वित्यर्थः। चतुर्थम्। "अवतात्" अवतु रक्षतु मां "व्यथितात्"

न्नभोनामाग्नेऽअङ्गिरऽआयुना नाम्नेहि यास्यां पृथिव्यामसि यत्ते नाधृष्टं नाम यज्ञियन्तेन त्वादधे विदेदग्निर्नभो नामाग्ने ऽअङ्गिरऽआयुना नाम्नेहि यो द्वितीयस्यां पृथिव्यामसि यत्ते नाधृष्टं

व्यथ दुःखभयचलनयोः। भयात् चलनाद्वा पृथिवी। चात्वाले प्रहरन्ति। "विदेदग्निः"। "स [illegible] अग्नीनामेत्र नामानि गृह्ण प्रहरति। यां [illegible] प्रमू देवा अग्ने अग्नीन् होत्राय प्रष्यते-

तवोत्करात् पूर्वस्यां संचरपरिहारेण उदगग्रां भस्त्रां निधाय तत् मात्रा तत्पूर्वपार्श्वे स्फ्येन रेखां कुर्यात् अभ्यन्तरे एवं दक्षिणोत्तरयोरपि मात्रया भस्त्रां निधाय रेखात्रयं कुर्यादिति सूत्रार्थः। विदेदग्निरिति चात्वाले प्रहरति स्फ्येनेति, स वा अग्नीनां नामानि गृह्णन् हरति, यमे यज्ञिर इति पुरीषं प्रहरति, यो नामिति नियमति पूर्वार्धे यह, यद्-

त्यादीतिहास: तदनुवादिन एते मन्त्राः। "विदेत्" जानीयात् अग्निः। कतमः। "नभः"। नभातीति नभःस्वकीयं नाम। पुरीषं हरति। "अग्ने अङ्गिरः"। हे अग्ने अङ्गिरः। "अङ्गिरा उ ह्यग्निरिति" श्रुतिः। "आयुनानाम्ने"। आयुरित्यनेन नाम्ना अभिहितः। "आ इहि" आगच्छ। निवपति। "योस्यां पृथिव्याम्"। यस्त्वमस्यां पृथिव्यां भवसि। यत्ते तव आना-

त्वामंयज्ञियन्तेन त्वादधेव्विदेदग्ग्निर्न्नभोनामाग्ग्ने ऽअङ्गिर ऽआयु
नानाम्ने हियस्तृतीयस्याम्पृथिव्यामसि यत्तेनाधृष्टन्नामयज्ञिय
न्तेन त्वादधे॥ अनुत्वादेववीतये ॥ ६ ॥ सिꣳहासि। सपत्

धृष्टम्" अनाधर्षितं नाम "यज्ञियं" यज्ञसंपादि तेन नाम्ना "त्वामादधे" स्थापयामि। "यो द्वितीयस्यां "पृथिव्यामसि"। पृथिवीशब्देनान्तरिक्षलोक उक्तः। तृतीयस्यां "पृथिव्यामसि"। पृथिवीशब्देन द्युलोक उक्तः। चतुर्थं प्रहरति। "अनुत्वादेववीतये"। देवतर्पणाय अनुहरामि त्वां देववीतम्, एवं हिरण्यं द्वितीयस्यां तृतीयस्या मिति विशेषः, अनुलेति चतुर्थं यथार्थमाह्वयेति। का० ५।३।२०-२२॥ ६॥

तये। वीतिस्तर्पणार्थः ॥ ९ ॥ व्यूहत्युत्तरवेदिम् (१)। "सिंह्यसि"। "तेभ्यो ह वाक् चुक्रोध" इत्युपक्रम्य सिंहीभूत्वाददानाचचारेतीतिहासो वेदिमन्त्राणां निदानभूतः। या त्वं सिंही भवसि। "सपत्नसाही"। सपत्नान् सोढुं शीलमस्या इति सपत्नसाही शत्रूणामभिभवित्रीत्यर्थः। सा त्वमस्माभिरनुमोच्यमाना देवेभ्योऽर्थाय कल्पस्व। उत्तरवेदिरूपेण क्लृप्ता भव। प्रोक्षति।

सिꣳहीरसि सपत्नसाही देवेभ्यः कल्पस्व सिꣳहीरसि सपत्नसाही देवेभ्यः शुन्धस्व सिꣳहीरसि सपत्नसाही देवेभ्यः शुम्भस्व ॥१०॥ * इन्द्रघोषस्त्वा । इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु प्रचेतास्त्वा रुद्रैः

"शुन्धस्व"। अस्माभिरद्भिरामलुता सती शुद्धा भव। सिकताः प्रकिरति। "शुम्भस्व"। शुम्भतिरलङ्कारार्थः। अलङ्कृता भव ॥ १० ॥ उत्तरवेदिं प्रोक्षति (१)। "इन्द्रघोषः"। घोष इति वाङ्-

(१) सिंह्यसीति व्यूहत्युत्तरवेदिं शम्यामात्रीमिति, प्रोक्षत्युत्तरवेदिं सिकताश्च प्रकिरति सिंह्यसीति प्रति मन्त्रमिति। का० ५।३।२२-२७ ॥ १० ॥

(१) वेद्यन्तरे स्थितोऽन्द्रुत्तरवेदिं प्रोक्षतीन्द्रघोष (इन्द्रशब्दे नयुच्यते विसर्गमुच्चार्यतेच) इति प्रतिमन्त्रं प्रतिदिशं

नामसु पठितम्। इन्द्रस्त्वां "वसुभिः" सहितः "पुरस्ता"द्गोपायतु। "प्रचेताः" प्रकृष्टज्ञानो वरुणः त्वा "रुद्रैः" सहितः "पश्चात्पातु"। "मनोजवाः"। मनोगतिर्यमः त्वां "पितृभिः" सहितः दक्षिणतः पातु। "विश्वकर्मा"। विश्वकर्मेति निगदव्याख्यातोमन्त्रः। बहिर्वेदिशेषं निषिञ्चति। "इदमहं" वेदिगमनेन "तप्तमावर्तितं" "वाः" उदकम् "बहिर्धायज्ञात्" बाह्यतो

पुरस्ताद्यमस्त्वा पितृभिर्दक्षिणतः पातु विश्वकर्मा त्वा दित्यैरुत्तरतः पात्विदमहं तप्तं वार्बहिर्धा यज्ञान्निःसृजामि ॥११॥ सिᳯहृयसि। सिᳯहृयसि स्वाहा सिᳯहृयस्यादित्यवनिः स्वा

यज्ञात् "निःसृजामि" निक्षिपामि ॥ ११ ॥ नाभिमाघारयति (१)। "सिᳯ० हृयसि"। "स्वा

प्रयाजिनम्, बहिर्वेदिशेषं निषिञ्चतीदमहं तप्तं वारिति। का० ५।४।११-१२। वसुभिरष्टसंख्याकैर्गणदेवैर्युक्तः। एते मन्त्रैरेषा मार्जनीया। तदाह तित्तिरिः असुरा वन्युमुस्य देवानभ्यायन्त तानिन्द्रघोषो वसुभिः पुरस्तादपानुददिति॥११॥

(२) नाभ्याः श्रोण्योरंसयोः पञ्चगृहीतं जुहोत्यनुपूर्वया दक्षिणश्रोण्यांसयोरंसयोरांसमध्ये च हिरण्यं पश्यन् सिंहीरसि भूतेभ्यस्त्वेति स्रुचमुद्यच्छतीति। का० ५।४।१४-१५ ॥ १२ ॥

वदेशादः सिंहीभूत्वा शान्तेराचचारे"त्यादि निदानोद्घाटनं श्रौतम्। "सिंह्यसिस्वाहा"। सिंहि॰ह्यसि आदित्यवनिः"। 'छन्दसि वनसनरक्षिमथा'मिति इन्प्रत्ययः। आदित्यादिन्वनुते सं-भजत इत्यादित्यवनिः। "सिंहि॰ह्यसि ब्रह्मवनिः क्षत्रवनिः"। "सिंहि॰ह्यसिसुप्रजावनिः"। "रायस्पोषवनिः"। सुप्रजत्वं शोभनां प्रजां"रायस्पोष" धनपोषम्। एतान्यादित्यवनिसमानव्याख्या-

हांसि ऽ ह्यसिब्रह्मवनि÷ क्षत्रवनिः स्वाहांसि ऽ ह्यसिसुप्रजावनी रायस्पोषवनिं स्वाहांसि ऽ ह्यास्यावहदेवान्यजमानाय स्वाहाभूतेभ्यस्त्वा ॥ १२ ॥ ध्रुवोसि। पृथिवीन्दृंहध्रुवक्षिदस्य

नानि। "सिंहि॰ह्यसि आवहदेवान् यजमानाय"। आगमय देवान् यजमानाय। स्रुचमुद्यच्छति। 'भूतेभ्यस्त्वा"। भूतशब्देन चतुर्विधो भूतग्रामोभिधीयते। चतुर्विधाय भूतग्रामाय। उत्पत्तये स्थितये च स्रुचमुद्यच्छामीतिशेषः ॥ १२ ॥ परिधीनुपरिदधाति (१)। "ध्रुवोसि"।

(१) नाभिं वैतदारत्रे (पौतुदारवैर्देवदारुसत्रीयै.) परिदधाति ध्रुवोसीति प्रतिमन्त्रम्। अन्ये: पुरीषमिति, वपति

यस्मादधियज्ञ "ध्रुवः" स्थिरः त्वमसि तस्मात् "पृथिवीं दृꣳह" दृढीकुरु। "ध्रुवक्षित्"। ध्रुवे नित्ये यज्ञे क्षियतीति ध्रुवक्षित्। यस्मात्त्वं ध्रुवक्षिदसि तस्मादन्तरिक्षं दृढीकुरु। "अच्युत-क्षित्"। अच्युते यज्ञे क्षियतीत्यच्युतक्षित्। यस्मात्त्वमच्युतक्षिदसि तस्माद्दिवं दृढीकुरु। संभारानुपनिवपति। "अग्नेः पुरीषमसि"। अग्नेः पूरयितृ भवसि। "शरीरं ह्येवास्य पौरु-दारु" इत्यादि श्रुतिः॥ सम्भाराणां शरीरपूरणात् पुरीषत्वमुपपद्यते॥ १३॥ सावित्रं

न्तरिक्षन्दृꣳहाच्युतक्षिदसि दिवन्दृꣳहाग्नेः पुरीषमसि ॥ १३ ॥ युञ्जते मनः। युञ्जते मनऽउत युञ्जते धियो विप्रा विप्रस्य बृहतो विप

जुहोति (१)। "युञ्जते मन"। अधियज्ञानुवादिनी सावित्री जगती यस्मात्सवित्रा प्रसूता। ऋत्विजो युञ्जते मनः मनांसि। "उत युञ्जते धियः"। अपि च। युञ्जते प्रेरयन्ति

गुग्गुलसुगन्धितेजनकृष्णोर्णास्तुकायोपरिपीयमाणा प्रभावेण्या इति। का॰ ५।४।१६-१७। सुगन्धितेजनं तृणविशेष कृष्णो स्तुका अविरोमाणि॥ १२॥

(१) अस्तितावत्प्राचीनवंशा शाला, तस्यामाहवनीयादग्नियमैष्टिकवेदिरस्ति, तस्याः शालायाः पुरतः पट्-

धियो वाचः। कथं भूता ऋत्विजः प्रेरयन्ति। "विप्राः" ब्राह्मणाः शुश्रुवांसोनूचानाः। "विप्रस्य"। प्राप्तक्रियाधर्त्तेः फलदानं प्रतियज्ञस्य कर्मणि ब्राह्मणस्य। श्रुतौ वैश्यक्षत्रियावपि यजमानावग्निष्टोमे दीक्षितोय ब्राह्मण इत्युच्येते। अतस्तावपि ब्राह्मणशब्देनोच्येते। "बृहतो" महतः। "विपश्चितो" मेधाविनः सर्वस्य यज्ञस्य। किञ्च त एव सविता प्रसूता ऋत्विजः। "विहोत्रादधे" विदधत इति वचनविपर्ययः। अथ होत्राः सप्त वषट्कर्त्तारो होत्रा इत्युच्यन्ते।

## विप्रस्य बृहतो विपश्चितः। विहोत्रा दधे वयुनाविदेकऽइन्मही देवस्य सवितुः परि

अथ "होत्राः संयाजयन्तीति" श्रुतिः। सौत्येऽहनि सप्त होतारो वषट्कुर्वन्ति। तदेतदुच्यते। "वयुनाविदेक इत्"। वयुनं वेत्तेः कान्तिर्वा प्रज्ञा वा। इच्छब्द एवार्थे। सर्वेषामेवर्त्विजां मध्ये सविता प्रसूतो ब्रह्माख्यः एक एव ऋत्विक् "वयुनावित्" विविदज्ञानान्वितो भैषज्यं करोति।

विं मत्पदरीर्घा सौमिकी वेदिर्विधेया, तद्देया अग्रभागे पूर्वोक्तोत्तरवेदिः ततः पश्चान्मध्यभागे हविर्धानाख्यो मण्डपो विधेय, ततोपि पश्चात्सदोभिधानोद्ग्धंवा शाला निर्मातव्या तस्याः स्थाने प्राचीनवंशायाः, पुरतो-दक्षिणोत्तरभागयोः पंविधानसंप्रकेरे शकटे स्थापिते स्तः तच्छकटद्वयं पुरतः भवत्यं तदावरकत्वेन हविर्धानाख्योमण्डपो विधेयः, तच्छकटद्वयं

"महीदेवस्य सवितुः परिष्टुतिः"। महती देवस्य दानादिगुणयुतस्य, सवितुः सर्वस्य प्रसवितुः परिष्टुतिः परिस्तवनम्। को हि नाम यज्ञं प्रत्यृत्विजः प्रसूय समाश्नाति यज्ञम्। यज्ञो हि दृष्टिद्वारेण समस्तं जगद्बिभर्तीति सवितुर्महती स्तुतिरित्युक्तम् ॥१४॥ दक्षिणे वर्त्मनि हिरण्यं निधाय जुहोति(१)। "इदं विष्णुः"। गायत्री वैष्णवी। इदं जगत् विष्णुः "विचक्रमे" विक्रान्तवान्। सर्वप्राणिनो हि भूतेन्द्रियमनोजीवभावेनाविशतीति विष्णुः। किञ्च "त्रेधा निदधे पदम्"। पद्यते ज्ञायतेऽने-

## ष्टुतिः स्वाहा ॥ १४ ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।

नेति पदम्। भूम्यन्तरिक्षद्युलोकेषु अग्निवायुसूर्यरूपेण त्रिधा निहितवान् पदम्। किञ्च "समूढमस्य पांसुरे"। अत्रैव विष्णोरन्यत्पदान्तरं विज्ञानघनानन्दमजमद्वैतमक्षरमित्येवं ज-

घावितहोमादूर्ध्वं प्रवर्तनीयम्। तदाह तित्तिरिः सावित्र्यां तु आहविधाने प्रवर्तयतीति। चतुर्थं होतं शालाद्वार्ये जुहोति युञ्जत इति सगार्हपत्येत इति का० ८।३।२९। प्राचीनशालायाद्वारसमीपे पूर्वसिद्ध आहवनीयो वर्तते तस्मिन् जुहूयात्स- पूर्वमाहवनीयोपि सन्नुत्तरवेद्यां खरान्यस्मिन्नाहवनीये निष्पन्ने सति तदपेक्षया स्वयं गार्हपत्यो भवतीति सूत्रार्थः ॥ १४ ॥

(१) दक्षिणे वर्त्मनि दक्षिणस्यानसो हिरण्यं निधायाभिजुहोति इदं विष्णुरिति। का० ८।३।३१। स्वाहा तस्मै विष्णवे हविर्दत्तम् ॥ १५ ॥

क्षणम्, समूढमन्तर्हितमविज्ञातमज्ञातात्मभिः। "पांसुरे"। लुप्तोपममेतत्। पांसुल इव प्रदेशे निहितं न दृश्यते तत्समूढमिति। द्रष्टव्यमिति वाक्यशेषः। तदुक्तम्। "तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्" इति॥ १५॥ द्वितीयस्यानसो वर्त्मनि जुहोति(१)। "इरावती"। वैष्णवी त्रिष्टुप्। हे विष्णो यस्मात्त्वं प्रयाणमनुकुर्वन्त्यौ द्यावापृथिव्यौ इरावती सस्यवत्यौ "धेनुमती" धेन्वादिभिः पशुभिः तद्वत्यौ। "हि" शब्दो यस्मादर्थे। व्याख्यातः। एवं

समूढमस्यपाꣳसुरेस्वाहा॥ १५॥ इरावतीधेनुमती। इरावतीधेनुमतीहिभूतꣳसूयवसिनीमनवेदशस्या॥ व्यस्कभ्नारो-

भूतां "भूतम्" अभूतामितिपुरुषव्यत्ययः। संहते इत्यर्थः। "सूयवसिनी" शोभनयवसवत्यौ। सुसस्यवत्यौ। "मनवे" यजमानाय। "दशस्या" दात्र्यौ यज्ञसाधनानाम्। अतः कारणात्

(१) सृक्ष्वाण्यो प्रतिप्रस्थ प्रतिप्रस्थातोत्तरस्येरावतीति पूर्ववदिति। का० ८।२।२५। यथाध्वर्युणा दक्षिणशकटदक्षिणचक्रमार्गे हुतमेवं प्रतिप्रस्थात्रा उत्तरशकटोत्तरचक्रमार्गे होतव्यमिति सूत्रार्थः। (२) स्वतेजोरूपैर्गोभिः। द्यावतारैर्वा महीधरभाष्ये। साहा तस्मै विष्णवे भवितव्यम्॥ १६॥

"व्यस्कभ्ना."। स्कभ्नोतिः स्तम्भनार्थः। स्तम्भितवानसि। "रोदसी" द्यावापृथिव्यौ एते। किञ्च। "दाधर्थ" धारयसि च। पृथिवीं द्यां चेत्यध्याहारः। "अभितः"। इतश्चेतश्च। "मयूखैः" रश्मिभिः (२)। यस्मात्त्वमेवं प्रभावस्तस्मात्त्वां स्तुम इति शेषः॥ १६॥ पत्नी अक्षधुरावनक्ति (१)। "देवश्रुतौ"। देवा एते धुरौ शृण्वति इति देवश्रुतौ। ये युवां देवश्रुतौ ते "देवेषु आघोषतम्"। घुषिर् शब्दे। आक्रन्दयतम्। वाचयति। "प्राचीप्रेतम्"। हे हविर्धाने प्राची प्राग्ध्वने। इया-

दंसौविष्णवेते दाधर्थ पृथिवीमभितो मयूखैः स्वाहा॥ १६॥ देवश्रुतौ देवेष्वाघोषतम्प्राचीप्रेतमध्वरङ्कल्पयन्ती ऊर्ध्वं यज्ञ

गतो। प्रह्वत मेतं प्रगच्छतम् "अध्वरं कल्पयन्तौ"। यज्ञं समर्थं कुर्वाणौ। किञ्च "ऊर्ध्वं यज्ञं-नयतम्"। ऊर्ध्वं स्वर्गं प्रति यज्ञं नयतम्। "माजिह्वरतम्"। ह्वल चलने। मा चलनं कुरुतम्। अचलितप्रतिष्ठिते युवां भवतम्। शब्दं कुर्वत्यनसि वाचयति। "स्वं गोष्ठम्"। हे हविर्धाने

(१) दक्षिणया द्वारानीता पत्नी पाणिभ्यां भेष प्रतिष्ठाक्षधुरावनक्ति पराग्देवश्रुताविति प्राचीमेतमिति वाचयति, स्वं गोष्ठमिति प्रवर्जति पश्चादुत्तरवेदेस्तिषु प्रक्रमेषु मत्वा वा नभ्यस्थं त्यभिमन्त्रयतेऽग्नेरमेथामिति। का०

समालोच गोष्ठं स्थानम् "आवदत" मुच्चारयतम्। हे "देवी" दानादिगुणयुक्ते हे "दुर्ये" गृहभूते। आमन्त्रितद्विवचनान्ते द्वे पदे। किञ्च "आयुर्मानिर्वादिष्टम्"। निरुपसर्गः कुत्सायाम्। निकृष्टमल्पं पथ्यनादिरहितमायुर्मानिर्वादिष्टं मा उच्चारयतम्। "प्रजां मानिर्वादिष्टम्"। प्रजां निकृष्टान् निस्व यां मा उच्चारयतम्। युवाभ्यामुच्चारितं तथैव स्यादित्यभिप्रायः। नभ्यस्ये करोति।

न्न यत स्माजिह्वरतम् ॥ स्वङ्गोष्ठमावदतन्देवीदुर्व्येऽआयुर्म्मानि र्व्वादिष्टम्प्रजाम्मानिर्व्वादिष्टमत्त्र रमेथांव्वर्ष्मन्पृथिव्याः॥१७॥

"अत्र रमेथाम्"। अस्मिन् प्रदेशे रमेथाम्, रतिं कुरुतम्। "वर्ष्मन्"। 'नङिसम्बुध्द्योरिति नलोपाभावः। 'सुपांसुलुगिति' सप्तम्यालोपः। "पृथिव्याः" ॥ १७ ॥ दक्षिणमुपस्तभ्नाति (१)। "विष्णोर्नुकम्" इत्याद्यास्तिस्रो वैष्णव्यस्त्रिष्टुभः। द्वयोरन्ते विष्णवे त्वेति यजुः। नुकमिति ८।३।३।८४५। प्रतिमस्थानानीतापत्यो सोमयेपाल्येनाचस्योभावग्रावनक्तीति सूत्रार्थः। स्वर्जति प्रदं कुर्वति मध्ये। (२) पृथिव्याः वर्ष्मन्, भूमिशरीरभूते देवयजने, स्तीर्णे वा ॥ १७ ॥

(१) उत्तरेण परिक्रम्य दक्षिणमुपस्तभ्नाति विष्णोर्नुकमिति, दक्षिणतः स्थूणामुपनिहन्तीति विष्णवत्वेति।

निपातसमाहारोऽवधारणार्थः। विष्णोरेव वीर्याणि प्रवोचं ब्रवीमि। यो विष्णुः "पार्थिवानि विममे" पृथिव्यन्तरिक्षद्युलोकानि निममे निर्मितवान्। "रजांसि"। लोका रजांस्युच्यन्ते इति रजःशब्दो लोकवचनः। किञ्च यश्च "विचक्रमाणस्त्रेधोरुगायः"। उरुगमनः "अस्कभायत्" स्तंभितवान् "उत्तरं" द्युलोकाख्यम् "सधस्थं" सहस्थानं देवानाम्। 'सधमादस्थयोश्छन्दसि'।

विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि। यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वा ॥ १८ ॥ दिवो वा। विष्णवुत वा पृथिव्या-

तिसहशब्दस्य सधादेशः। तस्य विष्णोर्वीर्याणि प्रवोचमिति सम्बन्धः। स्थूणामुपनिहन्ति "विष्णवे त्वा"। निहन्मीति शेषः ॥ १८ ॥ उत्तरमुपस्तम्भनाति (१)। "दिवो वा विष्णो" हे विष्णो द्युलोकात् वा "उत वा पृथिव्याः" अपि वा पृथिवीलोकात्। "महो वा विष्णो उरोरन्त-

का० ८।४।६-७। निहन्मि निखनामि ॥ १८ ॥

(१) दिवो वेत्युत्तरं प्रतिप्रस्थातोत्तरस्थूणं पूर्ववदिति। का० ८।४।८ ॥ १९ ॥

"शृणोत्वग्निः"। त्रिष्टुप् लिङ्गोक्तदेवता। शृणोत्वनुजानात्वग्निः। "समिधा" समित्पूर्विकया-ऽज्यया। "हव" माह्वनम् "मे" मम। "शृण्वन्त्वापः" "धिषणाश्चवाचः" धीसादिन्यो वाधीसा-न्यो वा। "देवी" देव्यः। चशब्दः समुच्चयार्थः। "श्रोताग्रावाणः"। यूयमपि शृणुत हे ग्रावाणः। कथमिव। "विदुषोनयज्ञम्"। उपमार्थीय उपरिष्टादुपाचारो नकारः। विदि-

श्च देवीः। श्रोता ग्रावाणो विदुषो न यज्ञꣳ शृणोतु देवः सविता हवं मे स्वाहा ॥ २६ ॥ देवीरापः। देवीरापोऽअपान्नपाद्यो वऽऊ

तार्थ इव। परिदृष्टकारिणो यज्ञं। प्रत्ययकृतः मादो मध्यमपुरुषयोगात्। "शृणोतु देवः सविता हव" माह्वनं "मे" मम "स्वाहा" सुहुतमस्तु। स्वाहा वागाह ॥ २६ ॥ अप्सु जुहोति। "देवीरापः"। पङ्क्तिरब्देवत्या। हे देव्यः आपः "अपान्नपा" त्संज्ञकः "योवः" युष्माकं "ऊर्मिः"

(१) अवभृथं गत्वा देवीराप इति जुहोति। का० ८।१।७। "स्वाहा" इदमाज्यं युष्मभ्यं हुतमस्तु। ग्रहीष्यमाणा-नामस्मामिद मूल्यमाहुति तदुक्तं तित्तिरिणा—देवीरापो अपान्नपादित्याहाहुत्यैवैनान्निष्क्रीय गृह्णातीति ॥ २७ ॥

समुद्र" इति श्रुतिः। वसतीवरीलक्षणस्यास्तु समुद्रस्य "त्वाम् अर्चत्यै" अनुपक्षीणतायै "उन्नयामि उद्गृह्णामि। वसतीवरीयां हि वर्द्धनाय एता आपो गृह्यन्ते। संसृजन्ति। "समापोऽअद्भिरग्मत"। संगच्छताम् आपो वसतीवरीलक्षणा आभिरद्भिर्मिलावरुणचमसस्थाभिः। संगच्छतां च ओषधीभिः व्रीहियवादिभिः। ओषधीः मुञ्जसूनादिकाः। अपां कारणभूतत्वादोषधीनामपि तयोपयोगो भवत्वित्यभिप्रायः॥ २८॥ जुहोति (१)। "यमग्ने"।

रसिसमुद्रस्य त्वाक्षित्याऽउन्नयामि॥ समापोऽअद्भिरग्मत समोषधीभिरोषधीः॥२८॥ यमग्ने। यमग्ने पृत्सु मर्त्यमवा वाजेषु यञ्जुनाः।

गायत्र्याग्नेयी। हे अग्ने यं "मर्त्यं" मनुष्यं "पृत्सु" संग्रामेषु "अवाः"। अवतेरक्षणार्थस्येतद्रूपम्। अवसि रक्षसि। "वाजेषु"। वाज इत्यन्ननाम। हविर्लक्षणेष्वन्नेषु असुरह्रतेषु। "यं" च पुरुषं। "जुनाः" जुनातिर्गत्यर्थः। अभिगच्छसि। "स" पुरुषो "यन्ता"। जिनात्यन्नं, तृजन्तमेतत्

(१) प्रवर्ग्यो संसवमग्निष्टोमे जुहोति अभावे चतुर्गृहीतं यमग्ने इति (अभावे होत्रपर्यायाभावे)। का० ८।३।१३।

स्वन्त" रसवन्तम् "मधुमन्त" मधुस्वादुना रसेनोपेतम् "पयस्वन्तं" पयःस्वादुना रसेनोपेतम् घ्वरं कृणोति संबन्धः। निगाभ्यासु वाचयति। "निगाभ्यास्थ"। यस्मादिन्द्रेण यूयं गृहीतास्तस्मान्निगाभ्या उच्यन्ते। यस्मादेवं बहुमाननामधेयप्रतिलम्भयुक्ता भवथ। देवैश्च स्तुता-

नोज्जस्वन्तम्मधुमन्तम्पयस्वन्तंनिग्राभ्यास्स्थदेवश्रुतस्तर्प्पयतमामनोमे ॥ ३० ॥ मनोमे। तर्प्पयतवाचम्मेतर्प्पयतप्राणम्मेतर्प्पयतचक्षुर्म्मेतर्प्पयतश्श्रोत्रम्मेतर्प्पयतात्मानम्मेतर्प्पयतप्रजाम्मेतर्प्पयतपशून्मेतर्प्पयतगणान्मेतर्प्पयतगणामेमावि

तस्थाश्च बहुनामान्विताः सत्यः "तर्पयतमा" समासव्यासेन ॥३०॥ "मनोमे" मम "तर्पयत"। इति विस्तारः व्यासेनोक्तः। समासेनाह। "आत्मानं" पिण्डशरीरम् "प्रजां" पशून् गणान्म-रुपस्थघातान्। "गणाश्चमावितृषन्"। मद्दत्वदानेन पूरिता अपि सन्तो मा विगततृष्णा-मिग्राभ्यस्थेति। का० ८।४।५-७ ॥ ३० ॥

भयन्तु। अनुरक्तगणोऽहं भवेयमित्यर्थः ॥ ३१ ॥ 'सोमं' मिमीते (१)। "इन्द्राय त्वा वसुमते रुद्रवते"। मिमइतिशेषः। "इन्द्राय त्वा आदित्यवते" मिमे। प्रातःसवनमाध्यन्दिनसवनतृतीयसवनदेवतायुक्तायेन्द्रायेत्यर्थः। "इन्द्राय त्वा अभिमातिघ्ने" मिमे। "सपत्नोवाअभिमाति" रितिश्रुतिः। सपत्नस्य हन्त्रे। "श्येनाय"। श्येनरूपिण्यै गायत्र्यै त्वां, "सोमभृते"।

तृषन् ॥ ३१ ॥ इन्द्राय त्वा। इन्द्राय त्वा वसुमते रुद्रवत ऽइन्द्राय त्वा दित्यवत ऽइन्द्राय त्वाभिमातिघ्ने ॥ श्येनाय त्वा सोमभृते ऽग्नये त्वा रायस्पोषदे ॥ ३२ ॥ यत्ते। सोम दिवि ज्योतिर्यत्पृथिव्यां

'ह्रग्रहोर्भश्छन्दसी'ति हस्य भकारः। "सोमभृते" सोमस्याहर्त्र्यै गायत्र्यै मिमे। "अग्नयेत्वारायस्पोषदे"। रायो धनं तस्य पोषो वृद्धिस्तं ददातियस्तस्मै रायस्पोषदे। अग्निशब्देनात्र गायत्र्यभिधीयते भक्तिश्रुतेः। "अथैतान्यग्निभक्तीन्ययं लोकः प्रातःसवनं वसन्तो गायत्री"ति ॥३२॥

(१) तृतीयसवने सोमं मिमीते इन्द्राय त्वा वसुमते रुद्रवते इति पञ्चकम् प्रतिमन्त्रम्। - का० ८।४।८ ॥ १२ ॥

मितालम्भनम् (१)। "यत्तेसोम"। चौमविपरीता बृहती। श्रुतकामस्य-मन्त्रस्य कारण्यं निदानम्। "यदा किल देवानां हविरभूत् सोमः तदैषु लोकेषु तिस्रस्तनूर्विन्यदधात्।" तासामनेनाप्तिः क्रियते। यत्ते तव हे सोम "दिवि" द्युलोके "ज्योतिः"। यच्च "पृथिव्यां ज्योतिः"। यच्च "उरौ" विस्तीर्णे "अन्तरिक्षे" "तेन" तत्वाख्येन ज्योतिषा "अस्मै" यजमानाय अस्य यजमानस्य संबन्धिनि यज्ञे "उरु" विस्तीर्णं कृत्स्नं शरीरमात्मनः "कृधि" कुरु। ऋत्विजां च

यदुरावन्तरिक्षे ॥ तेनास्मै यजमानायोरु राये कृध्यधि दात्रे वोचः ॥ ३३ ॥ श्वात्रास्थ। श्वात्रास्थवृत्रतुरोराधोगूर्ताः

"राये" दक्षिणाप्राप्तये उरु शरीरं "कृधि" कुरु स्वकीयम्। किञ्च। "अधिवोचः" अधिब्रूहि। "दात्रे" यजमानाय। कृत्स्नोऽहमागत इति ॥ ३३ ॥ आसिञ्चतिनिग्राभ्याः (१)। "श्वात्रास्थ"। उपरिष्टाद्बृहती निग्राभ्या। आपो देवताः। या यूयं "श्वात्राःस्थ"। श्वत्रमिति क्षिप्रनाम।

(१) यत्त इति मितालम्भनमिति का० ८।४।८ ॥ ३२ ॥

(१) श्वात्रा स्थेति आसिञ्चति निग्राभ्या इति। का० ८।४।१२ ॥ ३४ ॥

य० च्छिमकारिण्यो भवथ शिवा वा भवथ। "हलतुरः"। तुर्वतिर्वधकर्मा। हलस्य हन्तारः। "राधो-
य० गूर्त्तीः"। राधो धनमुद्गिरन्तीति राधोगूर्त्तीः। "अमृतस्यपत्नीः" अमृतत्त्वस्य पालयित्र्यः।
सं० "ताः" हे "देवीः"। 'वाछन्दसी'तिदीर्घत्त्वम्। "देव्यः" देवान् प्रति। "इमं" यज्ञं "नयत" प्राप-
१३५ यत। किञ्च अध्वर्युणा "उपहूताः" सत्यः "सोमस्यापिबत" ॥ ३४ ॥ प्रचरति (१)।
उ० "माभेः"। हे सोम मा भैषीः। "मासंविक्थाः"। ओविजी भयचलनयोः। संपूर्वः

मा० अमृतस्य पत्नीः। ता देवीर्देवत्रेमं यज्ञं नयतोपहूताः सोमस्य पिबत ॥ ३४ ॥ माभेः। माभेर्मासंविक्थाऽऊर्जं धत्स्व धि

कम्पनमभिधत्ते। मा च त्वं कम्पनं कृथाः देवार्थं यागमहमभिषुणोमि। यतः। "ऊर्जं धत्स्व" रसं धेहि। एवं सोमं संबोध्य अथेदानीं द्यावापृथिव्यौ संबोधयति। हे "धिषणे" हे द्यावापृथिव्यौ। "वीड्वी सती वीडयेथाम्"। वीडुशब्दो दृढवचनः। युवां स्वत एव दृढे सत्यौ वीडयेथां दृढमात्मानं कुरुतम्। अस्मात् ग्राव्णः अभ्यतात्। किञ्च "ऊर्जं दधाथां", रसं

(१) माभेरिति प्रचरति। का० ८।४।१ ॥ ३५ ॥

दधाथाम्। अस्मिन्सोमे अनेन उद्गात्रा वज्रसंयुक्तेन "पाप्मा" यजमानस्य "हतः" भ उ "सोमः" ॥ ३५ ॥ निग्राभं वाचयति (१)। "प्रागपागुदक्"। द्वाभ्यामृग्भ्यामुष्णिग्बृहतीभ्याम्। सोमी द्वितीया ऐन्द्री। सा दिग्भिर्मिथुनमिच्छति। तच्च देवाः संपादितवन्तः। तदेतदृचा-सुक्तम्। हे सोम "प्राक्" प्राणभृतः। "अपाक्" अपागभृतः। अधराञ्चनाः। "एवं-

षं वोब्रोवड्वीस तीव्वीं उयेथाम् ऊर्जं न्दधाथाम्॥ पाप्माहुतोमसो मः ॥ ३५ ॥ प्रागपाक्। प्रागपागुदगधराक्सर्वतस्त्वा दिश

सर्वतः त्वां दिशः "धावन्तु अभिसमागच्छन्तु। दिग्वासिनो वागमाः किमभिभाषमाणाः परस्परं त्वामभिधावन्तु। "अम्बनिष्पर"। हे अम्ब मात्रादिविशेषदिगभिधाने निस्त्रिय सोमं "पर"। पालनपूरणयोः इत्यस्यैतद्रूपम्। पूरय सौभाग्यैरेतं सोमम्। किं प्रयोजन-मिति चेत् "समरीविदाम्"। प्रजावा अरीरि"ति श्रुतिः। संविदा" सविदन्ताम्।

(१) प्रतिवर्गं निग्राभं वाचयति होतृचमसोत्थानं मूलवचात प्रागपागिति। का० ८।७।१०॥ ३६ ॥

अरीः प्रजाः। एतदुक्तं भवति। सोमसमागमेऽस्माकं सन्ति नानादिग्वासिनो जनाः संक्रा-
नते एवम् ॥ ३६ ॥ "त्वमङ्ग" (१)। हे इन्द्र यतः त्वम् अङ्ग। अङ्गेति क्षिप्रनाम। क्षिप्रं
"प्रशंसिषः" प्रशंससि। "देवः" सन् हे "शविष्ठ" बलिष्ठ "मर्त्यं" मनुष्यं यजमानम्।
यतः कारणात् "नत्वत्" त्वत्तः अन्यः हे मघवन् "धनवन्" "अस्ति" विद्यते "मर्डिता"

आघावन्तु। अस्व निष्पर्तुसम रीर्व्विंदाम् ॥ ३६ ॥ त्वमङ्ग।
त्वमङ्गप्रशंसिषो देवः शविष्ठ मर्त्यम्। नत्वदन्यो मघवन्नस्ति
मर्डितेन्द्र ब्रवीमि ते वचः ॥ ३७ ॥ इति संहितायां षष्ठोऽध्यायः।

सुखने। सुखयिता यजमानानाम्। "इन्द्र ब्रवीमि" अत्यद्भुतं तव सबन्धि "वचः" वचन-
मार्षम् ॥ ३७ ॥ इति उव्वटकृतौ मन्त्रभाष्ये षष्ठोऽध्यायः ॥ ६ ॥

(१) इन्द्र इत्यस्या पथ्या बृहती गौतमदृष्टेयं ऋक् ॥ ३७ ॥
भारद्वाजोपमाख्या गोगोविन्दविदुषा कृते। षष्ठो गतोऽयमध्यायो मन्त्रभाष्यस्य टिप्पणे ॥ ६ ॥

"वाचस्पतये"। उपांशुग्रहणस्य पुरोरुक्। अनुष्टुप् प्राणदेवत्या। गृह्णाति (१)। "वाचस्पतये पवस्व"। "प्राणो वै वाचस्पति"रितिश्रुतिः। वाचस्पतये प्राणाय पवस्व (२)। पवनं गमनम्, देवतायाँ प्रवृत्तिः। "वृष्णोअꣳशुभ्यां गभस्तिपूतः"। यस्त्वं वृष्णोर्वर्षितुः सोमस्यांशुभ्याम् अध्वर्युगभस्तिभ्यां पूतः। "पाणी वै गभस्ती" इतिश्रुतिः। द्वितीयं गृह्णाति। "देवो-

ॐ वाचस्पतये ॥ वाचस्पतये पवस्व वृष्णोऽअꣳशुभ्यां गभस्तिपूतः ॥ देवो देवेभ्यः पवस्व येषाम्भागोसि ॥ १ ॥

देवेभ्यः पवस्व"। देवः सन् देवेभ्योऽर्थाय पवस्व प्रवृत्तिं कुरु। न ह्यदेवो देवान्तर्पयितुमलम्।

(१) षष्ठेऽध्याये यूपसंस्कारादिसोमाभिषवपर्यन्तामन्त्रा उक्ताः सप्तमे ग्रहग्रहणमन्त्रा उच्यन्ते। उपांशुं च गृह्णाति वाचस्पतये देवो देवेभ्यो मधुमतीरि'ति। का० ९।१।१-९। अत्र मन्त्रत्रयादौ उपयामगृहीतोऽसीत्यध्याहार्यम्। मन्त्रत्रयेण चैकैकवारमुपांशुं ग्रहं गृह्णीयात्। (२) यद्वा पतये पालकदेवतार्थं वाच वाचा तृतीयया विपरिणामः, वाक्सम्बन्धि-

ॐ वाचस्पतयउपयामगृहीतोऽसि निकावाजायोयं वाहिकौ यस्तएकाप्राणायतिस्रोमघवइन्द्राग्नी आगतमायो माक्षयर्पीभूतोविश्वे देवास आगतेन्द्रमरुत्वमरुत्वं वृषभं मरुत्वातीजषे सजोषाइन्द्रमरुत्वा इन्द्रश्चहा इन्द्रोमहा इन्द्रएकोइत्यष्टौ पञ्चविंशं प्रतिरष्टाचत्वारिंशं प्रत्। (अनु०)

कृतोसीति भाष्ये छन्दसि यकारलोपः। स्वयमुत्पन्नोसि। "प्राणो वा अस्यैष गृहः स स्वयमेव कृतः स्वयं जात" इति श्रुतिः। स्वयमुत्पन्नोसि "विश्वेभ्यः इन्द्रियेभ्यः" सकाशात्। "दिव्येभ्यः" देवेभ्यः "पार्थिवेभ्यः" द्विपदचतुष्पदेभ्यः सकाशात् स्वयमुत्पन्नोसि इत्यनुवर्त्तते। यस्त्वमेव स्वतन्त्रोऽकृतकः तं "मनः त्वाष्टु"। मनः प्रजापतिः त्वां व्याप्नोतु (२)। "प्रजापतिर्वै मनः। प्रजापतिष्ट्वाऽश्नुतामि"तिश्रुतिः। "स्वाहा त्वा सुभव सूर्याय"। स्वाहाकारेण त्वां जुहोमीतिशेषः।

व्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्याय देवेभ्यः

हे शोभन "भव गृह सूर्याय"। प्रागुपमार्ष्टि मध्यमे परिधौ। "देवेभ्यः त्वा"। देवेभ्यो मरीचिपेभ्योऽर्थाय त्वामुपमार्ष्मीतिशेषः। वाह्वादिश्लिष्टमंशुमभिचारं जुहुयात्। "देवांऽ०शो"।

त्रिरं पशुमभिचरन् जुहुयाद्वायविति प्राणायत्वेति पातालादनम् उपांशुसवनं पार्थिनामभ्युदस्य व्यानायत्वेति संसृष्टमिति। का० ८।५।३०-४। (२) अमूर् व्याप्नोवित्यस्यार्थ इति। हे प्राणरूपग्रह स्वांकृतोसि मयास्वीकृतोसि, दिवेभ्यो दिवजवनि स्थितेभ्यः; पार्थिवेभ्यो मनुष्यजन्मनिस्थितेभ्यः; सर्वेभ्य इन्द्रियेभ्यः, इन्द्रियार्थं मनय तेषामधीर्थं त्वां व्याप्नोतु। हे सुभव प्राणवपोपांशुग्रह तादृरूपं त्वां वहिःप्राणरूपाय सूर्याय जुहोमि। आदित्यो वै वाह्यः प्राणः

"इय" वा उपयाम इयं वा इदमि"त्यादिश्रुतिः। "अन्तर्यच्छमघवन्" हे मघवन् अन्तर्मध्ये गृहपात्रं यच्छ नियच्छ गृहीष्य। ततः "पाहि" गोपाय पातस्थं सोमम्। ततोनन्तरम् "उरुष्यरायः" उरु-पतिर्गोपायनार्थः। "पशवो वै राय" इति श्रुतिः। गोपाय पशून्। "इषोयजस्व"। इषोन्नानि तत्प्रभवत्वात्प्रजा लक्षणया इष उक्ताः। "प्रजा वा इष" इति श्रुतिः। यजस्व यायजूकाः

उपयामगृहीतोस्यन्तर्यच्छमघवन्पाहिसोमम्। उरुष्यरायऽएषो यजस्व ॥ ४ ॥ अन्तस्ते। अन्तस्तेद्यावापृथिवीदधाम्यन्तर्दधा-

कुरु। अग्निन्नर्थे श्रुत्या एतत्पदं व्याख्यातम् ॥ ४ ॥ "अन्तस्ते"। अन्तर्यामपुरोरुक्। त्रिष्टुप् मघवद्देवत्या। यस्य तव प्राणरूपापन्नस्यान्तः शरीरमध्ये द्यावापृथिव्यौ दधामि स्थापयामि। "अन्तर्मध्ये च दधामि "उरु" विस्तीर्णमन्तरिक्षम्"। सत्वं "सजूः" समानजोषणः सह प्रीयमाणः। "देवेभिर्देवैः। "अतोभिसएस् बहुलं छन्दसी"तिभिस्। "अवरैः" परैश्च।

(१) मदयस्व तर्पयस्व। मद तृप्तौ चौरादिक आत्मनेपदी ॥ ५ ॥

यनरैः पृथिवीसानैः परैः दुरस्थानैः "अन्तर्यामे" अस्मिन् हे होमायोद्यते हे मघवन् "मादयस्व" हर्पयस्वात्मानम् (१) ॥ ५ ॥ जुहोति (१)। "स्वाङ्कृतोसि"। व्याख्यातम्। पात्रमासादयति। "उदानायत्वा" ॥ ६ ॥ ऐन्द्रवायवं गृह्णाति (१)। "आवायोभूष"। त्रिष्टुप्

मन्त्वन्तरिक्षम्। सजूर्देवेभिरवरैः परैश्चान्तर्यामे मघवन्मादयस्व ॥ ५ ॥ स्वाङ्कृतोसि। स्वाङ्कृतोसि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्याय देवेभ्यस्त्वा मरीचिपेभ्य उदानाय त्वा ॥६॥ * आवायो।

वायुर्देवत्या। हे वायो आ अभूष अभ्याक्रमस्व। हे "शुचिपाः" पवित्रं सोमं प्रथमवषट्कारवषट्कृतममात्ममन्यैर्देवताविशेषैः पिबतीति शुचिपाः। "उपनः" उप समीपे नः अस्माकम् "अभयाक्रम-

(२) स्वाङ्कृत इति निःशेषस्यैव सम्बिसहत प्रथमे च नुग्रहेन माचिना मत्यजिति, उदानायत्वेति पात्रमासादय-मिति। का० ८।४।२-४ ॥ ६ ॥ (१) ऐन्द्रवायवं पण्याला गायवति। का० ८।६।१ ॥ ७ ॥

सु ति सं वन्धः । केनाहमभ्याक्रम इति चेत् "सहस्रं ते नियुतो विश्ववार"। बहवः ते नियुद्गणायुक्ता अश्वा विद्यन्ते। "हे विश्ववार"। विश्वं सर्वं वृणोति विश्वैः सर्वैर्वा व्रियते प्राणिभिरिति विश्ववारः तस्य सं वोधनं हे विश्ववार। किञ्च "उपोते अन्धोमद्यमयामि"। उपगमयामि च ते तव स्वभूतम् अन्धोन्नं मद्यं मदनीयम्। कथं भूतम् "यस्य" सोमस्य

आवांयोभूषशुचिपाऽउपनंस्सहस्रंन्तेनियुतोंविश्ववार। उपों तेऽअन्धोमद्यंमयामियस्यदेवदधिषेपूर्व्वपेयंव्वायवेंत्वा ॥ ७ ॥ इन्द्रवायूऽइमे। सुताऽउपप्प्रयोभिरागतम्॥ इन्दंवोवामुश

हे "देवदधिषे" धारयसि। "पूर्वपेयम्"। प्रथमवषट्कारलक्षणाम्। पूर्वपानं प्रथमवषट्कार एव ते सोमस्य राज्ञ इत्याशयः। "वायवेत्त्वे"ति देवतोद्देशः॥ ७॥ द्वितीयपुरोरुक् (१)। "इन्द्रवायू"। वायवी गायत्री। हे इन्द्रवायू "इमे" अभिषुताः सोमाः अतः कारणात् उप-

(१) उपगृह्य पुनरिन्द्रवायू इतीति, दशापवित्रेण परिमृज्यैव ते योनिरिति ग्रहसादनमिति। का० ९।६।६ ॥ ८॥

प्रयोभिरागतम्"। उपेत्ययमुपसर्ग आगतमित्यनेन संबध्यते। उपागतम् उपगच्छतम्। प्रयोभिः। प्रयःशब्दः इण् गतावित्यस्य धातोः शतृप्रत्ययान्तस्य। 'इणोयणि'तियणादेशः भिस्। ततस्तकारस्य छान्दसः सकारः। ततो रुत्वादि ततः प्रपूर्वस्य प्रयोभिरिति सिध्यति। प्रयद्भिरश्वैः शीघ्रैरागच्छतम्। किञ्च। "इन्दवोवामुशन्तिहि"। हिशब्दो यस्मादर्थे। यस्मा-

न्तिहि। उपयामगृहीतोसिवायवऽइन्द्रवायुभ्यान्त्वैषतेयोनिःसजोषोभ्यान्त्वा ॥ ८ ॥ * अयंवाम्। अयंवांम्मित्त्रा

दिन्दवः सोमाः वा युवाम् उशन्ति। वश कान्तौ। कामयन्ते। यदस्मादिन्द्रवायू पिबतमिति। "उपयामगृहीतोसिवायव इन्द्रवायुभ्यां त्वा"। गृह्णामीतिशेषः। सादयति। "एषतेयोनिः"। एष पृथिवीलक्षणः ते तव योनिः स्थानम्। योनिशब्दो हि स्थानवचनः। "स जोषाभ्याम्"। सह प्रीतिभ्यां त्वां सादयामीति शेषः ॥ ८ ॥ मैत्रावरुणस्य पुरोरुक्। "अयं वाम्" (१)। गायत्री मैत्रावरुणी। हे "मित्रावरुणौ" अयं वां युवयोः अयमभिषुतः सोमः" हे

(१) मैत्रावरुणमयं वा मिति। का० ८।६।७ ॥ ८ ॥

"ऋताटधौ" सत्यदृधौ वा यज्ञदृधौ वा। अतः कारणात् "मम इत् इह श्रुतं हवम्"। इदितिनिपात एवार्थे। ममैव इह यजमानानां मध्ये श्रुतम् आह्वानम्। "उपयाम गृहीतोसि मित्रावरुणाभ्यां त्वा"। देवतादेशः ॥ ९ ॥ पयसा श्रीणाति (१)। "रायावयम्"। मैत्रावरुणी त्रिष्टुप्। उपरितनेऽर्द्धर्चे तदः श्रवणादिह यदोऽध्याहारः। इह कामदुघां प्रार्थयते मन्त्रदृक्।

वरुणासुतः सोम ऋतावृधा ॥ ममेदिह श्रुतं हवम् ॥ उपयामगृहीतोसि मित्रावरुणाभ्यां त्वा ॥ ९ ॥ रायावयम्। रायावयं ससवांसो मदेम हव्येन देवा यवसेन गावः ॥ तां धेनुम्मि

यया धेन्वा गृह्य सत्या। "रायावयं ससवांसो मदेम"। राया धनेन वयं ससवांसः। धन सन संभक्तौ। संभक्ताः सन्तो हृष्टाः स्याम। कथमिव। "हव्येन देवाः"। यथा हविषा संभक्ता देवा तृप्यन्ति। यथा च "यवसेन" गवाह्निकादिना "गावो" हृष्टा भवन्ति "तां" तथाभूतां "धेनुं" हे "मित्रावरुणौ युवं" युवाम् "नः" अस्मभ्यं "विश्वाहा" सर्वदा। "धत्त"

(१) पयसा श्रीणाति न कुमावन्तर्धाय रायावयम्। का० ९।६।८ ॥ १० ॥

क्षितिः पदेः वाक्यं प्रायशः कल्प्यते । हे सोम तमिन्द्रं "ज्येष्ठतातिम्" उत्कृष्टतातिम् उत्कृष्टविस्तारम् । अथवा । 'वृकज्येष्ठाभ्यां तिलतातिलौ च छन्दसी'ति तातिः प्रशंसायाम् । ज्येष्ठतातिं ज्येष्ठप्रशस्यम् । "बर्हिषदम्" । यज्ञेषु बर्हिषि सीदतीति बर्हिषदम् । "स्वर्विदम्" । स्वःशब्देन द्युलोकोऽभिधीयते । द्युलोकं जानाति । तत्र हि तस्य निवासः । "धुनिम्"। धूञ् कम्पने । कम्पयितारं शत्रूणाम् । "आशुं जयन्तम्" शीघ्रं जयन्तं जेतव्यानि वस्तूनि । तमेव गुणविशिष्टमिन्द्रं

थाविस्स्वथेमथाज्ज्येष्ठतातिम्बर्हिषदंᳫस्वर्विदम् ॥ प्रतीचीनं वृजनन्दोहसेधुनिमाशुञ्जयन्तमनुयासुवर्द्धसे ॥ उपयामगृहीतो

हे सोम "यासु अनु वर्द्धसे" । यासु वित्सु येषु यजमानेषु वर्द्धसे पुनःपुनः संस्क्रियसे तासु तासु क्रियासु त्वमवस्थितः । तत्र "प्रतीचीनं वृजनं दोहसे" । प्रतीचीनमात्मनोऽभिमुखमिन्द्रमवस्थाप्य

मनुतिष्ठेताम्, तत्प्रकारोऽयं प्रोक्षिताभ्यां ताभ्यां यूपशकलाभ्यां सहाप्रोक्षितौ द्वौ यूपशकलावादाय प्रोक्षिताभ्यां तयोर्ग्रहयोः क्रमेणाच्छादनं कृत्वा प्रोक्षिताभ्यां अधस्तादपमृज्यात् । तत्र प्रोक्षितेन शकलेन ग्रहं विधायाप्रोक्षितेनाध्वर्युः शुक्रमपमार्ष्टीति सूत्रार्थः ॥ शेषं स्पष्टमितिदिक् ॥ १२ ॥

स्ववीर्येण तर्पयित्वा अस्मै यजमानाय ऊर्जनम्। ऊर्जनमिति बलनाम। बलवच्च यज्ञफलं दोहसे प्रचारयसि। कथं पुनर्दोहसे। "प्रत्नथा"। था उपमार्थीयः। प्रत्नशब्दः पुराणवचनः। चिरन्तनानामिव ऋषीणां भृगुप्रभृतीनां दोहसे। "इमथा"। इदानीन्तनानामिव यजमानानां दोहसे। अस्य यजमानस्य। "उपयामगृहीतोसिशण्डायत्वागृह्णामि"। शण्डोऽसुरः। "एष ते योनिः

तोसि शण्डायत्वैषते योनिर्वीरतांम्पह्यपमृष्टः शण्डो देवास्त्वाशुक्रपाः प्रणयन्त्वनाधृष्टासि ॥ १२ ॥ सुवीरोवीरान्। सुवीरो

वीरतां" वीरत्वं "पाहि" गोपाय सादयामीतिशेषः। यूपशकलेनाभिमार्ष्टि। "अपमृष्टःशण्डः" अपमार्जनीहतोस्य ग्रहस्य शण्डोऽसुरः। निष्क्रामति। "देवास्त्वा"। देवास्त्वां हे ग्रह शुक्रपायिनः यजतिस्थानं प्रापयन्तु दक्षिणस्यां वेदिश्रोणावासादयति। "अनाधृष्टासि"। अनुपहिंसितासि ॥ १२ ॥ यूपदेशं गच्छति (१)। "सुवीरोवीरान्" हे ग्रह कल्याणवीरः सन्

(१) सुवीरइति दक्षिणं यूपदेशं गच्छत्यध्वर्युः, अपरेण यूपमरत्नीसंभक्तसंजगृभाम इति यथा लिङ्गम्, अमो-

त्वं यजमानस्य वीरान् प्रजनयन् उत्पादयन् "परीहि" परिगच्छ। किञ्च "अभिराय-स्पोषेण यजमानम्"। अभियोजयस्व धनस्य पोषेण यजमानम्। परीहीत्यनुवर्त्तते। अपरेण यूपमरत्नौ उंवत्त। "संजग्मानः"। अयं शुक्रः संगच्छमानः "दिवा" द्युलोकेन संगच्छमानश्च "पृथिव्या" पृथिवीलोकेन संगच्छमानश्च। कोसौ शुक्रः। "शुक्रशोचिषा"। शुक्रदीप्त्य प्रजा

वीरान्प्रजनयन्परीह्यभिरायस्पोषेणयजमानम्॥ सञ्जग्मानोदिवापृथिव्याशुक्रःशुक्रशोचिषा।निरस्तःशण्डःशुक्रस्याधिष्ठानम-

विभर्तीतिशेषः। यूपशकलं निरस्यति। "निरस्तः शण्डः"। निःक्षिप्तः शण्डो यज्ञाद्बहिः-कृतः। आहवनीये प्रोक्षितं प्रास्यति। "शुक्रस्याधिष्ठानमसि"। शुक्रो गृहः तस्याधिष्ठानम् अधिकरणमसि॥ १३॥ जपति (१)। "अच्छिन्नस्य"। हे देव सोम अच्छिन्नस्य अनव-च्छिन्नस्य निरस्यति निरस्तः शण्ड इत्यध्वर्युः, आहवनीये प्रोक्षितौ प्रास्यतः शुक्रस्याधिष्ठानमित्यध्वर्युरिति। का० ८।१०।८-१३॥ १३॥

(१) अच्छिन्नस्येति जपित्वा, उभयतो यूपं प्रत्यङ्मुखौ (अध्वर्युप्रतिप्रस्थातारौ यूपोभयपार्श्वयो) जुहुतः

खण्डितस्य ते तव सुवीर्यस्य कल्याणप्रभावस्य "रायस्पोषस्य" धनपोषस्य "ददितारो भवेम। त्वत्प्रसादात् भूयोभूयःकरणं यज्ञस्याशास्यते। जुहोति। "साप्रथमा"। यस्येन्द्रस्य सा प्रथमा "संस्कृतिः"। स प्रथमः सोमसत्कारः क्रियते सोमक्रये। "सा दिवि देवमच्छेहीन्द्राय सोममि"ति। कथं भूता संस्कृतिः। "विश्ववारा। विश्वैः सर्वैर्यत्र सोमो व्रियते ऋत्विग्भि-

सि ॥ १३ ॥ अच्छिन्नस्यते। देवसोमसुवीर्य्यस्यरायस्पोषस्यदंदितारःस्याम ॥ साप्रथमासंस्कृतिर्व्विश्ववारासप्रथमोवरुणोमित्रोऽअग्निः ॥ १४ ॥ सप्रथमः। सप्रथमोबृहस्पति

राहृतिभिश्च। विश्वं वा वृणोतीति। सोमे क्रीयमाणे यत्र जगदुत्पत्तिबीजत्वात् सा विश्ववारा संस्कृतिः। स च "प्रथमोवरुणः"। स च प्रथमो मित्रः" स च प्रथमो"ग्निः"। यस्येन्द्रस्यान्येषां देवगणानां प्रभुः ॥ १४ ॥ "स प्रथमः"। स च प्रथमो "बृहस्पतिः"। "चिकित्वान्" चेतना-

सा प्रथमेत्यध्वर्युं प्रथमं तमनुमतिप्रख्याता इति। का० ८।१०-१४ ८।११।११ ॥ १४ ॥

वान् उत्कृष्टधीः। अन्येषां मन्त्रिगणानां यस्त्वेन्द्रस्य तस्मै इन्द्राय "सुत"मभिषुतं सोमम् "आजुहोत" धारयत स्वाहाकारेण हे ऋत्विजः। जपति (१)। "तृम्पन्तु होत्राः"। होत्राशब्देन होत्रिकयाज्याछन्दांस्यभिधीयन्ते। तृम्पन्तु। तृपतृम्प तृप्तौ। तृम्पन्तु होत्रा याज्याछन्दांसि। "मध्वः मधुसोममित्योपसिकम्। माद्यतेः मधुस्वादस्य सोमस्य। "याः स्विष्टा" याः

# धिषुकित्वाँ स्तस्मा॒ऽइन्द्रा॑य सु॒तमाजु॑होत॒ स्वाहा॑ ॥ तृम्प॑न्तु॒ होत्रा॒ मध्वो॒ याः स्वि॑ष्टा॒ याः सुप्री॑ताः॒ सुहु॑ता॒ यत्स्वाहाया॒डग्नीत्॥१५॥ *

शोभनमिष्टाः। "याः सुप्रीताः" याः साधुप्रीताः। कथमेतज्ज्ञायत इति चेत्। "सुहुतायत्स्वाहा"। साधुहुता यस्मात्स्वाहाकारेण। प्रत्यङ् उपविशति। "अयाडग्नीत्"। अग्नीत्। एवं होतुराचष्टे ॥ १५ ॥ मन्थिनं गृह्णाति (१)। "अयं वेनः"। सोऽस्यानया त्रिष्टुभाधि-

(१) तृम्पन्त्विति जपति, होतारं प्रत्यङ्ङुपसादयत्ययाडग्नीदिति। का० ११।१।९-१० ॥ १५ ॥

(१) मन्थिनमयं वेन इति। का० ९।५।१९।

दैवमधियज्ञं वावस्थितः स्तूयते। अधिदैवं तावच्चन्द्रात्मना संस्तूयते। "अयं वेनश्चोदयत्पृश्निगर्भाः"। वेनः। वेनतेः कान्तिकर्मणः। अयं चन्द्रमा वेनः कान्तः। चोदयत्। चुद सञ्चोदने। प्रेरयति। "पृश्निगर्भाः" द्युलोकः पृश्निरादित्यो वा। साधारणत्वाद् द्युलोकगर्भा वा आदित्यगर्भा वा आपः। "ज्योतिर्जरायु"। ज्योति (२) रस्य जरायुस्थानीयं भवति चन्द्रमसः। "रजसोविमाने"। उदकं रज उच्यते। उदकस्य विनिर्माणकाले प्राप्ते ग्रीष्मान्ते। इदानीमधियज्ञमवस्थितमुच्यते। "इम" मेव च सोम "मपां" च "सूर्यस्य" च संगमे गृहीताभिरद्भिर्वसतीवरीलक्षणाभिरभिषुतं सन्तं "शिशुं न" शिशुमिव "विप्रा" मेधाविनो ब्राह्मणाः "मतिभिः रिहन्ति" स्तुवन्ति स्तोत्रशस्त्रैः। रिहतिर्हि अर्चतिकर्मसु पठितः। वसतीवर्यश्चापः। अपां संगमे

अयंवे॒नः॥ अ॒यंवे॒नश्चो॑दयत्पृश्नि॑गर्भा॒ ज्योति॑र्जरा॒यूरज॑सोवि॒माने॑। इ॒मम॒पाᳪस॑ङ्ग॒मे सूर्य॑स्य॒ शिशु॒न्नवि॑

(२) ज्योतिर्विद्युदस्यजरायुस्थानीयमेव भूतीयं ग्रीष्मान्ते वर्षतीतिभाव।

सूर्यस्य च संगमे गृह्यन्ते। तदप्येवं पठ्यते। "ता वै स्यन्दमानानां गृह्णीयात्। दिवा गृह्णीयादिति" च। उपयामगृहीतोसिमर्कायत्वा"। गृह्णामि। मर्कोऽसुरः॥ १९॥ सक्तुभिः श्रीणाति (१)। "मनोनयेषु"। त्रिष्टुप् शुक्रामन्थिप्रचाराधियज्ञानुवादिनी। "मनोन"। मन इव क्षिप्रस् येषु "हवनेषु" सोमहवनेषु सोमहोमेषु। "तिग्मम्"। तेजतेस्त्वाहकर्मणः।

# ग्रावाम तिभीरिहन्ति ॥ उपयामगृहीतोसि मर्कायत्वा ॥ २६ ॥

# मनोन। येषु हवनेषु तिग्मंविपःशच्यांवनुथोद्रवन्ता ॥ आयः-

उत्साह्यताम्। "विपः" विपश्चितौ मेधाविनौ अध्वर्यू। छान्दसः प्रातिपदिकैकदेशलोपः। "शच्या"। शचीतिकर्मनाम। कर्मणा निमित्तभूतेन। "वनुथः"। प्रथमपुरुषस्य स्थाने मध्यम-

यदा अपां सूर्यस्य संगमेनिमित्ते त्रुष्टिगमं निष्पत्तौ विप्रा इमं सोमं स्तुवन्ति। यथावालो वस्तुलाभाय स्तूयत इत्यर्थो महीधरभाष्ये ॥ १६ ॥ (१) सक्तुभिः श्रीणात्वेनं मनो न येष्विति, यपमष्टो मर्क इति प्रतिप्रस्थाता, देवास्तुति निष्क्रामतो यथा, क्षिप्रम्। ८।६।१२-८।१०।६ ॥ १७ ॥

पुरुपश्छान्दसः। "वनुतः"। वराण्नुवतो युगपत्। शुक्रामन्थिहोमं द्रवन्तौ गच्छन्तौ तेष्वेव होमेषु कर्त्तव्येषु। "आयः शर्याभिस्तुविनृम्णो अस्याश्रीणीत"। योध्वर्युः अश्रीणीत शर्याभिरङ्गुलीभिः। "तुविनृम्णः"। तुवीति बहुनाम। नृम्णमिति धननाम। बहुधनो महादक्षिणः। अस्येति ग्रहनिर्देशः। अस्य मन्थिनः अश्रीणीत। "आदिशं" प्रतिदिशम्। कावस्थितस्त्र सतः। "गभस्तौ" पाणौ। यद्यपि अध्वर्युप्रतिप्रस्थातारौ समानकर्माणौ तथापि यः अयणं करोति स एव

शण्डाभिस्तुविनृम्णोऽअस्याश्रीणीतादिशङ्गभस्तावेषतेयोनिः प्रजाःपाह्यपमृष्टोमर्कोदेवास्त्वामन्थिपाःप्रणयन्त्वनाधृष्टासि ॥१७॥

प्रधानमित्याशयः। "एपतेयोनिः प्रजाः पाहि"। यजमानसंबन्धिनीः प्रजाः गोपाय। यूपशकलेनोपमार्ष्टि। "अपमृष्टोमर्कः"। अपमार्जनीकृतो मर्कोऽसुरः। निष्क्रामति। "देवाः त्वा मन्थिपाः प्रणयन्तु" प्रापयन्तु यजतिस्थानम्। मन्थीति ग्रहनाम। "अनाधृष्टासि"। निर्विशेषम् ॥ १७ ॥ पूर्वेण गच्छति (१)। "सुप्रजाः"। यतस्त्वं सुप्रजाः। हे मन्थिन् सुप्रजाः।

(१) सुप्रजा इति प्रतिप्रस्थानोत्तरम्, अपरेणयूपमरत्नीसंधत्तः यजमानइति, निरस्तो मर्क इति प्रतिप्रस्थाता,

अतस्त्वं सु "प्रजाः" यजमानस्य "प्रजनयन्परीहि" परिगच्छ। किञ्च "अभि"गच्छस्व धनस्य पोषेण यजमानम्। परीहीत्यनुवर्त्तते। अपरेण यूपमरत्नौ स्यन्तः। "सञ्जग्मानः"। संगच्छमानो"दिवा"द्युलोकेन संगच्छमानश्च"पृथिव्या" पृथिवीलोकेन। कोसौ, "मन्थीमन्थिशोचिषा" च। मन्थिनः शोचिर्दीप्तिः मन्थिशोचिः तेन मन्थिशोचिषा। संजग्मान इतिवर्त्तते। यूपशकलं

सुप्प्रजाःप्प्रजाःप्प्रजनयन्न्परीह्यभिरायस्प्पोषेणयजमानम् ॥ सञ्जग्मानोदिवापृथिव्व्यामन्थीमन्थिशोचिषानिरस्तोमर्कोमन्थिनोधिष्ठानमसि ॥ १८ ॥ * येदेवासः। येदेवासोदिव्व्येकादशस्थ.

प्रास्यति। "निरस्तोमर्को"ऽसुरः। आहवनीये प्रास्यति। "मन्थिनोधिष्ठानमसि"। मन्थी गृहः। अधिष्ठानमधिकरणम् ॥ १८ ॥ आग्रयणं गृह्णाति। "येदेवासः"। वैश्वदेवी त्रिष्टुप्। मन्थिन इति प्रतिप्रस्थाता। ८।१०।८-१२ ॥ १८ ॥

(१) आग्रयणं द्वयोर्धारयोर्येदेवास इति। का० ८।६।१४ ॥ १९ ॥

ये यूयं हे देवास: । 'आज्जसेरसुक्' छान्दसः । "दिवि" द्युलोके "एकादश" संख्यया भवथ । "पृथिव्याम् अधि" उपरि 'एकादशस्थ" । ये च यूयम् "अप्सुक्षितः" । अप्सु इत्यन्तरिक्षनामसु पठितम् । क्षयतिर्निवासार्थः । अन्तरिक्षनिवासिनः । "महिना" महाभाग्येन एकादशस्थ । महिनेति त्रिष्वपि स्थानेषु संबध्यते । सर्वत्र हि महाभाग्यविशेषात । ते यूयं हे

पृथिव्यामध्येकादश स्थ ॥ अप्सुक्षितो महिनैकादश स्थ ते देवा

सो यज्ञमिमं जुषध्वम् ॥ १६ ॥ उपयामगृहीतोसि । उपयाम

देवाः "यज्ञमिमम्" आग्रयणलक्षणम् । "जुषध्वं" मासेवध्वम् ॥ १६ ॥ "उपयामगृहीतोसि" (१) । व्याख्यातम् । "आग्रयणोसीतिनाम्ना संबोधनं स्तुत्यर्थम् । नामधेयप्रतिलम्भो ह्यस्य साधक्रियायोगात् । "स्वाग्रयणः" यस्मिन् त्वयि गृहीते अग्रे प्रथमं वाचः अयनं गमनम् उत्सर्गः अध्वर्योः संजातः । यस्त्वमेवं साधुकारी तं त्वां ब्रवीमि । "पाहि यज्ञं पाहि यज्ञपतिम्" ।

(१) तिष्ठिङ्‌त्य सोमः पवत इति । (जपेदिति मेघः) का० ८।६।१५ ॥ २० ॥

ऊर्जितं "वयो" यौवनलक्षणं "तस्मै त्वां" गृह्णामि। अत्र च ते इन्द्रेति युष्मदामन्त्रिताभ्यां प्रत्यक्षमिन्द्र उच्यते। त्वेति युष्मदादेशोपि प्रत्यक्ष एव। तयोः सामर्थ्यं कथमिति चेत्। यस्येन्द्रस्य बृहद्वयस्तस्मै त्वां गृह्णामीति पदद्वयस्य व्यत्ययेनेति ब्रूमः। ते इत्यस्य पदस्य यस्येत्यनेन पदेन व्यत्ययः। इन्द्र इत्यस्य पदस्य इन्द्रस्येत्यनेन व्यत्ययः। "विष्णवे"

त्तऽइन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वैष ते योनिरुक्थेभ्यस्त्वा देवेभ्यस्त्वा देवाव्यं यज्ञस्यायुषे गृह्णामि मित्रावरुणाभ्यान्त्वा ॥ २२ ॥ मित्रावरुणाभ्यान्त्वा। देवाव्यं यज्ञस्यायुषे गृ

यज्ञाय त्वां गृह्णामीतिशेषः। "एषतेयोनिः" उक्थेभ्यः त्वां सादयामीतिशेषः। विगृह्णाति। "देवेभ्यस्त्वा"। देवेभ्योर्थाय त्वां "देवाव्यं" देवतर्प्पणम्। "यज्ञस्यायुषे"। अनवच्छिन्ना आकस्मिकभेपरहिता परिसमाप्तिः यज्ञस्यायुः। यज्ञस्यायुः। यज्ञस्यायुषे यज्ञस्य समाप्तये गृह्णामि। यद्वा यज्ञो यजमानस्य शरीरमिति यजमानस्यायुराशास्यते ॥ २२ ॥

उक्थविग्रहणेषु द्वितीयो मन्त्रविकल्पो मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां यथासङ्ख्यम्। "मित्रा-वरुणाभ्यांत्वा इन्द्रायत्वा" इन्द्राग्नीभ्यांत्वा" एवमादयोमन्त्रा ऋजवः। चरकाणां मन्त्रविकल्पाः। "इन्द्रावरुणाभ्यांत्वा। इन्द्राबृहस्पतिभ्यांत्वा। इन्द्राविष्णुभ्यांत्वा"। एतेपि ऋजवः ॥२३॥ ध्रुवं

हृणामीन्द्रायत्वादेवाव्व्यं व्यज्ञस्यायुषेगृह्णामीन्द्राग्निभ्यां-न्त्वादेवाव्व्यं व्यज्ञस्यायुषेगृह्णामीन्द्रावरुणाभ्यान्त्वादेवाव्व्यं व्यज्ञस्यायुषेगृह्णामीन्द्राबृहस्पतिभ्यान्त्वादेवाव्व्यं व्यज्ञस्यायुषेगृह्णामि ॥ २३ ॥ * मूर्द्धानन्दिवः। मूर्द्धानन्दिवोऽअरतिम्पृथिव्या

गृह्णाति। (१) "मूर्द्धानन्दिवः"। वैश्वानरी त्रिष्टुप्। वैश्वानरश्चात्र सर्वात्मा स्तूयते। यं वैश्वा

(१) मित्रावरुणाभ्यां त्वेति वा मध्यास्त्वे, एवं प्रतिप्रस्थातोत्तराभ्यामिन्द्राय त्वेति ब्राह्मणाच्छंसिन इन्द्राग्निभ्यां त्वेत्यच्छावाकायेति, उत्तरेष्विन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामिति। का० ८।१५।८।१०।७।११ ॥२३॥

(१) दिव मूर्धान दिव इति। का० ८।६।२१।

गोपाय यज्ञं गोपाय यजमानम्। किञ्च "विष्णुः त्वामिन्द्रियेण पातु"। विष्णुर्यज्ञस्याधिष्ठात्री देवता स त्वामिन्द्रियेण वीर्येण पातु। "विष्णुं त्वं पाहि"। त्वं च विष्णुं गोपाय। "अभि-सवनानि पाहि"। अभितः सर्वतः सवनानि पाहि त्रीण्यपि। सर्वेषु स हि सवनेषु गृह्यते ॥२०॥ "सोमः पवते"। पवत इति गतिकर्मसु पठितम्। गृहपात्रेषु गच्छति स्वकीये कर्मणि प्रवर्त्तते।

गृहीतोस्याग्रयणोसि स्वाग्रयणः पाहि यज्ञम्पाहि यज्ञपतिं विष्णुस्त्वामिन्द्रियेण पातु विष्णुन्त्वम्पाह्यभि सवनानि पाहि ॥२०॥

सोमः पवते। सोमः पवते सोमः पवतेऽस्मै ब्रह्मणेऽस्मै क्षत्रायास्मै सुन्वते यजमानाय पवतऽइष ऊर्जे पवतेऽद्भ्यऽओषधीभ्यः

"अस्मै ब्रह्मणे" उत्पत्तिस्थित्यर्थं पवते। "अस्मै क्षत्राय"। पूर्ववद्व्याख्या। अस्मै "सुन्वते यजमानाय" कामप्राप्त्यर्थं "पवते"। "इषे ऊर्जे" अन्नाय तदुपसेचनाय क्षीरादेः पवते। "अद्भ्यः ओषधीभ्यः पवते" अद्भ्यः वृष्टिभ्यः ओषधीभ्यो यवादिभ्यः। उत्पत्तिस्थितये पवते। "द्यावापृथि-

यौष्याः" मौणनाय पवते "सुभूतायपवते"। किं वा बहुनोक्तेन सर्वेषां साधुभवतांव पवते। "विश्वेभ्यः स्त्वादेवेभ्यः"। देवतादेशः। "एषते योनिर्विश्वेभ्यः त्वा देवेभ्यः"। सादयामीति-शेषः ॥ २१ ॥ उक्थं गृह्णाति (१)। "उपयामगृहीतोसि"। इन्द्राय त्वां गृह्णामीति संबन्धः। कथं भूताय। "बृहद्वते"। बृहदिति साभाभिप्रायम्। "वयस्वते" विशिष्टं यौवन-

पवते द्यावापृथिवीभ्यांम्पवते सुभताय पवते विश्वेभ्यस्त्वादेवेभ्यंऽएषते योनिर्विश्वेभ्यस्त्वादेवेभ्यः ॥ २१ ॥ * उपयामगृहीतोसीन्द्रायत्वाबृहद्वतेव्वयस्वतऽउक्थाव्यङ्गृह्णामि ॥ य

लक्षणवीर्यसमेतं सदाकालं वयो यस्य स तथोक्तः। "तस्मै वयस्वते"। कथं भूतं त्वां गृह्णामि। "उक्थाव्यम्" उक्थानि मैत्रावरुणब्राह्मणाच्छंसाच्छावाकसंबन्धीनि अवति गोपायतीत्युक्थाव्यम्। तत्र ग्रहस्य विनियोगः। "यत्ते" तत्र हे "इन्द्र बृहत्" महत्

(१) • उक्थामुपयामगृहीतइति, उक्थं निष्णाति तं षं देवेभ्यस्तु ति सर्वेभ्य इति का० ८।१।२०।८।१४।८ ॥२२॥

नरमित्थंभूतं जनयन्त देवाः। मूर्द्धानं दिवः द्युलोकस्य सूर्यात्मनावस्थितं मूर्द्धानं शिर आहुर्ब्रह्मविदः। यं च "अरतिंपृथिव्याः"। पृथिवीशब्देनात्रान्तरिक्षमभिधीयते। पठितं चैतदन्तरिक्षनामसु। एतद् अन्तरिक्षम् आकाशम् आपः पृथिवीति। "अरतिम्" अलमतिं पर्य्याप्तमतिं पृथिव्या अन्तरिक्षलोकस्याहुः। तत्र ह्यसौ स्थितो यथाकालं वृष्ट्या पुष्णाति भूतानि। "वैश्वानरमृतआजातमग्निम्"। यं वैश्वानरम् ऋते यज्ञे "आजात"मुत्पन्नम् अरणिद्वयाद् अग्निमाहुः। यं च

वैश्वानरमृतऽआजातमग्निम्। कविंसम्राजमतिथिंजनाना

"कविं"क्रान्तदर्शनमाहुः। "संम्राजं" सम्यगैश्वर्य्येण युक्तमाहुः। यं च "अतिथिंजनाना"माहुः। विज्ञायते हि "अग्निरतिथिरूपेण गृहान् प्रविशति"। तस्मात्तस्योदकमाहरन्ति। "आसन्नापात्र" जनयन्तदेवाः"। योयमेवंगुणो वैश्वानरस्तमासन्। आस्यशब्दस्य 'पद्दन्नि'त्यादिना आसन् आदेशः। सप्तम्याश्छान्दसो लोपः। देवानामासनि आस्ये मुखे। आ आभिमुख्येन। "पात्र"

पृथिव्या अरतिमित्यस्य पृथिव्युपरिदाहपाककाशादिकर्मण्य उपरतिरहितमित्यर्थो वा महीधरभाष्ये ॥ २४ ॥

पीयतेनेनेति पात्रम् विज्ञायते हि "चमसोदेवपान" इति। "चमसेन ह वा एतेन भूतेन देवा भक्षयन्तीति"। "जनयन्तदेवा" इन्द्रादयः ॥ २४ ॥ "उपयामगृहीतोसि ध्रुवोसि" नाम्ना। क्रियाजमेतत्तवनामेति प्रशंसा। "ध्रुवक्षितिर्ध्रुवाणाम्"। क्षि निवासगत्योः। ध्रुवाणामपि त्वं ध्रुवक्षितिः ध्रुवनिवासः। "ध्रुवतमोच्युतानाम्"। अच्युतानामपि त्वमेवध्रुवतमः।

## मासन्नापात्त्वञ्जनयन्तदेवाः ॥ २४ ॥ उपयामगृहीतोसि। ध्रुवोसि ध्रुवक्षितिर्ध्रुवाणान्ध्रुवतमोच्युतानामच्युतक्षित्तमऽएतेयोनि

"अच्युतक्षित्तमः"। अच्युते क्षयतीत्यच्युतक्षित् अतिशयेन अच्युतक्षिद् अच्युतक्षित्तमः। सादयति। "एष ते योनिः वैश्वानराय त्वा"। सादयामीतिशेषः। ध्रुवं निनयति (१)। "ध्रुवं-ध्रुवेण"। बृहती। पूर्वोर्द्धर्चो ध्रुवदेवत्यः उत्तरऐन्द्रः। ध्रुवं त्वाम् "अवनयामि" अवसिञ्चामि। "ध्रुवेण" एकाग्रेण "मनसा वाचा" एतन्मन्त्रोच्चारणप्रवणया सोमं प्रति। स हि

(१) ध्रुव होतृचमसेऽवनयति ध्रुवध्रुवेणेति। का० ९।६।२८ ॥ २५ ॥

ह्योऽन्यमसे अवसिच्यते द्वादशे शस्ते। "अथान:" अथास्माकमवसिक्तसोमानाम्। "इन्द्र इत्"। इत् शब्द एवार्थे इन्द्र एव "विश:" मनुष्यान् "असपत्ना:" सपत्नरहितान्। "समनस:" समनस्कान् वृत्त्यायुक्तान् "करत्" करोतु॥२५॥ विप्रुषां होम:(१)। "यस्ते द्रप्स:"। सौमी त्रिष्टुप्यजुरन्ता। "स्वाहा देवानामुपक्रमण" मिति यजु:। हे सोम यस्ते द्रप्स: विप्रुड् रसैकदेश:। "स्कन्दति" भूमौ वा

वै॒ श्र॒स्वान् रा॒यं॑त्वा ॥ प्र॒ वन्प्र॒ वे॑णा॒मन॒ सा॒क्षा॒चा॒सो॒म॒ म॒वं॑न॒या॒मि ॥ अ॒ था॑न॒ऽइन्द्र॒ इ॒द्विशो॑सप॒त्नाः स॒म॑न॒सस्क॑र॒त् ॥ २५ ॥ * यस्ते॑। द्र॒प्सस्कन्द॑ति॒यस्ते॑ऽअ॒ꣳशु॒र्ग्रा॒वच्यु॑तोधि॒ष॒णा॑योरु॒पस्था॑त् ॥

अन्यत्र वा पतति। "य"श्च तव "अंशु:" स्कन्दति। "ग्रावच्युत:" ग्राव्णश्च्युत: पतित:। "अधिषणयोरुपस्थात्"। अधिषवणफलकयो: उपस्थाद् उत्सङ्गात्। "अध्वर्योर्वा" स्कन्दति। "परिवाय: पवित्रात्"। परिस्कन्दति वा य: पवित्रात्। यत: कुतश्चित्स्कन्दतीत्यभिप्राय:। "तन्ते

(१) यस्त इति विप्रुषा होमं जुहोति, अध्वरचूषं चात्वाले प्रास्यति। का० ८।६।२८-३२ ॥ २६ ॥

जुहोमि"। तं विप्रुषं ते तव सम्बन्धिनमंशुं वा अग्नौ जुहोमि। "मनसा" संकल्प्य। "वषट्कृतं स्वाहा"। वषट्कारेण स्वाहाकारेणेवेत्यर्थः। त्वं चात्वाले प्रास्यति "देवानामुत्क्रमणमसि"। चात्वालमुच्यते। अतो हि देवाः स्वर्गं लोकमुपोदक्रामन् ॥ २६ ॥ गृहान्दर्शयत्यवकाशान्वाचयन् यज्ञस्यैते प्राणा यजमानस्य वानूचानस्य उपांशुं प्राणरूपेण दर्शयति। "प्रा-

अंशुः उर्व्वीं परिवासः पवित्रात् तं तेजु होमि मनसा व्वषट्कृतं स्वाहा देवानामुत्क्रमणमसि ॥२६॥ * प्राणाय मे। व्वर्च्चोदा व्वर्च्चसे पवस्व व्यानाय मे व्वर्च्चोदा व्वर्च्चसे पवस्वोदानाय मे व्वर्च्चोदा व्वर्च्चसे पव-

णाय मे वर्चोदाः"। हे उपांशो यस्त्वं स्वभावत एव "वर्चोदाः" तं त्वां ब्रवीमि। प्राणाय मे मदीयाय "वर्चसे पवस्व" प्रवर्तयस्व। अनेन तुल्यव्याख्याना अवकाशमन्त्राः। उपांशुसवनम्।

(१) ग्रहानवेक्षयति यथागृहीतमवकाशान्वाचयन् प्राणाय म इति प्राणायत्वेति प्रतिमन्त्रम्। का० ९।७।९। प्राणायेत्तरास्यो मन्त्रा अवकाशसंज्ञास्तान्वाचयेत् ग्रहणक्रमेण ग्रहान्यजमानं दर्शयति ॥ २७ ॥

"व्यानायमे"। अन्तर्यामम्। "उदानायमे"। ऐन्द्रवायवम्। "वाचे मे" मैत्रावरुणम्। "क्रतूदक्षाभ्यांमे"। कामः क्रतुरुच्यते। तस्य सम्रद्धिर्दक्षः। आश्विनम्। "श्रोत्रायमे" शुक्रामन्थिनौ युगपत्। "चक्षुर्भ्यांमेवर्चोदसौवर्चसेपवेथाम्"। शुक्रामन्थिविपर्यं द्विवच-

स्वाचेमे व्वर्चोदा व्वर्चसे पवस्व क्रतूदक्षाभ्यांमे व्वर्चोदा व्वर्चसे पवस्व श्रोत्रायमे व्वर्चोदा व्वर्चसे पवस्व चक्षुर्भ्यांमे व्वर्चोदसौ व्वर्चसे पवेथाम् ॥२७॥ आत्मने मे। व्वर्चोदा व्वर्चसे पवस्वौजसे मे व्वर्चोदा व्वर्चसे पवस्वायुषे मे व

नम् ॥ २७ ॥ आग्रयणम्। "आत्मने मे"। उक्थ्यम्। "ओजसे मे"। ओजो जेष्यामीत्यार्थसा। ध्रुवम्। "आयुषेमे"। पूतभृदाधवनीयौ च युगपत्। "विश्वाभ्यो मे"। यौ युवां स्वभावत एव वर्चोदसौ तौ ब्रवीमि। "विश्वाभ्यः" सर्वाभ्यो "मे" मम प्रजाभ्यो-

(१) भोसौति द्रोणकलशं, (पवेयतो) भूर्भुवः स्वरिति जपतीति। का० ८।७।१४-१५ ॥ २८ ॥

वर्चो दधो "वर्चसे पवेथाम्"। प्रवृत्तिं कुरुतम् ॥ २८ ॥ अथद्रोणकलशम्। "कोसि" (१)। वर्द्धमान उष्णिक्। अनुष्टुप् वा। अध्वस्तं प्रजापतिरूपं द्रोणकलशमाह। कोसि कः प्रजापतिः स त्वमसि। "कतमोसि" अतिशयेन प्रजापतिरसि। अनन्यभूतः प्रजापतिना। "कस्यासि"।

च॒ र्चो॑दा॒व्वर्च॑से पवस्व॒ विश्व॒श्वा॑भ्व्योमे प्प्र॒जाभ्व्यो॑ व्वर्च॒ो॑ दस॒ौ व्वर्च॑से पवेथाम् ॥२८॥ कोऽसि। कत॒मो॑ऽसि॒ कस्या॑सि॒ को नामा॑सि ॥ यस्य॑ ते॒ नामा॒मन्म॑हि॒ यन्त्वा॒ सोमे॒ना॒ती॑तृपाम ॥ भूर्भु॒वः॒ स्वः॒ सु॒प्र॒जाः प्र॒जाभिः॑ स्या॒ᳫँ सुवी॒रो वी॒रैः सु॒पोषः॒ पोषैः॑ ॥ २९ ॥ *

कस्य प्रजापतेरनन्यभूतोसि। "कोनामासि"। प्रजापतिनामासि। किञ्च "यस्य" तव "नामामन्महि"। मन ज्ञाने। विजानीमः। "य" च त्वां "सोमेनातीतृपामः"। तर्पितवन्तः। सोऽस्मान्विदितनाम्नः कुरु तर्पय च कामैरितिशेषः। जपति। "भूर्भुवः स्वरिति"। व्याख्यातम् ॥२९॥

ऋतुग्रहांस्त्रयोदशगृह्णाति त्रयोदशभिर्मन्त्रैः (१)। मन्त्राणान्तु नामान्येव। "उपयाम गृहीतोसि मधवेत्त्वा उपयामगृहीतोसि माधवायत्त्वा"। वासन्तिकौ। ऋतुयक्ता वुत्पत्तय उच्यन्ते। मधुप्रमुखमन्नं वसन्ते उत्पद्यते इति मधुमाधवौ मासौ। "शुक्राय" शुचयेग्रैष्मौमासौ। उभावपि शोचतेः शुष्यत्यर्थस्य। "नभसे"। नभस्यायां, वार्षिकौ मासौ। नह्यत्र सूर्यो भाति मेघप्रचुर-

उपयामगृहीतोसि। उपयामगृहीतोसिमधवेत्वोपयामगृहीतोसिमाधवायत्वोपयामगृहीतोसिशुक्रायत्वोपयामगृहीतोसिशुचयेत्वोपयामगृहीतोसि नभसेत्वोपयामगृहीतोसिनभस्यायत्वोपयाम--

त्वात् तस्मान्नभोनभस्यः। "इषे"। ऊर्जे, शारदौ मासौ। इषमन्नमूर्जं तदुपसेचनं दध्यादि तदिह

(१) ऋतुग्रहैश्चरतो द्रोणकलशादुपयामगृहीतोसिमधवेत्वेति द्वादशप्रतिमन्त्रमध्वर्योः पूर्वः पूर्वो मन्त्र उत्तरउत्तरः प्रतिप्रस्थातुः, त्रयोदशं गृह्णीयादिच्छन्नुपयामगृहीतोस्यंहस्पतये त्वेति। (इच्छन्नध्वर्युस्त्रयोदशमृतुग्रहं संगृह्णीयादैच्छिको विकल्पः) का० ९।१३।१-४-१८॥ ३०॥

प्रचुरं भवति इति मतुप्लोपादभेदोपचारात् द्वौ मासावुच्येते। "सहसे सहस्याय"। हैमन्तिकौ मासौ। सहतः प्रसहनार्थस्य। अभिभवतिह्यसौ शीतेन। "तपसे तपस्याय"। शैशिरौ मासौ। एतयोर्हि वर्त्तिष्ठं तपति सूर्यः। "अꣳहसस्पतये"। त्रयोदशो मासः। अंहः पापं तस्य पतिः। अयं

ग॒'हीतोस॒ीषे त्वोपय॒ामग॒'हीतोस्यू॒र्जे त्वोपय॒ामग॒'हीतोसि॒ सह॑से त्वोपय॒ामग॒'हीतोसि सहस्या॒यत्वोपय॒ामग॒'हीतोसि॒ तप॑से त्वोपय॒ाम॒ग॒'हीतोसि तप॒स्या॒यत्वोपय॒ामग॒'हीतोस्यꣳहसस्प॒तये॑ त्वा ॥ ३० ॥ * इन्द्राग्ग्नीऽआग॑तम्॒ ॥ इन्द्राग्ग्नीऽआग॑तꣳ

च द्वादशस्वपि तपति ॥३०॥ ऐन्द्राग्नं ग्रहं गृह्णाति(१)। "इन्द्राग्नी आगतम्"। गायत्री ऐन्द्राग्नी। हे इन्द्राग्नी आगतम् आगच्छतम् "सुतं" मभिषुतं सोमं प्रति। "गोभिर्नभोवरेण्यम्"। गोभिस्त्वयो-त्सजनाभिर्वाग्भिः। नभो वरेण्यम्। नभ आदित्यो भवति नेता भासां ज्योतिषां प्रणयः। तुभ्योपमं

(२) ऐन्द्राग्नं गृह्णाति। का० ९।१।२० ॥ ३१ ॥

र्यैतत्। नभ इव आदित्यमिव वरणीयं सोममागत्य च। "अस्यसोमस्यपातम्"। पिबतम्। "धियेषिता"। यजमानस्य संबन्धिन्याधिया इषिता प्रेषितौ सन्तौ। "उपयामगृहीतोसीन्द्राग्निभ्यां त्वा" गृह्णामि। "एषतेयोनिः"। इन्द्राग्नीभ्यां त्वा" सादयामि ॥ ३१ ॥ ग्रहस्य द्वितीयो मन्त्रः

सु तद्भीर्भिर्नभोवरेण्यम् ॥ अस्यपातन्धियेषिता ॥ उपयामगृहीतोसीन्द्राग्निभ्यान्त्वैषतेयोनिरिन्द्राग्निभ्यान्त्वा ॥३१॥

* आघं। आघायेऽअग्निमिन्धतेस्तृणन्तिबर्हिरानुषक् ॥ येषामिन्द्रोयुवासखा ॥ उपयामगृहीतोस्यग्नीन्द्राभ्यान्त्वैषतेयो

विकल्पः। "आघाये"। आग्नीन्द्री गायत्री। "आघाये अग्निमिन्धते"। इन्धी दीप्तौ। आदीपयन्ति ये अग्निम् इष्टिपशुसोमचातुर्मास्यैर्यज्ञानः। घ इति निपातोनर्थकः। ये च "स्तृणन्तिबर्हिः आनुषक्"। आनुषगितिनामानुपूर्व्यस्यानुषक्त भवति। आनुपूर्वेण क्रमेण। किन्ते-

षामिति। "येषामिन्द्रः युजा"। अनुपहतजराव्यक्तशरीरः। "सखा"। समानख्यानः। नेतरेषाम-
यज्वनाम्। "उपयाम" इति व्याख्यातम् ॥ ३२ ॥ वैश्वदेवं गृह्णाति (१)। "ओमासः"।
वैश्वदेवी गायत्री। हे ओमासः अवितारः तर्पयितारः तर्पणीया वा। "चर्षणीधृतः"।
चर्षणयो मनुष्यास्तान्धारयन्ति तैर्वा ध्रियन्ते चर्षणीधृतः। "विश्वेदेवा स आगत"। हे विश्वे-

नि॑रग्नी॒न्द्राभ्या॑न्त्वा ॥ ३२ ॥ * ओमा॑सश्चर्ष॑णीधृतः । ओ
मा॑सश्चर्ष॑णीधृतो॒ विश्वे॑देवास॒ आग॑त ॥ दाश्वा॒ᳪसो॑ दाशु॒
षः॑ सु॒तम् । उ॒प॒या॒मगृ॑हीतोसि॒ विश्वे॑भ्यस्त्वा॒ देवेभ्य॑ ए॒ष

देवा ये यूयम् ओमासः अवितारो रक्षितारः चर्षणीनां मनुष्याणाम्। तेनोपकारेणावनीया वा तर्पणार्हाः धारयितारश्च संवित्तिकर्त्तारः ते यूयम् "दाश्वांसः" चेतसा दत्तवन्तः क्रत-

(१) वैश्वदेवं गृह्णाति शुक्रपात्रेण द्रोणकलशादन्वारब्धे (अध्वर्यौ यजमाने स्पृष्टेऽस्पृष्टे वा सति) ओमास इति।
का॰ ८।४।१ ॥ ३२ ॥

संकल्पा भूत्वा इदं नामाख्याभिरस्मै देयमिति ततोऽस्मदाशुषः दत्तवन्तो यजमानस्यैतमभिपुतं सोमं पातुमागच्छत इत्येवमाशास्महे। हे विश्वेदेवा इहागच्छत। कथं भूताः दाश्वांसः। दाश्व दाने। 'दाश्वानि'तिनिपात्यते दत्तवन्तो यजमानाय कामान्। किमर्थं पुरस्कृत्यागच्छत। "दाशुषः सुतम्"। हवींषि दत्तवतो यजमानस्याभिपुतं सोमं पातुम्।

तेयोनि॒र्विश्वे॑भ्यस्त्वादेवेभ्यः॑ ॥ ३३ ॥ विश्वे॑देवासः। विश्वे॑देवास॒ऽआग॑तशृणु॒ताम॑ऽइ॒मꣳहव॑म् ॥ एदम्बर्हिर्न्नि॑षी॑दत ॥ उ॒प॒या॒मगृ॑ही॒तो॒सि॒ विश्वे॑भ्यस्त्वादेवेभ्य॑ऽए॒षते॒यो॒नि॒र्विश्वे॑भ्यस्त्वादेवेभ्यः॑ ॥ ३४ ॥ इन्द्र॑मरुत्वः। इ

उपयाम इत्यादि व्याख्यातम् ॥ ३३ ॥ द्वितीयो मन्त्रविकल्पः। वैश्वदेवीगायत्री। हे "विश्वेदेवा" इह आगच्छत। आगत्य च "शृणुतमे" मम "इमं हवं"माह्वानम् श्रुत्वा चावधार्य च "आनिषीदत इदं"मस्मदीयं "बर्हिः"। उपयामगृहीतोसीत्यादि व्याख्यातम् ॥ ३४ ॥

मरुत्वतीयं गृह्णाति (१)। "इन्द्रमरुत्वः"। मरुद्भिः सहित इन्द्रो देवता। इत उत्तरस्य तिसृणामृचां त्रिष्टुभामिन्द्रार्षम् प्राङ्माहेन्द्रात्। हे इन्द्र मरुत्वः। 'मतुवसोरु संबुद्धौ छन्दसी'ति रुत्वम्। मरुत्वः हे मरुत्वन् मरुद्भिः सहित "इह" सदीये यज्ञे "पाहि" पिब "सोमम्"। कथं पिबेत्यत आह। "यथाशार्याते अपिबः"। शार्यातो मानवः। तस्यापत्यं

न्द्र मरुत्वऽइ॒हपाहि॒सोमं॒ यथाशार्य्या॒तेऽअपि॑बः सु॒तस्य॑ ॥ तव॒ प्र

णी॑तीतव॑ शूरशर्म्म॒न्नावि॑वासन्तिक॒वयः॑सुय॒ज्ञाः । उ॒पया॒मगृ॑ही

शार्यातिः। "शार्य्यातो ह वा इदं मानवो ग्रामेण चचारे"ति श्रुतिः। यथा येन प्रकारेण शार्यातेरक्रतौ "अपिबः" पीतवानसि। "सुतस्य" अभिषुतस्य सोमस्य सकाशम्। किञ्च। "तव-प्रणीत्या" प्रणायनेन "तव च शूरशर्मन्" शर्मणि शरणे यज्ञगृहे। "आविवासन्ति" विवासति:

(१) एते प्रातः सवनग्रहाः पूर्णाः। अथ माध्यन्दिनसवनग्रहाः। तत्र मरुत्वतीया गृह्यन्त इतीति त्रिविचनात् त्रयो मरुत्वतीयास्तत्र प्रथममाह। मरुत्वतीयमृतुपात्रेणेन्द्रमरुत्व इति ४, का० १०।१।१४ ॥ ३५ ॥

परिचर्याम् आभिमुख्येनावस्थितास्त्वा परिचरन्ति। "कवयः" क्रान्तदर्शनाः। "सुयज्ञाः" कल्याणयज्ञाः। उपयामेत्यादि व्याख्यातम्॥ ३५॥ द्वितीयं मरुत्वतीयं गृह्णाति। "मरुत्वन्तम्"। मरुद्भिस्तद्वन्तमिन्द्रम् "वृषभं" वर्षितारम् "वावृधानं" वर्द्धमानम् "अकवारिं" मकुत्सितारिम्। शत्रवोपि यस्याकुत्सितद्दवादयः। अथवा अकुत्सितदानम्। अथवा अकुत्सितैश्वर्यम्।

तोसीन्द्रायत्त्वामरुत्त्वतऽएषतेयोनिरिन्द्रायत्वामरुत्त्वते ॥ ३५ ॥

मरुत्वन्तंवृषभं। वावृधानमकवारिन्दिव्यंᳬशासमिन्द्रम्। विश्वाषा

"दिव्य" द्युलोकजम्। "शासं" प्रशासनवन्तं शासितारं वा। "विश्वासाहम्"। सहतिरभिभवार्थः। स्वधर्मव्युतस्य सर्वस्याभिभवितारम्। "उग्रम्" उद्गूर्णवज्रम्। "सहोदाम्" बलस्य दातारम्। यमित्थम्भूतमिन्द्रं माहुस्तम् "अवसे नूतनाय"। अवनाय चिरन्तनाय। "इह"

(१) वसिना मरुत्वतीयग्रहणं मरुत्वन्तमिति, ऋतुपात्रेण मरुत्वतीयग्रहणमुपयामगृहीतोसि मरुतां त्वौजस इति। का० १०।२।६-२॥ ३६॥

यज्ञगृहे "हुवेम" आह्वयामः। उपयामगृहीतइत्यादि व्याख्यातम्। तृतीयं मरुत्वतीयं यजुषा ग्रहं गृह्णाति। "उपयाम गृहीतोसि मरुतान्त्वा ओजसे" गृह्णामीतिशेषः। ओजइति बलनाम। स्वकीयमोजो निधाय इन्द्रं प्रति मरुत आयातास्ततोनेन गृहीतेन सबला आयाताः तदेतद्यजुर्वदति ॥ ३९ ॥ द्वितीयो मन्त्रविकल्पः। "सजोषा इन्द्र"। हे इन्द्र यः त्वं सजोषाः।

स्वाहु मवसेन् तंनायोगग्रुँस होदामि हतठँहु वेस ॥ उपयामगृहीतोसीन्द्रांयत्त्वाम रुत्वतऽए षते योनि रिन्द्रांयत्त्वाम रुत्वते ॥ उपयामगृहीतोसिमरुतान्त्वौजसे ॥ ३६ ॥ स जोषांऽइन्द्र। स जो

समानगोपयः समानपावभोजनः तं त्वां ब्रवीमि। "समानगणो मरुद्भिः सोमं पिब"। समानगणो मरुद्भिः भूत्वा सोमं पिव। "वृत्रहा" वृत्रस्य हन्ता भविष्यामीतिशेषः। हे "शूर" विक्रान्त। "विद्वान्" एतमर्थं संजानानः। ततः पीत्वा सोमं मरुद्भिः सह। "अहिमन्यून्" वृत्रमनुगान्। "अपस्पृधोनुदस्व"। अपनुदस्व स्पृधः। नुद प्रेरणे। स्पृधः संग्रामात्। हत्वा

शत्रून् ये हतावशिष्टाः शत्रवः तान् संग्रामात् प्रेरयस्व। "अथाभयं कृणुहि विश्वतो नः"। अथानन्तरमभयं कुरु सर्वतोऽस्माकम्। उपयामगृहीतोऽसीत्याद्युक्तम्॥ ३७॥ "मरुत्वान् इन्द्र"। हे इन्द्र "यस्त्वं मरुत्वान् मरुद्गणयुक्तश्च "वृषभश्च" वर्षिता अपामन्तरिक्षे स्थितः तं त्वां ब्रवीमि। "रणायपिबसोमम्"। रणं संग्रामं करिष्यामीति पिब सोमम्। "अनुष्वधम्"

घांऽइन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान्॥ जहि शत्रूँ १ रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः॥ उपयामगृहीतोसीन्द्राय त्वा मरुत्वतऽएष ते योनिरिन्द्राय त्वा मरुत्वते॥ ३७॥

मरुत्वाँ २। ऽइन्द्र॥ वृषभो रणाय पिबा सोममनुष्वधम्मदाय।

अनुपश्चात् स्वधान्नं पुरोडाशधानानामन्यदपि पयस्यालक्षणं यस्य सोमस्य स तथोक्तः। "मदाय"। मदे हि सति योद्धा भवतीन्द्रः। कथं पुनः पिब। "आसिञ्चस्व जठरे मध्व ऊर्मिम्"। अथ पानमासिञ्च स्वजठरे उदरे। मध्वः मधुसोममित्यौपमिकं साध्यते। मधुस्वादस्य

सोमस्सोर्मि नक्ता संघातम्। विशिष्टस्य सोमपानस्य मन्त्रदृक् हेतुमाह। फ "त्वंꣳ राजासिप्रति-पत्सु,तानाम्"। यतस्त्वमेव राजा ईश्वरोसि प्रतिपत्सु सर्वास्वपितिथिषु सुतानामभिषुतानां सोमानाम्। किमुत चतुर्दश्यन्तेभिषुतानाम्। त्वदर्थमेव सर्वासु तिथिषु सोमोऽभिषूयत इत्यभिप्रायः। छन्दोगानामपि प्रतिपद्विद्यते तदभिप्रायं चैतत्। उभयामइत्यादि व्याख्यातम् ॥ ३८ ॥

आसिंञ्चस्वज ठरेमध्वऽऊ र्मिन्त्वꣳराजासिप्प्रतिपत्सुतानाम्। उ

प यामगृहीतोसीन्द्रायत्वाम रुत्वतऽए षतेयोनि रिन्द्रायत्वाम रुत्व-

ते ॥३८॥ * महाꣳ२ ॥ ऽइन्द्र÷ ॥ महा २ ॥ ऽइन्द्रो नृवदाचर्षणिप्प्रा

माहेन्द्रं गृह्णाति। महाꣳ२ इन्द्रः"। त्रिष्टुम्माहेन्द्री। महानप्रभवत इन्द्रस्तथापि "नृवत्" मनुष्य वदाह्वयमानं आगच्छति। "आचर्षणिप्राः"। चर्षणयो मनुष्याः। प्रा पूरणे। आगत्य च चर्षणीनां मनुष्याणां पूरयिता कामैः। "किञ्च" उतद्विबर्हाः। अपि द्वयोः स्थानयोः परिवृढः मध्यमे च स्थाने उत्तमे च परिवृढः परिवृढः प्रभुः। "अमिनः सहोभिः"। "अमिनो"ऽमित-

मान: सहोभिर्बलै:। अभाक्ततोलितवल: यद्वा। अनुपहिंसित: शत्रुवलै:। "अस्मद्र्यग्वावृधेवीर्याय"। अस्मद्दर्शनोत्सुक: सन् वर्धते वीर्याय वीरकर्मणेय इन्द्र: सोऽस्मदीये. कर्तृभिस्तूयमान: "उरु:" प्रमाणत: "पृथुश्च" विस्तारेण। "सुकृत:" शोभनकृत्यभिप्राय:। "भूत्" भूयात्। उपयामइत्यादि व्याख्यातम्॥ ३८॥ द्वितीयो मन्त्रविकल्प:। "महा२ँइन्द्र:"। गायत्री

ऽउ तह्नि बर्हीऽअमिन: सहोभि:॥ अस्मद्र्यग्वावृधेवीर्यायोरु: पृथु: सुकृत: कर्तृभिर्भूत्॥ उपयामगृहीतोसि महेन्द्रायत्वैषतेयोनिर्म्महेन्द्रायत्वा ॥३८॥ * महा२ँ॥ ऽन्द्र:॥ महा२ँ॥ इन्द्रोयऽओजसापर्ज्जन्योवृष्टिमा२ँ॥ ऽइव॥ स्तोमैर्वत्सस्यवावृधे। उपया

माहेन्द्री। महानिन्द्रो य: प्रभावत: स "ओजसा" बलेन "पर्जन्योवृष्टिमानिव"। यथा हि वृष्टिमान्पर्जन्यो धाराभिरसंख्याभिरपरिच्छिन्नसंख्य: एवमोजसा असंख्यातमहाभागेन।

(१) माहेन्द्रं गृह्णाति वैश्वदेवमद्राठ•इन्द्रइति। का०।१।१०॥ ३८॥

"स्तोमैः" स्तूयमानो "वत्सस्य" वसनशीलस्य यजमानस्य "वावृधे" वर्द्धते। उपयामगृहीत इत्यादि समानम् ॥ ४० ॥ दाक्षिणानि जुहोति (१)। "उदुत्यम्"। सौरी गायत्री। उत् इत्ययमुपसर्गो वहन्तीत्यनेन संबध्यते। उद्वहन्ति। कम्। "त्यं" तं सूर्यम्। "जातवेदसम्" जातप्रज्ञानम्।

मगृहीतोसिमहेन्द्राय त्वैषतेयोनिर्म्महेन्द्राय त्वा ॥ ४० ॥ * उदु त्यम्। उदुत्यञ्जातवेदसन्देवंवहन्तिकेतवः॥ दृशेव्विश्श्वाय सूर्य्यꣳ स्वाहा ॥ ४१ ॥ चित्तन्देवानाम्। चित्तन्देवानामुदगादनी

"देवं" दातारं द्युस्थानं वा। "केतवो" रश्मयः। किमर्थमुद्वहन्ति। "दृशे" दर्शनाय। "विश्वाय" षष्ठ्यर्थे चतुर्थी, विश्वस्य जगतः ॥ ४१ ॥ द्वितीयं जुहोति (१)। "चित्रं देवानाम्"।

(१) याम्याहार्यं दाक्षिणहोमो वास प्रभृत (वस्त्रवस्त्र) हिरण्यं हवन्यामवधाय चतुर्गृहीतमुदुत्यमिति। का० १०।२।४-५ ॥ ४१ ॥

(१) चित्रं देवानामिति द्वितीयाम्। का० १०।२।६ ॥ ४२ ॥

सौरी त्रिष्टुप्। सूर्यश्चात्र परापररूपेणावस्थितः स्तूयते। "चित्रं देवानामुदगादनीकम्"। उदय-कालादारभ्य तावदपररूपेण स्तूयते। चित्रमिति क्रियाविशेषणम्। यस्मिन्नुदगात्। चित्र-माश्चर्यभूतमुदगमत्। आश्चर्यं हि यः स्वकीयेन ज्योतिषा शार्वरं तमोपहत्यान्येषां ज्योतिषां ज्योतिरादायोद्गच्छति। यद्वा चित्रं चायनीयं पूजनीयमुदगमत्। देवानामनीकमित्यनयोः पदयो संबन्धः। "देवानां" रश्मीनामनीकं मुखम्। "चक्षुर्मित्रस्य"। चक्षुर्मित्रादिकस्य सदैव मनुष्यस्य

कुञ्चक्षुर्मित्रस्य वरुणस्याग्नेः ॥ आप्रा द्यावापृथिवीऽअन्त

जगतः। आदित्योदये हि रूपाण्यभिव्यज्यन्ते। यच्च "आप्रा द्यावापृथिवी अन्तरिक्षम्"। यच्च उदयसमनन्तरमेव आ समाः। आ पूरणे। आपूरितवत् स्वकीयेन प्रकाशेन द्यावापृ-थिव्यौ अन्तरिक्षञ्च। अधस्तनानि विशेषणानि मण्डलाभिप्रायान्ततु सकलिङ्गान्यनूद्य अथे-दानीं पररूपेण स्तौति। "सूर्य आत्मा"। पुरुषाभिप्रायमेतत्। "जगतो" जङ्गमस्य "तस्थुषश्च" स्थितिवतः स्थावरस्य चेत्यर्थः। तथाच श्रुतिः। "यमेतमादित्यपुरुषं वेदयन्ते स इन्द्रः प्रजा-

पतिस्तद्ब्रह्म । सूर्यो हि तमनेन मन्त्रेण ख्याप्यते स सूर्यात्मत्वेनापास्य एवं तावदधियज्ञं गतोऽप्ययं मन्त्रोधिदैवमाचष्टे । अध्यात्मं तु वक्ष्यति । "योवासावादित्ये पुरुष" इत्यादिना ॥ ४२ ॥ आग्नीध्रे जुहोति (१) । "अग्ने नय" ॥ ४३ ॥ "अयन्नो अग्नि" रित्युक्तार्थौमन्त्रौ । चतस्रो-

रिंचत्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च स्वाहा ॥ ४२ ॥ अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम स्वाहा ॥ ४३ ॥ अयन्नः । अयन्नो अग्निर्वरिवस्कृणोत्वयम्मृधः पुर एतु प्रभिन्दन् ॥ अयं वाजाञ्जयतु वाजसातावयं शत्रूञ्ज

(१) आग्नीध्रीयेऽग्ने नयेति, अयं न इत्यपरामिति । का० १०।२।७-८ ॥ ४३ ॥

(२) ५ अ: ३४।३७ व्याख्याता ॥ ४४ ॥

प्येता यजुरन्ता: स्वाहाकारेण अग्रेण शालां तिष्ठन्नभिमन्त्रयते। दक्षिणत: स्थिता: दक्षिणा: ॥ ४४ ॥ "रूपेणवोरूपम्" (१)। "अग्रे पशव आत्मनो दानमसहमाना अन्यानि रूपाण्याददिरे तान्देवा: स्वै: रूपै: प्रत्युपतिष्ठन्त: ततस्तै: स्वै: रूपैराजग्मु:"। एतन्निदानमस्य मन्त्रस्य। रूपेण मूर्त्या। व: युष्मत्सम्बन्धि रूपम्। "अभ्यागाम्" अभ्यागत:। सर्वो हि स्वं रूप-

यतुजह्व्‌ प्राणं स्वाहा ॥ ४४ ॥ रूपेणवः। रूपेणवोरूपम् भ्यागान्तुथोवोविश्ववेदाविभजतु ॥ ऋतस्यपथाप्रेतंच

मागच्छतीत्यभिप्राय:। किञ्च "तुथोवोविश्ववेदाविभजतु"। "तुथो" ब्रह्मा प्रजापति:। "व:" युष्मान् "विश्ववेदा:" सर्वज्ञो विभजतु यथार्हमृत्विजां विभागं करोतु। यूयं चैतज्जानाना: "ऋतस्य" यज्ञस्य प्रस्तुतस्य "पथा" मार्गेण "प्रेत" प्रगच्छत। "चन्द्रदक्षिणा:"। चन्द्रं सुवर्णं यजमानस्य

(१) सहिरण्यो यजमान: शालां पूर्वेण तिष्ठन्नभिमन्त्रयते दक्षिणा बहिर्वेदि तिष्ठन्तीर्दक्षिणतो रूपेण वहति, (दक्षिणागा: अभिमन्त्रयते) सद्यो गच्छति विसहिति, प्रेचते यशस्य स्वरूपानिति। का० १०।२।२०-१७-१८॥ ४५॥

हस्तगतं द्वितीयं यासां ताश्चन्द्रद्वितीयदक्षिणा इति प्राप्ते चन्द्रदक्षिणा इत्युक्ताः। शाक-पार्थिवादित्वान्मध्यमपदलोपी समासः। सदो गच्छति। "विस्वः पश्य व्यन्तरिक्ष"मिति। दक्षिणो च्यते। विपश्यामि त्वया दक्षिणया सोपानभूतया स्वः स्वर्गं देवयानमार्गम्। विपश्यामि च अन्तरिक्षलोकं पितृयानमार्गम्। विपश्येति मध्यमपुरुषस्योत्तमपुरुषो व्याख्यातः स्तुत्या। सदसि स्थितान् ब्राह्मणान् प्रेक्षते। "यतस्वसदस्यैः"। दक्षिणोच्यते। यतो प्रयतो। तथा

चन्द्रदक्षिणा विस्वः पश्य व्यन्तरिक्षं यतस्व सदस्यैः ॥ ४५ ॥

ब्राह्मणमद्य । विदेयं पितृमन्तं पैतृमत्यमृषिमार्षेयं सु-

भूतं यतमानतिष्ठस्व यथा "सदस्यैः" पूरितेरतिरिच्यसे ॥ ४५ ॥ आग्नीध्रं गच्छति (१)। "ब्राह्मणमद्य"। ब्राह्मणम् "अद्य" अस्मिन् "विदेयं" लभेयम् अनुशिष्टेन अतिविशिष्टेन पित्रा जातम्। न हि कश्चिद्विना पित्रा जायते। "पैतृमत्यम्" यस्य पितामहप्रभृतयोऽपि श्रोत्रियाः स एवमुच्यते। "ऋषिमार्षेयम्" ऋषिमन्त्राणां व्याख्याता। आर्षेयो ज्ञात्वा प्रवरैश्च

(१) ब्राह्मणमद्येत्याग्नीध्रगमनम्, उपविश्य हिरण्यमस्मै ददात्यध्वर्युः इति। १०।२।१८-२० ॥ ४६ ॥

जातः। "सुधातदक्षिणम्"। शोभनोभातः सुवर्णं दक्षिणा यस्य ससुधातदक्षिणः तम्। सुवर्णं हि आग्नीध्रे दीयते। दक्षिणां ददाति। "अस्मद्राताः"। रा दाने। हे दक्षिणाः अस्माभिः एताः दत्ताः सत्यो देवत्रा गच्छत। देवान्प्रति गच्छत। ततोनन्तरं यज्ञफलं साधयन्त्यः "प्रदातारमाविशत"। प्रकर्षेण दातारम् आविशत यजमानम् ॥ ४६ ॥ इत उत्तरं प्रत्व प्रतिग्रहमन्त्राः। हिरण्यं प्रतिगृह्णाति (१)। "अग्नयेत्वामह्यं वरुणोददातु"। अग्निरूपा-

धात दक्षिणाम्। अस्मद्राता देवत्रा गच्छत प्रदातारमाविशत ॥ ४६ ॥ अग्नये त्वा। अग्नये त्वा मह्यं वरुणो ददातु सो

मन्त्राय मह्यं हे हिरण्य त्वां वरुणो ददातु। वरुणेन हि हिरण्यमग्नये दत्तं पूर्वमतस्ते-नैवात्मना गृह्णानो न रिष्यामीति देवतादेशः। "सोऽमृतत्वमशीय" सोऽहमनेन विधानेन गृह्णानोऽमृतत्वं व्याप्नुयाम्। "आयुर्दात्रे एधि"। आयुष्मान्दाता भवतु। "मयोमह्यं प्रतिगृहीत्रे।

(१) अग्नयेत्वेति हिरण्यं प्रतिगृह्णीत इति, रुद्रायत्वेति गाम्, बृहस्पतये त्वेति वासः, यामायत्वेत्यश्वम् इति।
का० १०।२।१८-२१ ॥ ४७ ॥

मय: सुखम् एधि भव मह्यं प्रतिगृहीत्रे । गां प्रतिगृह्णाति । "रुद्राय त्वा" । रुद्रभूताय मह्यं हे गौः त्वां वरुणो ददातु सोऽहमनेन विधानेन गृह्णानोऽमृतत्त्वं व्याप्नुयाम् । "प्राणो-दात्रे एधि" । प्राणरूपा दात्रे भव । "वयो मह्यं प्रतिग्रहीत्रे" । वयोऽन्नं पशुर्वा भव । "मह्यं प्रतिगृहीत्रे" । वासो गृण्हाति । "बृहस्पतये" । बृहस्पतिरूपापन्नाय मह्यं त्वां वरुणो ददातु ।

# मृतत्वमशीयायुर्दात्रऽएधिमयो मह्यं प्रतिग्गृहीत्रे रुद्राय त्वा म
# ह्यं वरुणो ददातु सोऽमृतत्वमशीय प्राणोदात्रऽएधि वयो मह्यं
# प्रतिग्गृहीत्रे बृहस्पतये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय
# त्वग्दात्रऽएधि मयो मह्यं प्रतिग्गृहीत्रे यमाय त्वा मह्यं वरुणो द

सोऽहमनेन विधानेन गृण्हानो ऽमृतत्वं व्याप्नुयाम् । "त्वग्दात्रएधि" भव । "मयः" सुखं भव "मह्यं प्रतिगृहीत्रे" । अश्वं प्रतिगृह्णाति । "यमायत्वा" । यमरूपापन्नाय मह्यं त्वां वरुणो ददातु । सोऽहं यमरूपापन्नोऽमृतत्त्वं व्याप्नुयाम् । "हयो"ऽश्व: "दात्रे" भव । वयोऽन्नं पशुर्वा

भव समत्वं प्रतिगृह्णीवै ॥ ४७ ॥ अथ यदन्यद्ददाति तदनेन प्रतिगृह्णाति (१)। "कोदात्" कः पुरुषः अदात् दत्तवान्। एकः प्रश्नः। "कस्मै" पुरुषाय "अदात्" दत्तवान्। द्वितीयः प्रश्नः। "कामोदात्कामायादात्"। द्वौ प्रतिप्रश्नौ यथासंख्यम्। एवं च "कामः एव दाता कामः प्रतिगृहीता" च। अतो ब्रवीमि हे "काम एतद् द्रव्यं" "ते" तव। त्वमेव केन

दातुसोम्मृतत्त्वमशीयहयोदात्त्वऽएधिव्वयोमह्यम्प्रतिगृह्णीत्त्वे ॥४७॥ कोदात्। कोदात्कस्म्माऽअदात्कामोदात्कामायादात् कामोदाता कामः प्प्रतिग्गृहीताकामैतत्ते ॥ ४८ ॥ इतिसंहितायांसप्तमोध्यायः ॥ ७

चित्प्रयोजनेन ददासि त्वमेव च केनचित्प्रयोजनेन प्रतिगृह्णासीति ॥ ४८ ॥ इति उव्वटकृतौ मन्त्रभाष्ये सप्तमोध्यायः ॥ ७ ॥

(१) कोदादित्यन्यदिति। का० १०।२।२२ ॥ ४८ ॥

मारद्वाजोपनाम्ना श्रीगोविन्दविदुषा कृते। अफाणीत्सप्तमोध्यायो मन्त्रभाष्यस्य टिप्पणे।

आदित्यगृहस्य सवोत्थयँ प्रतिप्रस्थातादित्यपात्रे द्रोणकलशादुपयामगृहीतोसीति गृहीत्वा द्विदेवत्याननुजुहोति। तत्रैते मन्त्राः। "उपयामगृहीतोस्यादित्येभ्यस्त्वा"। गृह्णामीतिशेषः। आदित्यस्थालीं पात्रेणापिदधाति। "विष्णो उरुगाय"। हे विष्णो उरुगमनाय "एष ते" तव "सोम."समर्पितः। "तं रक्ष"गोपाय। गोपायनप्रवृत्तं च त्वां "मा दभन्नुयः हिंस्युः रक्षांसि।

# ॐ उपयामगृहीतोसि। उपयामगृहीतोस्यादित्येभ्य

सप्तमाध्याये उपांशुग्रहादिसवनद्वयगता मन्त्रादक्षिणाहोमान्ता उक्ता अथाष्टमे तृतीयसवनगता आदित्यग्रहादिमन्त्रा उच्यन्ते।

(१) प्रतिप्रस्थाताऽऽदित्यपात्रेण द्रोणकलशादुपयामगृहीतोऽसीति गृहीत्वा द्विदेवत्याननु जुहोत्युत्तरार्धे, शेषं

---

* उपयामगृहीतोसि। आदित्येभ्य पश्च वाममधाद सुधर्मास्य का बृहस्पतिसतश्चाद हरिससिचतस. समिन्द्रणोष्टौ माहिरेजतुदक्षमास्य पश्च कावातिष्ठयुष्माद्धौ द्रमिदैकैका यमाम्नह मे पवश्चोचिष्टन्नाऽद्ध्यसुदुत्यमेकैका जिघृह विनदन्द्र-वाचस्पतिविश्वकर्मन्नेकैका मयेत्वाचतस इहरतिश्चिस्त्रः परमेष्ठीदश त्रयोविंशं प्रतिसिंहाष्टि। अनु.

र्मी ॥ १ ॥ आदित्यग्रहं गृह्णाति (१)। "कदाचन"। व्याख्यातेयं

: यदि नाम अधस्तादैन्द्रः, इयांस्तु विशेषः। इयं त्वादित्यदेवतो यजुरन्तः। आदित्येभ्य-

स्त्वेति यजुः ॥ २ ॥ द्वितीयं गृह्णाति (२)। "कदाचन"। बृहत्यादित्यदेवत्या यजुरन्ता।

आदित्येभ्यस्त्वेति यजुः। कदाशब्दः कालवचनः। चनेति निपातः पुनरर्थे। मयुच्छति: प्रमादार्थः

स्त्वा ॥ व्विष्ण्ण ऽउरुगायैष ते सोमस्त ꣳ रक्षस्व मा त्वा दभन् ॥ १ ॥

कुदाचुन ॥ स्तुरीरसि नेन्द्र सश्चसि दाशुषे ॥ उपोपेन्नु मघवु-

न्भूय ऽइन्नु ते दानं देवस्य पृच्यत ऽआदित्येभ्यस्त्वा ॥ २ ॥ कु

मेवमादित्यस्थाल्यामाश्रिन्नत्यादित्येभ्यस्त्वेति, समाश्रित्य तेनापि दधाति (तेनादित्यपात्रेण स्थालीमाच्छादयति) विष्ण

उरुगायेति। का० ८।८।१८-२०-२१ ॥ १ ॥

(१) आदित्यग्रहं गृह्णाति संप्रवेश्य: कदाचनेति। का० १०।४।४ अत्रेन्द्रनामभिरादित्य एवस्तूयते ॥ २ ॥

(२) पत्यग्र (धारातो विच्छिद्य पूतभृतः सकाशाच्छागसमीपं नीत्वा) पुनः (आदित्यग्रहं गृह्णाति) कदाचनेति।

का० १०।४।५।

हे भगवन्नादित्य कस्मिन्नहनि पुनः प्रमाद्यसि उदयतापपाकप्रकाशादीननुग्रहान् प्राणिषु कुर्वन् न कदाचिदित्यभिप्रायः। एवं काकुगतेन विशेषणेन व्याख्येयम्। अथवा कदाचनेति व्यति-कीर्णमेतत्पदद्वयं व्याख्येयम्। यन्न कदाचिदपीत्यनेनार्थेनार्थवत्त्वम्। चकारगर्भं सवितुर्नि-धानम् अस्य भाष्यं चकारेणां गर्भनिधानीमितियथायास्केन दर्शितम्। न कदाचित्प्रमाद्यसि

दाच॒ न। प्रयु॑क्ष्यु॒भेनिपा॑सि॒जन्म॑नी॥ तुरी॑यादित्य॒ सव॑नं॒

न्तऽइ॒न्द्रि॒यमात॑स्थावमृ॒तन्दि॒व्य्‌॥दित्त॒॥‍भ्य॑स्त्वा॥ ३॥ सु॒ज्ञो॒टे॑-

स्वकीयं कर्म कुर्वन्। उभे च नितरां "पासि" गोपायसि देवमनुष्यसंबन्धिनी "जन्मनी" तुरीयेत्यविभक्तिको निर्देशः। तुरीयं च आदित्यसवनम्। तव इन्द्रियं च वीर्यं च तवैव "आतस्थौ" उपस्थितम् "अमृतम्" अनश्वरं विज्ञानानन्दस्वभावम्" "दिवि" द्युलोके आदि-त्यमण्डलान्तःस्थम्। तदुक्तम्। "पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवी"ति। एवं परापर-

(२) यथा ऋषीर्यान्तरम् प्रमद्यो निर्षेधे चमन्द्रीत्यर्थे, हे आदित्य त्वं कदाचनकदापि प्रयुच्छसि

रूपेणास्यामृच्यादित्यस्तुतिः। "आदित्येभ्यस्त्वा" गृह्णामीतिशेषः(२) ॥ ३ ॥ इमा श्रीणाति (१)। "यज्ञोदेवानाम" विष्टप् यजुरन्ता आदित्यदेवत्या। आदित्येभ्यस्त्वेति यजुः। इसाद्यज्ञोदेवतानामादित्यानां "सुम्न" सुखं कर्तुं "प्रत्येति" तस्माद्धेतोः हे "आदित्यासः"। आदित्या एव आदित्यासः। 'आज्जसेरसुक्'। "भवतामृडयन्तः"। मृड सुखने इत्योर्थे शतृ प्रत्यायोत्र छान्दसः।

वानाम्। यज्ञोदेवानाम्प्रत्येति सुम्नमादित्यासोभवतामृडयन्तः॥ आवोर्व्वाची सुमतिर्व्ववृत्यादंहोश्चिद्याव्वरिवोवित्तरासत्।

सः। मृडयितारः सुखयितारो भवतास्माकम्। "आनोर्वाचीसुमतिर्ववृत्यात"। आवृत्ता भवतु वः युष्मत्संबन्धिनी सुमतिः अर्वाची च अस्मदभिमुखा च। "अंहोश्चिद्यावरिवोवित्तरासत"। अंहुः न प्रमाप्यसि किंतूभे वर्तमनभाविनो जन्मनी पासि रक्षसि। तृतीयार्थे तुरीयशब्दः। ते यत्तुरीयसवनं तस्मिन्दिवि लोकसमाने सवने इन्द्रियमिन्द्रियहविकरणसमृत सुधासमं हविः आ तस्मौ समन्तात स्थितम्। त्वामादित्येभ्योयाय रक्षण् पामीति[redacted] महीधरभाष्ये ॥ ३ ॥

(१) इमायोणात्येनं पयिमेत्ते मध्ये वा यज्ञो देवानामिति। का० १०।४।६ ॥ ४ ॥

पापकारी। चिछन्दोऽर्थे। अंहोः पापकारिणोऽपि या सुमतिः। "वरिवो वित्तरा:"। वरिव इति धननाम। अतिशयेन धनस्य लम्भी असत् भवतु। सा सुमतिः अस्मदभिमुखी आवर्त्त्यादिति सम्बन्धः ॥ ४ ॥ उपांशुसवनेन ग्रहं विमिमयति। "विवस्वन्नादित्य"।० तमांसि विवासयतीति विनस्वान् आदित्य उच्यते। हे विवस्वन् आदित्य "एष ते सोमपीथः"। एत-

सदादित्येभ्यस्त्वा ॥ ४ ॥ विवस्वन्नादित्य। विवस्वन्नादित्यैष तेसोमपीथस्तस्मिन्मत्स्व ॥ अदस्मैनरोवचसे दधातन यदाशीर्दादम्पतीव्वाममश्नुतः ॥ पुमान्पुत्रोजायतेविन्दतेव्वस्वधा

त्तव सोमपानम् "तस्मिन्मत्स्व"। मद तृप्तौ। तृप्तिं कुरु, त्रिप्तमाधिरं सोमे। अवेंक्षते पत्नी। यदस्मैनरः"। जगती आशीर्यजमानपत्नीविषया। अदिति सत्यनामसु पठितम्। "यद्दधा-

(१) उपांशुसवनेन मिमयति विवस्वन्नादित्येति, यदस्मै नर इत्येनमवेक्षते पत्नी। का० १०।४।७-५।४। विश्वाहा विश्वानि च तान्यहानि च विश्वाहा अत्यन्तसंयोगे द्वितीया। समासान्तविधेरनित्यत्वाच्छान्दसत्वाद्वा टजभाव ॥ ५ ॥

तन"यद्दधानान् कुरुत । नेत्यनर्थका उपजना भवन्तीति नकारोनर्थकः । श्रद्धां कुरुत"अस्मैवर्चसे" हे नरः । ऋत्विग्यजमानाः । यत् किमित्यत आह । "आशीर्दा" आशिषो दातारः । "दम्पती" पत्नीयजमानौ । "वाम" वननीयम् । "अश्नुतः" व्याप्नुतः यज्ञफलम् । किञ्च इहैव "पुमान् पुत्रोजायते" । दुहितापि पुत्रशब्देनोच्यते इत्यतः पुमानिति विशेष्यते । किञ्च "विन्दतेवसु" लभते धनम् । अथाप्यथेत्येतौ छन्दसि समानार्थौ "विश्वाहा" सर्वदा । अपरः ।

विश्वाहारपऽएधतेगृहे ॥ ५ ॥ * वाममद्य ॥ सवितर्वाममु श्वोदि वेदिवे वाममस्मभ्यं ᳪ सावीः ॥ वामस्य हिक्षयस्य देव

अपो रिप्रमिति पापनामनी भवतः । अपापः सन् "एधते" वर्द्धते । गृह एवावस्थितः ॥ ५ ॥ सावित्रं गृह्णाति (१) । "वाममद्य" । सावित्री त्रिष्टुप् । हे "सवितः" वामं वननीयम् अद्य अस्मिन् अद्य सावित्रीरितिस बन्धः ।"वाममुश्वः" । वामं च उपांशंसनीये काले सावीः'श्व' उपांशुशंसनीयः । काल इति हि यास्क आह । किं वा बहुनोक्तेन । "दिवे दिवे वाममस्मभ्यं",

(१) मध्यन्दिनावात्तपाश्रन्तर्यामपात्रयोरन्यतरेण सावित्रग्रहणं वाममद्येति । का० १०।५।१२ ॥ ६ ॥

भावो:"। अहन्यहनि वामसस्माकं मदूयाः। किञ्च "वामस्येशिषे त्वमसि"। क्षयशब्द। निवासवचन आद्युदात्तत्वात्। 'क्षयो निवासे' इति हि पाणिनिराद्युदात्तत्वं स्मरति। वामस्य च निवासस्य हे देव दानादिगुणयुक्त भूरेर्बहुनो धनपूर्णस्य दाता भवेति शेषः। "अनया-धिया"। धीरिति कर्मनाम। अनेन च सोमाख्येन कर्मणा "वामभाजः"। अभिलषितभा-

भूरे॑र्‌धि॒यां वा॒मभा॑ज॒ः स्याम ॥ ६ ॥ उ॒प॒या॒मगृ॑हीतोसि। सा॒वि॒त्रो॑सि चनो॒धाश्च॑नो॒धा अ॑सि॒ चनो॒ मयि॑ धेहि । जिन्व॑

जिन्वो वयं संभवेम ॥ ६ ॥ "उपयामगृहीतोसि सावित्रोसि"। सवितृदेवत्योसि "चनोधा-श्चनोधा" असि। चन इत्यन्ननाम। अभ्यासे भूयांसमर्थं मन्यन्ते। अतिशयेन चान्नस्य धार-यितासि। अतः "चनो" ऽन्नं मयि "धेहि" स्थापय। किञ्च "जिन्व यज्ञम्"। जिन्वतिः प्रीति-

(१) मन्थिविकल्पानुपांश्वन्तर्यामपात्रयोरन्यतरेण सावित्रग्रहणं सममप्येति। का॰ ११।५।१२।

(२) भगमस्यास्तीति भग। 'भर्गं यादिम्योच'। ऐश्वर्यस्य समग्रस्य वीर्यस्य यशस श्रिय। ज्ञानवैराग्ययोश्चैव षणाभग इतीरणा ॥ ७ ॥

कर्म्म। तमेव यज्ञं तमेव च यज्ञपतिं" यजमानम् "भगाय" यज्ञफलाय (२)। "देवाय सवित्रे त्वा" गृह्णामीतिशेषः॥ ७॥ (३००)। वैश्वदेवं गृह्णाति (१)। "उपयामगृहीतोसी"ति। व्याख्यातम्। "सुशर्मासि"। स्वाश्रयोसि। "सुप्रतिष्ठानः"। शोभनं प्रतिष्ठानं प्रतिष्ठा अस्येति सुप्रतिष्ठानः। महत्साधनस्य मन्त्रः। "प्राणो वै सुशर्मा सुप्रतिष्ठान"इतिश्रुतिः। प्राणहेतुत्वात्प्राण

सुचक्षिन्त्वं यज्ञपतिं भगाय देवाय त्वा सवित्रे ॥ ७ ॥ *

(शतम् ॥ ३०० ॥) उपयामगृहीतोसि। सुशर्म्मासि सुप्रतिष्ठानो-बृहदुक्षायनमः ॥ विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्य

इत्युच्यते। "अन्नं वै गृहो अन्नं वै प्राण हेतुः"। यस्मात्त्वं सुशर्मासि सुप्रतिष्ठानश्च तस्मात् "बृहदुक्षायनमः"। महासेचनाय जगदुत्पत्तिबीजाय प्रजापतये नमो भवितुमर्हतीतिशेषः। नम-

(१) अभ्यस्तेन महावैश्वदेवग्रहणमुपयामगृहीतोऽसि सुशर्मासीति। का० १०।६-२॥८॥

इत्यन्तनामसु पठितम्। "प्रजापतिर्वै बृहदुक्थ" इति श्रुतिः। "विश्वेभ्यस्त्वादेवेभ्य" इति व्याख्यातम् ॥८॥ पत्नीवतं गृह्णाति(१)। "उपयामगृहीतोसी"ति। व्याख्यातम्। "बृहस्पतिसुतस्य" ब्रह्मणाऽभ्यनुज्ञातस्य। हे देवसोमते तव "इन्दोः इन्द्रियावतः"। वीर्यवतः। "पत्नीवतः"। पत्नीसंयुक्तस्य सतो "गृह्णान्"न्यानुपांशुप्रभृतीन् "ऋध्यासम्" समर्द्धयेयम्। प्रचरणीस्वलशे-

स्त्वादेवेभ्यः ॥ ८ ॥ * उपयामगृहीतोसि। उपयामगृहीतोसिबृहस्पतिसुतस्यदेवसोमतऽइन्दोरिन्द्रियावतः पत्नीवतोग्रहाँ२ ॥ ऽऋध्यासम् ॥ अहम्परस्तादहमवस्ताद्यदन्तरिक्षन्तदुमे

पेण श्रीणाति। "अहं परस्तात्"। त्रिष्टुप्। प्रजापतिरूपेणात्मानं पश्यन् श्रीणाति। "अहं परस्ता"दस्य जगतः अहं चावस्तात्। "यं"चैत"दन्तरिक्षं तदुमे"तदेव मे "पिता" पाता

(१) उपयामगृहीतोसि बृहस्पतिसुतस्येति प्रतिप्रस्थाता पत्नीवतं गृह्णाति, प्रचरणीमेपेणश्रीणात्येनमहं परस्तादिति। का० १०।७।१८।

भूत्। "अहं च सूर्य्यमुभयतो ददर्श"। परस्तादधस्ताच्च प्रपश्यामि। सूर्य्यस्य परस्तान्मम शिर इत्यभिप्रायः। यच्च "देवानां परमं गुहा" तदप्यहमेव (२) ॥ ९ ॥ जुहोति (१)। "अग्नाऽइप-त्नीवन्"। 'एचो प्रगृह्यस्यादूराद्धूत' इति प्लुतः। हे अग्ने पत्नीसंयुक्त। "सजूर्देवेन त्वष्ट्रा"। सम प्रीतिर्देवेन त्वष्ट्रा "सोमं पिब स्वाहा"। पत्नी उद्गातारमवेक्षते। "प्रजापतिः"। त्वं

पिताभूत् ॥ अहंᳪसूर्य्यमुभयतोददर्शाहन्देवानाम्परमङ्गुहा-यत् ॥ ९ ॥ अग्ग्ना ३ ॥ ऽइपत्नीवन्। अग्ग्ना ३ ॥ ऽइ-पत्नीवन्त्सजूर्देवेनत्वष्ट्रासोमम्पिबस्वाहा ॥ प्रजापतिर्वृषासि

प्रजापतिः "वृषा" च। "रेतोधाः" रेतसः सेक्ता धारयितासि स्वभावत एव त्वां ब्रवीमि। "रेतो मयि धेहि" स्थापय। "प्रजापते"श्च तव वृष्णः सेक्तुः "रेतोधसः" रेतोधारयितुः

(२) देवानामिन्द्रादीनां यत्परमं गुह्यमत्यन्तं गोप्यं हृदयेऽस्ति तदप्यहमेवेत्यर्थः ॥९॥

(१) अग्ना-३ इ पत्नीवन्नित्यु त्तरार्धे जुहोति, पत्नी सदः प्रविश्योत्तरत उपविष्टामुद्गाता समीक्षयति प्रजापतिर्वृषा-

सीति। का० १०।६।१८-७।२ ॥ १० ॥

स्वभूत "रेतोधाम् रेतसो धारयितारम् पुंस्पुत्रम् अशीय" प्राप्नुयाम् ॥ १० ॥ हारियोजन गृह्णाति (१)। "उपयामगृहीतोसि""हरिरसि"हरितवर्णोसि। "हरिः सोमो हरितवर्णः" इति। हारियोजनः"। इन्द्राश्वौ हरितावत्र युज्येते इति हरियोजनः। हरियोजन एव हारियोजनः। स्वार्थे तद्धितः "ऋकसामे वै हरी" इति श्रुत्यपेक्षः। "हरिभ्यां त्वा"। गृह्णामीतिशेषः।

रेतोधा रेतो मयि धेहि प्रजापतेस्ते वृष्णो रेतोधसो रेतोधाम शीय॥१०॥

*उपयामगृहीतोसि। उपयामगृहीतोसि हरिरसि हारियोजनो हरिभ्यान्त्वा॥ हर्य्योर्द्धानास्थसहसोम इन्द्राय ॥११॥ यस्ते॥

धाना आवपति। "हर्य्योर्द्धानास्थ"। हरितवर्णयोरिन्द्राश्वयोर्धाना भवथ यूयं सोमेन च सहिता "इन्द्राय" भवथ माणभक्षः ॥ ११ ॥ "यस्ते अश्वसनिः"। यस्त्वामश्वान्सनोति संभ-

(१) द्रोणकलशे हारियोजनग्रहणमुपयामगृहीतोसीति, धानाश्चावपति हर्य्योर्धाना इति। का० १०।८।२-६ ॥११॥

(२) यस्ते अश्वसनिरिति माणभक्षं भक्षयित्वोत्तरवेदौ (सर्वर्त्विजो धाना आदाय मन्त्रेणावघ्राय), निवपन्ति (क्षिपन्ति)। का० १०।८।५॥ १२ ॥

जते। "भक्षः"। यश्च गाः सनोति तस्य तव संबन्धिनः। "इष्टयजुषः"। इष्टानि हि यजूंषि भवन्ति। "स्तुतः स्तोमस्य"। अस्मिन्नेवावसरे स्तुताः स्तोमा भवन्ति। "शस्तोक्थस्य"। शस्तानि उक्थानि भवन्ति। "उपहूतस्य" अभ्यनुज्ञातस्य "उपहूतोऽभ्यनुज्ञातो "भक्षयामि" ॥१२॥ शकलाधानम् (१)। "देवकृतस्य"। देवविषयकृतस्य "एनसः" पापस्य "अवयजनम्"। अवपूर्वो

ऽअश्वसनिर्भक्षो यो गोसनिस्तस्य तऽइष्टयजुषस्तुतस्तोमस्य श-स्तोक्थस्योपहूतस्योपहूतो भक्षयामि ॥ १२ ॥ देवकृतस्यैनसो ॥ देवकृतस्यैनसोऽवयजनमसि मनुष्यकृतस्यैनसोऽवयजनमसि पि-तृकृतस्यैनसोऽवयजनमस्यात्मकृतस्यैनसोऽवयजनमस्येनसऽए

यजिर्नाशने वर्त्तते। नाशनं भवसि। मनुष्यविषयस्य पापस्य नाशनमसि। पितृविषये कृतस्य पापस्य नाशनमसि। आत्मविषये कृतस्य पापस्यात्मनिन्दादेः नाशनमसि। "एनसएनसः"।

(१) शकलाधानं देवकृतस्येति प्रतिमन्त्रम् (षड् यूपशकलान्सर्वेष्मी तिरश्चः) का० १०।८।६ ॥ १३ ॥

यावन्ति पापानि तेषां सर्वेषां नाशनमसि। "यच्चान्यदप्येनः पापं "विद्वान् चकार" कृतवान्। यच्चा"विद्वान्" अजानानः तस्य सर्वस्य नाशनमसि ॥ १३ ॥ चमसानभिमृशन्ति (१)। "संवर्चसेति"। व्याख्यातम् ॥ १४ ॥ नवसमिष्टयजूंषि जुहोति (१)। समिन्द्रेण इत्याद्याः षट् त्रिष्टुभः। तत्र त्रिभिः परिधीनाप्याययति त्रिभिर्देवता व्यवसृजति। "समिन्द्रणः"।

नसोवयजनमसि ॥ यच्चाहमेनो विद्वाँश्चकार यच्चाविद्वाँस्तस्य सर्वस्यैनसोवयजनमसि ॥ १३ ॥ संवर्च्चसा। संवर्चसापयसा सन्तनूभिरगन्महि मनसा सशिवेन। त्वष्टा सुदत्रो विदधातु रायोनुमार्ष्टु तन्वो यद्विलिष्टम् ॥ १४ ॥ * समिन्द्र।

(१) अपरेण चात्वालं यथास्वं चमसान् पूर्णपात्रान् (उदकपूर्णान्) अवमृशन्ति हरितकुशानवधाय संवर्चसेति। का० १०।८।७ ॥ १४ ॥ (१) समिन्द्रेण इति नव समिष्टयजूंषि जुहोति प्रतिमन्त्रम्। का० १०।८।११। नवसंस्थाप्यमानाः समिष्टयजुःसंज्ञकाः ॥ १५ ॥

ऐन्द्री। समित्ययमुपसर्गो नेषीत्यनेन क्रियापदेन संबध्यते। हे भगवन्निन्द्र सं नेषि संगमयसि। "नः" अस्मान्। मनसा संगमयसि च। "गोभि"र्वाग्भिर्वादिभिः पशुभिः संगमयसि च सूरिभिः" पण्डितैः। हे "मघवन्" संगमयसि च "स्वस्त्या" अविनाशेन। स्वस्तीत्यविनाशनाम। संगमयसि च "ब्रह्मणा देवकृत" देवैर्दृष्ट तयोर्लक्षणम्। तदेव स्पष्टयति।

सं मनसा नेषि गोभिः सꣳ सूरिभिर्मघवन्त्सꣳ स्वस्त्या॥ सम्ब्रह्मणा देवकृतं यदस्ति सन्देवानाꣳ सुमतौ यज्ञियानाꣳ स्वाहा॥१५॥

संवर्चसा। संवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवे-

"यदस्ति"। यन्नित्यमित्यर्थः। संगमयसि च "देवानां सुमतौ"। तृतीयया विपरिणामः। शोभनया मत्या। "यज्ञियानां" यज्ञसंपादिनाम्। यस्त्वमस्मानेवं सर्वैर्मनःप्रभृतिभिः संगमयसि तस्मै ते एतद्धविः "स्वाहा" सुहुतमस्तु इति शेषः॥ १५॥ "संवर्चसा पयसा"। व्याख्या-

तम् ॥ १६ ॥ “धातारातिः” । षट् देवता अस्यामृचि । “धाता सविता प्रजापतिः अग्निः
त्वष्टा विष्णुः” एते षट् “निधिपा देवाः । इदं समिष्टयजुर्लक्षणं “राति” र्दानम् । “जुषन्तां”
सेवन्ताम् । जनयित्वा च “प्रजयारराणाः” । यजमानस्य वन्धिन्या प्रजया संरममाणाः ।
यजमानाय एतद् द्रविणं, दधातेति प्रथमपुरुषस्य स्थाने मध्यमपुरुषश्छान्दसः, दधतु

न । त्वष्टा सुदत्तो विदधातु रायोनु माष्र्ट्टु तन्वो यद्विलिष्टम् ॥१६॥
धाता रातिः सवितेदञ्जुषन्ताम्प्रजापतिर्निधिपादेवोऽअग्निः ॥
त्वष्टा विष्णुः प्रजया संरराणा यजमानाय द्रविणन्दधात स्वा-
हा ॥ १७ ॥ सुगा वः । सुगा वो देवाः सदनाऽअकर्म यऽआजग्मे

स्थापयन्तु । एवं तावदस्य मन्त्रस्य सम्यग्योजना प्रतिभाति ॥ १७ ॥ “सुगावः” । हे देवाः
सुगमनीयानि “वो” युष्माकं “सदनानि” स्थानानि । अकर्म कृतवन्तो वयं ये यूयं “आजग्मुः” ।
आजग्मुरागताः । “सवनमिदं जुषाणाः” यज्ञमेतं सेवमानाः । अथेदानीं परिसमाप्ते यज्ञे ।

"भरमाणा वहमाना हवींषि"। ये तु रथिनः ते रथेषु "भरमाणा (१) वहमाना हवींषि"। ये तु अरथिनस्ते तु स्कन्धावसक्तिकासु हवींषि वहमानाः। "अस्मे धत्त वसवो वसूनि"। अस्मासु दत्त हे वसवो वासयितारः "वसूनि" धनानि ॥ १८ ॥ "याँ आवहः"। हे भगवन्नग्ने यान् "आवहः" आहूतवानसि। "उशतः" कामयमानान्। हे "देव देवान् तान् प्रेरय"।

दऽँसवनञ्जुषाणाः ॥ भरमाणाव्वहमानाहवीᳬष्यस्मे धत्तव्वसवोव्वसूनिस्वाहा ॥ १८ ॥ याँ२ ॥ ऽआवहः। याँ२ ॥ ऽआवहऽउशतोदेवदेवाँस्ताम्प्रेरय स्वे अग्ने सधस्थे ॥ जक्षिवाᳬसः

अनुमज्यादिभिः। "स्वे" स्वकीये "सधस्थे" सहस्थाने गृहे। किमुक्त्वा प्रेरयेतिचेदत आह। ये यूयं "जक्षिवांसः" पशून् पुरोडाशञ्च। "पपिवांसश्च" सोमम्। "विश्वे" सर्वे ते इदानीं परिसमाप्ते यज्ञे "असुं घर्मं स्वरातिष्ठतानु"। 'अनुर्लक्षण' इति कर्मप्रवचनीयसंज्ञा। "असु"

(१) भरमाणा पुष्णन्त इत्यर्थो वा ॥ १८ ॥

प्राणवातमन्वातिष्ठत। "घर्मं" चादित्यमन्वातिष्ठत। "स्व"र्द्युलोकमन्वातिष्ठत। तस्य यत्र गृहा इत्यभिप्रायः ॥ १९ ॥ "वयᳫं हित्वा"। अग्निं व्यवहृजति। वयमेव त्वां "प्रयति" प्रगच्छति प्रारभ्यमाणो "यज्ञे अस्मिन्" हे "अग्ने होतारमवृणीमहि" इतवन्तः। "इह" मन्त्रे अग्निर्देवो दैव्यो होतेति। त्वञ्च इतः सन् "ऋधगयाः"। ऋध्नोतेः पूर्वं पदं, यजते-

पप्रिवाᳫंस प्रचुव्विस्स्व सु ह्नम्म ᳫंस्व राति ष्ठ तान् स्वाहा ॥ १९ ॥
व्वयᳫं हि। त्त्वांप्रय तियज्ञे ऽअस्मिन्नग्ने होतार मवृ णीमहीह ॥
ऋधंगय ऽऋधंग् ताश्रमिष्ठाः प्रजानन्य ज्ञमुप याहिव्वि द्वान्त्स्वा-
हा ॥ २० ॥ देवांगातु विदः। देवांगातु विदो ग तु व्वित्त्वा ग तु

रूपम् पदम्। ऋभुवन्तयाज्ञीः समर्द्धयन्निष्टवानसि। किञ्च "ऋधगुताशमिष्ठाः"। "उत" अपि च ऋभुवन्नेव यज्ञप्रायश्चित्तं शमितवानसि। इदानीं "प्रजानन्यज्ञ" परिसमाप्तिं गृह "मुपयाहि। विद्वान्" जानानः स्वमधिकारम् ॥ २० ॥ "देवागातुविद" इति व्याख्यातम् ॥ २१ ॥ यंत्त्वं

व्यवहजति। "यज्ञ यज्ञं गच्छ"। हे यज्ञ यज्ञमेव त्वं गच्छ"। नहि त्वत्तोऽन्यदस्ति सर्वात्मना हि त्वमित्यभिप्रायः। "यज्ञपतिं" यजमानं "गच्छ", "स्वां" च "योनिं" गच्छ। द्रव्यं देवता हि यज्ञस्य स्वा योनिः। "एष ते यज्ञः"। अयं तव शरीरभूतो यज्ञः संस्कृतः ऋत्विग्भिः। हे "यज्ञ-

मित ॥ मन सस्पतऽइ मन्देंवयु ज्ञ०ंस्वाहाव्वाते धाः ॥ २१ ॥

यज्ञ युज्ञम्। यज्ञ युज्ञङ्गच्छ ज्ञपतिङ्गच्छस्वांय्योनिङ्गच्छस्वाहा ॥

एषते य ज्ञोय ज्ञपतेस हसूक्तवाक ं सर्व्ववीर स्तज्जु षस्व स्वा

हा ॥ २२ ॥ * माहिर्भूः। माहि र्भूर्म्मापृदाकुः। उरु०ंहीराजा व्व

पते सह सूक्तवाकः"। साङ्गः सर्वशरीरः। सर्वैर्वीरैरुपेतः। सोमः पशुः सवनीयाश्च पुरोडाशा वीरा उच्यन्ते। "तं" च "जुषस्व" आसेवस्व ॥ २२ ॥ कृष्णविषाणमेखले चात्वाले-ऽमास्यति (१)। "माहिर्भूः"। व्याख्यातम्। आपोऽवभृथमभ्यवाचयति। "उरुं०हि"। वारुणी

विष्टप्। एकं तावद् उरुं विस्तीर्णं हि अतिशयेन "राजा वरुणः चकार" कृतवान्। "सूर्याय"। षष्ठ्यर्थे चतुर्थी। सूर्यस्य पन्थानम्। "अन्वेतवा उ"। अन्वेतवान् अन्वहमागमनाय। अपरम्। "अपदे पादाप्रतिधातवे अकः"। यत्र पदं दत्तं प्रतिमुद्रान्यायेन नोपलभ्यते तस्मिन्

उरुꣳ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ॥ अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित्। नमो वरुणा

पदे पथि अन्तरिक्षलोके। "पादा" पादानाम्। षष्ठीबहुवचनस्थाने आकारः। "प्रतिधातवे" प्रतिनिधानाय। अकः कृतवान् आलम्बनमितिशेषः, सूर्यस्यैव। "उतापवक्ता हृदयाविधश्चित्"। उत अपि च। अपवक्ता अपवदिता आक्षेप्ता। हृदयाविधश्चित्। चिच्छब्दोऽप्यर्थे। हृदयं

(१) कृष्णविषाणमेखले चात्वाले प्रास्यति माहिर्भूः, उरुं हीति वाचयन्ति, नमो वरुणायेति वाचयत्यपोक्रमम-न्निति। का० १०।८।१३-१५-२१॥२३॥

यो विध्यति समीप्य,चार्य्योचार्यं पिशुन: तस्याप्यपवदिता किमुतान्यं पापमप्य.तत्कारिणामिति। य इत्थं भूतो वरुण: सोवभृथाय तीर्थं ददात्विति शेष:। अपोवक्रमयन्वाचयति। "नमोवरुणाय"। "अधिष्ठित:" आक्रान्त: "वरुणस्य पाशो" नालं बन्धनाय ॥ २३ ॥ समिधं प्रासग्राभिजुहोति (१)। "अग्नेरनीकम्"। आग्नेयी त्रिष्टुप्। अग्नेरनीकमिति परोक्षलिङ्गम्। "इमेदमेसमिधं यच्चाग्ने" मन्त्रलिङ्गमेवास्मिन्वाक्ये अत एवं व्याख्यायते। यस्य तवाग्ने: सत: अनीकं सुखम् "अप" उदक्ष

यो अभिष्ठितो वरुणस्य पाशः ॥ २३ ॥ अग्नेरनीकम्। अग्ने

"माविवेश" प्रविवेश प्रविष्टम्। "अपान्नपा त्सं त्वकं प्रति रक्षत् "असुर्यम्" असुरस्य स्वं-माया-दिकम्। स त्वमिदानीं दमेदमे। दम इति गृहनाम। यज्ञगृहे यज्ञगृहे। अश्वमेधविदया वीप्सा। तत्र हि नानावस्थान्यहानि भवन्ति। "समिधं यक्षि" यजति। यजति: संगति-करणार्थ:। समिधं संगतां कुरु आत्मसात्कुरु। ततोनन्तरं "हृतं" प्रति "ते" तव "जिह्वा"। ज्वाला "गुरुचरण्यत्" उच्चरन्तु समिध: सकाशात ॥ २४ ॥ म्टजीदवुभं त्लावयति।

(१) भाप्य समिधं चतुर्थं होतेनाभिजुहोति पर्वङ्मोकमिति। का० १०।८।२२ ॥ २४ ॥

"समुद्रे ते"। सोमो विराट्। यदित्ययं निपातो हृदयशब्देन सह सम्बध्यते समानलिङ्गत्वात्। यत् हृदयं समुद्रे ते तव "अप्सु अन्तः" अपां च अन्तर्मध्ये वर्त्तते तत्र त्वा गमयामि। तत्रस्थं च त्वां "संविशन्तु ओषधीः"। "उत अपि च आपः"। किंच "यज्ञस्य" च "सूक्तोक्तौ" शोभन-

रत्नीकामं पश्चाविवेशापान्नपात्प्रतिरक्षन्नसुर्यम्॥ दमेदमे-

समिधं यक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्यत्स्वाहा॥ २४॥

समुद्रे ते हृदयमप्स्वन्तः सन्त्वा विशन्त्वोषधीरुतापः॥ यज्ञ

वचनोच्चारणेन "नमोवाकेन" नमस्कारवचनेन च "विधेम"। विधितिः स्थापनार्थः। हे "यज्ञ-पते" सोम॥ २५॥ विश्वज्योपतिष्ठते (१)। "देवीरापः"। पङ्क्तिर्बृहती वा। अपां च सोमस्य च संगतिं वदति। हे देव्य आपः "एष" सोमो "वः" युष्माकं गर्भो "वर्त्तते"। "तं

(१) समुद्रे त इति अजोपकुम्भं प्लावयतीति। का० १०।८।१॥ २५॥

(२) देवीराप इति विश्वज्योपतिष्ठते। का० १०।८।२॥ २६॥

सुप्रीतं" साधुतर्पितम्। सुभृतं सुपुष्टम् "विभृतं" धारयत। हे "देव सोम एष ते लोकः" स्थानं तस्मिन्नस्थितः "शं च वक्ष्व" परि च वक्ष्व। शं सुखमस्मान्प्रति वह प्रापय। परिवह च, अस्मत्त. सर्वा आर्त्तीः तस्मिन्नः शं चैधि। "सर्वाभ्यश्च न आर्तिभ्यो गोपायेति" श्रुतिः ॥ २६ ॥

स्य त्वा यज्ञपते सूक्तोक्तौ नमोवाकविधेम यत्स्वाहा ॥ २५ ॥ देवीरापः। देवीराप एष वो गर्भस्तं सुप्रीतं सुभृतं बिभृत ॥ देवसोम एष ते लोकस्तस्मिञ्छं च वक्ष्व परि च वक्ष्व ॥२६॥ अवभृथनिचुम्पुण। निचेरुरसि निचुम्पुणः॥ अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतम्पुरुराव्णो देवरिषस्पाहि देवानां समिदसि ॥२७॥ *

मज्जति (१)। "अवभृथे"ति। व्याख्यातम्। समिधमादधाति (२)। "देवानाम्" देवीभूतानामस्माकं समिन्धनं त्वं भवसि ॥२७॥ इत उत्तरमनूवन्ध्यायदि गर्भिणी स्यात्तत्र प्रायश्चित्तरू-

(१) अवभृथे मज्जति। का० १०।८।२। (२) स्नानोत्तरमाहवनीयमेत्य तस्मिन् समिधं दध्यात् ॥ २७ ॥

कालावच्छिन्न इव "गर्भो जरायुणा सह"। जरायुर्गर्भवेष्टनम्। कथं चलतु इत्यत उपमया दर्शयति। "यथायं वायुरेजति यथा" च "समुद्र एजति। एतौ हि सदाचलनौ। "एवमयं दशमास्यः"। "तमेतदथ दशमास्यं सन्तं ब्रह्मणैव यजुषा दशमास्यं करोती"ति श्रुतिः।

एज॑तु॒ दश॑मास्यः। एज॑तु॒ दश॑मास्यो॒ गर्भो॑ ज॒रायु॑णा स॒ह॥ य॒थायं॑ वा॒युरेज॑ति॒ यथा॑ समु॒द्र एज॑ति॥ ए॒वायन्दश॑मास्यो॒ अस्र॑ज्ज॒रायु॑

"अस्रत"। स्रंसतेरेतद्रूपं स्रवतेर्वा। स्रंसतु स्रवतु वा। "जरायुणा सह" अस्रत् अपसरतु गर्भो वेष्टनेन सह॥ २८॥ अवदानान्यनु जुहोति (१)। "यस्यै तेयज्ञियः"। अनुष्टुप्। वशोच्यते। यस्यास्ते तव यज्ञियो "गर्भः" यज्ञार्हो गर्भः। यस्याश्च तव "योनिर्हिरण्ययी"-

(१) निरैषमाणमभिमन्त्रयत एजतु दशमास्य इति। का॰ २५।१७॥२८॥

(१) अवदानान्यनुजुहोति यस्यै त इति। का॰ २५।१०।११॥ २९॥

क्रियते ब्रह्मणा यजुषा तां त्वां गर्भेण संगमयामि। यस्य च गर्भस्य "अङ्गानि अह्रुता" अह्रुतानि अनवखण्डितानि। 'ह्रुह्वरेश्छन्दसी'ति ह्रुरादेशः। तं गर्भं "मात्रा" अनुरूपया लक्षणया "समजीगमं" संगमयामि ॥ २९ ॥ अध्वर्युरनुहोममेव जुहोति (१)। गर्भः सूयते इन्दुस्तवेन। "पुरुदस्मो" बहुदानः। "विषुरूपः" बहुरूपो हि गर्भो भवति। "इन्दुः"

यासह ॥ २८ ॥ यस्यै ते। यज्ञियो गर्भो यस्यै योनिर्हिरण्ययी ॥ अङ्गान्यह्रुता यस्य तं मात्रा समजीगमᳬ स्वाहा ॥ २९ ॥ पुरु-

सोमः यतो हि सोमसंस्तवो विद्यते। "अन्तः" उदरे व्यवस्थितो "महिमानं" महाभाग्यम् "आनञ्ज" अञ्जतेर्व्यक्तीकरणार्थस्य तद्रूपम्। व्यक्तीकरोति। "धीरः" मेधावी। इत्थं भूतं "महिमानमानञ्ज धीरो" येन "एकपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टापदीं" मपि वशामवगणयित्वा भूत-

(१) स्विष्टकृतमनु (अध्वर्युणा स्विष्टकृद्धोमे कृते प्रतिप्रस्थाता अपरया स्रुचि अन्वं गर्भरसमवदाय जुहुयात्) जुहोति पुरुदस्म इति। का० २५।१०।१५ ॥ ३० ॥

रूपेण "भुवनानि" भूतजातानि "अनुप्रथन्ताम्"। यथाया अङ्गमनुप्रथयते। हविरेव भूतानां भविष्यतीत्यभिप्रायः। कथमिव यथा चतुष्पदी सती एकपद्यादिभेदैरुच्यते। अवसृत्य स्तूयत इति ब्रूमः। यथेत्येकपदी, वपया अङ्गैश्च द्विपदी, उपयट्होमैश्च त्रिपदी, चतुष्पदी पत्नीसंयाजैश्च-

ऽउस्स्रोविषु रूपं। पुरु द्रप्सो विषु रूपऽइन्दुरन्तर्महिमानमान

ञ्ज धीरः। एकपदीन्द्विपदीन्त्रिपदीञ्चतुष्पदीमष्टापदीम्भुवनानु

प्रथन्ताᳬं स्वाहा ॥३०॥ मरुतो यस्य। मरुतो यस्य हि क्षये पाथा दिवो वि

तुर्भिर्वा पादैः। अष्टापदी तु गर्भसन्धिभिः पादैः ॥ ३० ॥ जुहोति (१)। "मरुतो यस्य"। मारुती गायत्री। "मरुतः यस्य क्षये" निवासे गृहे। 'क्षयो निवासे' इत्याद्युदात्तः। "पाथ"। पा पाने, शपो लुप्। पिबथ पानादीन्कुरुथ। हे "दिवो विमहसः"। द्युलोकस्य महयितारः

(१) समिष्टयजुरन्ते (समिष्टयजुर्होमान्ते) पार्श्वे (अग्नौ) जुहुयात (स्वाहान्तेन मन्त्रेणोपवेष्टितगर्भं जुहोति। तिष्ठन् मरुत्तइत्य स्वाहाकृत्येति (स्वाहाकारमनुच्चार्य)। का० २५।१०।१० ॥ ३१ ॥

पूजयितारः। "ससुगोपातमोजनः"। ससुगुप्ततमो यजमानजनः। युवाङ्, प्रानो न मयमस्तोत्यभिगतयः॥ ३१ ॥ अङ्गारैरभिसमूहति। "महीद्यौः"। द्यावापृथिव्यौ गायती। महती द्यौः "पृथिवी च नः" अस्माक "मिमं यज्ञं मिमिक्षताम्"। मिह सेचने। सिञ्चतु मवैः स्वैर्भोगैः। "पिपृतान्"। बिभृतां नः अस्मान् "भरीमभिः" भरणैः हिरण्यपशुधान्यादिभिः॥ समाप्तोऽग्निष्टोमः॥३२॥

मह्स॑ः ॥ स्सु॑गो॒पात॑मो॒ जन॑ः ॥ ३१ ॥ म॒ही द्यौः । पृ॑थि॒वी च॑ न

ऽइ॒मं य॒ज्ञं मि॑मिक्षताम् ॥ पि॒पृ॒तान्नो॒ भरी॑मभिः ॥ ३२ ॥ * आ-

अथ षोडशी अग्नेपत्न्येतस्मान्मासात् (१)। "आतिष्ठ"। तिस्र ऐन्द्र्योऽनुष्टुभः। आतिष्ठ अधितिष्ठ आरोह हे "वृत्रहन्" वृत्रस्य हन्तः "रथं युक्तौ" ते तव "ब्रह्मणा" तयोलक्षणेन रन्द्रागच्छेत्यादिना "हरी" हरितवर्णावश्वौ। तौ हि आह्वानानीन्द्रस्योपश्रुत्य, प्राप्नु आवयोर्नियोजनकाल इति मन्यमानौ स्वयमेवात्मानं रथे युञ्जाते अत एवमाह। "युक्ता

(१) महीद्यौरित्यङ्गारैः (यामिते चिप्तं गर्भम्) अभ्यूहतीति। का० २५।१७।१८॥ ८॥

ते ब्रह्मणा हरी" इति। अथेदादौ रथारूढस्य "अर्वाचीनम्"। अस्मदभिमुखं "सु" साधु "ते" तव "मनः" हे इन्द्र "ग्रावा" सोमाभिषवकारी "कृणोतु" करोतु "वग्नुना" वग्नुरितिवाग्नामसु पठितम्। सोमाभिषवध्वनिना। "उपयाम गृहीतोसीन्द्राय त्वा षोडशिनं गृह्णामि

तिष्ठ। वृत्रहन्न्रथं युक्ता ते ब्रह्मणा हरी ॥ अर्वाचीनꣳ सु ते मनो ग्रावा कृणोतु वग्नुना ॥ उपयामगृहीतोसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥ ३३ ॥ * युक्ष्वा हि। केशिना हरी

एष ते योनिः इन्द्राय त्वा षोडशिने ॥३३॥ द्वितीयो ग्रहणमन्त्रः। "युक्ष्वाहि"। युजिर योगे। युङ्ग्धि। "हि" यस्मात् "केशिनौ" प्रलम्बकेशरौ "हरी" हरितवर्णावश्वौ "वृषणौ" वर्षितारौ सेक्तारौ तरुणौ। "कक्ष्यप्रा" कक्ष्या अश्वस्य संनाहरज्जुः। प्रा पूरणे। कक्ष्यां यावापूरयतः तावेव-

(१) प्रात सवनेऽतिग्राह्यान् गृहीत्वा षोडशिनं खादिरेण चतुःस्रक्तिना (चतुष्कोणेन) आतिष्ठ युक्ष्वाहीति। का० १२।५।२ ॥ ३३ ॥

मुच्येते। तौ युक्ता रथे तमास्थाय "अथ" समनन्तरमेव "नो"ऽस्माकम् "इन्द्र सोमपाः" सोमपानशील: "गिरामुपश्रुतिं चर" स्तुतिलक्षणां गिरं वाचमुपश्रुत्य चर आगच्छास्मद्-गृहम्। "उपयाम" इत्यादि समानम् ॥ ३४ ॥ तृतीयोमन्त्रविकल्पः "इन्द्रमिद्धरी"। इच्छन्द

त्रीवृष्टं वाकरच्चाय् । अर्थान्नऽइन्द्रसोमपागिरामुपश्रुतिं चर ॥ उपयामगृहीतोसीन्द्राय त्वा षोडशिनऽएष ते योनिरिन्द्राय त्वा षोडशिने ॥ ३४ ॥ ॰ इन्द्रमित्। इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् ॥ ऋषीणाञ्च स्तुतीरुप यज्ञञ्च मानुषाणाम् ॥ उपया।

एवार्थे। इन्द्रमेव हरितवर्णावश्वौ "वहतः" प्रापयतः। * अत्र "ऋक्सामे वै हरी" इतिश्रुते: द्विवचनान्तहरिशब्दस्य ऋक्सामवाचकत्वात् हरितवर्णावश्वाविन्द्रमेव वहतम् इति व्याख्यानं न घटते। हरितवर्णयोरश्वयो: सर्वत्र सुलभत्वात्। इन्द्राश्वयोश्च हरितवर्णत्वम्-

ठ॰मी"त्यादिस्तुतिपर्य्यालोचनया नानावर्णच्छन्दोमये ऋक्सामे एवेन्द्रं वहत इति युक्तं न तु हरितवर्णावश्वौ। * कथं भूतमिन्द्रम् "अप्रतिधृष्टशवसम्"। न प्रतिधर्षयितुं शक्यते शवो बलं यस्य स अप्रतिधृष्टशवाः तमप्रतिधृष्टशवसम्। क्व वहत इत्याह। "ऋषीणां" च वशिष्ठप्रभृ-

मगृहीतोसीन्द्रायत्वाषोडशिनऽएष ते योनि रिन्द्रायत्वाषोडशि-ने ॥ ३५ ॥ * यस्मान्न। जातः परोऽअन्न्योऽअस्ति यऽआवि वे श भुवनानि विश्श्वा ॥ प्रजापतिःप्प्रजया सᳯरराणस्त्त्रीणि ज्ज्यो

तीनां च "स्तुतीः"। "उप"समीपे। "यज्ञं च मानुषाणाम्"। मनुष्याणां यजमानानामुप समीपे वहत इति वर्त्तते। "उपयाम" इत्यादि समानव्याख्यानम् ॥ ३५ ॥ षोडशिग्रहकुप-

---

* पर्वेत्यारभ्य—षष्ठी * इत्यन्तं वा॰ पु॰ नास्ति।

तिष्ठते (१)। "यस्मान्नजातः"। त्रिष्टुप्। षोडशी परब्रह्मरूपेण स्तूयते। यस्मा"दन्यःपर" उत्कृष्टो जातो देवो नास्ति न विद्यते महिमातस्मा"विवेश" आविशति "भुवनानि" भूतजातानि "विश्वा" विश्वानि सर्वाणि अन्तर्यामिरूपेण। तथाच श्रुतिः। "यः सर्वेषु भूतेषु तिष्ठति

तीꣳषि सचते सषोडशी ॥३६॥ इन्द्रश्च। सम्राड्वरुणश्च रा जा तौ ते भक्षं चक्रतुरग्र एतम् ॥ तयोरहमनु भक्षं भक्षया

यत्र प्रजापतिर्भवति"। "प्रजया संरराणः" संरममाणः क्रीडन्। यत्र "त्रीणि ज्योतींषि" अग्निवायुसूर्यलक्षणानि "सचते" सेवते परमात्मरूपेण स षोडशीग्रहः ऋषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानयुक्ता ॥ ३९ ॥ षोडशिनं भक्षयति (१)। "इन्द्रश्चसम्राट्"। त्रिष्टुप् यजुरन्ता। सह

(१) उपस्थापनं यस्मान्न जात इति। का० १२।५।१८ ॥ २९ ॥

(१) इन्द्रश्च सम्राडिति भक्षणम्। का० १२।५।२०। इतिषोडशिग्रहः ॥ ३० ॥

प्राणेनेति यज्ञः। इन्द्रवरुणौ देवता षोडशीग्रहो वा। "इन्द्रश्च सम्राट्" यो वाजपेययाजी। "वरुणश्च" चकारौ समुच्चयार्थीयौ। "राजा" यो राजसूययाजी। "राजा वै राजसूयेनेष्ट्वा भवति सम्राट् वाजपेयेनेति" श्रुतिः। "ता"विन्द्रवरुणौ "ते" तव हे षोडशिग्रह "भक्षं चक्रतुः" कृतवन्तौ "अग्रे" प्रथमम्। एतमित्यस्य भक्षेण सह संबन्धः। "तयो"र्भक्ष"मनु" कुर्व"न्नहं" भक्षयामि। वाग्देवी जुषाणा सोमस्य तृप्यतु सह प्राणेन स्वाहा ॥३७॥ * अग्ने पवस्व। अग्ने पवस्व स्वपा अस्मे वर्च्चः सुवीर्यम् ॥ द-

"भक्षयामि"। मदीयेन च भक्षणेन "वाग्देवी जुषाणा" सेवमाना "सोमस्य तृप्यतु सह प्राणेन" ॥ ३७ ॥ अथातिग्राह्यपुरोरुचः तिस्रो गायत्र्याग्नेन्द्रसूर्यदेवत्याः (१)। "अग्ने पवस्व"। हे भगवन्नग्ने पवस्व। पवतिः प्रवृत्त्यर्थोऽन्तर्भावितण्यर्थः। पवस्व प्रवर्तयस्व। यस्त्वं "स्वपा"

अथ द्वादशाहमन्त्राः। (१) षष्ठयः पञ्चमा (तदाख्यः क्रतु) ततातिग्राह्यग्रहणं त्र्यृचे पूर्वोऽग्ने पवस्वो तिष्ठन्नद्य-मित्यग्र मेकैकम् भ्राजेवर्षखिन्निन्द्रौजिष्ठ सूर्यभ्राजिष्ठेतिभक्षणं यजमानैरिति। का० १२।३।१-२ ॥ ३८ ॥

चनस्थाने छान्दसं रूपमदृश्यमिति। दृश्यन्ते अस्य सूर्यस्य प्रज्ञानहेतुत्वात् "केतवो रश्मयः"। केतुरिति प्रज्ञानामसु पठितम्। "वि"इत्यनर्थको निपातः। अथवा व्यदृश्यमिति संबन्धः। "जनान् अनु"अनुगताः भ्राजन्तः देदीप्यमानाः। कथंभूता दृश्यन्ते। "अग्नयो यथा" अग्नय इव"उपयाम

योजना२ँ॥ ऽअनु॥ भ्राजन्तोऽअग्नयोयथा॥ उपयामगृहीतोसि सूर्य्यायत्वाभ्राजायैषतेयोनि१ँ सूर्य्यायत्वाभ्राजाय॥ सूर्व्यभ्राजिष्ठभ्राजिष्ठस्त्वन्देवेष्वसि भ्राजिष्ठोहम्मनुष्येषुभूयासम्॥ ४०॥ * उदुत्यम्। उदुत्यञ्जातवेदसन्देवंव्वहन्ति

गृहीतोसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजाय"। प्रार्थयति। हे"सूर्य भ्राजिष्ठ"अतिशयेन भ्राजिष्ठ यथा"भ्राजिष्ठस्त्वं देवेष्वसि"एवं"भ्राजिष्ठोहं मनुष्येषु भूयासम्"॥४०॥ विषुवति गृह्

गृह्णाति (१)। "उदुत्यञ्जातवेदसम्। व्याख्यातम्। देवार्पन्तु॥ ४१॥ अथ रोहिणीगोरभि-मन्त्रणं द्वाभ्यामृग्भ्यां महापङ्क्तिप्रस्तारपङ्क्तिभ्यां द्रोणकलशमवघ्रापयति(२)। "आजिघ्र"। कुसुरुविन्दोरार्षम्। मह्नीतिगोनामसु पठितम्। आभिमुख्येन जिघ्र द्रोण "कलश" हे "महि"। किञ्च

केतवः ॥ दृशे विश्वाय सूर्यम् ॥ उपयामगृहीतोसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजाय ॥४१॥ *

"आत्वाविशन्त्विन्दवः"। आविशन्तु त्वामिन्दवः सोमाः य एते द्रोणकलशस्य बिन्दवः। किञ्च। "पुन"रपि "ऊर्जा" अन्नेन सहितानि "वर्तस्व"। यां त्वामेवं स्तुमः "स नः" अस्माकं

(१) उदुत्यमितिग्रहग्रहणम्। का० १२।२।११ ॥ ४१ ॥

(२) हविर्धानाग्नीध्रयोरन्तरे द्रोणकलशमेनाम् (गर्भिणीमनारोहवहीनं निवत्यं गोसहस्रं दक्षिणास्ति तत्र सहस्र सङ्ख्यापूरणी रोहिणीधेनुस्ता) आघ्रापयति आजिघ्रेति। का० १२।४।८॥ ४२॥

"सहस्र" गवां यदेतदस्माभिर्दत्तं तत् "धुक्ष्व"। दुहतिर्दोनार्थः पुनर्देहि। त्वत्प्रसादाच्च "उरुधारा" बहुधारा "पयस्वती" पयसा संयुता "पुन"रपि "मामाविशतात्" आविशतु। "रयिः" धनम् ॥ ४२ ॥ दक्षिणेऽस्याः कर्णे यजमानो जपति (१)। "इडे रन्ते"। हे इडे।

आजिघ्र ॥ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः ॥ पुनरूर्जा निवर्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्मा विशताद्रयिः ॥ ४२ ॥ इडे रन्ते । इडे रन्ते हव्ये काम्ये

इडानाम मनोर्दुहिता तया गौरुपमीयते। इडेव त्वमसि। रन्ते रमयतीति "रन्ता"। हव्ये हूयन्ते सा विकारा यज्ञे प्विति "हव्या"। "काम्ये।" मनुष्याणां ह्येतासु कामाः प्रविष्टाः। "चन्द्रे"। चन्द्रवाल्लादयतीतिचन्द्रा। "ज्योते"। तस्यैव ज्योतिर्ज्योत्स्ना। द्युतदीप्तौ

(१) इडेरन्त इति दक्षिणेऽस्याः कर्णे यजमानो जपति। का० [illegible]

"अस्यज्योता"। "अदि"ति अदीने। "सरस्वति"। सर इत्युदकनाम। सर्तेः। तद्वति। हे "महि"महति। "विश्रुति" विविधं श्रूयत इति विश्रुति। एतानि "ते" तव हे "अघ्न्ये" अहन्तव्ये "नामानि"अतिशयगुणयुक्तानि तैरभिहिता सती"देवेभ्यो मां सुकृतं"इडत-

चन्द्रे ज्योतेदिति सरस्वति महि विश्रुति ॥ एताते अघ्न्ये नामानि देवेभ्यो मा सुकृतम्ब्रूतात् ॥ ४३ ॥ * विन ÷ ॥ विनऽइन्द्र मृधोजहि नीचायच्छपृतन्यतः ॥ योऽअस्माँ२ऽअभिदा

कारिणं "ब्रूतात्" ब्रूहि ॥ ४३ ॥ महाव्रतीयं ग्रहं गृह्णाति (१)। "विनइन्द्र"। अनुष्टुप्। इन्द्रो विमृद्गुणयुक्तो देवता। "वि न इन्द्र मृधो जहि" विजहि विनाशय नः अस्माकं हे इन्द्र मृधः

(१) ग्रहं गृह्णाति विनइन्द्र, वाचस्पतिं विश्वकर्मनुविवेति। का॰ १२।२।१७ ॥ ४४ ॥

संग्रामान्। किञ्च "नीचा यच्छ पृतन्यतः"। ये पृतनां संग्राममिच्छति ते पृतन्यतः तान्पृतन्यतो मनुष्यान् नीचा यच्छ नीचैर्निगृहाणीष्व। यश्चा "स्मान् अभिदासति"। दासृउपक्षये। उपक्षिपति तमधरं निकृष्टमर्वाचीनं तमो गमय। "उपयाम गृहीतोसीन्द्राय त्वा विमृध एष ते योनिरिन्द्राय त्वा विमृधे"। व्याख्यातम् ॥ ४४ ॥ द्वितीयोमन्त्रविकल्पः (१) वाच-

सुत्तरधरङ्गमयु तम ॥ उपयामगृहीतोसीन्द्रायत्वाविमृधंएषते योनिरिन्द्रायत्वाविमृधे ॥ ४४ ॥ * व्वाचस्पतिं ।

सति"। त्रिष्टुप् विश्वकर्मणी। स नो विश्वानीति तदः यच्छाद्यदोध्याहारः कर्त्तव्यः। नित्यसनन्बौ हियत्तदौ। यं वाचोधिपतिं प्राणरूपेण इन्द्ररूपेण वा विवक्षते। "तस्मादाहुतिरिन्द्रोवागि"तिश्रुतिः। "विश्वकर्माणं" सर्वस्य कर्तारम्। "ऊतये" अवनाय तर्पणाय वा। "मनोजुवम्"। मनस इव यस्य जुवः मानोजुवः स एवमुच्यते। मनोगतिमित्यर्थः। "वाजे"

अग्ने अस्मिन्महाव्रतीयलक्षणे विषयभूते। "अद्य" अस्मिन् द्यवि। "हुवेम"। आह्वयामः। "स" आहूतः सन् "नो"ऽस्माकं "विश्वानि" सर्वाणि "हवनानि" आह्वानानि "जोषत्" जुषतां सेवताम्। "विश्वशम्भूः"। शमिति सुखनाम। सर्वस्य सुखेन भावयिता। "अवसे"

विश्वकर्म्माणमूतये मनोजुवं वाजेऽअद्याहुवेम॥ सनो विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्म्मा॥ उपयामगृहीतोसीन्द्राय त्वा विश्वकर्म्मणऽएष ते योनिरिन्द्राय त्वा विश्वकर्म्मणे॥ ४५॥ * विश्वकर्म्मन्हविषा॥ विश्वकर्म्मन्हविषा

अव इत्यन्ननाम। अस्माकमन्नदानाय "साधुकर्मा"। "उपयामगृहीतोसी"ति व्याख्यातम्॥ ४५॥ अपरो मन्त्रविकल्पः। "विश्वकर्मन् हविषा"। त्रिष्टुबैन्द्री वैश्वकर्मणी च। हे विश्वकर्मन् अन्नेन हविषा महाव्रतीयलक्षणेन "वर्द्धनेन" च वर्द्धयिता। "त्रातार"जगतः "इन्द्रम्

य० श्रवणो:" कृतवानसि। "श्रन्य" च। "तस्मै" चैवंप्रभावायेन्द्राय "विशो" मनुष्याः "सम-
य० नमन्तपूर्वी:" सन्नताः पूर्वे वशिष्ठप्रभृतयः इदानीन्तना अपि सन्नताः। अयमेव हि इन्द्रः "उग्रः"
स० उद्गूर्णदण्डः "विहव्य"श्च। विविधेषु कार्येषु आह्वयत इति विहव्यः। "यथा असत्"। पञ्च- ८
१८। वर्द्धनेनत्तु तारमिन्द्रं मक्षणोरवृधाम् ॥ तस्मै व्विशः सम्नमन्त- अ०
उ० पूर्व्वीरयमुग्रो व्विहव्व्यो यथासत्। उपयामगृहीतोसीन्द्रा-
भा० यत्वा व्विश्वकर्म्मणऽएष ते योनिरिन्द्रायत्वा व्विश्वकर्म्मणे ॥ ४६ ॥*

स्यर्थे यात्प्रत्ययः। यतः कारणादसद् भवेत् हे विश्वकर्मन् त्वद्विरसामर्थ्यादिन्द्रस्यायं प्रभाव इत्यभिप्रायः। "उपयाम गृहीतोसीन्द्राय त्वा विश्वकर्मण एष ते योनिरिन्द्राय त्वा विश्वकर्मणे" इति व्याख्यातम् ॥ ४६ ॥ अदाभ्यं गृह्णाति (१)। "उपयाम गृहीतोसि"। देवाना-

(१) अदाभ्यं गण्डूषात्याभिच्च निग्राभ्याः पात्रे तस्मिन् स्थाप्यौ तस्मिं स्तोनपूनवधाय (यस्मिन्नौदुम्बरे पात्रे ऽंशुग्रहो तस्तात्र चोव्यमसस्या निग्राभ्यांस्तंशा अप आनीय तस्मिं स्त्रिस्रः सोमलताः प्रक्षिप्य) अभ्येत्वा गायत्र छन्दसनिति प्रति-

विरम

मार्षम्। "अग्नये त्वां गायत्रच्छन्दसं गृह्णामि"। एकं ग्रहणम्। "इन्द्राय त्वा त्रिष्टुपच्छन्दसं गृह्णामि"। द्वितीयं ग्रहणम्। "विश्वेभ्यस्त्वा देवेभ्यो जगच्छन्दसं गृह्णामि"। तृतीयं ग्रहणम्। एवं सवनदेवताभ्यः स्वच्छंदस्कं सोमं गृहीत्वा। अथेदानीमाह। "अनुष्टुपते" तव

उपयामगृहीतोसि। उपयामगृहीतोस्यग्नयेत्वागायत्त्रछन्दसङ्गृह्णामीन्द्रायत्वात्त्रिष्टुप्छन्दसङ्गृह्णामि विश्वेभ्यस्त्वादेवेभ्योजगच्छन्दसङ्गृह्णाम्यनुष्टुप्तेभिगरः ॥४७॥

हे सोम "अभिगरः"। गृ स्तुतौ। अभिष्टव इत्यर्थः। "यदा ऊर्द्ध्वं सवनेभ्यस्तदानुष्टुभमिति" श्रुतिः ॥४७॥ गृह्णातस्तासु निगृभ्यासु अंशूनावधुनोति। "वेशीनां त्वापत्मन्नाधूनोमि"।

मन्त्रमुपयामसर्वत्राविशेषाद्, (अग्नयेत्वेत्यादिभिर्मन्त्रैः क्रमेणादाय ग्रहणाति, एतैर्मन्त्रैः सोमलतामक्षेप इति केचित्, उपयामेति त्रिष्वप्यादौ योजनीयम्) अनुष्टुप्सह्त्वा इति। का० ।१।१३।१५॥ ४७॥

मेघस्य वृत्रत उदरे शेरत इति वृत्रेश्य उदरस्था आप उच्यन्ते। हे सोम वृत्रेशीनामपां त्वां पत्मन् पतने आधूनोमि कम्पयामि। "कुकूननानां त्वा"। कूङ् शब्दे। अत्यर्थं कुवत्यः शब्दं कुर्वाणाः नमन्ते प्रह्वीभवन्तीति कुकूननाः मेध्या आपः। "भन्दनानाम्"। भदि कल्याणे सुखे

शी॑नान्त्वा। वृ॒त्रेशी॑नान्त्वा॒ पत्म॒न्नाधू॑नोमि कु॒कू॒ननाना॑न्त्वा॒ पत्म॒न्नाधू॑नोमि भ॒न्दना॑नान्त्वा॒ पत्म॒न्नाधू॑नोमि म॒दिन्त॑माना॒न्त्वा॒ पत्म॒न्नाधू॑नोमि म॒धुन्त॑माना॒न्त्वा॒ पत्म॒न्नाधू॑नोमि शु॒क्रन्त्वा॑

च। कल्याणकारिण्यः सुखयित्र्यो वा भन्दनाः। "मदिन्तमानाम्"। अत्यर्थं मदयन्ति तर्पयन्तीति मदिन्तमाः। मादयतेर्‘नाद्घस्ये’तिनुमागमः। "मधुन्तमानाम्"। अतिशयेन मधुस्वादोपेता मधुन्तमाः। "शुक्रं त्वा" शुक्रमक्लिष्टकर्माणं त्वां शुक्रे अक्लिष्टकर्मणि निग्राभ्यालक्षणे

उदके "आधूनोमि"। "अन्होरूपे" दिवसस्य रूपे तदपि शुक्रमेव भवति। "सूर्यस्यचरश्मिषु"। रश्मयस्तु प्रकाशरूपत्वादेवं भवन्ति ॥ ४८ ॥ (१) "ककुभꣳरूपंवृषभस्य"। ककुभमिति महन्नामसु पठितम्। अस्य सोमलक्षणस्य वृषभस्य ककुभमादित्यलक्षणंरूपं "रोचते" दीप्यते। "बृहत्" महत्प्रभावतः "शुक्रः" शुक्रस्य पुरोगाः। शुक्र आदित्यः शुक्रस्य आदित्यस्य पुरोगामी। सोम एव सोमस्य पुरोगामी भवितुमर्हति यस्मात् अतः कारणात् "यत्ते" तव

शुक्रआधूनोम्म्यन्न्होरूपेसूर्य्यस्यरश्मिषु ॥ ४८ ॥ ककुभꣳरूपं ॥
वृषभस्यरोचतेबृहच्छुक्रःशुक्रस्यपुरोगाःसोमःसोमस्यपुरोगाः ॥

(१) पुनोत्यं शुभिर्मौनां लोति गच्छन्नाहवनीयम् इति। का० १२ ५।१७ ॥ ४८ ॥

हे सोम "अदाभ्य" मनुपहिंस्यं नाम "जागृवि" जागरणशीलं तस्मै त्वा गृह्णामि। जुहोति। "तस्मै" ते तव हे सोम "सोमायस्वाहा"। "तत्सोममेवैतत्सोमाय जुहोतीति" श्रुतिः ॥ ४६ ॥ अंशून् सोमे निदधाति (१)। "उशिक् त्वम्"। वश कान्तौ। अस्य क्विपि

यत्ते॑ सो॒मादा॑भ्यं॒ नाम॒ जागृ॑वि॒ तस्मै॑ त्वा गृह्णामि॒ तस्मै॑ ते सो॒म॒ सोमा॑य॒ स्वाहा॑ ॥ ४६ ॥ उ॒शिक्त्वम्। उ॒शिक्त्वन्दे॑व सो॒मा॒ग्नेः प्रि॒यम्पाथोऽपी॑हि व॒शी त्वन्दे॑व सो॒मेन्द्र॑स्य प्रि॒यम्पाथोऽपी॑

उशिगिति भवति। यतः उशिक् कान्तः वल्लभः त्वं "हे देव सोम" अस्माकमतः "अग्नेः प्रियं पाथः" अन्नम् "अपिहि" अपि गच्छ। "वशी" च त्वम्। वश कान्तौ। शेषं

(१) तस्मै त इति जुहोति। का० १२।५।८१ ॥ ४७ ॥

व्याख्यातम्। "अस्मत्सखा"। अस्माकं सखा। शेषं प्रग,तम् ॥ ५० ॥ सर्वोत्थानं देवानामार्षम्। गार्हपत्ये द्वे आहुती जुहोति (१)। "इह रतिः"। उत्क्रामन्तः पशवो नियम्यन्ते। इह यजमानेषु भवतां रतिः रमणम्। रमणातिः संयमनकर्मा। यत एवमत "इहैव" "रमध्वम्"। "इह धृति"र्भूयात्। "इहस्वधृतिः"। यत एवमत इहैव साधु धारणं

हव्य स्कमत्स'खात्वन्दे'वसोम व्विभ्रश्वे'षान्दे वानांम्प्र यम्पाथोपी'-हि ॥ ५० ॥ * इ हरतिंरि हरमध्वमि हधृतिंरि हस्वधृतिःस्वाहा ॥

भूयात्। पशूनां यजमानविषया धृतिः प्रार्थ्यते। द्वितीयां जुहोति। "उपसृजन्"। उष्णिक्। उपसृजन् संसृजन् "धरुणं" धारयितारमग्निं "मात्रे" पृथिव्यै। मातात्र पृथिव्युच्यते।

(१) ग्रंमून् निरषात्य् प्रिकलमिति प्रतिमन्त्रम्। का० १२।५।१८ ॥५०॥

"वरुणो" धारयिताग्नि"र्मातरं" पृथिवी "धयन्" पिबन् "रायस्पोषम्"। "पशवो वै रायस्पोष" इति श्रुतिः। "पशून् अस्मासु दीधरत्"। धारयत, ॥ ५१ ॥ सत्रस्य ऋद्धिं गायन्ति (१)। "सत्रस्य ऋद्धिरसि"। बृहती। यजमानानां संस्तवः। सत्रस्य समृद्धिस्त्वमसि। यतो "ऽगन्म"

उ॒प॒सृ॒जन्ध॒रुणं॑म्मा॒त्रे ध॒रुणो॑मा॒तर॒न्धय॑न्। रा॒यस्पोष॑म॒स्मासु॑ दीधर॒त्स्वाहा॑ ॥ ५१ ॥ स॒त्रस्य॒ऽऋद्धि॑ः। स॒त्रस्य॒ऽऋद्धि॑रस्य॒ग॑न्म॒ज्ज्योति॑र॒मृता॑ऽअभूम ॥ दिव॒म्पृ॒थि॒व्याऽअध्यारु॑हामावि॑दा

आगताः "ज्योति" रादित्यलक्षणम्। "अमृता"श्च "भूम" भूताः। "दिवं" चाध्यारुहाम अध्या-

१ अथ सत्रोत्थानमन्त्र देवदृष्टा। शालाद्वार्ये अन्वारब्धेषु द्रव (सर्वेषु दीक्षितेष्वध्वर्युः सृष्टे विदानीन्तन गार्ह-पत्ये) रतिरिति जुहोति, अपरामुपसजन्निति। का० १२।४।१०-११ ॥ ५१ ॥

रूढाः। पृथिव्याः सकाशात् द्युलोकं चारूढाः सन्तः "अविदाम देवान्" जानीमः पश्यामो देवान् "स्वः" स्वर्गं च पश्यामः "ज्योतिः" आदित्यलक्षणञ्च। अविदाम इत्यनु वर्त्तते (१) ॥५२॥

दक्षिणस्य हविर्द्धानस्याधोऽक्षं संसर्पन्ति। "युवन्तमिन्द्रापर्वता"। अतिच्छन्दा अष्टिः अत्यष्टिर्वा त्र्यवसाना ऐन्द्री। प्रथमोऽर्द्धर्चः ऐन्द्रापार्वतः। हे "इन्द्रापर्वतौ" युवं तं यतमनु तिष्ठतम्। येन यत्नेन "पुरोयुधा" पुरोऽग्रे युत् युध्यति पुरोयुत् तेन पुरोयुधा यत्नेन। "यो नः

# मदेवान्त्स्वर्ज्योतिः ॥ ५२ ॥ युवन्तम्। युवन्तमिन्द्रापर्वता

पृतन्यात्" अप तं तमिद्धतमिति तदो वीप्साश्रवणात् यदोपि वीप्सा क्रियते। यो यः खलु नोऽस्मान्" "पृतन्यात्" संग्रामयेत् योधयेत्। "अप तं तम् इद्धतम्"। अपहतं विनाशयतं खलु। इच्छब्दोऽनर्थकः। "वज्रेण तं तम् इत् हतम्"। वज्रेणेत्यायुधनियमः खल्वामु-

(१) सतस्यर्षि गायन्ति पतस्यकदिरिति। का० १२।४।१२ ॥ ५२ ॥

र्म्म लनाय। व्याख्यातमन्यत् (१)। इत उत्तरमिन्द्रः प्रत्यक्षो वज्रस्तु कर्तृत्त्व विवक्षितं परोक्षस्य सतः। "दूरेचत्तायछन्त्सत्"। चततिर्गतिकर्मा। दूरे गताय नष्टाय शत्रवे। छन्त्सत्। छन्दतिः कामनार्थः। कामयताम्, हे इन्द्र त्वदीयो वज्रः शत्रवे विनाशं कामयताम्। कथं पर-वशो वर्तताममिति चेत् † कथं वज्रस्य शत्रुविनाशकामना इति चेत्, आत्मपारगो भवत्यात्माश्च

पुरोयुधायोनः पृतन्न्यादपतन्तमिद्दंतु व्वज्रेणतन्तमिद्धतम्॥ दूरे चत्तायछन्त्सइगहनं ज्यदिनक्षत्॥ अस्म्माकंशत्रून्नपरि शूर

आत्मायुधमित्यदोषः। "गहनं यदिनक्षत्"। गहनं वनमुच्यते उदकं वा इनक्षतिर्व्याप्तिकर्मा। "इनक्षत्"। रूपसादृश्यादुदकं वनं वा यत् व्याप्नोति पलाय्य गच्छति तथापि विनाशयति शत्रुं स्वरूपेण तस्यापि विनाशं कामयतां त्वदीयो वज्रः। "अस्माकं शत्रून्परिशूर विश्वतो दर्मा

(१) युवं तमिति दक्षिणस्याधोच्च प्राप्तौ निष्क्रामन्ति, पृथक्कामेषु भूभु व इति। को॰ [२।४।१४-२८]॥ इति सत्रीत्यागम्॥ ५३॥

कथं परवशो वर्ततामिति चेदिति (२) पुस्तके पाठो नास्ति।

दर्षीष्ट"। हे यूर त्वदीयो वज्रः अस्माकं ये शत्रवः तान् परिदर्षीष्ट। दृ विदारणे। परिविदारयतु। कथंभूतो वज्रः। दर्म्मा विदारणशीलः। कुतोऽवस्थितान् शत्रून्। विश्वतः सर्वतः। जपन्ति "भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याम सुवीरा वीरैः सुपोषाः पोषैः"। एकवचनान्तो

विश्वस्वतोदम्मादर्षीष्टविश्वस्वतः॥ भूर्भुवःस्वःसुप्रजाःप्रजाभिःस्यामसुवीरावीरैःसुपोषाःपोषैः॥ ५३ ॥ * परमेष्ठ्यभिधीतः॥ प्रजापतिर्वाचिव्याहृतायामन्धोऽअच्छेतःसवितासन्यां विश्वस्वकर्म्मादीक्षायाम्पूषासोमक्रयण्यामिन्द्रश्च॥ ५४ ॥ इन्द्र-

व्याख्यातः। अयं तु बहुवचनान्तः। सत्रोत्थानं समाप्तम् ॥ ५३ ॥ "परमेष्ठ्यभिधीतः"। (१) आ

(१) परमेष्ठ्यादीयतुरिति मन्त्रं जुहोति धर्मधुक्‌नाम्ने चाहीने चोदीच्या दोहस्थानेऽन्यस्याः शालाया वा पुरस्ताल्या-

अध्यायसमाप्तेर्न मिनिकानि । वसिष्ठस्यार्षम् । परमेष्ठ्यादिस्तुतिः चतुस्त्रिंश०यात्सु सोमाव-
न्याम चतुस्त्रिंश०ग्रहदेवताभिधायिनी द्वन्द्वार्थी । अभिधीतः अभिध्यातः संकल्पितो यजमानेन ।

ष्व । मृतं तंस्वचक्षु यायोपोत्थितोसु रं पुरायस्मांनोसिचक्रु तोविष्णु ÷
त्रिपिविष्टऽऊ रावासंन्न विष्णु र्न्नरंन्धिंषस्पु ह्व्यमांणः ॥ ५५ ॥
प्रह्व्यमांणःसोमऽआगतो व्वरुणऽआसन्द्यामासंन्न ग्निरागनी
ध्रऽइन्द्रो हविर्द्धानेथंव्वोपावक्रि यमांणो व्विश्श्वेदेवाः ॥ ५६ ॥ व्विं

पा. पुच्छकाण्डाद्दक्षिणेस्थानि कृत्वा दोक्ष्येत् पृषदाज्यस्कन्दनेचैके । का० २५।६।११-३ । अस्यार्थः । मूलमध्यमपातभे-
देनिन्नमभिगम्य परमेष्ठिने स्वाहेत्यादि सलिलाय स्वाहेत्यन्तास्त्रयस्त्रिंशदाज्याहुतीर्जुहुयात् । घर्मदुहो गोर्मरणे तत्-
स्थाने उदङ्मुख्याः स्थितायाः पदोर्मध्यपूर्वभागे प्राङ्मुख्या वा पुच्छाद्दक्षिणेस्थानि परमेष्ठिने स्वाहेत्याद्यास्त्रयस्त्रिं

सोमोपनायनमेतत्। "वाचाभिव्याहृतः"। अह सोमेन यक्ष्ये इत्युक्तं भवति। "अक्रेतः"। अच्छाभेरामुमिति शाकपूणिः। सोममभि इतो गतः सोमं व्याप्नुमितो गतः। अन्योन्मुच्यते।

सर्वे देवा विश्वे देवाऽ० अंशुषु न्युप्तो विष्णुराप्रीतपाऽआप्यायमानो यमः सूयमानो विष्णुः सम्भ्रियमाणो वायुः पूयमानः शुक्रः पूतः शुक्रः क्षीरश्रीर्मन्थी सक्तुश्रीः ॥ ५७ ॥

विश्वे देवाः। विश्वे देवाश्चमसं पूर्णीतोसुहोमायोद्यतो

यदा हुतोहुत्वा ता होष्यते। व्यालीस्या स्तुक्स्वस्य वा पृषदाज्यस्य भंये वा जुहुयादित्वेके आचार्या इति। अत्र मन्त्रपञ्चके वाचि व्याहृतायां यक्ष्ये इत्युच्चार्यमाणे सोम प्रजापतिनामको भवति तदा प्रायश्चित्तापत्तो प्रजापतये स्वाहा एवं यदा चोरश्रीः क्षीरमिश्रित सोम तदाशुक्र एव सोमो भवति तदा शुक्राय स्वाहा- सक्तुमिश्रितो मन्थी भवति तदा

अमन्याथितौ । सहोभिः स्वशौर्यैरेव बलैः तौ विष्णुवरुणौ । तुल्यकार्यत्वाद् उभावपि विष्णू उभावपि वरुणौ । द्वितीयाद्विवचनमेतत् । "अगन्" गतो यज्ञः । यज्ञसाधनभूतं स्कन्नं द्रव्यं यज्ञशब्देनोच्यते । "पूर्वहूतौ" । पूर्वस्मिन्नाह्वाने । यावत्प्रधानं न हूयते तावद्विष्णुवरुणौ प्रति

त॒योरोज॑सा स्क॒भि॒ता रजां॑सि वी॒र्ये॑भिर्वी॒रत॑मा॒ शवि॑ष्ठा ॥
या पत्ये॑ते॒ऽअप्र॑तीता॒ सहो॑भि॒र्विष्णू॑ऽअग॒न्वरु॑णा पू॒र्वहू॑तौ ॥५९॥
दे॒वान्दिव॑म् । दे॒वान्दिव॑मगन्य॒ज्ञस्ततो॑ मा॒ द्रवि॑णमष्टु म॒नु॒ष्या॑

यज्ञो गत इत्यर्थः । यदा पूर्वं हूयेते इति पूर्वहूतौ विष्णुवरुणौ प्रतिगच्छत् । गतो यज्ञ इति संबन्धः ॥ ५९ ॥

द्वितीयो मन्त्रविकल्पः (१) । "देवान्दिवम्" । देवान् प्राप्य दिवं द्युलोकम् अगन् गतो

(१) देवान् दिवमिति सौमे ( स्कन्ने सत्यभिमर्शनम् ) का० ।२५।२।८ ॥ ६० ॥

यज्ञः। "ततोमाद्रविणमष्टु"। ततो द्युलोकाद् द्रविणं यज्ञफलम् उत्पन्नं माम् अष्टु व्याप्नोतु। मनुष्यान् प्राप्य अन्तरिक्षलोकं गतो यज्ञः ततः उत्पन्नं फलं मां व्याप्नोतु। पितॄन् प्राप्य पृथिवीलोकमगन् यज्ञः तत उत्पन्नं फलं मा व्याप्नोतु। अन्यमपि यं कञ्च लोकं गतो यज्ञः फलविशेषः ततो लोकात् "मे" मम भद्रमभूत्" भवतु॥ ६०॥ मन्त्रा-

नन्तरिक्षमगन्यज्ञस्ततोमा द्रविणमष्टु पितॄन्पृथिवीमगन्यज्ञस्ततोमाद्रविणमष्टु यञ्च लोकमगन्यज्ञस्ततोमे भद्रमभूत्॥ ६०॥ चतुस्त्रिंशत्तन्तवो। चतुस्त्रिंशत्तन्तवो ये वित-

वीरभेदे होमः (१)। चतुस्त्रिंशत्। पङ्क्तिर्वा त्रिष्टुब्वा। चतुस्त्रिंशत्तन्तवो यज्ञस्य परमेष्ठ्यादयो ये यज्ञं वितत्निरे वितन्वन्ति। ये च इमं यज्ञं स्वधया अन्नेन ददन्ते। दद दाने

इत्यस्यैतद्रूपम् पुष्यत्यर्थस्य तु पुष्णान्ति। तेषां वितन्वतां यच्छिन्नं तदेतत्सं दधामि। उकारोऽनर्थकः। "स्वाहा" सुहुतमस्तु। "घर्मो" महावीरो देवान् अपि गच्छतु ॥६१॥ यज्ञस्य दोह इति वाचयति (१)। त्रिष्टुप्। प्रथमेऽर्द्धर्चे परोक्षो यज्ञः, द्वितीये प्रत्यक्षो यज्ञः, अतो यत्तदोर्वाक्यपरिपूर्तिः क्रियते। यस्य तव यज्ञस्य सतः दोहः आहुतिपरिणामः "विततः" प्रसारितः

त्रिꣳरेवऽद्धमस्य ज्ञꣳस्वधयाददन्ते ॥ तेषाञ्छिन्नꣳसम्वेतद्दधामि स्वाहा घर्मोऽअप्येतु देवान् ॥ ६१ ॥ यज्ञस्य दोहः। यज्ञस्य दोहो विततः पुरुत्रासोऽअष्टधा दिवमन्वाततान ॥ स यज्ञ

"पुरुत्रा" बहुधा। ब्रह्मादिस्तम्बपर्यन्तो भूतग्रामो यज्ञपरिणाम इत्याशयः। य एव दोहो दिग्भेदेनाष्टधा भिद्यमानो द्युलोकमन्वाततान। भूमिमन्तरिक्षं च व्याप्य द्युलोकमन्वाततान। स त्वं हे यज्ञ "धुक्ष्व" प्रपूर दोहं "महि" महान्तम् "मे" मम प्रजायाम् अहं

(१) सोमेज्योपपाते (सोमयागे यज्ञाङ्गविनाशे) एकैका यथाकालं (पवमानादिस्तुत्युक्तौ काले परमेष्ठ्यादि चतुस्त्रिंशदाहुतीनां मध्ये एकैका) हुत्वा यज्ञस्य दोह इति वाचयतीति। का० २५।३।७ ॥ ६२ ॥

च "रायस्पोष" धनस्य पुष्टिं "विश्वं" सर्वं च "आयुः अशीय" व्याप्नुयाम्, त्वत्प्रसादात् ॥ ६२ ॥ ध्वाङ्क्षारोहणे यूपस्य होमः (१)। "आपवस्व"। गायत्री सौमी पावमानी। हे सोम "आपवस्व" प्रक्षर। "हिरण्यवत्"। क्रियाविशेषणान्येतानि। हिरण्यसंयुक्तम्।

ध्रुवद्वमहिं मे प्रजायांᳬ रायस्पोषं विश्वमायुरशीयस्वाहा ॥६२॥ आपवस्व। आपवस्व हिरण्यवदश्ववत्सोमवीरवत्॥ वाजं गोमन्तमाभरस्वाहा ॥६३॥ इति संहितायाम् अष्टमोऽध्यायः ॥८॥

"अश्ववद्" अश्वसंयुक्तम्। "वीरवत्" वीरैः संयुक्तम्। "वाज"मन्नं च "गोमन्तं" गोभिः संयुक्तम् आभर। 'हृग्रहोर्भश्छन्दसि' हरस्य, इति हकारस्य भकारः। अस्मभ्यमाहर ॥ ६३ ॥
इति उव्वटकृतौ मन्त्रभाष्येऽष्टमोऽध्यायः ॥ ८ ॥

(१) आपवस्व हिरण्यवदित्यष्टग्राह्यहोमो ध्वाङ्क्षारोहणे यूपस्येति (पशौ सोमे च यूपस्य काकारोहणे उक्ताज्यहोमः कार्यः।) का० २५।६।१८ ॥ ६२ ॥ इति प्रायश्चित्तानि। मफाध्यौरष्टमोऽध्यायः।

———○:○———

"देवसवितः"। वाजपेयिका मन्त्रा एष ते निर्ऋते भाग इत्येतस्मात्प्राक्। बृहस्पते-रार्षम् इन्द्रस्य च। कर्मणः कर्मणः पुरस्तादाहुतिं जुहोति। गायत्र्या विष्टुभा। हे "देव सवितः प्रसुव"। अभ्यनुजानीहि वाजपेयलक्षणं "यज्ञम्"। अभ्यनुजानीहि यजमानं "यज्ञ-पतिम् भगाय" भजनीयाय यज्ञफलाय। एवं पुरुषसूक्तं। अथेदानीं मण्डलमाह। त्वत्प्रसा-

ॐ। देवसवितः। देव॑ सवितः॒ प्र सु॑व य॒ज्ञम्प्र सु॑व य॒ज्ञप॑तिम्भगा॑य॥ दि॒व्यो ग॑न्ध॒र्व्वः के॑त॒पूः केत॑न्नः पुनातु॒ वा॒चस्पति॒र्व्वाज॑न्नः

दाच मण्डललक्षणो "दिव्यो" दिवि भवो "गन्धर्वो" गवां वाचां रश्मीनां वा धारयिता "केतपूः"। केतशब्देनान्नमुच्यते। अन्नस्य पविता। "केतं" मन्नं "नो"ऽस्माकं "पुनातु"। शोधयतु त्वत्प्रसादाच्च "वाचस्पतिः वाजं" मन्नं "नो"ऽस्माकं "स्वदतु। स्वद आस्वादने। आस्वा-

देव चितयतस इन्द्रस्य वष मम देवमाह इमापय तिस्रो वाजस्येममष्टावभिरेकाचं रथोपतेचतुष्कौरविताहे षटीचत्वारिंशं मत॥ यजु०।

शु० य० सं० १८० उ० भा० ८

दयतु (१) ॥ १ ॥ पञ्च वाजपेयिका ग्रहा गृह्यन्ते ऐन्द्राः । "ध्रुवसदं त्वा" । सोमाहुतिपरि-
णामभूतो रस एष लोकेष्वावर्तमान इह गृह्यते सोमाध्यक्षः । ध्रुवे अस्मिन् लोके
सीदतीति ध्रुवसत् तं ध्रुवसदं त्वाम् । "नृषदं" मनुष्यसदम् । मनसि सीदतीति "मनः-

स्वदतुस्वाहा ॥ १ ॥ ध्रुवसदं त्वा । नृषदं मनःसदमुपयामगृहीतोसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् । अप्सुषदं त्वा घृतसदं व्योमसदमुपयामगृहीतोसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् । पृथिवि

"सदम्" । "इन्द्राय" त्वां "जुष्ट"मभिरुचितं "गृह्णामि" । "उपयामगृहीतोसी"त्यय
भिन्नक्रमः । आदौ मन्त्रावयवो द्रष्टव्यः अर्थसंबन्धात् । सादयति । "एषते योनिरि- १८०

(१) अथ नवमेऽध्याये वाजपेयमन्त्रा उच्यन्ते चतुस्त्रिंशत्कण्डिकापर्यन्तम् । देवसवितरिति जुहोति यजेत्या-
दिश्रुतिः । का० १४।१।११ ॥ १ ॥

न्द्रायत्वाजुष्टतम्"मभिरुचिततमम। द्वितीयं गृह्णाति। "अप्सुषद" मुदकसदं त्वां "घृतसदं व्योमसदम्"। व्योमशब्देनान्तरिक्षमभिधीयते। शेषं व्याख्यातम्। तृतीयं गृह्णाति। "पृथिविसदं त्वान्तरिक्षसदं दिविसदं देवसदं नाकसदम्"। कमिति सुखनाम तत्प्रतिषिद्धं दुःखं प्रतिषिध्यते। यत्र गतानामल्पमप्यसुखं न विद्यते स नाको लोकः स्वर्लोकविशेषः। शेषमुक्तम्॥ २॥

स॒द॑न्त्वान्तरिक्ष॒सद॑न्दिवि॒सद॑न्देव॒सद॑न्नाक॒सद॑मुपया॒मगृ॑हीतो॒सीन्द्रा॑यत्वा॒जु॒ष्टं॑ गृ॒ह्णा॒म्य्ये॒षते॒योनि॒रिन्द्रा॑यत्वा॒जु॒ष्टं॑तमम्॥३॥
अ॒पा॒थ्ंरस॑म्। अ॒पा॒थ्ंरस॒मुद्व॑यस॒ठं॒ सूर्ये॒ सन्त॑ठं॒स॒मा॒हि॑तम्॥

चतुर्थं गृह्णाति। "अपांरसम्"। रसदेवत्यानुष्टुप्। रसः सारः सोऽपां वायुः। "एष वा अपां रसो योयं पवन" इति श्रुतिः। "उद्वयसम्"। उद्गतं वयोऽन्नं यस्माद्वायोस्तं "सुद्वयस" वायुम् "सूर्येसन्तं समाहित"मित्यनयोः पदयोर्व्यत्ययो ऽर्थसंबन्धात्। सूर्ये समाहितं सन्तं

(१) प्रात. सवने ऽतिग्राह्यान् गृहीत्वा पोडृश्निं पत्न्. चेन्द्रान्पृ वसहमिति प्रतिमन्त्रम्। का० १४ ।।२५।।२ ।।२

समारोपितं स्थापितं सन्तं गृह्णामीति वक्ष्यमाणेन संबन्धः। "अपां रसस्य यो रसस्तं वो गृह्णाम्युत्तमम्"। अपां रसो वायुस्तस्यापि रसः प्रजापतिः, स हि यज्ञलोककालाग्निवायुसूर्यऋग्यजुःसामादिवपुः, तं वःशब्देनाह। हे आपः "गृह्णामि उत्तमम्"। उत्कृष्टतमम्। यद्वा वःशब्दोनर्थकः। अपां रसस्य वायोर्यो रसः प्रजापतिस्तं गृह्णामीति तस्मिन्पक्षे योजना।

अपाᳪंरसꣳस्युद्वयसꣳसूर्य्ये सन्तꣳसमाहितम्। अपाᳪंरसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम्। ३॥ ग्रहाऽऊर्जाहुतयः। ग्रहाऽऊर्जाहुतयो व्यन्तो विप्राय मतिम्। तेषां

"उप या" इत्यादि समानम्॥ ३॥ पञ्चमं गृह्णाति (१)। "ग्रहा ऊर्जाहुतयः"। अनुष्टुप्। हे ग्रहा ऊर्जमन्नं रसं ये आह्वयति ते ऊर्जाहुतयः। "व्यन्तः" पश्यन्तो जानन्तः "विप्राय" मेधाविने इन्द्राय "मतिं" विशिप्रिया भवतेति शेषः। शिप्रे हनूनासिके वेत्यक्तम्। इह तु हनू एव गृह्येते, विगतं हन्वोः कर्म येषु गृहेषु ते विशिप्रियाः शोभनाभिषवसं स्कृताः

सुपूताश्च विशिप्रिया उच्यन्ते। तत्र हि हन्वोर्व्यापारो न भवति। "तेषां" च विशिप्रियाणां सतां" वः सवन्धिनम् "अहम "इष"मन्नम् "ऊर्ज" च रसम् "समगृभम्" संगृह्णामि। शेषं व्याख्यातम। "उपयाम" इत्यादि व्याख्यातम्। उपर्युपर्यध्वर्यु सोमग्रहं करोत्यध्वर्युः।

व्विशिप्रियाणाम्ब्रोहमिष मूर्ज्जᳪ समग्गृभमुपयामगृहीतोसीन्द्राय त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रायत्वाजुष्टतमम्॥ सम्पृचौस्त्थᳪ सम्माभद्रेणापृङ्क्तंव्विपृचौस्थोव्विमापाप्मनापृङ्क्तम्॥४॥*॥ इन्द्र

अधोऽधोऽध्वर्यु नेष्टा सुराग्रहं करोति। "संपृचौस्थः"। पचौ संपर्के। यौ युवां गृहौ संपृक्तौ स्थः तौ संपृक्तं संसृजतं मां भद्रेण भन्दनीयेन कल्याणेन। तौ पुनर्विहरतः। "विपृचौ स्थः" यतो युवां विगतसंसर्गौ स्थः ततो "विमापाप्मनापृङ्क्तम्"। विगतसंसर्गं पाप्मना मां कुरुतम्॥ ४॥

(१) उपर्युपरि अधमध्वर्युः (सोमग्रहं धारयति) अधोऽधोनेष्टा सुराग्रहम् सम्पृचौ। (यद्दैव धारण मन्त्रपाठश्च) का० १४।२।७॥ ४॥

रथमुपावहरति(१)। "इन्द्रस्य वज्रोसि"। "इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार" तुरीयस्य "स वृत्रस्तृतीय वा यावद्वेति" यदुक्तं तदिदमभिधीयते। यस्त्वमिन्द्रस्य वज्रोसि "वाजसाः" वाजमन्नं सनोतीति वाजसाः तं त्वां ब्रवीमि। त्वया वज्रीभूतेनायं यजमानो वाजमन्नं सेत्"। सनोतेर्वा एतद्रूपम्। सनुयात् संभजेदित्यर्थः। सिनुयाद्बध्नीयादित्यर्थः। धूर्गृहीतस्यावहरतीति। "वाज-

इन्द्रस्य व्वज्रोऽसि व्वाजसास्त्वयायं व्वाजꣳसेत्। व्वाजस्य नु प्प्रसवे मातरं महीमदितिन्नाम व्वचसा करामहे॥ यस्यामिदं व्विश्वम्भुवनमाविवेश तस्यान्नो देवः सविता धर्म्म साविषत्॥५॥

स्य नु"। जगत्यतिजगती वा पार्थिवी। चतुर्थः पादः सावित्रः। वाजस्य अन्नस्य। नु अनर्थकः। "प्रसवे" अभ्यनुज्ञायां वर्त्तमाना इतिशेषः। या मातरं जगन्निर्मात्रीं महीं महतीम् अदितिम् अदीनां नाम। तान् अनुकूलां "वचसा" वेदवाक्येनानेन "करामहे" कृतवन्तः सार्वाह्निकाः।

(१) मरुत्वतीयान्ते इन्द्रस्य वज्र इति रथावहरणम्, (अवतरणम्) चात्वालमावर्तयति वाजस्येति धूर्गृहीतम्। का० १४।३।१-२॥५।

आत्मनेपदं करोतेः। यस्यां चेदं "विश्वभुवनं" भूतजातम् "आविवेश" आविष्टम्। "तस्यां" पृथिव्यां "नो"ऽस्माकं "देवः" दानादिगुणयुक्तः "सविता" सर्वस्य प्रसविता। धर्मधारणमवस्थानं "साविषत्" प्रसुवताम् ॥५॥ अश्वानद्भिरभ्युक्षति (१)। "अप्स्वन्तः"। अनवसाना पुर उष्णिक्। अश्वदेवत्या। अप्सु अन्तरवस्थितं "अमृतम्" "अप्सु" च "भेषजम्"। तत्र हे "अश्वाः" यूयं

अप्स्वन्तः। अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवत वाजिनः ॥ देवीरापो यो व ऊर्मिः प्रतूर्तिः ककुन्मा

भवत "वाजिनः" वाज इत्यन्ननाम तद् येषु विद्यते ते वाजिनः। अन्नवन्तो यूयं तत्र भवतेत्यर्थः। "अपामुतप्रशस्तिषु"। उत अपिच अपां प्रशस्तिषु। प्रशस्तेषु पवित्रेषु भागेषु भवतेत्यनुषज्यते। द्वितीयः प्रोक्षणमन्त्रः। "देवीरापः"। हे देव्यः आपः "योव ऊर्मिः प्रतूर्त्तिः"। वो युष्माकम् ऊर्मिः कल्लोलो महानुदकसन्नाहः। प्रतूर्तिः प्रत्वरणः। "ककुन्मान्"। ककुदि-

(१) अश्वान् प्रोक्षत्यपोवनीयमावाह स्नानाद्वागतानप्सु अन्तरिति देवीराप इति वा समुच्चयोवेति। का॰ १४।२।३-५ ॥ ६ ॥

य० तिशब्देन वृषभस्य स्कन्धदेश उन्नत उच्यते। तत्सामान्यादुदकसंघातोऽप्युन्नततमः ककुच्छब्दे-
य० नोच्यते। यज्ञैरुदकनिचयैः संयुक्तो महाप्राग्भार इत्यर्थः। "वाजसाः" अन्नस्य संभक्ता।
सं० तेनायमश्वः प्रोक्षितो वाजमन्नं "सेत्"। सनोतेः सिनोतेर्वा लिटि एतद्रूपम्। सनुयात् संभ-
१८२
उ० न्वाजसास्तेनायंवाजꣳसेत्॥ ६॥ व्वातोवा। व्वातोवामनो
भा० वागन्धर्व्वाः सप्तविꣳशतिः। तेऽअग्ग्रेऽश्वमयुञ्जँस्तेऽअस्मि
ञ्जवमादधुः॥ ७॥ व्वातरꣳहाभवव्वाजिन्युज्यमानऽइन्द्र
जेत्। सिनुयात् बध्नीयात्॥ ६॥ अश्वं युनक्ति (१)। "वातोवा"। उष्णिक्। अश्वस्तुतिः
याशव्दः सप्तचत्वारिंशीयः। वातश्च मनश्च गन्धर्वाश्च सप्तविंशतिर्नक्षत्राणि। एते त्वां युञ्जन्तु। त्वयि
च जवमादधातु। यत "तेऽअग्ने" प्रथम "अश्वमयुञ्जन्। ते अस्मिन् जवमादधुः" ते च
अस्मिन् जवं वेगमाहितवन्तः॥ ७॥ द्वितीयं युनक्ति (१)। "वातरंहा"। त्रिष्टुप् अश्वस्तुतिः।

(१) दक्षिणं युनक्ति (अश्वं) का० १४।३।६॥ ७॥
(१) उत्तरं (अश्वं) वातरंहा इति। का० १४।२-७॥ ८॥

रिंहतिर्गत्यर्थः। वातजवो भव। हे वाजिन् युज्यमानः सन्। "इन्द्रस्येवचदक्षिणो" श्रियः श्रिया एधि भव अस्य यजमानस्य। "युञ्जन्तु त्वां मरुतो विश्ववेदसः" सर्वधना वा सर्वज्ञाना वा। "आदधातु" च ते तत्र "त्वष्टा पत्सु" पादेषु "जवं" वेगं युक्तस्य सतः ॥ ८ ॥ तृतीयं युनक्ति (१)

स्येवदक्षिणःश्रियैधि। युञ्जन्तु त्वाम् मरुतो विश्ववेदसऽआते त्वष्टा पत्सु जवन्दधातु ॥ ८ ॥ जवोयः। जवो यस्ते वाजिन्निहितो गुहायः श्येने परीत्तोऽअचरच्च वाते ॥ तेन नो वाजिन्बलवान्ब

"जवोयस्ते"। जगती अश्वस्तुतिः। जवो वेगो यस्ते तव हे" वाजिन्निहितः" स्थापितः "गुहा"। गुहायामिति विभक्तिव्यत्ययः। गुहाशब्दो रहस्यवचनः। यश्च "श्येने" पक्षिणि "परीतः"। परिपूर्वस्य तनोतेरेतद्रूपम्। परिततो व्यवस्थितः "अचरच्चवाते"। यश्च वाते

(१) दक्षिणामष्टिं जवो यस्त इति बार्हस्पत्यमेनानाप्नापयन्ति वाजिनः। का० १४।३।६-८। दक्षिणाया धुरि महद्दं दीर्घमशुते तादृश तृतीयमश्वं युनक्ति इति सूत्रार्थः ॥ ८ ॥

त्वदीयो नरः अभवत्। "तेन नो वाजिन्बलवान्बलेन"। वेगलक्षणेन बलेन बलवान् भूत्वा हे वाजिन् नोऽस्माकं 'वाजजिच्च भव' अन्नस्य च जेता भव। "समनेचपारयिष्णुः"। समने च संग्रामे च पारयिता भव। बार्हस्पत्यमश्वानवघ्रापयति। "वाजिनोवाजजितः"। हे वाजिनोऽश्वाः वाजजितः अन्नस्य जेतारः "वाजं" मन्नं जेतुं "सरिष्यन्तो बृहस्पतेर्भाग" चरुम् "अव-

लेनव्वाजजिच्चभवसमनेचपारयिष्णुः॥ व्वाजिनोव्वाजजितोव्वाजꣳसरिष्यन्तोबृहस्पतेर्भागमवजिघ्रत॥ ९॥ ५ देवस्याहम्। देवस्याहꣳसवितुः सवेसत्यसवसोबृहस्पतेरुत्तमन्नाकꣳरुहेयम्॥ देव

जिघ्रत"॥ ९॥ ब्रह्मा रथचक्रमारोहति (१)। "देवस्याहं सवितुः सवे" अभ्यनुज्ञायां "सत्यसवसः" सत्याभ्यनुज्ञायां वर्त्तमानस्य बृहस्पतेः" संबन्धि "उत्तम"मुत्कृष्टं" नाकं "स्वर्गलोकं"

(१) देवस्याहमिति ब्रह्मा] रथचक्रमारोहत्युत्करे नाभिमात्रे स्थाणौ स्थितमिति आगतेषु ब्रह्मावरोहति देवस्याहमिति। का० १४।३।१२।४।८॥१०॥

“रुहेयम आरोहामि। “देवस्याहं सवितुः सवे सत्यसवस इन्द्रस्योत्तमं नाकं रुहेयमि” तिदेवतामारं विशेत्। रथचक्रादवतरति। “देवस्याहं सवितुः सवे सत्यप्रसवसो बृहस्पतेरुत्तमं नाकम् “अरुहम्”। प्रशब्दः प्रकर्षद्योतनार्थः। अरुहमिति च भूतकालाभिधायी। भूता हि काल। प्राकृढवानस्मीत्यर्थः। शेषमारोहयामन्त्रेण समानम्। इन्द्रस्य इति

स्याहꣳ सवितुः सवे सत्यसवस ऽइन्द्रस्योत्तमन्नाकꣳ रुहेयम् ॥ देवस्याहꣳ सवितुः सत्यप्रसवसो बृहस्पतेरुत्तमन्नाकमरुहम् ॥ देवस्याहꣳ सवितुः सत्यप्रसवस ऽइन्द्रस्योत्तमन्नाकमरुहम् ॥ १० ॥ बृह

उत्तरे मन्त्रे विशेषः ॥ १० ॥ दुन्दुभिमाहन्त्येकं सर्वेषां वा संस्कारो बहुवचनान्तत्वान्मन्त्रस्य (१)। “बृहस्पते वाजंजय”। हे दुन्दुभयः यूयमुच्यध्वम् बृहस्पते वाजमन्नं जय।

(१) बृहस्पते वाजमित्येकं दुन्दुभिम् (अग्निवेद्युच्छ्रितस्याध्यारोपितसप्तदशदुन्दुभीनां मध्ये एकमन्येषा) माहन्ति तूष्णीमितरान् (घोषय)। का० १४।३।१५ ॥ ११ ॥

इत्थंभूतां वाचं बृहस्पतयेऽर्थाय वदत बृहस्पतिं च वाजमन्नं जेष्यामीति ज्ञापयत । ज्ञप-जल्प व्यक्तायां वाचि जपते 'र्हेतुमति च' इति णिच् लोट् मध्यमपुरुषस्य बहुवचनम् । "ज्ञापयत" उद्घादयत । बृहस्पतिना वाजं जितमित्यर्थः । जि जये इत्यस्य वा । जयं कारयतेति वा । "इन्द्रश्च जये" तिदेवतामात्रविशेषः ॥११॥ दुन्दुभिमवध्नरति(१) । "एषावः" । एषा वः युष्मा-

स्पतेर्वाजं स । बृहस्पतेर्वाजं जय बृहस्पतये वाचं वदत बृहस्पतिं वाजं जापयत । इन्द्र वाजं जयेन्द्राय वाचं वदतेन्द्रं वाजं जापयत ॥ ११ ॥ एषा वः । एषा वः सा सत्या संवागभूद्यया बृहस्पतिं

कं "सासत्या" अवितथा संगतवादिनी "वाग् अभूत्"। यया वाचा "बृहस्पतिं वाजं" अन्नं जेष्यामीति इत्थमीदृशम् "अजीजपत"। जपतेर्णिचि लुङि चङि एतद्रूपं भवति। ज्ञापितवन्तः उद्घादितवन्त इत्यर्थः। यत्र युय "अजीजपद्बृहस्पतिं वाजं" अन्नं जेष्यामीति।

(१) एषा व इति मन्त्रास्तमवहरते तूष्णीमितरानिति । का० १४।३।१० ॥ १२ ॥

तच्च बृहस्पतिना जितम् अतो यूयं कृतकृत्याः सन्तः हे "वनस्पतयो" वा वानस्पत्या दुन्दुभयो विमुच्यध्वम्" उत्तरोऽपिमन्त्रोऽनेनैव व्याख्यातो देवतामात्रं तु विशेषः ॥ १२ ॥ रथमारोहति यजमानः (१)। "देवस्याहम्"। देवस्य सवितुः सत्यप्रसवस्य प्रसवे अहं वर्तमानः बृहस्पतेर्वा-

# व्वाजमजोजपताजोजपतबृहस्पतिंव्वाजंव्वनस्पतयोव्विमुञ्चध्वम् । एषावःसासत्यासंव्वागभूद्ययेन्द्रंव्वाजमजोजपताजोजपतेन्द्रंव्वाजं व्वनस्पतयोव्विमुञ्चध्वम् ॥ १२ ॥ देवस्याहम् । देवस्याहंसवितुःसवेसत्यप्रसवसोबृहस्पतेर्व्वाजजितोव्वाजञ्जेषम्। व्वाजिनो

जस्य जेतुः सवन्धि वाजमन्नं जेयम्। वाचयति "वाजिनोवाजजितः"। अथवा उच्यन्ते। हे वाजिनः वाजजितः अन्नस्य जेतारः अध्वनः मार्गान् स्कभ्नुवन्तः क्षोभयन्तः। स ह्यश्वानां स्वभावः। "योजनानि। अतिशीघ्रतयाभिमानाः" परिच्छिन्दन्तः शीघ्रं "काष्टाम्" आज्यन्त

(१) देवस्याहमिति यजुषं रथमारोहति यजमानः वाजिन इति वाचयतीति। १४।३।१८-२२ ॥ १२ ॥

गच्छत। आजयन्तोपि काष्ठोच्यते। क्रान्त्वा स्थितो भवति ॥ १३ ॥ द्वाभ्यां जगतीभ्यामश्वदेवत्याभ्यां जुहोति (१)। "एषस्यवाजी" अयं स वाजी वेगवान् "क्षिपणिं तुरण्यति"। क्षिपणमनु कशाघातमनु तुरण्यति। तूर्णमश्नुते ध्वानम्। कथं भूतः सन् इत्यत आह। "ग्रीवायांबद्धोपिकक्ष आसनि"। ग्रीवायामुरो बध्रेण बद्धः। कक्षे पर्याणप्रदेशेसन्नाहरज्ज्वा बद्धः।

वाजजितो वाजं नुकृ उच्छ्वन्तो योजना मिमानः काष्ठां गच्छत ॥ १३ ॥

एषस्यवाजी क्षिपणिन्तुरण्यति ग्रीवायाम्बद्धोऽअपि

कक्षऽआसनि ॥ क्रतुन्दधिक्राऽअनुसँ सनिष्यदत्पथामङ्काꣳस्य

"आसनि"। आस्ये च मुखे खलिकया बद्धः। किञ्च "क्रतुं दधिक्रा अनुसंसनिष्यदत्"। क्रतुं कर्म प्रज्ञां वा। दधिक्रा अश्वः। स हि अश्ववारं दधत् क्रामति। सनिष्यदत्। स्यन्दतेस्तनोत्यर्थे वर्त्तमानाद्यङ् लुकि निपात्यते। अथ कोर्थः। स्वकीयं कर्म प्रज्ञां वा दधि

(१) एषस्य इति मन्त्रं जुहुयात् मन्त्रपते वा। का० १४।४।२।४ ॥ १४ ॥

क्रा ऋत्वर्थमनु संतनोति। किञ्च "पथामङ्काठ॰स्यन्वापनीफणत्"। पथां कुटिलानि चक्राणि अतिशीघ्रतया चिप्रं प्राप्नोति। अनुपूर्वस्याङ्पूर्वस्य फणतेर्गत्यर्थे वर्त्तमानस्य चर्करीतहत्तम् *॥१४॥

"उतस्मास्य"। यजमानरथस्यायुक्तश्चतुर्थोऽश्वो ऽनुगच्छति कविकापर्याययुक्तः। तदभिप्रायेणा-यमनो मन्त्रो व्याख्यातः। अथेदानीं रथयुक्ताश्वानेकधस्तौति। अपिच अस्य रथयुक्तस्याश्वस्य "द्रवतो" गच्छतः आज्यन्तं, "तुरण्यतः" तूर्णमनुधावनस्याध्वानम्। "पर्णं न वेरनुवाति

न्वापनीफणत्स्वाहा॥ १४॥ उ तस्मं। उ तस्मास्य द्रवतस्तुरण्यु तःपर्णन्नवेरनु वातिप्रगर्धिनंः॥ श्येनस्येवध्रजतोऽअङ्कसम्परिंद

प्रगर्धि नः"। विरिति शकुनिनाम। "पर्णं" पतम्। "न" उपमार्थीयः। पत्नमिव शकुनेः रथो "ऽनुयाति" वातोद्धतः। "प्रगर्धिनः"। आजिं जेतुं प्रगर्द्धोऽस्यास्तीति प्रगर्द्धी अश्वः तस्य प्रगर्द्धिनः। यद्वा शकुनिविशेषणम्। आमिषं प्रगर्द्धिनः शकुनेः। स ह्यामिषग्रहणार्थमति-शयेन धावति अतस्तेनोपमीयते। दक्षिणामष्टिं स्तौति उत्तरयार्द्धर्चेन। "श्येनस्येवध्रजतः"।

* चर्करीतमिति यङ्लुगन्तस्य संज्ञा।

यथा श्येनस्य भ्रमतोऽतिशयेन गच्छतः। "अङ्कसम्"। अङ्कशब्दः शरीरवचनः। शरीरासक्तं परिपश्यन्ति पक्षिणं भक्षणाय गृहीतम्। तथा तस्य "दधिक्राव्णः" अश्वस्य रथं सक्तं परिपश्यन्ति। "सहोर्जातरित्रतः"। सहान्नेन तरतोऽतिशयेनाध्वानम्। नैवारं चरुमवजिघ्रति तदभिप्रायेण सहोर्जेत्यन्तम् ॥ १५ ॥ उत्तरेण तृचेनैतानेवाश्वान् स्तौति (१)।

धिक्राव्णः सहोऽर्जा तरित्रतः स्वाहा ॥ १५ ॥ शन्नः । शन्नो भव-
न्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः ॥ जम्भयन्तोऽहिंवृकंर-
क्षांसि सनेम्यस्मद्युयवन्नमीवाः ॥ १६ ॥ तेनः । तेन ऽअर्व्वं

"शन्नोभवन्तु"। त्रिष्टुप् विराड् वा। शमिति सुखनाम। सुखरूपा भवन्तु "नः" अस्माकं "वाजिनो" ऽश्वाः "हवेषु" आह्वानेषु। "देवताता" देवतातौ यज्ञे "मितद्रवः"। ते हि मितं द्रवं गच्छन्ति सुखकरम्। "स्वर्काः"। सुरोचनाः स्वन्नना वा। किञ्च "जम्भयन्तः" क्षोभ-

(१) उत्तरेण तृचेनेति, (वाप्यहोमीऽश्वाभिमन्त्रणं वा)। का० १४।४।५ ॥ १६ ॥

यन्त: "अहिं"सर्पं च"वृकं"च"रक्षांसि"च । सनेमीतिपुराणनाम । इहइत्थिमवचनोवाक्यवशात् ।
"सनेमि"क्षिप्रम् "अस्मत्" अस्मत्तः । "युवत्"। यु पृथग्भावे। पृथक्कुर्वन्तु "अमीवाः" व्याधीन् ॥१६॥
"तेनो अर्वन्तः" । जगती । ते अर्वन्तः अश्वाः नोऽस्माकं "हवनश्रुतः"। हवनमाह्वानं ये स्वभा-
यत एव शृण्वन्ति त एवमुच्यन्ते ।"हव"माह्वानं "विश्वे" सर्वे "शृण्वन्तु"वाजिनोऽश्वाः "मितद्रवः"।

न्तोहवनश्रुतोहवंविश्वेशृण्वन्तुवाजिनोमितद्रवः ॥ सहस्र
सामेधसातासनिष्यवोमहोयेधनंसमिथेषुजभ्रिरे ॥ १७ ॥ वा
जेवाजेवत । वाजिनोनोधनेषुविप्राऽअमृताऽऋतज्ञाः ॥ अस्यम

यजमानम परिच्छिन्नं ये गच्छन्ति त एवमुच्यन्ते । मितद्रवः शोभनगमना वा । "सहस्रसाः"
सहस्रस्य सनितारः संभक्तारः । "मेधसाता" । मेधो यज्ञः स यत्र सन्यते स भज्यतेस मेधसातिः
तत्रमेधसातौ । सप्तम्यर्थे आकारः । "सनिष्यवः" संभक्तारः । "महो"महान्तः "ये धनं समिथेषु"
संग्रामेषु "जभ्रिरे" आहृतवन्तः । तेनोअर्वन्तइत्यतिक्रान्तं प्रतिवचनम् ॥ १७ ॥ "वाजेवाजे" ।

विष्टप्। अन्ने अन्ने उपस्थिते सति "अवत" पालयत हे "वाजिनो"ऽश्वाः 'नो'ऽस्मान् "धनेषु" च उपस्थितेषु पालयत। हे "विप्राः" मेधाविनः परिदृष्टकारिणः "अमृताः" अमरणधर्माणः "ऋतज्ञाः" सत्यज्ञा वा यज्ञज्ञा वा। किञ्च "अस्य" नैवारचरुलक्षणस्य "मध्वः" मधुनः "पिबत"। "मादयध्वम्" तृप्यध्वम्। नैवारं चरुमवजिघ्रन्त्यश्वास्तदभिप्रायमेतत्। "तृप्ताश्च" सन्तः "यात

ह्रुः पिबतमादयध्वन्तृप्ता यात पथिभिर्देवयानैः॥ १८॥ आमा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे॥ आमां गन्ता

पथिभिर्देवयानैः" देवाध्यासितैः॥ १८॥ यजमानो नैवारं चरुमालभते। "आमावाजस्य"। विष्टप्। "आजगम्यात्" आगच्छेत् "मा" मां प्रति "वाजस्य" अन्नस्य "प्रसवो"ऽभ्यनुज्ञा। "आ इमे द्यावापृथिवी विश्वरूपे"। आगच्छेतां च इमौ द्यावापृथिव्यौ विश्वरूपे सर्वरूपे। "आमागन्तां पितरामातरा च"। आगतामागच्छेतां च मां प्रति मातापितरौ। "पितरा-

(1) यवरुध्य नैवारमालभते तोर्यैस्थितमामावाजस्येति यजुषु तानाप्याययति वाजिनः। (यजमानो रथादव-तीर्य यावालोकयान्ते स्थित नैवारं चरुं सूघति)। का० १४।४।११॥ १८॥

मातरं च छन्दसी'ति निरूपेकशेषो निपात्यते। "आमासोमो अमृतत्वेन" गम्यात्। आगच्छेदिमां प्रति सोमो अमृतत्वेन सहितः। अश्वानवघ्रापयति नैवारं चरुम्। "वाजिनो वाजजितः"। हे वाजिनो ऽश्वाः वाजस्यान्नस्य जेतारः। "वाज"मन्नं क्रतुं "सृत्वा ठं॰सः"। सृप्तवन्तः सन्तो "बृहस्पतेः" सम्बन्धिनं "भागमवजिघ्रत"। "निमृजानाः"। मृजूष्शुद्धौ। शोध-

म्पितरां मातरञ्चा मासोमो ऽअमृतत्त्वेनंगम्यात्॥ व्वाजिनोव्वाजजितोव्वाजर्ठ॰स सृवाठ॰सोबृहस्पतेर्भागमवंजिघ्रतनिमृजानाः॥१९॥ आपयेस्वाहा। स्वापयेस्वाहापिजायस्वाहाक्रतवेस्वाहाव्वसवेस्वाहाहुर्पतयेस्वाहान्हे मुग्धायस्वाहामुग्धायव्वैनठ॰शिनायस्वाहा

यन्त एनं चरुं यजमानं च॥ १९॥" द्वादशाप्तीर्जुहोति (१)। "आपयेस्वाहा"। प्रजापतेः संवत्सरस्य यज्ञस्य चैतानि नामानि। आप्नोतीत्यापिः। शोभनमाप्नोतीति स्वापिः। अपि

(१) द्वादश स्रुचाहुतीर्जुहोति आपतयेस्वाहेति प्रतिमन्त्रं वाचयति वेति। का॰ १४।५।१ ॥ २१ ॥।

गायत इति "अपिजः"। "क्रतुः" संकल्पो यज्ञो वा। "वसुः" वासयिता। अन्हां पतिः "अह्नस्पतिः"। "अन्हेमुग्धाय"। मुह वैचित्ये। दिनाय मुग्धाय। "वैनंशिनाय"। विनाशसंयुक्तेषु वसतीति वैनंशिनः। "विनंशिने आन्त्यायनाय"। अन्ते ऽयने भव 'आन्त्यायनः'। "अन्त्याय भौवनाय," अन्ते भवोन्त्यः भुवने भवो भौवनः। उभयविशेषणविशिष्टमप्येकं नाम।

विनुꣳशिनऽआन्त्यायुनायुस्वाहान्त्यायभौवुनायुस्वाहाभुवनस्युपतयु स्वाहाधिपतयेस्वाहा ॥ २० ॥ आयुर्य्युज्ञेन । कल्पताम्प्राणोयुज्ञेनंकल्पताञ्चक्षुर्य्युज्ञेनंकल्पताꣳश्रोत्रंय्युज्ञेनंकल्पतांपृष्ठं

भुवनस्य पतये "अधिपतये"। प्रकटार्थे नामनी ॥२०॥ पट्क्लृप्तीः (१)। "आयुर्यज्ञेन कल्पताम्"। मदीयमायुरनेन यज्ञेन क्लृप्तं भवतु। एवमुपरितनानि व्याख्येयानि। मुखनासिकाप्रभवो वायुः

(१) पट्चोत्तरा (वाचयति जुहोति वा) प्रजापतेरित्यारोहत इति (पत्नीयजमानौनिश्रेण्या यूपमारोहत सरितिगोधूममालभते (गोधूमपिष्टनिर्मितं चषालं स्पृशेद्यजमानः) शिरसा यूपमुज्जिहीते (यूपादूर्ध्वं शिरः करोति) पश्यता इति। का० १४।५।६-८॥ २१॥

"प्राप्य:"। "चक्षुः श्रोत्रं"च प्रकटार्थम्। "पृष्ठं" रथन्तरादि। शरीरस्य वा पृष्ठम्। अयं चासन्दी-
यो "यज्ञो" वाजपेयाख्येन "यज्ञेन" क्लृप्तो भवतु। रथं यजमान आरोहति। "प्रजापतेः प्रजा
अभूम"। कृतमिदमस्माभिः कर्म अतो वयं प्रजापतेः अपत्यभूताः संजाताः। गोधूमानुपस्पृ-
शति। "स्वर्देवाः"। हे देवाः स्वः स्वर्लोकमगन्म गताः। शिरसा यूपमनुजिघ्रति। "अमृता

यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम्॥ प्रजापतेः प्रजाऽअभूम स्वर्देवाऽअगन्मामृताऽअभूम॥ २१॥ अस्मे वो॰। अस्मे वोऽअस्त्विन्द्रियमस्मे नृम्णमुत क्रतुरस्मे वर्चाᳬसि सन्तु वः। नमो मात्रे

अभूम"। अमृताश्च संजाताः॥ २१॥ दिशोनुवीक्षते (१)। "अस्मे वो अस्त्विन्द्रियम्"। अस्मे
अस्मासु वः युष्मत्संबन्धि अस्तु भवतु इन्द्रियं वीर्यम्। "अस्मे नृम्णम्" अस्मासु च धनं युष्मत्सं-
बन्धि भवत्वित्यनुषङ्गः। "उत क्रतुः"। अपिच क्रतुः कर्म युष्मत्संबन्धि भवत्वित्यनुषङ्गः। "अस्मे

(१) अस्मे व इति दिशोवीक्षते (यूपारूढ एव यजमानः) नमोमात्र इति भूमिमवेक्षते, उत्तरवेदिमपरेणौ-
दुम्बरीमासन्दीं बस्तचर्मणास्तृणातीयन्तद्रुचि, सम्राडसीत्यामुपवेशयन्ति यन्ताशीति। का॰ १४।५।८-१४॥ २२॥

य॰ व॰ सं॰ २०० उ॰ भा॰

वर्चांᳫंसि सन्तु वः”। अस्मासु च तेजांसि भवन्तु युष्मन्स्वन्धीनि। पृथिवीमवेक्षते यजमानः। “नमो मात्रे पृथिव्यै”। पृथिवीं मातरं ब्रवीति नमस्करोति च। अभ्यासे भूयांसमर्थं मन्यन्त इति द्विर्वचनम्। औदुम्बरीमासन्दीं वस्तचर्मणास्तृणाति। “इयं ते राट्” इयमिति लिङ्गव्यत्ययः। इदं ते तव राट् राज्यम्। अभिषिक्तोसि त्वमित्येतत्कथयति। सुन्वतमस्या-

पृ॒थि॒व्यै नमो॑ मा॒त्रे पृ॑थि॒व्या इ॒यन्ते॒ राड्य॒न्तासि॒ यम॑नो ध्रु॒वोसि ध॒रुणः॑॥ कृ॒ष्यै त्वा॒ क्षेमा॑य त्वा र॒य्यै त्वा॒ पोषा॑य त्वा ॥ २२ ॥ वाज॑स्ये॒मम्। वाज॑स्ये॒मम्प्र॑स॒वः सु॑षुवे॒ अग्रे॒ सोम॒ᳫं राजा॑न॒मोष॑धीष्व॒प्सु ॥

सुपवेशयति। “यन्तासि यमनः”। तवानवच्छिन्नं यमनं कालान्तरेपि। “ध्रुवोसि” स्थिरोसि। “धरुणः” धारकोऽसि। “कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा”। कर्षणाय त्वाम् क्षेमाय च धनाय च पुष्ट्यर्थं चोपवेशयामीतिशेषः ॥२२॥ वाजप्रसवीयानि जुहोति (१)। “वाजस्येमम्”। तिस्रस्त्रिष्टुभो वाजप्रसवीयदेवत्याः। अत्र प्रायशो व्यवहितानां पदानां

(१) स्रुवेण संभृताञ्जुहोति वाजस्येममिति प्रतिमन्त्रमिति। का॰ १४।५।२१॥ २३ ॥

संबन्धः । "वाजस्येमं प्रसवः सुषुवे" । वाजस्यान्नस्य संबन्धी प्रसवः अभ्यनुज्ञानम्, इमं सोमं राजानम् अग्रे प्रथमं सुषुवे । षूञ् प्राणिगर्भविमोचने इत्यस्यैतद्रूपम् । जनितवानित्यर्थः । कुतः सुषुवे "ओषधीष्वप्सु" । ओषधीषु वर्त्तमानमप्सु च वर्त्तमानम् । या इत्थंभूताः सोमस्य जनयित्र्य ओषधय आपश्च, । "ता अस्मभ्यम्" अस्मदर्थम् "मधुमती" रसवतीः रसवत्यः

ताऽअस्मभ्यम्मधुमतीर्भवन्तुवयꣳराष्ट्रे जागृयामपुरोहिताःस्वाहा- ॥ २२ ॥ व्वाजस्येमम्प्रसवःशिश्रियेदिवमिमाचव्विश्वाभुवनानि सम्राट् । अदित्सन्तन्दापयतिप्रजानन्त्सनोरयिꣳसर्व्ववीरन्नियं

भवन्तु भोग्या वा भवन्तु । वयं च ताभिरद्भिरभिषिक्ताः सन्तः स्वकीये "राष्ट्रे जागृयाम" अप्रमत्ताः स्याम । "पुरोहिताः" अग्रतो व्यवस्थिताः प्रधाना इत्यर्थः ॥ २२ ॥ "वाजस्येमां प्रसवः" । यस्य वाजस्यान्नस्य संबन्धी प्रसवोऽभ्यनुज्ञानम् "शिश्रिये" आश्रयति । "इमां" पृथिवीं "दिवं" द्युलोकं च "विश्वाभुवनानि सम्राट्" इमानि च सर्वाणि भूतजातानि

थिंग्यिवे श्राययति। सम्राट्लक्षणः। यश्च "अदित्सन्तं दापयति", अदातुमिच्छन्तं दापयति। "प्रजानन्" स्वमधिकारम्। "स नो रयिं सर्ववीरं नियच्छतु"। सोऽस्मभ्यं धनं सर्ववीरैः संयुक्तं नियच्छतु निगृह्णातु ददात्वित्यर्थः॥ २४॥ "वाजस्यनुप्रसव आबभूव"। योसौ वाजस्यान्नस्य प्रसवः अभ्यनुज्ञानं विसर्गो वा। नु इति विस्मयार्थः। आबभूव ब्रह्माण्डरूपेण संबभूव। जात्येन। "इमा च विश्वा भुवनानि सर्वतः"। इमानि च विश्वानि भूतानि

च्छतु स्वाहा॥ २४॥ वाजस्यनु। प्रसवऽआबभूवेमाचविश्वा भुवनानिसर्वतः॥ सनेमिराजापरियातिविद्वान्प्रजाम्पुष्टिंवर्द्धयमानोऽअस्मेस्वाहा॥ २५॥ सोमᳬराजानम्। सोमᳬराजानम

हिरण्यगर्भप्रभृतीनि स्तम्बपर्यन्तानि। आबभूवेत्यनुवर्त्तते। "सर्वतः" सर्वतोऽवस्थितानि। "सनेमिराजा परियातिविद्वान्"। सनेमीति पुराणवचनः। सोयमन्नस्य प्रसवश्चिरन्तनो राजा "परियाति" सर्वतो याति स्वेच्छाचारी सन्। "विद्वान्" स्वमधिकारं जानानः प्रजां च पुष्टिं

च वर्द्धयमानः । "अस्मे" अस्माकम् ॥ २५ ॥ "सोमं राजानम्" । अनुष्टुप् लिङ्गोक्त-देवता । सोमं राजानम् "अवसे" तर्पणाय "अग्निं" च "अन्वारभामहे" । अन्वारम्भश्च तर्पणार्थं एव । "आदित्यान् विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम्" अन्वारभामहे । तर्पणायेति सर्वेषां

वंसुग्निमुन्वार॑भामहे ॥ आदित्यान्विष्णुᳯ सूर्य्यम्ब्रह्माणञ्चबृह स्पतिᳯ स्वाहा ॥ २६ ॥ अर्य्यमणम्बृहस्पतिम् । अर्य्यमणम्बृह स्पतिमिन्द्रन्दानायचोदय ॥ व्वाचंव्विष्णुᳯ सरस्वतीᳯ सवितारं ञ्च व्वाजिनᳯ स्वाहा ॥ २७ ॥ अग्नेऽअच्छ । अग्नेऽअच्छाव्वदेह

शेषः ॥ २६ ॥ "अर्यमाणं बृहस्पतिम्" । अनुष्टुप् लिङ्गोक्तादेवता । अर्यमाणं बृहस्पतिम् । "इन्द्रं दानायदानार्थं चोदय" प्रेरय । आहुतिरुच्यते । "वाचं विष्णुं सरस्वतीं सवितारं च वाजिनं" च । वाजिनो देवाः ॥ २७ ॥ "अग्ने अच्छ" । अनुष्टुब्वाग्नेयी । अच्छाभेराप्तुमिति शाकपूणिः । हे अग्ने "अभिवद" इहाव स्थितान् "आसंधानः" अस्मान् "प्रति नः सुमना भव" । प्रतिन

इत्यनयोः पदयोः व्यत्ययः कर्त्तव्य इति। अस्मान्प्रति सुमनाः शोभनमनस्को भव। "प्रनोयच्छसहस्रजित्"। प्रयच्छ देहि नः अस्मभ्यं हे सहस्रजित बहूनो जेतः। "त्वं हि धनदा असि"। हि शब्दो यस्मात्त्वमेव धनस्य दातासि नान्यः कश्चिद्देवताविशेषः॥ २८॥ "प्रनोयच्छतु"। गाय-

नुः प्प्रतिंनः सुमनांभव॥ प्रनोंयच्छसहस्रजित्त्वꣳहिधंनदाऽअसि-स्वाहां॥ २८॥ प्रनंः। प्रनोंयच्छत्वर्युमाप्रपूषाप्रबृहस्प्पतिंः। प्रवाग्ग्देवीदंदातुनः स्वाहां॥ २९॥ देवस्यंत्वासवितुः प्प्रंसवेऽश्विनोंर्ब्बाहुभ्यांम्पूष्णोहस्ताभ्याम्। सरंस्वत्यैव्वाचोयन्तुर्य्युन्त्रियेंदधा

वो लिङ्गोक्तदेवता। "प्रयच्छतु नो"ऽस्मभ्य "मर्यमा"। प्रयच्छतु च बृहस्पतिः"। प्रकर्षेण च वाग्देवी"दानादिगुणयुक्ता। "ददातुनः" अस्मभ्यम्॥ २९॥ अथैनंपरिशिष्टेनाभिषिञ्चति। देवस्यत्वेति व्याख्यातम्। "सरस्वत्यैवाचोयन्तु"। सरस्वत्या "वाचः नियमनकर्त्र्याः यन्त्रिये नियमने ऐश्वर्ये 'दधामि" स्थापयामि। "बृहस्पतेष्ट्वा"। बृहस्पतेश्च त्वा साम्राज्येन सम्राट्भावेन

“अभिषिञ्चामि” असाविति नामग्रहणम् ॥ ३० ॥ अथोज्जितीर्वाचयति (१)। “अग्निरेकाक्ष-

म्बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ ॥ ३० ॥ अग्निरेका

क्षरेण । प्राणमुदजयत्तमुज्जेषमश्विनौ द्व्यक्षरेण द्विपदो मनुष्या

नुदजयतान्तानुज्जेषं विष्णुस्त्र्यक्षरेण त्रीँल्लोकानुदजयत्तानुज्जे

षꣳ सोमश्चतुरक्षरेण चतुष्पदः पशूनुदजयत्तानुज्जेषम्पूषा पञ्चाक्षरे-

ण ॥ ३१ ॥ पूषा पञ्चाक्षरेण पञ्च दिशऽउदजयत्ताऽउज्जेषꣳ सविता षड-

क्षरेण षडृतूनुदजयत्तानुज्जेषम्मरुतः सप्ताक्षरेण सप्त ग्राम्यान्पशू

नुदजयँस्तानुज्जेषम्बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयत्तामु

रेण” प्राणमुदजयत्तमुज्जेषम्” । ओश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति

(१) अग्निरेकाक्षरेणेत्यनुवाकं (चतुष्कण्डिकात्मकं) वाचयित्वा (स्रुवाङ्जुहोतिवाचयतिवा। का० १४।५।२॥ २१॥

द्व्यक्षरम्, येयजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः । स एष सप्तदशप्रजापतिरभियज्ञं स-





न्जेषम्मित्रोनवाक्षरेण ॥ ३२ ॥ मित्रोनवाक्षरेण । त्रिवृतꣳस्तो
ममुदजयत्तमुज्जेषंवरुणोदशाक्षरेणविराजमुदजयत्तामुज्जेषमि-
न्द्रऽएकादशाक्षरेणत्रिष्टुभमुदजयत्तामुज्जेषंविश्वेदेवाद्वादशाक्ष-
रेणजगतीमुदजयँस्तामुज्जेषंवसवस्त्रयोदशाक्षरेण ॥ ३३ ॥ वसव-
स्त्रयोदशाक्षरेण । त्रयोदशꣳस्तोममुदजयँस्तमुज्जेषꣳरुद्राश्चतु-
र्दशाक्षरेणचतुर्दशꣳस्तोममुदजयँस्तमुज्जेषमादित्याः पञ्चदशाक्ष-
रेणपञ्चदशꣳस्तोममुदजयँस्तमुज्जेषमदितिः षोडशाक्षरेणषो-

मासव्यासाभ्यासज्ञीयते । अग्निः एकाक्षरेण च्छन्दसा प्राणमुदजयत् तमहमप्येकाक्षरेण छन्द-

सा उज्जेषम् । एवं सप्तदशोक्तितौव्याख्येया ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ वाजपेयः समाप्तः । अथ राजसूयं वरुणोऽपश्यत् ॥ ० ॥ "एष ते निर्ऋते भागः" स्वयं प्रदीर्णेन जुहोति (१)। इदि-व्यत निर्ऋतिशब्देनोच्यते। एष ते तव हे निर्ऋते भागः तं च सेवस्व पञ्चधाऽऽहवनीयं व्युह्य

ब्रुहश्ꣳस्तोममुदंजयत्तमुज्जेषम्प्रजापतिः सप्तदशाक्षरेणसप्तदश्ꣳस्तोममुदंजयत्तमुज्जेषम् ॥ ३४ ॥ एषते । निर्ऋतेभागस्तञ्जुषस्वस्वाहाग्निनेत्रेभ्योदेवेभ्यः पुरःसद्भ्यःस्वाहायमनेत्रेभ्योदेवेभ्यो दक्षिणासद्भ्यःस्वाहाविश्वदेवनेत्रेभ्योदेवेभ्यःपश्चात्सद्भ्यःस्वाहा मित्रावरुणनेत्रेभ्योवामरुन्नेत्रेभ्योवादेवेभ्यऽउत्तरासद्भ्यःस्वाहा-

(१) अथराजसूयमन्त्राः। अष्टाकपालो ऽनुमत्यै अन्वाहार्यपचनादिध्ममन्त्रं स्रुवे कृत्वा दक्षिणाग्न्युल्मुकमादाय दक्षिणा गत्वा स्वयं प्रदीर्णे इरिणे वाग्नौ जुहोत्येषतेनिर्ऋत इति पञ्चवात्तीयं नामानं आहवनीयं प्रतिदिशंव्युह्य मध्येच स्रुवेणाग्निषु जुहोत्यग्निनेत्रेभ्यइति प्रतिमन्त्रम् का०। १५। १। ८-१०-२० ॥ २१ ॥

य० अ० सं० २०४ उ० भा० | ६ अ०

प्रतिदिशं जुहोति । "अग्निनेत्रेभ्यो देवेभ्यः"। देशार्थं प्रागध्यायात्। "अग्निनेत्रेभ्यो देवेभ्यः"। अग्निर्नेता येषां देवानां ते अग्निनेत्राः तेभ्यो देवेभ्य इति तादर्थ्ये चतुर्थी। "पुरःसद्भ्यः" पुरः सीदन्तीति पुरःसदः तेभ्यः सुकृतमस्तु। अथ दक्षिणार्द्धे जुहोति। "यमनेत्रेभ्यो"। देवेभ्यः। शेषं तुल्यव्याख्यानम्। अथ पश्चार्द्धे जुहोति। "विश्वदेवनेत्रेभ्यो देवेभ्यः"। अथोत्तरार्द्धे जुहोति।

सोमनेत्रेभ्यो देवेभ्य॑ऽउपरिसद्भ्यो दुव॑स्वद्भ्यः स्वाहा ॥ ३५ ॥ ये दे॒वाः। ये दे॒वाऽअ॒ग्निने॑त्राः पु॒रः॒सद॒स्तेभ्यः॒ स्वाहा॒ ये दे॒वा य॒मने॑त्रा द॒क्षि॒णा॒सद॒स्तेभ्यः॒ स्वाहा॒ ये दे॒वा वि॒श्वदे॑वनेत्राः प॒श्चा॒त्सद॒स्तेभ्यः॒

"मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो" देवेभ्यः। अथ मध्ये जुहोति। "सोमनेत्रेभ्यो देवेभ्यः उपरिसद्भ्यः"। "दुवः शब्देन हविरभिधीयते तद्येषामस्ति ते दुवस्वन्तः तेभ्यो दुवस्वद्भ्यः ॥ ३५ ॥ सार्द्धं समस्य जुहोति। "ये देवा अग्निनेत्राः पुरःसदः" तेभ्यः स्वाहा। तुल्य-

शिवम् २०४

व्याख्याताः पञ्चमन्त्रा ऋत्वनः (१) ॥ ३६ ॥ अपामार्गहोमः । उल्मुकमादत्ते (१) "अग्ने सहस्व पृ-तना." आग्नेय्यनुष्टुप् । हे भगवन्नग्ने सहस्वाभिभव पृतनाः सङ्ग्रामान् । किञ्च "अभिमातीर-पास्य ।" सपत्नोभिमातिरुच्यते,सपत्नांश्च अपास्य । अस्य चोपयो अस्येतद्रूपम्, अपक्षिप । कस्मा-

स्वाहायेदेवामित्रावंरुणनेत्रावामरुन्नेत्रावोत्तरासदस्तेभ्यः स्वाहाये देवाःसोमनेत्राऽउपरिसदोदुवंस्वन्तस्तेभ्यः स्वाहा ॥ ३६ ॥ अग्नेस हंस्व । अग्नेसहंस्वपृतंनाऽअभिमातीरपांस्य ॥ दुष्टरस्तरन्नराती र्व्वर्चोधायज्ञवाहसि ॥ ३७ ॥ देवस्यंत्वा । सवितुःप्प्रंसवेश्विनो

त्,नरेवं त्वमुच्यसे यतश्चाह "दुष्टरस्तरन्नरातीः" तरतेस्तृणातेर्वा दुष्टरः । अशक्यप्रतिक्रियो-दुर्निवारस्त्वम् । किंकुर्वन् तरन्नरातीः "विनाशयन् शत्रुसेनाः । किञ्च "वर्चोधा यज्ञवाहसि" ।

(१) उत्तरा समस्य ये देवा इति प्रतिमन्त्रम । का० १५ । १ । २१ ॥ ३६ ॥

(१) अग्ने सहस्वेत्युल्मुका दानम् । का० १५ । २ । ५ ॥ ३७ ॥

वर्च इत्यन्ननामसु पठितम्। अन्नस्य धाता दाता वा वर्चसओजसो वा धारयितासि। यस्त्वं वहतीतियज्ञवाहास्तस्मिन्यज्ञवाहसि यजमाने ॥ ३७॥ जुहोति (१)। "देवस्यत्वा"। व्याख्यातम्। "उपांशोर्वीर्य्येण जुहोमि"। अतो "हतं" हिंसितं "रक्षः स्वाहा" सुहुतं चैतद्धविर्भवतु। "अवधिष्म"। सुवं प्रास्यति। "रक्षसां त्वा वधार्थम्" प्रास्यामीति शेषः। प्रत्यागच्छति।

य० ह्वा॒भ्यां॒म्पू॒ष्णो ह॒स्ताभ्याम्। उ॒पा॒ꣳशोर्वी॒र्येण जुहोमि ह॒तꣳ

य० रक्षः॒ स्वाहा॒ रक्ष॑सान्त्वा व॒धाया॑वधिष्म॒ रक्षो॑वधिष्मा॒मुम॒सौ ह॒तः

सं० ५२० ॥ ३८ ॥ [४] स॒वि॒ता त्वा॑ स॒वाना॑ꣳ सुवताम॒ग्निर्गृ॒हप॑तीना॒ꣳ सो

उ० हतवन्तो वयं रक्षः। जातावेकवचनम्। अवधिष्म। अमुमिति नामग्राहम्, असाविति

भा० च। अथ कोर्थः। हतवन्तो वयं खदिरवर्माणं खदिरवर्मा वा हतोस्माभिः ॥ ३८ ॥ गृहीत्वा दक्षिणयजमानबाहुं जपति। "सवितात्वांसवानाम्"। प्रसवानामाधिपत्ये

(१) देवस्यत्वे ति जुहोति. रक्षसांत्वे ति सुवमवस्यतितां दिशं यस्यां जुहोति, अवधिष्म इत्यायन्त्यनपेक्षम् इति। का० १५। २। ५—७॥ ३८॥

सुवतां प्रसुवताम् अभ्यनुजानतु। स हि तेषामीष्टे "अग्निर्गृहपतीनाम्" आधिपत्ये सुवताभियतुरक्ति। सोमो वनस्पतीनामाधिपत्ये सुवताम्। "बृहस्पतिर्वाचे" वागर्थमभ्यनुजानातु "इन्द्रो ज्यैष्ठ्याय"। ज्येष्ठभावायार्थं सुवताम्। "रुद्रः पशुभ्यः"। पश्वर्थं सुवताम्। "मित्रः

सोमो व्वनस्पतीनाम्॥ बृहस्पतिर्व्वाचऽइन्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो व्वरुणो धर्म्मपतीनाम्॥ ३९॥ इमन्देवाः। इमन्दे-

सत्य."। सत्यायेति विभक्तिव्यत्ययः। सत्यार्थं सवताम्। "वरुणो धर्मपतीनामाधिपत्ये सुवताम्" १॥ ३९॥ "इमन्देवा असपत्नं सुवध्वम्"। इमं राजानं हे देवा असपत्नं सुवध्वम्।

(१) उत्तमेन चरित्वा सविता वेत्याह यजमानबाहुं दक्षिणं गृहीत्वा नामास्य गृह्णाति मन्त्रं यथास्थानं मातं पित्रोय यस्याव जाते राजा भवतीति॥ का० १५ ४। १२॥ १५॥ अन्तिमेन वरुणाय धर्मपतये इति वारुणेन चरुणा चरित्वा यजमानान्तिके गत्वा स्रुचौ सव्ये पाणौ कृत्वा दक्षिणं तद्बाहुमादाय सविता त्वेति कण्डिकाद्वयरूपं मन्त्रमाह मन्त्रं यथास्थानं यजमानस्य तन्मातापित्रो यस्य जनपदजाते राजा भवति तस्य च नामानि गृह्णाति इति सूत्रार्थः॥ ३९॥

"महते क्षत्रायमहते ज्यैष्ठ्याय" ज्येष्ठभावाय। महते च जनानां "राज्याय"। इन्द्रस्य च "इन्द्रियाय" वीर्याय। सुवध्वमिति प्रत्येकं सबन्धः। "इमम् अमुष्यपुत्रम्"। अमुष्येति यजमानस्य पितुः षष्ठ्यन्तं नाम गृह्यते। "अमुष्यै पुत्रम्"। अमुष्यै इति यजमानस्य मातुर्नामग्रहः। "स आदित्यैः नदिव मिथुनं समभवत्" इत्यादिश्रुतिः। इममसुष्यपुत्रमित्यादि-

वाऽअसपत्नꣳ सुवध्वम्महतेक्षत्रायमहतेज्ज्यैष्ठ्यायमहतेजानरा-ज्ज्यायेन्द्रस्येन्द्रियाय॥ इममुमुष्यंपुत्रममुष्यैपुत्रमस्यैविशऽएषवोमीराजासोमोस्माकम्ब्राह्मणानाꣳराजा ॥४०॥ [२] ॥८॥

इतिश्रीसंहितायांनवमोऽध्यायः ९ ॥

स्तृतीयपादः सोमपरत्वेन व्याख्येयः। "अस्यै विशे"। जनपदनामग्राहः। "एषवः अमीराजा"। एष वः कौरवो राजा सोमः अस्तु। अस्माकं ब्राह्मणानां राजा ॥ ४० ॥

॥ इति उव्वटकृतौ मन्त्रभाष्ये नवमोध्यायः ॥ ९ ॥

(१) "अपो देवा मधुमती:"। वरुणस्यार्षं प्राक् चरकसौत्रामण्या:। अब्देवत्या त्रिष्टुप्। या अप देवा: मधुमती: मधुस्वादोदका: "अगृभ्णन्" गृहीतवन्त:। "ऊर्जस्वती:" अन्नवती: "राजस्व:" राजानं या: सुवन्ति जनयन्ति ता राजस्व: "चितानाः" चेतयमाना: परिदृष्टकारिण्य: किञ्च "याभिरद्भिर्मित्रावरुणावभ्यषिञ्चन्"। अभिषिक्तवन्त:। देवा इत्यनु-

हरिः ॐम् ॥ अपो देवाः। अपो देवा मधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः ॥ याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरि

मपींदेवायतस सोममारिषि पघावेष्टा॰ ससोमसात्वाचतसरंद्रमायवृपचसोंमासिचतस सविले काखिभ्यांयतसोष्टौच-तुसिगु शत् अनु॰ मू॰ ॥

(१) नवमोध्याये वाजपेयो राजसूयस्य कियानपथ निरूपितोऽथदशमेऽभिषेकार्थं जलादानादिराजसूयशेष: चरकसौत्रामणी चोच्यते ॥ दशान्तऽपो गृह्णाति यूपमुत्तरेण नैमित्तिकीरसम्भवात्तत्तरा: पृथक्पात्रेष्वौदुम्बरेषु सारस्वतीर्गृह्णात्यपोदेवा इति। का॰ १५। ४।२२॥ अभिषेकार्था वक्ष्यमाणाष्प उच्यमानप्रकारेण सूत्रोक्तेष्वौदुम्बरपात्रेषु पृथग्गृह्णाति विशेषस्तु निमित्तवशा- द्व्याख्यानमितिक्थ: यथान्तरिक्षात्प्रतिगृह्णातपवर्षमुष्या इत्यापो राजस यारम्भात्प्रागेन संपाद्य तदानीमपमु-त्तरेण गृह्णीयात् यतस्तदानीं वर्षणादिरसंभवात् इतरास्तु तदानीमेव गृह्णीयात् ॥ १ ॥

हतिः । "याभिरिन्द्रमनयन्" नीतवन्तः । "अत्यरातीः" । अति अरातीः अदनवतीः शत्रुसेनाः । प्रकृतत्वादेताः पदमस्ति । ताः गृह्णामीति शेषः । ॥१॥ अनेन मन्त्रेण सारस्वतीर्गृहीत्वा अनन्तरं ज्ञात्वापोऽथापो गृह्यन्ते । तत्र प्रथमो होममन्त्रः द्वितीयो ग्रहणमन्त्रः । नदीरिन्द्र मनयन्नत्यरातीः ॥ १ ॥ वृष्ण ऊर्मिः । वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रम्मे देहि स्वाहा वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देहि वृषसेनोसि राष्ट्रदा राष्ट्रम्मे देहि स्वाहा वृषसेनोसि राष्ट्रदा राष्ट्रममुष्मै देहि अर्थेतस्थ ॥ २॥ अर्थेतस्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहार्थेतस्थ राष्ट्रदा

वाहेऽवस्थितस्य पशोर्वा पुरुषस्य वा या ऊर्मिर्व्यर्दनः । तौ गृह्णाति । स यः प्राडुदर्ईति प्राडुद्गच्छति तं गृह्णाति । "हष्ण ऊर्मिरसि राष्ट्रदाः"। यस्त्वं हष्णोवर्षितुः सेक्तुः स त्वम् ऊर्मिरसि । हषा हि यदि पुरुषो यदि पशुः । "राष्ट्रदाश्च"। राष्ट्रं जनपदः तस्य स्वभावत एव दातासि तं त्वां

वृष्णो राष्ट्रं मे मह्यं देहि। स्वाहा गृह्णामि। "वृष्णऊर्मिरसि राष्ट्रदाः राष्ट्रममुष्मै"। अमुष्मा इति यजमानस्य नामग्रहः। "देहि"। एवमुपरितना अपि मन्त्रा व्याख्येयाः। द्वितीयमूर्मिं गृह्णाति।"वृषसेनोसि"। वृषा युवोच्यते। वृषप्रधाना सेना यस्य स वृषसेनः।

ष्ट्रदा राष्ट्रममुष्मै दत्तौजस्वतीस्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहौजस्वती
स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापः परिवाहिणीस्थ राष्ट्रदा राष्ट्रम्मे दत्त
स्वाहापः परिवाहिणीस्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापाम्पतिरसि रा
ष्ट्रदा राष्ट्रम्मे देहि स्वाहापाम्पतिरसि राष्ट्रदा राष्ट्रममुष्मै देह्यपा

स्यन्दमानाः १ ॥२॥ "अर्थेतस्थ राष्ट्रदाः"। अर्थं प्रयोजनं निष्पादयितुं याः यन्ति गच्छन्ति ता

(१) जुहोत्युत्तरास चतुर्गृहीतं तथाऽऽज्यमूर्म्यादिभि स्वाहाकारान्तैः पूर्वं पूर्वं (मन्त्रैः) प्रतिमन्त्रमुत्तरैरुत्तरैर्गृह्णाति, (स्वाहाहीनैः), संहितायां दृष्टा ऊर्मिरित्यादयो मन्त्रा द्विधा पठितास्तत्र पूर्वपूर्वैः स्वाहान्तैर्होमः उत्तरोत्तरैरपामादानम् अनगूढात् (जलेऽप्रतिष्ठात्) पश्चो (पुरुषाद्वा) पूर्वापरा ऊर्मी इति पूर्वापरौ कल्लोलौ हुत्वा गृह्णाति। का० १५।४।२४।२३॥२॥

स्वर्वेतः। अन्तेरेकवचनं स्यादिति। "राष्ट्रदाः"। एतदपि बहुवचनम्। "राष्ट्रमेदत्त"। दत्तेति ददातेरेकवचनम्। व्याख्यातमन्यत्। प्रतिलोमात्तु "ओजस्वती:" ओजसा बलेन युक्ताः सत्यः एताः प्रतिलोमाः स्यन्दन्ते। "अपयती"। "आपः परिवाहिणीः"। हे आपः याः यूयं परिवा-

ह्णभौंसिराष्टदाराष्ट्रस्मैदेहिस्वाहापाङ्गभैंसिराष्ट्रदाराष्ट्र
मुमुष्मैदेहिसूर्यत्वचसस्तथ ॥ ३ ॥ सूर्यत्वचसस्तथ। राष्ट्रदा
राष्ट्रम्मे दत्तस्वाहासूर्यत्वचसस्थराष्ट्रदाराष्ट्र मुमुष्मैदत्त सू
र्यवर्च्च सस्थराष्ट्रदाराष्ट्रम्मैदत्त स्वाहासूर्यवर्च्च सस्थराष्ट्र-

हिणीः सर्वतो वहनशीलाः स्थ। उक्तमन्यत्। "नदीपतिः"। अपांपतिरपि। स्पष्टार्थः। "निवेष्टम्" वेष्ट वेष्टने अस्मा निपूर्वस्यानयव्यापत्यानिवेष्टा आवर्त्त उच्यते। स्यन्दमानाः स्थावराः प्रत्यागताश्चापः ॥ ३ ॥ "सूर्यत्वचसस्थ"। सूर्यस्येव त्वक् यासां ताः सूर्यत्वचसः

(१) स्यन्दमानाः प्रतिलोमाः नदीपतिमिति, निवेष्टया (आवर्त्तभवाः) का० १५।४।२४।२९॥ ३॥

"आतपवर्ष्या:स्थ"। "सूर्यवर्चसःस्थराष्ट्रदाः"। सूर्यवर्चसः सूर्यस्येव वर्चस्तेजो यासां ताः सूर्यवर्चसः। "सरस्याः" "मांदास्थ"। मन्दतेर्मोदनार्थस्य मन्दः तत्र हि मोदन्ति भूतानि बहूदकत्वात्, तत्रभवा आपो मान्दाः। कूप्याः गृह्णाति। "व्रजक्षितस्थ"। व्रज इति मेघ-

मुमुष्मैदत्तव्रजक्षितस्थराष्ट्रदाराष्ट्रम्मैदत्तस्वाहाव्रजक्षितस्थ

राष्ट्रदाराष्ट्रममुष्मैदत्तवाशास्थराष्ट्रदाराष्ट्रम्मैदत्तस्वाहा

नामसु पठितम्। इहतूदकवत्त्वसाम्यात्कूप उच्यते व्रजे क्षियन्ति व्रजक्षितः मुख्या अवस्थायाः। "वाशास्थ"। वश कान्तौ। कामिता अभिलषिताः स्थ। ता हि सर्व एव कामयन्ते अन्नहेतुत्वात्।

(१) सान्दमानानां स्थावरा, (स्थिरा) प्रतशातापइति, अन्तरिक्षात्पतितिष्ठातपवर्षा इति, सरसा इति (तडागभवासु, गच्छमानासु), कूप्या इति (कूपभवासु), मुप्रासु (मुप्राख्यायरूपास्तु पात्रे पु स्थिता) मध्विति (मधुनि होमादानि) गोरव स्यादिति (उश्वगर्भवेष्टन तत्र भवा, प्रसूयमानधेनुगर्भवेष्टनोत्थ पूर्वमेव जल गच्छोतमस्ति पय इति (दुग्धसर) घृतमिति (घृते) आप स्वराज इति मरीची (रविकिरणतसाश्राप) गृहीत्वागृहीत्वाञ्जलिना सर्वासु संसृजतीति, औदुम्बरेपात्रे समामिश्रत्वेनां मधुमतीरिति, (मन्त्रावृत्ति) मैत्रावरुणधिष्ण्यस्य पुरस्ताद्विदधातयनाधृष्टा सीदतेति का०। १५ २०। २७॥ ४॥

"मधुशविष्ठास्थ"। शव इति बलनाम, शविष्ठा बलिष्ठाः। बलिष्ठं हि मधु त्रिदोषशमनत्वात्। उक्तञ्च। 'त्रिदोषघ्नं मधु प्रोक्तं केचिदिच्छन्तिवातलमिति'। गोसत्वागृह्णाति। "शक्करीस्थ"। शक्लृशक्तौ। 'आतो मनिन्क्वनिब्वनिपश्च'। शक्नुवन्ति हि गावो जगद्भर्तुं वाहदोहादिभिः।

व्राशांस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तशविंष्ठास्त्थराष्ट्रदाराष्ट्र
म्मेदत्तस्वाहाशविंष्ठास्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तशक्वरीस्त्थरा
ष्ट्रदाराष्ट्रम्मेदत्तस्वाहाशक्वरीस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तजन
भृतस्त्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहाजनभृतस्त्थराष्ट्रदाराष्ट्रम
मुष्मैदत्तविश्वभृतस्त्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहाविश्वभृत

"पयः जनभृतः"। जनान् हि पयो बिभर्ति बालभावे। "घृतम् विश्वभृतः"। विश्वं सर्वं देवानपि घृतं बिभर्ति। मरीचोः। "आपःस्वराजस्थ"। हे आपः या यूयं स्वराजस्थ

स्वकीयमेव राज्यं यासां तास्तथोक्ता अनन्याश्रितराज्या इत्यर्थः। व्याख्यातमन्यत्। औदुम्बरपात्रे समासिञ्चत्येताः। "मधुमतीः"। मधुमतीर्मधुररसवत्यः मधुररसवतीभिरद्भिः पृच्यन्तां सृज्यन्ताम् "महिक्षत्रं क्षत्रियाय राज्ञे वन्वानाः" वनोतिः संभजनार्थः। संभजमानाः। मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधाति। "अनाधृष्टाः" अनाधर्षिताः रक्षोभिः सीदत उपविशत।

स्वराज स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त स्वाहा स्वराज स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ॥ मधुमतीर्मधुमतीभिः पृच्यन्तां महि क्षत्रं क्षत्रियाय वन्वाना अनाधृष्टाः सीदत सहौजसो महि क्षत्रं क्षत्रियाय दधतीः ॥४॥

[ ४ ] शतम् ४०० ॥ सोमस्य त्विषिः। सोमस्य त्विषिरसि तवेव मे

"सहौजसः" सवीर्याः सहबलेन। किञ्च, वीणाः। महिक्षत्रं क्षत्रियाय राज्ञे दधतीः स्थापयन्त्यः ॥ ४ ॥ व्याघ्रचर्मारोहति। (१) "सोमस्य त्विषिः"। सोमस्य दीप्तिर्भवसि यतः अतः "तव इव"

(१) व्याघ्रचर्मास्तृणाति सोमस्य त्विषिरिति, पार्थानामग्नये स्वाहेति षट् जुहोति प्रतिमन्त्रम्। का० १५।५।६॥५॥

यथो तत्र त्त्विषिरेवं ममत्त्विषिर्भूयात्। "यत्र वेसोम इन्द्रमत्यपवत सयत्तत: शार्दूलः सममवत्ते- नसोमस्य त्त्विषि" रितिश्रुति:। पट्पुरस्तादभिषेकस्य पार्थानि जुहोति। अग्नये स्वाहेतिप्रति- मन्त्रम् पडुपरिष्टात् "इन्द्रायस्वाहेति प्रतिमन्त्रम् ॥ ५ ॥ पवित्रे करोति (१) ॥ "पवित्रेस्थः।

त्विषिर्भूयात् ॥ अग्नयेस्वाहासोमायस्वाहासवित्रेस्वाहासरस्वत्यै स्वाहापूष्णेस्वाहाबृहस्पतयेस्वाहेन्द्रायस्वाहाघोषायस्वाहाश्लोका- यस्वाहाऽंशायस्वाहाभगायस्वाहार्य्यमणेस्वाहा ॥५॥ पवित्रेस्त्थः। पवित्रेस्त्थोवैष्णव्यौसवितुर्वः प्रसव ऽ उत्पुनाम्म्यच्छिद्रेणपवि

"पवित्रे स्थो वैष्णव्यौ"। व्याख्यातम्। उत्पुनाति। "सवितुर्व:"। व्याख्यातम्। "अनि- भृष्टमसि"। अत्रमन्त्रावयवा एकवचनान्ता: युष्मा तु बहुवचनान्ता व्याख्याता:आपोह्यताभि-

(१) पवित्रे कृत्वा हिरण्यमेतयो प्रवयति (बध्नाति) ताभ्यामुत्पुनाताप सवितुर्वेतिद्रति का० १५।५।४।५॥६॥

छेयमिति । अतः श्रुत्यर्थोनुक्रियते । भरजो पाकद्रव्यं धातुः कटपिणाव्याख्यातः । अनिभृष्ट-मसीति । कोर्थः अनाधृष्टाःस्थ रक्षोभिः । "वाचोबन्धु:" । वाचः बन्धुभूताः । "यावद्वै प्राणे-ष्वापो भवन्ति तावद्वाचो वदतीति" श्रुतिः । "तपोजाः" । तपःशब्देनाग्निरुच्यते तस्माज्जा-यन्ते । "अग्नेर्वै धूमोजायत" इत्यादिश्रुतिः । "सोमस्य दात्रमसि" । सोमस्य दात्र्यः स्थः । "यदा वा एनमेताभिरद्भिः पुनन्ति" इत्यादिश्रुतिः । "स्वाहाराजस्वः" । स्वाहाकारेणपूताः

त्वेगासूर्यस्यरश्मिभिः ॥ अनिभृष्टमसिवाचोबन्धुस्तपोजाःसो
मस्यदात्रमसिस्वाहाराजस्वः ॥ ६ ॥ सधमादोद्युम्निनीरापएता
अनाधृष्टाअपस्योवसानाः ॥ पस्त्यासुचक्रेवरुणःसधस्थमपा०

स्थ: राजस्व: भवथ । राजानं या सुवन्ति जनयन्ति ता राजस्वः ॥ ६ ॥ अभिषेचनीर्ष्वेनां व्या-नयति । "सधमादोद्युम्नीः" । अव्देवत्या वारुणी त्रिष्टुप् । या एताः सधमादः सह-मदनाः सहएकस्मिन्पात्रे माद्यन्ति मदनं कुर्वन्तिताः । द्युम्नीः वीर्यवत्यः । आपः एताः "अ-

नाधृष्टाः" अनभिभूता रक्षोभिः । "अपस्यः" अपइति कर्मनामतत्र साधुः अपस्यः । "वसानाः" । वस आच्छादने आच्छादयन्त्यः पालाण्यवस्थिताः । तास्वप्सु "पस्त्यासु" । पस्त्यमिति गृह-नामसु पठितम् । गृहरूपासु विशां रूपेणावस्थितासु । "चक्रे" कृतवान् "वरुणोराजा" "सधस्थम्" सहस्थानं प्रतिष्ठाम् । कथंभूतो राजा वरुणः । "अपां शिशुः" । "अपां वा

## शिशुर्म्मातृतमास्वन्तः ॥ ७ ॥ क्षत्रस्योल्वमसि क्षत्रस्य जराय्वसि क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसीन्द्रस्य वार्त्रघ्नमसि मित्रस्या

एषशिशुर्भवति यो राजा राजसूयेन यजति" इति श्रुतिः । "मातृतमासु" अतिशयेन निर्माणीषु । "अन्तः" मध्ये । चक्रे सधस्थमिति सम्बन्धः ॥ ७ ॥ तार्प्यं परिधापयति (१) । "क्षत्रस्योल्वमसि" । उल्वं गर्भाधारसदकम् । पाण्डं परिधापयति । "क्षत्रस्य जराय्वसि" । जरायुर्गर्भवेष्टनम् । अधिवासं प्रतिमुञ्चति । "क्षत्रस्य योनिरसि" । गर्भसम्भवस्थानं योनिः । उष्णीषं संहृत्य पुरस्तादवगूहति । "क्षत्रस्य नाभिरसि" । नाभ्या सन्नद्धा गर्भा जाय-

(१) तार्प्यप्रभृतीनि क्षत्रस्येति प्रतिमन्त्रम् । १५ । ५ । १५ ॥ तार्प्यं क्षौमं वल्कलं घृताक्तवस्त्रं वा ॥ ८ ॥

नृत इत्याशयः। अथ धनुरधितनोति। "इन्द्रस्य वार्त्रघ्नमसि"। इन्द्रस्य सम्बन्धि यद्वार्त्रघ्नम्, वृत्रो येन हत इति वार्त्रघ्नं धनुरासीत्तत्त्वमसीति शेषः। बाहू विमार्ष्टि। "मित्रस्य त्वमसि" मित्रस्य संबन्धी त्वमसीति दक्षिणम्। "वरुणस्यासि"। वरुणस्य संबन्धि त्वमसीति सव्यम्। धनुः प्रयच्छति। "त्वयायं वृत्रं वधेत्" धनुषा अयं यजमानो "वृत्रं शत्रुं वधेत् हन्यात्। तिस्र इषूरादत्ते। "दृवासि" दृ विदारणे, दृणातीति दृवा। "रुजासि"। रुजो

सि<br>त्वंवरुणस्यासित्वयायंवृत्रंवधेत् ॥ दृवासिरुजासिक्षुमासि ॥ पा<br>तैनम्प्राञ्चम्पातैनम्प्रत्यञ्चम्पातैनन्तिर्य्यञ्चन्दिग्भ्यःपात ॥ ८ ॥ आ

भङ्गे। अस्य रुजा। "क्षुमासि"। क्षु आयोविधूनने। अस्य क्षुमा। यजमानाय प्रयच्छति। "पातैनं प्राञ्चम्"। पालयत एनं यजमानं प्रागञ्चनम् प्रत्यगञ्चनं तिर्यगञ्चनम्। "दिग्भ्यःपात" अन्याभ्यो दिग्भ्यः पालयत ॥ ८ ॥ अथैनमाविदो वाचयति (१)। "आविर्मर्याः"। आवेदयन्ति ज्ञापयन्ति यजमानमेताभिरित्याविदः। 'आविर्मर्याः। मर्या इति मनुष्यनाम हे मर्या आविः

(१) आविर्मर्या इति वाचयति। का० १५। ५। २१ ॥ ८ ॥

प्रकाशः प्रकटो यं यजमानो युष्मत्समक्षं कथ्यते। कथिते च स्तुतिः "प्रयोजनं वदति। सोऽस्मै सवनमनुमन्यते इत्याविर्मर्यो इत्याद्येकवचनादिभिः। स वो जन्म उत्पत्तिरिति यावत्। "आवित्तोऽअग्निर्गृहपतिः"। य,ब्युक्तोविभक्तिव्यत्ययैर्व्याख्यायन्ते। आविदितोज्ञापितो ऽग्नये गृहपतये यजमानः। "आवित्तइन्द्र." "आविदित "इन्द्राय वृद्धश्रवसो"। वृद्धं श्रवो धनं यस्य

विम्मर्त्यांऽ। आविर्मर्त्यांऽआवित्तोऽअग्निर्गृहपतिरावित्तऽइन्द्रो वृद्धश्श्रवाऽआवित्तौमित्रावरुणौधृतव्रतावावित्तःपूषाविश्ववेदा ऽआवित्ते द्यावापृथिवीविश्वशम्भुवावावित्तादितिरुरुशर्म्मा॥ ९॥

स वृद्धश्रवाः। "आवित्तौ मित्रावरुणौ"। आविदितो "मित्रावरुणाभ्यां धृतव्रताभ्यांव्रतमिति-कर्मनामधारितकर्मभ्याम्। "आवित्त.पूषा"। आविदितःपूष्णोविश्ववेदसेसर्वज्ञायसर्वधनायवा। "आवित्तोद्यावापृथिवी"। आवित्तोद्यावापृथिवीभ्यांविश्वशंभूभ्याम् सर्वं सुखेन सम्भवायित्रीभ्याम्। "आवितादितिः"। आविदितोदितम् उरुशर्मणे उरु पृथु महत् शर्मशरणं यस्याः सा तथोक्ता।

सर्वाएवाविदः श्रुत्या लक्षणया व्याख्याताः। तद्यथा "आविर्मर्या इत्यनिरुक्तं प्रजापतिर्वा अनिरुक्तइत्यादि" स्तास्तथा व्याख्येयाः। एवं वा मन्त्राणां प्रत्यक्षार्थत्वात् ॥ ९ ॥ केशवास्ये लोहाय समाविध्यति (१)। "अवेष्टादन्दशूकाः"। अवेष्टा। अविपूर्वो यजिर्नाशन्ते वर्त्तते। नाशि-

[५] अवेष्टादन्दशूकाः। अवेष्टादन्दशूकाः प्राचीमारोह गायत्री त्वावतु रथन्तरꣳ साम त्रिवृत्स्तोमो वसन्त ऋतुर्ब्रह्म द्रविणन्दक्षिणा मारोह ॥ १० ॥ दक्षिणामारोह। त्रिष्टुप्त्वावतु बृहत्साम पञ्चदश

ताः दन्दशूकाः अत्यर्थं दशनशीलाः। सर्पा एव इहाभिप्रेताः। "तद्योऽस्य पुर्यो वधस्तमेवैतदतिनयती" ति श्रुतेः। सुन्वन्तमा क्रमयन् दिशो वाचयति। "प्राचीमारोह"। प्राचीं दिश-

(१) अवेष्टाइति लोहायस (ताम्र) आविध्यति (क्षिपति) केशवास्ये (दीर्घकेशनरस्यमुखे) सदोन्त उपविष्टाय (सद समीपोपविष्टाय) इति। का० १५। ५ ॥ २२ ॥ सुन्वन्तमाक्रमयन् दिश प्राचीमारोहेतिवाचयतिप्रतिमन्त्रं प्रतिदिशं यथालिङ्गमिति। १५।। ५। २३ ॥ १० ॥

माक्रमस्व । आक्रममाणं च त्वा"ऽऽज्यलीअवतु" पालयतु । "रथन्तरञ्चसाम" त्वामवतु । "त्रिवृत्स्तोमः" त्वामवतु । "वसन्तऋतुः" त्वामवतु । "ब्रह्मद्रविण" ब्राह्मणजातिर्धनभूता त्वामवतु इति वाक्यशेषः । ब्राह्मणजातेः साधनभावाद्धनत्वमुच्यते ॥ १० ॥ एवं दक्षिणामारोहेति

स्तोमोग्ग्रीष्मऽऋतुःक्षत्रन्द्रविणम्प्रतीचीमारोह ॥ ११ ॥ प्रतीचीमारोह । जगतीत्वावतुवैरूपꣳसामसप्तदशस्तोमोवर्षाऽऋतुर्विड्द्रविणमुदीचीमारोह ॥ १२ ॥ उदीचीमारोहानुष्टुप्त्वावतुवैराजꣳसामैकविꣳशस्तोमःशरदृतुःफलन्द्रविणमूर्द्ध्वामारोह ॥ १३ ॥ ऊर्द्ध्वामारोह । पङ्क्तिस्त्वावतुशाक्वररैवतेसामनीत्रिणवत्रयस्त्रिꣳशौ

चतस्रः कण्डिका व्याख्येयाः छन्दःसामस्तोमऋतुद्रविणप्रभृतिभिर्भेदः । चतुर्थ्यां कण्डिकायां "फलं द्रविणमितिपठ्यते । तत्र धान्यफलं वा, यज्ञफलं वा अभिमतम् "वर्चोद्रविण" मित्यत्रापि

तेजो मह्यन्नर्चसं वा अभिप्रेतम् । सीसं निरस्यति (१) । "प्रत्यस्तम्" । असु क्षेपणे । प्रतिगृह्य क्षिप्तम् । "नमुचे" रसुरस्य शिरः ॥ ११ ॥ १२ । १३ । ॥ १४ ॥ व्याघ्रचर्मारोहति (१) । "सोम-

स्तोमौ हेमन्तशिशिरावृतूवर्च्चो द्द्रविणम्प्रत्यस्तन्नमुचेः शिरः ॥१४॥ सोमस्यत्विषिः । सोमस्यत्विषिरसितवेवमेत्विषिर्भूयात् ॥ मृत्योः पाह्योजोसिसहोस्यमृतमसि ॥१५॥ हिरण्यरूपाऽउषसः । हिरण्यरूपाऽउषसोव्विरोकऽउभाविन्द्राऽउदिथःसूर्यश्च ॥ आरोहतंव्वरु

स्यत्विषिरसि" व्याख्यातम् । रुकामधःपदं कुरुते । "मृत्योः पाहि" । हि रुक्म "मृत्योः सकाशान्मां गोपाय । शिरसि च रुक्मं करोति । "ओजोसि" ओज इति मनोवृत्तिः,जेष्यामस्मिति

(१) भ्रातृव्यपादेन सीसं निरस्यति प्रत्यस्तमिति का० । १५ । ५ । २४ ॥ १४ ॥

१) व्याघ्रचर्मारोहयति सोमस्य त्विषिरिति । १५ । ५ । २ । ७ ॥ १५ ॥

या प्रतिज्ञा सोच्यते। "सह" इति बाह्यं बलमुच्यते। "अश्वत" इति प्रकटार्थम् ॥ १५ ॥ बाहू उद्गृह्णाति (१)। "हिरण्यरूपोउषसो" मित्रावरुणास्त्रिष्टुप्यनुरन्ता। "मित्रोसिवरुणोसी" तियजुः। हे हिरण्यरूपौ मित्रावरुणौ यौ युवां "उषसो विरोके"। उषसो व्युत्थानकाले। उभावपि हे इन्द्रौ। इदि परमैश्वर्ये। परमेश्वरौ। "उदिथः" उद्गच्छथः। "सूर्यश्च" ययोर्युवयोःकार्यसंपादनाय सूर्यं उदेति तौ युवाम् "आरोहतम्" हे वरुण "मित्रगर्त्तं पुरुषम्"।

गमित्रगर्तन्ततश्चचाथामदितिन्दितिञ्चमित्रोसिवरुणोसि ॥१६॥

[७] सोमस्यत्वाद्युम्नेनाभिषिञ्चाम्यग्नेर्भ्राजसासूर्यस्यवर्चसे

"बाहू वै मित्रावरुणो पुरुषो गर्त्त इतिश्रुतिः। अध्यात्मविषयं व्याचष्टे। अधिदेवं तु "गर्त्तोरथः। ततश्चचाथमदितिं दितिं च। ततोनन्तरं पश्यतम् अदितिम् अदीनम् स्वकर्मविहितानुष्ठातारम्,दितिं दीनं नास्ति इतिम्। असुमेवार्थं श्रुतिराह"ततःपश्यतं स्वं चारणं चेत्यचेतदाह"। अपरो मन्त्रविकल्पः" "मित्रोसि वरुणोसि"। बाहू एवोच्येते। मित्रस्त्वमसि वरुणस्त्वम-

(१) बाहू उद्गृह्णाति हिरण्यरूपा इति मित्रोसि वरुणोऽसीति मा। १५। ५। २८॥ १६॥

षि ॥ १६ ॥ यजमानमभिषिञ्चति (१) "सोमस्य त्वा द्युम्नेन"। द्युम्नं द्योततेः। यशो वा अन्नं वा। सोमस्य त्वा द्युम्नेन अभिषिञ्चामि। "अग्नेर्भ्राजसा" अग्नेर्दीप्त्या। सूर्यस्य वर्चसा सूर्यस्य रोचिषा। "इन्द्रस्येन्द्रियेण" वीर्येण। अनया च सर्वाण्येव वीर्याणि व्याख्या-

न्द्रस्येन्द्रियेण ॥ क्षत्राणांक्षत्रपतिरेध्यतिदिद्यून्पाहि ॥ १७ ॥ इमन्देवाऽ। इमन्देवाऽअसपत्नꣳसुवद्ध्वम्महते क्षत्रायमहतेज्ज्यैष्ठ्याय महतेजानराज्यायेन्द्रस्येन्द्रियाय ॥ इमममुष्यपुत्रममुष्यैपुत्रमस्यैविशऽएषवोऽमीराजासोमोऽस्माकम्ब्राह्मणानाꣳराजा ॥ १८ ॥

तानि। अभिषिञ्चामीति सर्वशेषः। "क्षत्राणांक्षत्रपतिरेधि"। च सर्वशेषः। त्वं च एतैरभिषिक्तः सन् "क्षत्राणां" सर्वेषामधिपतिः एधि भव "अतिदिद्यून्पाहि"। अतीत्यातिक्रम्य दिद्यून् इषून् पाहि गोपायात्मानम्। "इषवो वै दिद्यून् इषुवधमेवैनमेतदयति नयतीति" श्रुतिः ॥ १७॥

(१) स्थितं माध्वमभिषिञ्चति यजमानोऽध्वर्युर्वा। १५। ५। ३०। ३३॥ १७॥

"इमन्देवाः। व्याख्यातम्॥ १८॥ कण्डूयनाभिषेकेण कणान्प्रलिम्पेत् (१) "प्रपर्वतस्य"। अ-ग्निर्देवत्या विष्टुप्। या एता आहुतिपरिणामभूता आपः ताः पर्वतस्य पर्ववतोऽग्नेः पार्थिवस्य। स हि पर्वणान् पौर्णमासममावास्याचातुर्मास्यादिभिः पर्वभिः। "वृषभस्य" वर्षितुः "पृष्ठात्"। उ-त्थायेति शेषः। "नावः"। णु स्तुतौ। नूयन्ते स्तूयन्ते स्तोत्रशस्त्रहोममन्त्रैरिति नावः आहुतिप-रिणामभूता आपः। "चरन्ति" गच्छन्ति आदित्यमण्डलं प्रति। "स्वसिचः" "स्वयमेव सिञ्च-

प्रपर्वतस्य। वृषभस्य पृष्ठान्नावश्चरन्ति स्वसिचऽइयानाः। ताऽ

तीति स्वसिचः। "इयानाः"। इण् गतौ। 'ताच्छील्यवयोवचनशक्तिषु चानश्'। गमनशीलाः। ता हि आदित्यमण्डलं प्राप्य मध्यस्थानमागच्छन्ति। मध्यस्थानं पृथिवीम्। तथा चोक्तम्। 'अग्नौ प्र-स्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः'। "ताआववृत्रन्नध-रागुदक्ताः"। "आववृत्रन्"। आदित्यमण्डलं प्राप्य ता एवावर्त्तन्ते। "अधराक्"। अधोऽञ्चनाः। "उदक्ताः"। उन्दी क्लेदने। क्विप्। उन्दनेन क्लेदनेन स्तम्भनेनाभ्यक्ता आपः। "अहिर्बुध्न्यम्"।

(१) कण्डूयन्याभिषेकेण प्रतिलिम्पते प्रपर्वतस्येति। का० १५।६।८॥१९॥

अहिमेव, :बुध्नमन्तरिक्षं तत्रभवोबुध्नोमेघस्तं बुध्नं मेघं मध्यस्थानम्। "अनुरीयमाणाः"। रीयति-गत्यर्थः। अनुप्रविश्य मेघछिद्रैर्गच्छन्त्यो भूमिं प्राप्नुवन्तीतिशेषः॥ अथवा आदित्यः पर्वतशब्देनोच्यते, या एता पर्वतस्यादित्यस्य वृषभस्य पृष्ठात् "इयनाः" निर्गच्छन्त्यः नाना व्या आपः। प्रचरन्ति सर्वतो गच्छन्ति स्वयं सिक्ताः। नाव्याआदित्यस्य या उपरिष्ठादापस्ता उच्यन्ते। तथाच श्रुतिः। "नाव्याउ एव यजुषात्य इष्टका' इत्युपक्रम्य "षष्टिश्च ह वै त्रीणि च शतान्यादित्यं

आवंवृन्नधरागुदक्ताऽअहिंम्बुध्न्यमनुरीयमाणाः॥ विष्णोर्व्विक्रमणमसिविष्णोर्व्विक्रान्तमसिविष्णोःक्रान्तमसि॥ १९॥ प्रजा

नाव्या अभितरन्ती' त्याह। ताः प्रावृट्काले आवर्तन्ते। "अधराञ्चः" उदक्ताव्यक्ताः। "अहिं" मेघं "बुध्न्यम् अनुरीयमाणाः" अनुप्रविश्य शुषिरैरनुगच्छन्त्यः॥ अथवा याः पर्वतस्य हिमवद्विन्ध्याद्रेः वृषभस्य वर्षितुः सेक्तुः पृष्ठात् इयानाः। नावश्चरन्ति। नावा तार्या महानद्यः प्रचरन्ति स्वयं सिक्ताः, ता एव राजसूययाजिनोर्थाय आवर्तन्ते गृह्यमाणाः। अभिषेकपा-

वेपु उदक्ता उत्क्षिप्ताः। उत्पूवैस्मान्नतेरेतद्रूपम्। "अघराक्" अघराञ्चः अधोऽञ्चनाः। "अहिम्" अहन्तारं यजमानं यत्रूणाम् "बुध्न्यम्" बुध्नशब्देन मूलमुच्यते तत्रभवं यजमानं बुध्न्यं प्रधानमित्यर्थः। "अनुदीयमानाः"। यजमानं प्रत्यनुषिच्यमानाः। ता

पतेन। त्वदेतान्न्यन्न्योविश्वारूपाणिपरितावभूव॥ यत्कामास्ते जुहुमस्तन्नोऽअस्त्वयममुष्यपितासावस्यपितावयꣳस्यामपतयोर यीणाꣳस्वाहा॥ रुद्रयत्तेक्रिविपरन्नामतस्मिन्हुतमस्यमेष्टमसि

आवहत्वमित्यादि सम्बन्धनीयम्। चर्मणि त्रिविक्रमयति यजमानम्। "विष्णोर्विक्रमणम्"। विष्णोः यज्ञस्य विक्रमणं यच्च विक्रान्तं यच्च क्रान्तं तत्सर्वं त्वमसि इति योजना ॥ १९ ॥ जुहोति (१) "प्रजापतेन"। प्राजापत्या त्रिष्टुप् यजुरंत्या। "अयममुष्य पितासावस्य पिते"

(१) शालाद्वार्ये जुहोति पुर्वे ऽन्यारब्धे प्रजापते इति। आग्नीध्रीये पालयेन शेषान् जुहोति रुद्रो यत्त इत्युत्तरार्धे इति। १५। ।६।११—।१२।॥२०॥

तियजुः। हे प्रजापते “नत्वदेतान्यन्योविश्वरूपाणिपरितानभूव”। त्वत्तोन्यो देवताविशेषः एतानि सर्वाणि नानाजातीयानि वर्त्तमानकालसंबन्धानि रूपाणि परिसमन्ततः। ता। तानिच यान्युत्पन्नानि उत्पत्स्यन्ते वा। “बभूव”। अत्र नकारः संबध्यते। न बभूव। न भवति आत्मरूपत्वेन यस्मात् अतो ब्रवीमि। “यत्कामास्तेजुहुमस्तन्नोऽस्तु”। येन कामेन ते तव जुहुमः तत्कामरूपमस्माकमस्तु। कथंभूतम्। यजुः व्याख्यायते। अयममु-

स्वाहा ॥ २० ॥ [४] इन्द्रस्यवज्रः। इन्द्रस्यवज्रोसिमित्रावरु

ष्यपिता। अयं पुत्रः असुष्ययजमानस्य पिता। असावस्य पिता। असौ यजमानः अस्य पुत्रस्य पिता। सर्वथा सपुत्रा वयमेव स्याम भवेम। “पतयोरयीणां” धनानाम्। स्वाहा स्वाहुतमस्तु। जुहोमि। “रुद्रयते”। हे भगवन् रुद्र यत् ते तव “क्रिवि”। क्रिवि हिंसाकरणयोः। कर्तृ हिंसित वा परमुत्कृष्ट नाम। “नमनम्”। एवं रुद्रं संबोध्य अथेदानीं हव्यमाह। तस्मिन् नाम्नि हुतम् असि। “अमेष्टमसि”। अमाशब्दो गृहवचनः। गृहे

द्रूटमसि। स्वाहा ॥ २० ॥ रथमुपावहरति (१)। "इन्द्रस्यवज्जोसि"। व्याख्यातम्। तं युनक्ति। "मित्रावरुणयो" र्द्वयोः "त्वा" त्वां "प्रशास्त्रोः। "प्रशासिषा" प्रशासनेन युनज्मि। तमातिष्ठति। "अव्यथायै"। व्यथ भयचलनयोः। अभयाय अचलनाय वा त्वामधितिष्ठामि। "स्वधायैः"। अन्नरसाय च त्वामधितिष्ठामीति शेषः। "अरिष्टः" "अनुपहिंसि-

गायोस्त्वाप्प्रशास्त्रोःप्प्रशिषायुनज्मि ॥ अव्व्यथायैत्वास्वधायैत्वारिष्टोऽअर्ज्जुनोमरुताम्प्रसवेनजयापामुमनसासमिन्द्रियेण ॥ २१ ॥

तः। "अर्जुनः" अर्जनशीलः। "अर्जुनोह वैनामेन्द्र" इति श्रुतिः। दक्षिणधुर्यं प्राजयति। "मरुताम्प्रसवेनजय"। मरुतां संबन्धिन्यामभ्यनुज्ञायां वर्त्तमानः सन् शत्रून् जय ॥ मध्ये गत्वासुद्यच्छति। "अपाममनसा"। व्याप्तवन्तो मनसा वयम्। तदुपरिक्रान्तमर्गः धनुरत्यागासुपस्पृ-

(१) वाजपेयनप्रथमवष्ठत्य दक्षिणस्यो वेदि श्रोणी युनक्ति पूर्वं वमित्रावरुणयोरिति चतुर्भिरिति। अव्यथायैत्वेति सुन्वन्तारोहति। मरुतामिति दक्षिणधुर्यं प्राजति इति। १५। ६। १५। १८ ॥ २१ ॥

यति । "समिन्द्रियेण संगताःस्म वयमिन्द्रियेण वीर्येण ॥२१॥ अग्रे शाखामुच्छ्रति (१) । "मात इन्द्र"। ऐन्द्री त्रिष्टुप् । अत्र द्वितीयोऽर्धर्चः प्रथमं व्याख्यायते यच्छब्दयोगात् । "तिष्ठा रथमधियं वज्रहस्त" । लडर्थे लोट् । यं रथमधितिष्ठसि हे वज्रहस्त यस्मिंश्चावस्थितः "आरश्मीन्देवयमसे" । आयमसि आयच्छसि रश्मीन्प्रग्रहान् हे देव स्वश्वान् शोभनाश्वान् । इदानीं प्रथमोऽर्धर्चो व्याख्यायते । व्यवहितपदसंबन्धः प्रायः । तस्मिन्नेते तव रथभूते वयम् "अयुक्तासः" । 'आञ्जसेरसुक्' ।

मातेऽइन्द्र ते वयन्तुराषाडयुक्तासोऽअब्रह्मता विदसाम ॥ तिष्ठा रथमधि यं वज्रहस्ता रश्मीन्देव यमसे स्वश्वान् ॥ २२ ॥

"मा विदसाम" । दसुउपक्षये कर्मणि लकारः । मा विदस्येमहि मा उपक्षीयेमहि । हे इन्द्र "तुराषाट्" तूर्णं सहत इति तुराषाट् तस्य संबोधनं हे तुराषाट् । त इति द्वे पदे अनुदात्ततयोरेकोऽनर्थकः । माविदस्येमहीत्युक्तम् तदुपक्षयं दर्शयितुमाह । "अब्रह्मता" । लुप्तोपममेतत । अब्रह्म ते तत्र । ब्रह्मविज्ञानानन्दस्वभावमविनश्वरम् तत्राभावो ब्रह्मता नब्रह्मता

(१) उदकुम्भोदितामिमन्त्रयते ( पिण्डोदुत्तरित्तम्यम् ) । का० १६ । २ । २० ॥ २२ ॥

ध्यरमता। यथा वृक्षमभात्रादन्यद्दिदसरे त् एवं माविदसत्रमहीत्युपमार्थः॥ २२॥ चत्वा-
रिंयद्विमोचनीयानि जुहोति (१) "अग्नये गृहपतये स्वाहा" "सोमाय वनस्पति" रूपाय।
मरुतां संवन्विने ओजसे। इन्द्रस्य संवन्विने इन्द्रियायवीर्याय। भूमिमवेक्षते। "पृथिवि

ग्नयेंगृहपंतये। अग्नयेंगृहपंतयेस्वाहासोमांयवनस्पतंयेस्वाहांमरु
तामोजंसेस्वाहेन्द्रस्येन्द्रियायस्वाहां। पृथिंविमातर्म्मामांहिᳬसी
र्म्मोऽअहन्त्वाम्॥ २३॥ हुᳬसःशुंचिषत्। हुᳬसःशुंचिद्वसुंरन्तरि

मातः माहिंसीर्माम्"। मो अहं त्वाम्। मो च त्वाम् अहं हिंसिषम्॥ २३॥ अव-
तरति। "हंᳬ सःशुचिषत्"। "सप्तपञ्चपरब्रह्माभिधायिनी अतिच्छन्दा अतिजगती

(१) उपनिरय सदमभिजुहोतगात्वा जिघर्मीति व्यतिषक्ताभ्यामग्न्योमाहुतीस्रुवेणाश्वपदे। का० १६।२॥२२॥ आज्यं-
मस्तंत्य विष्णुसमीपे उपविश्य सदमभि अश्वपदे मृत्पिण्डोपरिस्थिताश्वपदमुद्राया मात्वा आविभ्यतइति ऋग्भ्यां व्यति-
षक्ताभ्यां स्रुवेणाहुती द्वेजुहोति, व्यतिषङ्गश्चैवम् आत्वा जिघर्मीति पूर्वस्या पूर्वार्धं पृथुं तिरश्चेति पूर्वस्या उत्तरार्धंच
पठित्वा द्वितीयाहुतिरिति॥ २३॥

तिष्ठति"। "हंसः शुचिषत्"। हन्त्यध्वानमिति हंसो भगवानादित्यः शुचिषत्। शुचौ दीप्तौ सीदतीति शुचिषत्। य आदित्यरूपेण शुचिषत्। यश्च वसुर्वासयिता वायुरूपेणान्तरिक्षे सीदति। यश्च होता आह्वाता अग्निरूपेण वेदौ सीदति। यश्चातिथिरूपेण दुरोणे गृहे सीदति। यश्च नृषु मनुष्येषु प्राणभावेन सीदति। यश्च वरेषूत्कृष्टेषु सीदति। यश्च ऋते सत्ये सीदति। यश्च व्योमसु अन्तरिक्षेषु सर्वेषु सीदति। एवं

## त्तुसद्धोतांव्वेदिषदतिंथिर्द्दुरोणुसत् ॥ नृषद्वुरसदृतसद्व्योमुसदुब्जा गोजाऽऋतुजाऽअंद्रिजाऽऋतम्बृहत् ॥२४॥ इयंदसि। इयंदस्यायु

सर्वत्रस्थितिभावेन स्तुत्वा अथेदानीं सर्वोत्पत्तिद्वारेण स्तौति। यश्च "अब्जा"। अप्सु जायत इत्यब्जा। यश्च गवि पृथिव्यां चतुर्विधभूतग्रामरूपेण जायते। यश्च "ऋते" सत्ये जायते। यश्च "अद्रौ" पाषाणे अग्निरूपेण जायते मेघोऽप्यद्रिरुच्यते। मेघे वा उदकरूपेण जायते। तत् "ऋतम्"। ऋ गतौ। सर्वतो गतं परब्रह्म। "बृहत्"। परिबृहत्। "अनन्तं अपर्यन्तम्। एवं परब्रह्मवादिनाऽस्य मन्त्रस्य तत्परब्रह्मप्रत्यव-

तरामीति वाक्यशेषः ॥ २४ ॥ उपस्पृशति शतमानौ "इयदसि"। इयदिति परिमाणवच-
नोयं शब्दः। शतमानमसि। "आयुरसि"। "आयुर्हि" "रणमि" तिश्रुतिः। "आयुर्मयि
धेहि"। यो हि यदात्मको भवति स तद्दातुमुत्सहते। यस्माच्छतमानं हिरण्यत्वमसि
तस्मात् शताब्दपरिमाणमायुर्मयि धेहि। "युङ्ङसि" युनक्ति यज्ञं संभारनिवापेन दक्षि-

रुस्यायुर्म्मयिधेहियुङ्ङसिव्वर्च्चोसिव्वर्च्चोमयिधेह्यूर्गस्यूर्ज्जम्मयिधेहि ॥
इन्द्रस्यवांव्वीर्य्यकृतोबाहूऽअभ्युपावहरामि ॥ २५ ॥ (५) स्योना

णादानेन वेति युङ्। "वर्चोसि"। वर्चस्तेजः। यस्मात्त्वं वर्चोसि अतोस्माभिः प्रार्थ्यसे।
"वर्चो मयि धेहि"। औदुम्बरीं शाखामुपस्पृशति। "ऊर्गस्यूर्जं मयि धेहि"। ऊर्जमन्नमुच्यते।
अवहरति बाहू। "इन्द्रस्य वाम्"। यौ इन्द्रस्य यजमानस्य वां युवां वीर्यकृतौ वीर्यकारिणः संब-
न्धिनौ बाहू तौ अभ्युपावहरामि मैत्रावरुणीं पश्चात् प्राति ॥ २५ ॥ आसन्दीं

निदधाति। "स्योनासि"। स्योनमितिसुखनाम। स्योनासि सुखरूपासि। "सुषदासि"। सुखेन यस्यां सीदन्ति सा तथोक्ता। "क्षत्रस्य योनि" स्थानमसि। सुन्वन्तमस्यामुपवेशयति। "स्योनामासीद"। सुखरूपामासन्दीमासीदधिरोह। "सुषदामधिरोह" च। क्षत्रस्य स्थानमधिरोह ॥ २६ ॥ यजमानस्य उरोभिमृश्य जपति। "निषसा-

सिं सुषदासिक्षुत्रस्ययोनिरसि। स्योनामासीदसुषदामासीदक्षत्रस्ययोनिमासीद ॥ २६ ॥ निषसाद। धृतव्रतोवरुणःपुस्त्यास्वा। साम्राज्यायसुक्रतुः ॥ २७ ॥ अभिभूरसि। अभिभूरस्येतास्तेपञ्च

दधृतव्रतः"। वारुणी गायत्री। अधियज्ञं यजमानो वरुणः निषसाद निषण्णः धृतव्रतः। धृतं व्रतं कर्म येन स तथोक्तः। धृतव्रतो वै राजा न वा "एषसर्वस्मा इव वदनाय न" सर्वस्मा इव कर्मणे "यदेव साधु वदेद्यत्साधु कुर्यात् तस्मै वा एषश्रोत्रियश्चेति" श्रुतिः। "पस्त्यासु" प्रजासु। आधिपत्ये ने त्युपसर्गादर्थपरिपूर्तिः। "साम्राज्याय"। "सम्राड्भावायेति" श्रुतिः। "सुक्रतुः"

मुक्रनी। योभनप्रश्नो वा ॥ २७ ॥ दम्बाद्मात्याणावावपति । "अभिभूरसि"। इतवेता द्वापरकलयश्चत्वारोत्ता: पञ्चमो रसणः। तत्रकलि: सर्वानयान् अभिभवति स उच्यते। यजमानो वा तत्स बन्धेन। "अभिभूरसि"। अभिभवितासि। एतास्तवपञ्चदिशः कपटोपल-

दि॒शः॑ ॥ क॒ल्पन्ता॒म्ब्रह्म॒ꣳस्त्वम्ब्र॒ह्मासि॑सवि॒तासि॑स॒त्यप्र॑सवो॒व्व॑रु॒णोसि॒स॒त्यौजा॒ऽइन्द्रो॑सि॒व्विशौ॑जारु॒द्रो॑सि॒सु॒शेवः॑ ॥ बहु॑कार॒श्श्रेय॑स्क॒र॒भू॒य॑स्क॒रेन्द्र॑स्य॒व्वज्रो॑सि॒तेन॑मेरद्ध्य ॥ २८ ॥ अ॒ग्ने । पृ॒थो । अग्ने॑ऽपृथु॒द्धर्म॑ण॒स्पति॒ञ्जु॒षा॒णोऽअ॒ग्ने॑ऽपृथु॒द्धर्म॑ण॒स्पति॒राज्य॑स्य

जिता: क्लृप्ता: भवन्तु। ब्रह्मन्निति प्रथममामन्त्रयते यजमानः ब्रह्माणम्। त्वं ब्रह्मासि सवितासि सत्यप्रसव इति। ब्रह्माह। त्वमेव ब्रह्मासि भवसि सविता चासि सत्याभ्यनुज्ञः। द्वितीयं मन्त्रमाह त्वं ब्रह्मासि वरुणोसि सत्यौजाः सत्यमोजो यस्य स सत्यौजाः। तृतीयं

प्रत्याह त्वं यह्वासि इन्द्रस्य त्वमसि विशोजाः विद्य ओजो यस्य स विशोजा इहमासे। विशौजा इत्यन्याय्यसमासः अतएव षट्कारो नावगृह्णाति। चतुर्थं प्रत्याह। त्वं ब्रह्मासि रुद्रस्य त्वमसि सुशेवः। शेव इति सुखनाम। शोभनं सुखयिता॥ सुमङ्गलनामानं स्तूयति। "बज्रकारः" वज्र करोतीति वज्रकारः। "श्रेयस्कारः"। श्रेयः करोतीति श्रेयस्कारः। भूयः करोतीति "भूयस्कारः" तेषां सम्बोधनम् हेवज्रकार श्रेयस्कार भूयस्कार। स्फामस्मै प्रयच्छति। "इन्द्रस्य वज्रोसि"। यतः "इन्द्रोह यत्र हत्वाय वज्रं प्रजहार" इत्युपक्रम्य

## त्वेतुस्त्वाह्वास्त्वाहांत्रातृ॒ऽ सूर्यंस्यरृश्मिम्भिर्व्यंतह्वॄंसजातानांम्मध्या

"स स्फास्तृतीयं चेत्यादिना" श्रुतिग्रन्थे उक्तः अतस्त्वां ब्रवीमि तेन हेतुना मे मम यजमानं रध्र। रध्यतिर्वशगमने। वशवर्तिनं कुरु। "यो वै राजा ब्राह्मणादबलीयानमित्रेभ्यो वै स बलीयान् भवतीति" श्रुतिः॥ २८॥ हिरण्यमस्मिन्निधायाभिजुहोति। "अग्निःपृथुः"। योयं देवानामग्निः पृथुः इतरस्मादग्नेः "धर्मणस्पतिः" धारणस्पतिः स "जुषाणः" सेवमानो

(१) मध्या पिण्डं खनति देवस्य त्वेति। का०। १६। २। २२॥ २८॥

वा प्रोयमाणो वा । "अग्निः एधुः धर्मणास्पतिः आज्यस्य" घृतस्य "वेतु" पिबतु "स्वाहा" सुहुतं चैतद्धविर्भवतु । अचान्निर्वपति । "स्वाहाकृताः" हे अचाः स्वाहाकारपूर्विकयाहुत्या तर्पिताः सन्तः सूर्यस्य रश्मिभिर्यतध्वम् सङ्गं कुरुत । "सजातानां" समान-

मध्यमेष्ठ्याय ॥२९॥ [४] सवित्रा प्रसवित्रा । सरस्वत्या वाचा त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणास्मे बृहस्पतिना ब्रह्मणा वरुणेनौजसाग्नि

जन्मनां च भ्रातॄणां क्षत्रियाणां वा । मध्यमे । मध्यात्म: । मध्ये भवो मध्यमः । मध्यमे प्रदेशेऽवस्थानाय यजमानस्य । यतध्वमित्यनुवर्त्तते ॥ २९ ॥ सर्प्पति । (१) "सवित्राप्र-

(१) कृष्णाजिनमास्तीर्यांत्तरतस्तस्मिन् पुष्करपर्णं अपां पृष्ठमिति विभाव्यं नहिंघमिति। का० । १६ । २ । २४ ।२५॥ स्थलिपण्डोत्तरभागे प्राग्ग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य तत्रापां पृष्ठमिति पादत्रयात्मकमन्त्रेण कमलिनीपत्रमास्तृणाति तद्विपुलं करोति इति सूत्रार्थः पुष्करपर्णं सर्वोऽप्यौक्तिरियम् । द्यौर्भावी वरिमा ॥ २९ ॥

(१) पाममते उभे कृष्णाजिनपुष्करपर्णे सहैव स्पृशति शर्म च स्थ इति अग्नेः सुखकारिणो कवचवद्रक्षको च स्थः का। ० १६ । २ । २६ ॥ ३० ॥

सवित्रा"। सविता अभ्यनुज्ञातस्य कर्त्ता प्रसूतः प्रसर्पामि। एवं सरस्वत्यादिभिर्योजनीयम्। "इन्द्रेणास्मे"। अस्मे इति इह तृतीयान्तम्। इन्द्रेण मया। शेषं सुबोधम् ॥ ३० ॥ इत उत्तरं चरकसौत्रामण्यौ। अश्विनोरार्षम्। सुरां संदधाति (१) "अश्विभ्यां पच्यस्व"। पाको नामान्नविपरिणामज्येष्ठता। "सरस्वत्यै"। "इन्द्राय सुत्राम्णे"। शोभनत्रा-

नातेजसासोमेनराज्ञाविष्णुनादशम्यादेवतयाप्रसूतःप्रसर्पामि. ॥ ३० ॥ [ १ ] अश्विभ्यांपच्यस्व। अश्विभ्यांपच्यस्वसरस्वत्यैपच्यस्वेन्द्रायसुत्राम्णेपच्यस्व ॥ वायुःपूतःपवित्रेणप्रत्य

णाय सुत्रातव्याय वा। भैषज्यं हीन्द्रस्य कर्त्तव्यं सौत्रामण्या। सुरां पुनाति ॥ "वायुःपूतः"। सौमी गायत्री। यः सोम. वायुना पूतः। सोमः प्रथमं पूतिगन्ध आसीत् ततो देवैर्वा-

(१) पिण्ड पुरीष्योसीति (सृशति) पाणिभ्यामरिष्टहात्येन दक्षिणोत्तराभ्यां दक्षिण साक्षिरस्त्वामग्ने इति षड्भि सर्वं सङ्गृत्वा पुष्करपर्णे निदधातीति। दक्षिणेनाभि हस्तोभाभ्यां कराभ्या सर्वं पिण्ड त्वामग्न इति षड्चेन सङ्गृहीत्वा पुष्करपर्णं स्थापयतीति सूत्रार्थ ॥ १६। २। २७-२८। २। १। अथर्वा ऋषि, प्राणो वा।

युक्तः अपहृतविरूपगन्धं सोमं कुर्वंति ततो वायुनाऽपहृतः सोमस्य गन्धः। ऐन्द्रवायव-वाह्मणे एतत्प्रतिपादितम् तदेतदस्माभिर्व्याख्यातं विभक्तिव्यत्ययेन। यद्वा। यो वायुरूपः सोमः पूतः यस्य पवित्रेण प्रत्यङ् नीचैः अधोमुखम् अतिस्रुतः। स्रु गतौ। अतिक्रम्य गतः। स सोमः। इन्द्रस्य युज्यः समानयोगी च सखा च समानख्यानः। कथमिन्द्रं छिनस्तीति

ङ्क्सोमोऽअतिस्रुतः ॥ इन्द्रस्ययुज्ज्यःसखा ॥ ३१ ॥ कुविदङ्ग। यवमन्तोयवञ्चिद्यथादान्त्यनुपूर्वंव्वियूय। इहेहैषाङ्कृणुहिभोजनानियेबर्हिषोनमऽउक्तिंय्यजन्ति। उपयामगृहीतोस्यश्श्विभ्यान्त्वा

येन: ॥ ३१ ॥ ग्रहं गृह्णाति। "कुविदङ्ग"। अनिरुक्ता सौमी त्रिष्टुप्। कुविदिति बहु-नाम। अंगेति क्षिप्रनाम। हे सोम यथा केचिज्जनपदाः कुविदङ्गच्चेत्रम् अङ्ग क्षिप्रम् यव-मन्तः बहुयवाः यतः सोमः यवं चित्। चिच्छब्दो वितर्के। यवं वितर्क्य दान्ति। दाप् लवने। लुनन्ति। "अनुपूर्वम्"। आनुपूर्वेण वियूय पृथक्कृत्य अभिख्याय प्रथम् "इहेहैषां

क्षणुहि भोजनानि" भोग्यानि वस्तूनि। "ये बर्हिषो नम उक्तिं यजन्ति"। ये यजमाना बर्हिषः उपरिस्थिताः नमउक्तिम्। नम इत्यन्ननाम। उक्तिर्वचनम्। हविर्लक्षणं नमोन्नमादाय उक्तिं यज्यामभिधाय यजन्ति यागं कुर्वन्ति। "उपयामगृहीतोसि" इत्यादि व्याख्यातम् ॥ ३२ ॥ "युवꣳ०:सुरामम्"। अनुवाक्या। पुत्रमिव याज्या। अनुष्टुप्त्रिष्टुभौ अश्विसरस्वतीन्द्रदैवात्ये। तत्रे-

न्द्वासरस्वत्यैत्वेन्द्रायत्वासुत्राम्णे ॥ ३२ ॥ युवꣳसुरामम्। युवꣳ सुराममश्विनानमुचावासुरेसचा ॥ विपिपानाशुभस्पतीऽइन्द्र कर्म्मस्वावतम् ॥ ३३ ॥ पुत्रमिवपितरौ। पुत्रमिवपितरावश्विनोभेन्द्रा

तिहासमाचक्षते। नमुचिर्नामासुर इन्द्रस्य सखिभूत आस। स इन्द्रस्य विश्वस्तस्य सुरया वीर्यं पपौ। सोश्विनौ च सरस्वतीं चोपाधावत् पीतवीर्योस्मि नमुचिना ततोपां फेनं वज्रमसिञ्चत् तेनेन्द्रो नमुचेः शिरश्चिच्छेद। तत्र लोहितमिश्रः सुरासोमोतिष्ठत् तदेतदुच्यते। हे अश्विनौ युवां सुरामम्। सुरामयं सोमं सुरमणीयं वा। नमुचौ आसुरे अवस्थितम्

"सचा"। सहभूत्वा एकीभूय। "विपिपाना"। विविधं पिवन्तौ। हे शुभस्पती स्वामिनौ इन्द्रं कर्मसु निमित्तभूतेषु स्वकर्मकरणार्थम् "आवत" पालयतं स्वकर्मक्षमं कुरुतमित्यर्थः ॥ ३३ ॥ "पुत्रमिव पितरौ"। यथा मातापितरौ पुत्रं पालयतः एवमुभावप्यश्विनौ हे इन्द्र, त्वाम् "अवथुः" पुरुषव्यत्ययः। त्वां पालितवन्तौ। काव्यैः कविकर्मभिः मन्त्रदर्शनैरित्यर्थः। "दंसनाभिः"। दंस इति कर्मनाम। कर्मभिश्च मन्त्रैश्चेत्यर्थः। कथमवगम्यते अश्विनौ

वथुऽकाव्यैर्दुऽसनाभिः ॥ यत्सुरामंव्यपिबुऽशचीभिऽसरस्वतीत्वा मघवन्नभिष्णाक् ॥ ३४ ॥ [४] ॥ ८ ॥ इति दशमोऽध्यायः १० ॥

त्वां पालितवन्तावित्याह। "यत्सुरामं व्यपिबः शचीभिः"। यस्मात्त्वं सुरामयं विविधं पीतवानसि। शचीभिः कर्मभिः। नमुचेः शिरश्छेदनं कर्म कृत्वा स्ववीर्येण। नह्यदृढ एतत्कर्म कर्त्तुं शक्त इत्यभिप्रायः। "सरस्वती त्वा मघवन्नभिष्णाक्"। सरस्वती च त्वां हे मघवन् धनवन् अभिष्णाक्। अभिष्णाक्शब्दः कण्ड्वादिषु पठ्यते तस्यैतन्द्रूपम् अभिषज्येताभिषजितवती सरस्वती च त्वाम् ॥ ३४ ॥ इति उव्वटकृतौ मन्त्रभाष्ये दशमोऽध्यायः ॥ १० ॥

अष्टावध्याया अग्निसम्बद्धास्ताग्प्रजापतिर्ददर्श। साध्यावा ऋषयः प्रजापतेः प्राणभूताः। अथ पञ्चशा दर्शितः प्रजापतिः प्रथमां चितिमपश्यत् प्रजापतिरेव तस्या आर्षेयम्। देवा द्वितीयां चितिमपश्यन् त एव तस्याः आर्षेयम्। इन्द्राग्नी च विश्वकर्मा च तृतीयां चितिमपश्यन् त एव तस्या आर्षेयम्। ऋषयश्चतुर्थीं चितिमपश्यन् ऋषय एव तस्या आर्षेयम्। परमेष्ठी पञ्चमीं चितिमपश्यत् परमेष्ठ्येव तस्या आर्षेयमिति। अथवा प्रतिकर्मद-

युञ्जानऽ प्रथमम्। युञ्जानऽ प्रथमम्मनस्तत्वाय सविता धियः॥ अग्ने ज्योतिर्निचाय्य पृथिव्याऽअध्याभरत्॥ १॥ युक्तेन मनसा।

र्शिनः। सवितैतानि सावित्राण्यपश्यदिति। "युञ्जानः प्रथमं मनः"। अष्टौ कण्डिकाः सवित्रा दृष्टाः सवितृदेवत्याः ताभिः सन्तताभिराहुतिर्हूयते। प्रथमानुष्टुप्। आरम्भे सविता युञ्जानः। युञ्जानः प्रथमं मनः ततोनन्तरम् "तत्वाय"। तनु विस्तारे। क्त्वो यप् छान्दसः उपजनः। "तनित्त्वा"। विस्तार्य्य। "धियः" बुद्धीः। मनसा पर्य्यालोच्य बुद्ध्या

(१) युंजानएकादशप्रतूर्त्तं ठं०षोडशदेवस्यत्वादशापोदेवीर्द्वादशापोह्येकादशादितिश्चापचाकूतिमष्टादशसप्ताशीतिः॥

वाजधाय्ये त्यर्थः । "अग्ने र्ज्योतिः"। अग्नि र्वन्हि ज्योतिः । पञ्चसु पशुषु प्रविष्टम् निचाय्य। उपलभ्य । यथा वा अग्निः समिद्धोदीप्यत इत्यादिना । ततः पशुक्रियान्विताया: "पृथिव्या: अध्याभरत्" अध्याहृतावानग्निम् इष्टकां कृत्वो चितवानग्निम्। अतौ प्रजापतिः कर्त्तो-पदिष्टः तदनुज्ञया इदानीं तना यजमानाउपदिश्यन्ते । "प्रजापतिर्वै युञ्जान" इति ॥ १ ॥ युक्तेन मनसा । गायत्री । युक्तेन एकाग्रेण मनसा वयं देवस्य सवितुः सवे । प्रसवे वर्त्तमानाः स्वर्ग्याय स्वर्गसाधनाय कर्मणे । शक्त्या । यथाशक्त्या प्रयत्नं कुर्म इतिशेषः ॥२॥

व्ययन्देवस्यसवितुःसुवे । स्वर्ग्यायपुशक्त्या ॥ २ ॥ युक्त्वाय सविता । देवान्त्स्वर्य्यतो धियादिवम् । बृहज्ज्योतिःक

युक्त्वा"। अनुष्टुप् । सवितामसुवातितानिति तदो दर्शनादिह यचोगः कर्त्तव्यः नित्यसंबन्धौ हि यत्तदौ । 'युक्ताय"। यकार उपजनोनर्थान्तरवचनः । युक्ताय सविता यत् देवान् अग्रकर्मणि अन्येन कर्मणा स्वर्य्यतः स्वर्लोकं गच्छतः "धिया" बुद्ध्या कर्मणा वा । "दिवं" द्योतनं स्वर्गम्। "बृहत्" महत् 'ज्योति' रादित्यलक्षणाम । आत्मत्वेन "करिष्यतः" संस्कुर्वतः ।

"सविता प्रसुवाति" प्रसौति अभ्यनुजानाति। "तान्" देवान् ॥ ३ ॥ "युञ्जतेमनः" इत्यादि व्याख्यातम्। इयांस्तु विशेषः। प्रजापतिर्विप्रः हृहद्विपश्चिदित्युच्यते। देवाः विप्राः ॥ ४ ॥ "युजेवाम्"। त्रिष्टुप्। दम्पतीयजमानौ वामित्यनेन पदेनोच्यते। "युञ्जे" युनज्मि। "वां"

रिण्ण्युतऽसंवितापप्रसुवातितान्॥ ३ ॥ युञ्जतेमनंऽ। युञ्जतेमनंऽउत युंञ्जतेधियोव्विप्प्राव्विप्प्रंस्यवृहुतोविंपुश्चितंः॥ व्विहोत्त्रांदधेव्वयुना विदेकुऽइन्म्महीदेवस्यंसवितुःपरिष्टुतिः ॥ ४ ॥ युजेवाम्ब्रह्मपूर्व्यं न्नमोभिर्व्विश्श्लोकंऽएतुपथ्ये वसूरेः। शृण्वन्तुव्विश्श्वेऽअमृतस्यपुत्त्रा

युवाभ्यामर्थाय। "ब्रह्मपूर्व्यन्नमोभिः"। प्राणाः सप्त ऋषयो ब्रह्माणाब्रह्मशब्देनोच्यन्ते। पूर्व्यशब्देन च नमोभिरन्नैः सहितम्। इयमेवाहुतिरन्नशब्देनोच्यते। किं प्रयोजनमिति चेत्। "विश्लोकएतपथ्येवसूरेः"। विविधमेतु आगच्छतु श्लोकः कीर्तिः सूरेः पण्डि-

तस्य। यजमानस्य। कथमिव। "पथ्येव"। पथः अनपेता पथ्या। यज्ञमार्गे प्रहुताहुतिरुभय-लोकसंचारिणी भवति। एवं यजमानश्चोभयलोकसंचारी श्लोको भवत्विन्त्यभिप्रायः। शृण्वन्तु" च "विश्वे" सर्वे। "अमृतस्य" अमरणधर्मिणः प्रजापतेः "पुत्राः देवाः कीर्तिम्"। "आये धामानि दिव्यानि तस्थुः"। "आतस्थुः आस्थिताः ये देवाः धामानि स्थानानि दिव्या-

ऽआयेधामानिदिव्यानितस्थुः ॥ ५ ॥ यस्यप्रयाणम् । यस्यप्रयाणमन्वन्यऽइद्ययुर्देवादेवस्यमहिमानमोजसा। यःपार्थिवानिवि

नि ॥ ५ ॥ "यस्य प्रयाणम्"। जगती। सवितेव प्रजापतिरत्राभिप्रेयते। व्यवहितपदप्राय-मिदं मन्त्रवाक्यम्। यस्य देवस्य प्रयाणम् "अनु" प्रगमनमनु। "अन्ये" "देवाययुः"। जग्मुः। इन्द्रादयोऽनर्थकः। "महिमानमोजसा"। महिमानं महाभाग्यं विभूतिम् ओजसा बलेन ययुर्देवाः। "यः" स सविता देवः "पार्थिवानि रजांसि विममे महित्वना"। लोका रजांस्युच्यन्ते। पृथिवीमश्नुतीन् लोकान्विमीते स्वकीयेमहाभाग्येन। "सएतशः" एतज्जग-

रस्थावरजङ्गमं प्राणभावेनप्रेत इति सविता एतश इत्युच्यते। यद्वा। एतश इत्यश्वनामसु पठितम्। सोऽश्वरूपेण समस्तमेतज्जगदवष्टभ्य स्थितः। तदुक्तम्। "उषा वा अश्वमेध्यस्य शिरः" इत्यादिना। सूरादश्वं वसवो निरतष्टेति च ॥ ६ ॥ "देवसवित" रिति व्याख्या-

ममसऽएतशोरजाꣳसिदेवःसविताम॑हित्वना ॥ ६ ॥ देवसवितः। देवसवितःप्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय ॥ दिव्योगन्धर्वःकेतपूः केतन्नःपुनातुव्वाचस्पतिर्व्वाचन्नःस्वदतु ॥ ७ ॥ इमन्नोदेवसवितर्य्यज्ञम्प्रणयदेवाव्व्यꣳसखिविदꣳसत्राजितन्धनजितꣳस्वर्ज्जितम् ।

तम्। इयांस्तु विशेषः। वाचस्पतिर्वाचं नः "स्वदतु इति वाचा वा इदं कर्म प्राणो वाचस्पतिरिति ॥ ७ ॥ "इमं नो देव"। आद्यवसानाद्युः। इमं यज्ञं नोऽस्माकं हे देवसवितः प्रणय प्रापय। कथंभूतं यज्ञम्। "देवाव्यम्"। देवा यस्मिन्नव्यन्ते तर्प्यन्ते स देवाव्यः "सखिविदम्"। सखाया यस्य विद्यन्ते ससखिवित् सखीन्या यो विन्दते ससखिवित् तं सखि-

पथव्यस्" । "अङ्गिरस्वदाभर" । अङ्गिरसा तुल्यम् अग्निवद्वा आभर । हृग्रहोर्भः छन्दसि इत्येति हकारस्य भकारः । आहर । त्रैष्टुभेन छन्दसा अङ्गिरस्वत् ॥ ९ ॥
"अग्निरसि" । नारी स्त्री त्वमसि । किञ्च "त्वया वयम् अग्निं शकेम" । खनितुं "सधस्थे" ।

मङ्गिरुस्वदाभरुत्रैष्टुभेनुच्छन्दसाङ्गिरुस्वत् ॥ ९ ॥ अभ्रिरसि । नार्य्यसि त्वयाव्वयमुग्निᳪशकेमुखनितुᳪसुधस्थऽआ । जागतेनुच्छन्दसाङ्गिरुस्वत् ॥ १० ॥ हस्तऽआधाय । सविताविभ्रदभ्रिᳪहिरुण्ययीम् ॥ अुग्नेर्ज्योतिर्न्निचाय्यपृथिव्याऽअध्याभरुदानुष्टुभेनुच्छन्द

आ । समानस्थानेषु वर्त्तमाने पृथिव्याः । आकारोनर्थकः । जागतेन छन्दसा । अङ्गिरस्वत् ॥ १० ॥ अभ्रिमभिमन्त्रयते । हस्त आधाय । अनुष्टुप् यजुरन्ता । अनुष्टुभेनेत्यादि यजुः । हस्ते अभ्रिमादाय सविता ततस्तामेवाभ्रिं बिभ्रत् धारयन् । "हिरण्मयी" मन्मयीं छन्दोमयीं वा । "अग्नेर्ज्योतिर्न्निचाय्य" निभाल्य दृष्ट्वा ततः "पृथिव्या" अपि सकाशात् "आभ-

जिदम्। "सत्राजितम्" सत्राशब्दः सत्यवचनः। सत्यं बृहत् यो जयति स सत्राजित् तं सत्राजितम्। "धनं" यो गवादिजयतीति धनजित् तं धनजितम् स्वर्गलोकं यो जयति स्वर्जित। तं स्वर्जितं "ऋचास्तोमम्" गायत्र्यनवसाना। ऋचा ऋग्वेदेन सह स्तोमं त्रिवृदादिसमर्द्धय। गायत्रेण साम्ना सह रथंतरं समर्द्धय। "बृहत्" महत्। कथंभूतं महत्। "गायत्रवर्त्तनि"।

ऋचास्तोमꣳ समर्द्धय गायत्रेण रथन्तरम्बृहद्गायत्रवर्त्तनि स्वाहा ॥ ८ ॥

देवस्य त्वा । सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥

आददे गायत्रेण च्छन्दसाङ्गिरस्वत्पृथिव्याः सधस्थादग्निम्पुरीष्य॒म्

गायत्रं यस्य बृहतो वर्तनि वर्त्मभूतम् ॥ ८ ॥ अभिमादत्ते "देवस्य त्वा"। व्याख्यातम्। "आददे"। गृह्णामि अहं गायत्रेण छन्दसा। "अङ्गिरस्वत्"। अङ्गिरसा तुल्यमङ्गिरोवदिति प्राप्ते 'अयस्मयादीनिच्छन्दसी' तिभसंज्ञा। यतो तु अग्निवदिति व्याख्यातम्। अग्निरुच्यते। त्वं च गृहीता सतो पृथिव्याः सधस्थानात्। समानस्थानात्। "अग्निं पुरीष्यं

पयव्यस्" । "अङ्गिरस्वदाभर" । अङ्गिरसा तुल्यम् अग्निवद्वा आभर । हृग्रहोर्भः छन्दसि इत्येति हकारस्य भकारः । आहर । त्रैष्टुभेन छन्दसा अङ्गिरस्वत् ॥ ९ ॥ "अभ्रिरसि" । नारी स्त्री त्वमसि । किञ्च "त्वया वयम् अग्निं शकेम" । खनितुं "सधस्थे" ।

मङ्गिरस्वदाभरत्रैष्टुभेनच्छन्दसाङ्गिरस्वत् ॥ ९ ॥ अभ्रिरसि । नार्य्यसि त्वया व्वयमग्निꣳ शकेमखनितुꣳसधस्थऽआ । जागतेनच्छन्दसाङ्गिरस्वत् ॥ १० ॥ हस्तऽआधाय । सविताबिभ्रदभ्रिꣳहिरण्ययीम् ॥ अग्नेर्ज्योतिर्न्निचाय्यपृथिव्याऽअद्ध्याभरदानुष्टुभेनच्छन्द

आ । समानस्थानेषु वर्त्तमाने पृथिव्याः । आकारोनर्थकः । जागतेन छन्दसा । अङ्गिरस्वत् ॥ १० ॥ अभ्रिमभिमन्त्रयते । हस्त आधाय । अनुष्टुप् यजुरन्ता । अनुष्टुभेनेत्यादि यजुः । हस्ते अभ्रिमादाय सविता ततस्तामेवाभ्रिं बिभ्रत् धारयन् । "हिरण्मयी" मस्तमयीं छन्दोमयीं वा । "अग्नेर्ज्योतिर्न्निचाय्य" निभाल्य दृष्ट्वा ततः "पृथिव्या" अपि सकाशात् "आभ-

य० य० सं० २२७ उ० भा०

११अ

रत्' आहूतवान् आनुष्टुभेन छन्दसाङ्गिरस्वत् ॥ ११ ॥ अश्वगर्दभाजानभिमन्त्रयते। यथासंख्यम्। प्रतूर्त्तंवाजिन्निति तिसृभिर्ऋग्भिः तिस्र एत एवाश्वादयो देवताः। आद्या आस्तारपङ्क्तिः। हेवाजिन् प्रतूर्त्तम् त्वरतेरेवैतद्रूपम् प्रकर्षेण तूर्त्तं तूर्णम् "आद्रव" आगच्छ। "वरिष्टामनुसंवतम्" । वरिष्ठासुतमां संवतमनु। संपूर्वस्य वनोतेः क्विप एतद्रू-

साङ्गिरस्वत् ॥११॥ [११] प्रतूर्त्तंवाजिन्। प्रतूर्त्तंवाजिन्नाद्रववरिष्ठामनुसंवतम्॥ दिवितेजन्मपरममन्तरिक्षेतवनाभिः पृथिव्यामधियोनिरित्॥ १२ ॥ युञ्जाथाᳪरासभम्। युञ्जाथाᳪरासभंयुवमु

पम्। संभजनमुच्यते। जिमतस वाजिन्नागच्छ उत्कृष्टं संभजनमित्यभिप्रायः। तदुत्कृष्टं संभजनमधुनादर्शयितुमाह। "दिवि द्युलोके" ते "तव आदित्यरूपेण" जन्म भविष्यति। आगतस्य यतः "पर" सुत्कृष्टम्। किञ्च। "अन्तरिक्षे तव नाभिः" उदरम् "पृथिव्याम् अधि" उपरि "योनिः" स्थानं मातापित्यर्थः। (१) उदितिपादपूरणे। विरा-

शिवम २२१

उद्रूपेणाश्वः स्तूयते । तदुक्तम् "उपावाअश्वस्य" मेध्यस्य शिर इति ॥ १२ ॥ रासभम-भिमन्त्रयते । "युञ्जाथाम" । गायत्री । अध्वर्युयजमानावुच्येते युञ्जाथां "रासभं" गर्दभम् युवम् । युवाम् "अस्मिन्यामे" अस्मिन्कर्मणि । "वृषा सेक्ता गर्दभः स ययोर्वसुधनं तौ वृषण्वसू तयोः संबोधनं हे वृषण्वसू । कथंभूतं रासभम् "अग्निं भरन्तम्" अग्निं संहरन्तम् ।

स्मिन्यामेंवृषण्वसू ॥ अग्निम्भरंन्तमस्मयुम् ॥ १३ ॥ योगेयोगेतवस्तरम् । योगेयोगेतवस्तरंवाजेवाजेहवामहे ॥ सखायऽइन्द्र

मस्मयुम् अस्मान्कामयमानम् । "अस्मत्प्रवितमि" तिस्तुतिः । युंजाथामिति संबन्धः ॥ १३ ॥ अजमभिमन्त्रयते । "योगेयोगे" । गायत्री । "योगे योगे तव स्तरम्" । तव इतिबलनाम कर्मणिकर्मणि वलिनमुत्साहवन्तमेतमजम् "वाजेवाजेहवामहे" । अन्ने अन्ने दातव्ये देवानां मनुष्याणां चाह्वयामः । हे "सखायः" ऋत्विग्यजमानाः । "इन्द्रम्" इन्द्रियवन्त वीर्यवन्तम् । "ऊतये" । अवनाय । आह्वयाम इति संबन्धः ॥ १४ ॥

अश्वरासभवुक्रामयति । "प्रतूर्वन्नेहि"। विराड्रूपा यजुर्गर्भा । उर्वन्तरिक्षं वी-
हीति यजु. । अर्द्धर्चेनाश्वः स्तूयते । प्रतूर्वन् प्रत्वरमाण एहि आगच्छ । अवक्रामन्
अशस्तीः । पादेएवष्टभ्य अशस्तीः । पाप्मनोदुष्टान् । आगमने को गुण इति चेत् ।
"रुद्रस्यभगवतोगाणपत्यम् गणपतित्वम् लप्स्यस इति शेषः । अतो "मयोभूः" । सुखस्य भावयिता

भूतये ॥ १४ ॥ प्रतूर्वन्नेहि । प्रतूर्वन्नेह्यवक्रामन्नशस्तीरुद्रस्यगाण
पत्यम्मयोभूरेहि ॥ उर्वन्तरिक्षंवीहिस्वस्तिगव्यूतिरभयानिकृ
ण्वन्पूष्णासयुजासह ॥ १५ ॥ पृथिव्याःसधस्थात् । पृथिव्याः

भूत्वा एहि । रासभस्तवक्रामयति । उर्वन्तरिक्षं वीहि । उरुविस्तीर्णमन्तरिक्षं रक्षोभिरनाकुलितं वि
इहि विविधमागच्छ । "स्वस्तिगव्यूतिः" स्वस्तोनाविनाशनाम । गव्यूतिर्मार्गः भयवर्जितः ।
प्रभूतयवसोदकमार्गः सन् त्वम् "अभयानिकृण्वन्" कुर्वन्नृत्विग्यजमानानाम् । "पूष्णा"
पृथिव्या "सयुजा" समानयोगिन्या सह । नेकः सपद्यतात्स्थानमित्यतो तद्दर्शयति ॥ १५ ॥ स्वकमु-

त्कामयति। "पृथिव्याः सधस्थात्"। पृथिव्याः सहस्थानात् अग्निम् व्याख्यातम्। मंत्राध्वर्यु-
र्यजमाना गच्छन्ति। "अग्निं पुरीष्यम्"। अच्छाभेराप्तुमिति शाकपूणिः। "अग्निं पशव्यम्"
अङ्गिरस्वदभिगच्छामः। यद्वा आप्तुं गच्छामः। अनड्वापुरुषमोच्यते। अग्निं पशव्यम्
अङ्गिरस्वत् संभरिष्यामः॥ १६॥ वल्मीकवपामदाय छिद्रेण पिण्डमोच्यते (१)। "अन्व-

सधस्थादग्निम्पुरिष्यमङ्गिरस्वदाभराग्निम्पुरिष्यमङ्गिरस्वद
च्छेमोग्निम्पुरीष्यमङ्गिरस्वद्भरिष्यामः ॥ १६ ॥ अन्वग्निः। अ
न्वग्निरुषसामग्रमख्यदन्वहानिप्रथमोजातवेदाः। अनुसूर्य्यं

ग्निः"। आग्नेया त्रिष्टुप्। प्रजापतिरूपेणाग्निं स्तूयते। "उषसामग्रम्" अनु योऽग्निः
"अख्यत्"। ख्या प्रकथने। प्रकथितः। उषसामग्रमादित्य योग्निर्दीप्यत इत्यर्थः। इत्थ "अ-
हान्यनुदीप्यते"। प्रथमः "आद्यः जातवेदाः"। जातप्रज्ञानः। अनुसूर्य्यस्य पुरुत्रा च रश्मीन्।
यश्च सूर्य्यस्य रश्मीन् अनु 'पुरुत्रा बहुधा दीप्यते। "अनुद्यावापृथिवी आततन्थ"। यश्च द्या-

वापृथिव्यावन्तुरवकीयं रश्मिजालम् आतनव्य आतनोति। वभूथाततन्ये ति छन्दसि निपात्यते। तमग्निं पश्याम इतिशेषः ॥ १७ ॥ अश्वमभिमन्त्रमते (१)। "आगत्यवाजी"। अनुष्टुप्। आगत्य आगत्य वाजी वेजनवानश्वः "अध्वानम्" पन्थानम् "सर्वामृधः" सर्वान्संग्रामान् पाप्मनः श्रमान् विधूनुते। अपनयति। "तस्मादुर्हैतदश्वस्य त्वा विधूनुते इति" श्रुतिः।

स्यपुरुत्राचंरश्मीननुद्यावापृथिवीऽआततंथ ॥ १७ ॥ आगत्यंवाजी। आगत्यंवाज्यध्वानं सर्वा मृधोविधूंनुते ॥ अग्निं सधस्थेमहतिचक्षुषानिचिकीषते ॥ १८ ॥ आक्रम्यंवाजिन् । आक्र

ततो गतश्रमः सन्। "अग्निंसधस्थे"। सहस्थाने पृथिव्याश्वर्त्तमानम्। "महति" उत्कृष्टप्रदेशे प्रवर्त्तमानम् चक्षुषानिचिकीषते" पश्यति। छान्दसोयं धातुः पश्यत्यर्थः ॥ १८ ॥ अश्वेन पिण्डमधिष्ठापयति (१)। "आक्रम्यवाजिन्"। अनुष्टुप्। आक्रम्य। अवष्टभ्य। हे वाजिन्नश्व। "पृथिवीम् अग्नि मिच्छ" अग्नेरन्वेषणं "कुरु"। रुचिर् दीप्तौ। क्विप्।

दीप्त्या सह। यद्वा दीप्त्या निमित्तभूतया न्वेषय "त्वम्"। किञ्च "भूम्याहृत्त्वाय"। हृतु वर्तने। त्वा। त्वा यप्स्पर्शनार्थं हन्ति: भूमि: तत्प्रदेशं स्पर्शयित्वा "न:" अस्माकं "ब्रूहि"। कथय। "यत:" यस्मात् प्रदेशात् "खनेम" तं अग्निं "वयम्" ॥ १९ ॥ अश्वं स्तौति पृष्ठस्योपरि पाणिं धारयन्। "द्यौस्तेपृष्ठम्"। बृहती। यस्य तव द्यौ: पृष्ठं "पृथिवी च "सध-

स्थंव्वाजिन्पृथिवीमग्निमिच्छरुचात्त्वम्॥भूम्यांवृत्त्वायनोब्रूहियतःखनेमतंव्वयम् ॥१९॥ द्यौस्ते। पृष्ठम्पृथिवीसधस्थमात्मान्तरिक्षꣳसमुद्रोयोनिः॥ विख्यायचक्षुषात्वमभितिष्ठपृतन्यतः॥२०॥ उत्क्राम। महतेसौभगायास्मादास्थानाद्द्रविणोदाव्वाजिन् ॥ व्वय

स्थं" सस्थानं पादौ। "आत्मान्तरिक्षम्"। "समुद्र" उदकं योनि रुत्पत्तिस्थानम्। तं त्वामेवं प्रभावं ब्रूम: "विख्यायचक्षुषा"। निरीक्ष्य चक्षुषा। "त्वम् अभितिष्ठ" पादै:। "पृतन्यत:"। पृतनां संग्रामं ये कर्तुमिच्छन्ति ते पृतन्यत: तान् पृतन्यत: पुरुषान् ॥ २० ॥ अश्वमुत्क्र-

मयति। "उत्क्राम"। त्रिष्टुप् विराड्वा। उत्क्राम उद्गच्छ। "महतेसौभगाय" महते ऐश्वर्याय। भगशब्द ऐश्वर्यवचनः। "अस्मादास्थानात्" "अस्मादधिष्ठानात् यत्र त्वं तिष्ठसि। द्रविणं धनं ददतीति "द्रविणोदाः" यस्त्वं द्रविणोदाः हे वाजिन्। किञ्च। उत्क्रान्ते त्वयि "वयं स्याम" भवेम। "सुमतौ पृथिव्याः" शोभनायां मतौ पृथिव्याः। "अग्निं ख-

ꣳस्यामसुमतौपृथिव्याऽअग्निङ्खनन्तऽउपस्थेऽअस्याः ॥२१॥ उदक्रमीत्। उदक्रमीद्द्रविणोदावाज्यर्वाकःसुलोकꣳसुकृतम्पृथिव्याम्॥ ततःखनेमसुप्रतीकमग्निꣳस्वोरुहाणाऽअधिनाकमुत्तमम्॥२२॥

नन्तः" अन्यर्थं पिण्डं खनन्तः। "उपस्थे" उत्संगे "अस्याः" पृथिव्याः ॥ २१ ॥ अथेनमश्वमुत्क्रान्तमभिमन्त्रयते (१)। "उदक्रमीत्" त्रिष्टुप्। यतः प्रदेशादुदक्रमीत् उतक्रान्तवान्। "द्रविणोदा" द्रविणस्य धनस्य दाता। "वाजी" वेजनवानश्वः। "अर्वा" अरणशीलः वञ्चल इत्यर्थः। "अकः" कृतवान्। "सुलोकं" शोभनं लोकं स्थानम्।

"सुकृतं पृथिव्याम्। ""ततः" तस्मात्प्रदेशात् "खनेम"। "सुप्रतीकम्"। सुखं प्रतीकम्। सुमुख "अग्निम् स्वोरुहाणाः। स्वर्गं लोकमारोहन्तः। "अधि"। अधीत्य परिभावमैश्वर्यं वा। "नाकम्"। कमिति सुखनाम। न अकमसुखं यत्र गतानां भवति न नाके। लोकः। "उत्तमं सत्कृष्टम्। इत्थंभूतस्य लोकस्य प्राप्तये एतत्कर्म कुर्म इत्यभिप्रायः॥ २२॥ स्रुदम-भिजुहोति (१)। "आत्त्वाजिघर्मि"। त्रिष्टुभावाग्नेय्यौ। घृ क्षरणदीप्त्योः। आजिघर्मि

आत्त्वा। जिघर्म्मिमनसाघृतेनप्प्रतिक्षियन्तम्भुवनानिव्विश्श्वा॥ पृथुन्तिरश्चाव्वयसाबृहन्तंव्व्यचिष्ठमन्नैरभसन्दृशानम्॥२३॥ आ

आसिञ्चामि त्वां "घृतेन"। "मनसा" यज्ञाभोत्कण्ठितेन। "प्रतिक्षियन्तं भुवनानिविश्वा"। प्रत्येकशो निवसन्तं भूतानि सर्वाणि। "पृथुं" तिरश्चा। महान्तं तिर्यगञ्चनेन ज्योतिषा। "वयसा" बृहन्तम् "वयसा धूमेन" बृहन्तम्। "इतो वा अयमूर्द्ध्वं रेतः सिञ्चति धूमस् सामुत्र वृष्टिर्भवती" त्येतदभिप्रायम्। "व्यचिष्ठम्"। व्यञ्चनवन्तम् अवकाशवन्तम्। "अन्नैर-भसम्। रभ राभस्ये। अन्नैर्घृतादिभिः क्षिप्रं कृत्वाऽदन्तम्। बहुभिरप्यन्नैः क्षिप्रं नोऽस्य

शक्तिपरिहाणं भवतीत्येतदभिप्रायः। दृशानम्। दर्शनीयं दृश्यमानं वा। अदृष्टा अन्या देवता अयं तु दृश्यइति ॥ २३ ॥ "आविश्वतः"। "आजिघर्मि" असिञ्चामि त्वां "विश्वतः" प्रत्यञ्चम् सर्वतः पतिगतं महाभाग्येन। यतः (१)। "अरक्षसामनसातज्जुषेत"। अक्रुध्यमानेन प्रसन्नेन मनसा तद्घविर्जु षस्व भक्षयस्व। यस्त्वं "मर्य्यश्रीः"। मर्य्यैर्मनुष्यै

विश्वतः। प्रत्यञ्चञ्जिघर्म्यरक्षसामनसातज्जुषेत ॥ मर्य्यश्रीस्पृहयद्वर्णोऽअग्निर्न्नाभिमृशेतन्न्वाजर्भुराणः ॥ २४ ॥ परिवाजपतिः। परिवाजपतिःकविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशु

राध्ययणीयः। "स्पृहयद्वर्णः" स्पृहणीयवर्णश्च। "अग्नि" रिति साभिप्रायम्। "अग्निर्वै देवानां। म्द्रुद्यतम" इत्यादिगुणख्यापनार्थम्। "नाभिमृशेतन्वाजर्भुराणः"। नचाभिमर्शनाय भवति तन्वा शरीरेण ज्वालालक्षणेन। "जर्भुराणः"। जभजृभी गात्रविनामे। इतश्चेतश्च गच्छन् ॥ २४ ॥ परिलिखति। तिसृभिराग्नेयीभिर्गायत्र्यनुष्टुब्जगतीभिः। "परि-

वाजपतिः" । अग्निः नानादेवत्यान्यपि हव्यानिहवींषि पर्य्यक्रमीत्। परिक्रमणं भक्षणार्थम । "वाजपतिः" अन्नस्य पतिः। "कविः" क्रान्तदर्शनः। किंकुर्वन्हवींष्य "क्रमीत"। दधत् ददत्रत्नानि रमणीयानि धनानि "दाशुषे" हवींषि दत्तवते यजमानाय ॥ २५ ॥ "परित्वाग्ने"। परोत्यस्योपसर्गस्य धीमहीत्यनेन संबन्धः। ध्यायतिरयम संप्रसारणं तु छान्दसम्। परि सर्वतो ध्यायामः। "त्वा" त्वाम् हे "अग्ने पुरं" पुररूपेणावस्थितम। अग्निः

स्वे ॥ २५ ॥ परित्वाग्नेपुरंव्वयंव्विप्रंᳬसहस्यधीमहि ॥ धृषद्वर्णन्दिवेदिवेहन्तारम्भङ्गुरावताम् ॥ २६ ॥ त्वमग्ने। द्युभिस्त्वमाशुशुक्ष

सहसो हि पुरोरक्षको भवति। "वयं विप्र" मेधाविन ब्राह्मणजाति वा। हे "सहस्य"। सहसिबले भवः सहस्योग्निः। स हि मथ्यमानो जायते। तस्यसंबोधनं हेसहस्य। "धृषद्वर्णं" प्रसहनरूपम "दिवेदिवे" अहन्यहनि। "हन्तारं" बाधितारम् "भंगुरावताम"। भङ्गुरमनवस्थितं मनोयेषां ते भङ्गुरावन्तः तेषां भङ्गुरावताम्। अनवस्थितचित्तवृत्तीनामित्यर्थः॥२६॥

"त्वमग्ने" हे भगवन्नग्ने त्वं "द्युभि" रहोभिर्निमित्तभूतैर्मथ्यमानो जायसे। त्वमेव "आशुशुक्षणिः"। आशु शीघ्रं शुचा दीप्त्या क्षिणोति हिनस्ति तनोति संभजते वा आशुशुक्षणि रुच्यते। त्व "मद्भ्य" श्च विद्युदात्मना जायसे। "त्वमश्मनः" दोषाणात्परिजायसे। "त्वंवनेभ्यः" अरणिकाष्ठेभ्यो जायसे। "त्वमोषधीभ्यो" वंशादिभ्यो जायसे। "त्वंनृणां" मनुष्याणामग्निहोत्रिणां जायसे। तदुक्तम्। "पुत्रो ह्येष सन् स पुनः। पिता

## त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ॥ त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥ २७ ॥ [ १६ ] देवस्य त्वा। सवितुः प्रसवे

भवतीति"। हे "नृपते" नृणां पालयितः। "शुचि" र्निष्पाप्मा। अथापरो व्याख्यामार्गः। आशुशुक्षणिशब्दस्य पञ्चम्यर्थे प्रथमा। तथाच वाक्यस्य संयोगः। आङुपसर्गपूर्वः शोचतिः सन्नन्तः। आशुशुक्षणेः आदिदीपयिषोर्जायसे। योपि गृहं खलं वा निर्मथ्य दीपयति तस्मात्रापि त्वं जायसे। सर्वेषामनुग्रहे प्रवृत्तो हि त्वमित्यभिप्रायः। त्वमग्ने द्युभिर्जायसे त्वमादिदीपयिषोर्जायसे। एवं त्वमद्भ्यः अश्मनः वनेभ्यः ओषधीभ्यः नृणां-

पुत्रत्वेन नृपते जायसे। शुचिर्दीप्त इति योजना ॥ २७ ॥ (१) खनति। देवासत्वा"। व्याख्यातम्। * "पृथिव्याः सहस्थानात् अग्निं" पशव्यम् अङ्गिरसा तुल्यं खनामि। "ज्योतिष्मन्तं" ज्योतिषा संयुक्तं त्वांहि अग्ने "सुप्रतीकं" सुमुखम् "अजस्रेण" अनुपक्षीणेन

## विश्वनोंव्वाहुब्भ्यांम्पूष्णोहस्ताब्भ्याम् ॥ पृथिव्व्याःसधस्त्थादग्निम्पुरीष्यमङ्गिरस्वत्त्वनामि ॥ ज्योतिंष्मन्तन्त्वाग्नेसुप्प्रतीकमजस्रेणभानुनादीद्यतम् ॥ शिवम्प्रजाब्भ्योहिंꣳसन्तम्पृथिव्व्याःसधस्त्थादग्निम्पुरीष्यमङ्गिरस्वत्त्वनामः ॥ २८ ॥ अपाम्पृष्ठम्। अ

"भानुना" दीप्त्या "दीद्यतं" दीप्यमानम् "शिवं" "प्रजाभ्यः" शान्तं प्रजाभ्यः "अहिंसन्तं" प्राणिनः † पृथिव्या सहस्थानादपि। अग्निं पशव्यम् अङ्गिरसा तुल्यं खनामः ॥ २८ ॥

(१) अभ्र्यापिण्डं खनतिदेवस्त्वेति। १६। २। २६। अस्यार्थं अभ्र्यामृत्पिण्डं परितः खनतिकण्डिकया।

* पृथिव्या मध्ये योपत्र मन्त्रोक्त।   † पृथिव्याद्वितिपुनर्मन्त्रादायां।

पुष्करपर्णं कृष्णाजिनोपरिष्टात्स्थापयति। (१) "अपास्पृष्ठम्"। स्वराट् पंक्तिः। यतः अपा-म्पृष्ठमसि उदकस्थानात्। योनिः स्थानं च अग्नेः अग्न्यर्थस्य पिण्डस्य। अतस्त्वां ब्रवीमि। "समुद्रमभितः पिन्वमानम्"। उपपदविभक्ति द्वितीया। समुद्रस्योदकस्य इतश्चेतश्च सिञ्चतः। त्वं "वर्द्धमानो महान्" भव। "आचपुष्करे"। आसीद च पुष्करे उदके। स हि तस्य

अपाम्पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम्॥ वर्द्धमानो महाँ२ ॥ऽआ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्व ॥२९॥ शर्म्म च।

योनिः। आकारः आकृष्य व्याख्यातः। चकारो भिन्नक्रमः। विमार्ष्टि एनं चतुर्थेन पादेन। (२) "दिवो मात्रया" द्युलोकस्य परिमाणेन। "वरिम्णा" उरुत्वेन च "प्रथस्व" वर्द्धस्व॥ २९॥ (३) उभे कृष्णाजिनपुष्करपर्णे अभिमृशति अनुष्टुब्व्याम्। "शर्म च स्थः"।

(१) का० कृष्णाजिनमास्तीर्य्योपरितस्तस्मिन् पुष्करपर्णं मपांपृष्ठमिति। १८। २। २४। अस्यार्थः कृत्यनिर्मात्त्रभागेमाग्नीव सुत्तर लोमकृष्ण जिन मास्तोर्यत्तत्वापाम्पृष्ठमितिपादवयात्मकमंत्रेण कमलिनोपत्रमास्तृणोति।

(२) का० विमार्ष्टि नहिवर्द्दति। १८। २। २५। एतत्पुष्कर पर्णं विपुलकरोति।

(३) का० आलभतउभेशर्मचस्थइति। १८। २। २६। ऋग्द्वयेन कृष्णाजिनपुष्करपर्णे सहैवस्पृशेत्।

यो युवां शरणं च भवथ संहननं च। "अच्छिद्रे" सकले "बहुले" महाप्राणे च। उभे अपि ते युवां ब्रवीमि। "व्यचस्वती" अवकाशवती भूत्वा "संवसाथाम्" * आच्छादय तम्। आच्छाद्य च "भूतं" विवृतम् "अग्निंपुरीष्यं" पशव्यम् ॥ ३० ॥ "संवसाथाम्"। आच्छादयतमेनमग्निं पिण्डरूपम्। "स्वर्विदा"। यज्ञसूर्यदेवाहवचनः स्वशब्दः। स्वर्वेत्तीतिस्वर्वित्

शर्म्मचस्थोवर्म्मचस्थोच्छिद्रेबहुलेऽउभे ॥ व्यचस्वतीसंव्वसाथाम्भृतमग्निम्पुरीष्यम् ॥ ३० ॥ संव्वसाथाम् । संव्वसाथांस्वर्व्विदासमीचीऽउरसात्त्मना ॥ अग्निमन्तर्ब्भरिष्यन्तीज्योतिष्मन्तम

स्वर्विदारूपेण। यद्वा। द्विवचनस्यस्थानेआकारः। स्वर्विदौभूत्वा। यद्वास्वर्गविदौभूत्वा। "समीची" समाने संगते एकचित्ते भूत्वा। "उरसा त्मना" च। किञ्चअग्निपिण्ड "मन्त" र्मध्यतः "भरिष्यन्ती" धारयमाणे ज्योतिष्मन्तम् अजस्रम्" अनुपक्षीणम्। कुरुतमिति शेषः।

* वसथाच्छादयेत्यर्थः।

"इति" ति पादपूरणः ॥ ३१ ॥ (१) पिण्डमभिमृशति। * "पुरीष्योसि"। पशव्यस्त्वमसि। "विश्वभराः" सर्वस्य धारकः पोषको वा "अथर्वात्वा" चप्राणः। त्वां "प्रथमोनिरमन्थत्" मथितवान् हे "अग्ने"। पिण्डं हरति पद्भिराग्नेयीभिः। तत्र तिस्रो गायत्र्यः। द्वे त्रिष्टुभौ एका बृहती। "त्वामग्ने"। त्वां हे अग्ने "पुष्कराद्" दकात् "अधि" सकाशात् "अथर्वा"

जसमित् ॥ ३१ ॥ पुरीष्योऽसि। विश्वभराऽअथर्वात्वाप्रथमोनिरमन्थदग्ने। त्वामग्नेपुष्करादध्यथर्वानिरमन्थत ॥ मूर्ध्नोविश्वस्यवाघतः ॥ ३२ ॥ तमुत्त्वा। दध्यङ्ङृषिःपुत्रऽईधेऽअथर्वणः ॥ वृ

अतनवान् प्राणो निरमन्थत। निर्जनितवान्। "आपो वै पुष्करं प्राणोथर्वा" इति। श्रुतिः। "मूर्ध्नोविश्वस्यवाघतः"। वाघत इति ऋत्विङ्नामसु पठितम्। वाघतस्तु मूर्ध्नः शिरसः अरण्योर्जनयति। सर्वस्य कर्मणोङ्गभूतम् ॥ ३२ ॥ "तमुत्त्वा"। अत्राप्युकार एतस्मिन्नर्थे।

(१) का पिण्डपुरीष्योसीति। २५।२।२०। * प्रतिष्ठागायत्री अष्टौसप्त पदचेतिमयिष्ठेतिपिगलोक्तिः।

उत्तरेण त्वकारः। तमेव त्वां "दध्यङ्" नाम "ऋषिः" मन्त्राणांद्रष्टा। "पुत्र ईधे अथर्वणः"। व्यवहितोविसंबन्धः। अथर्वणः पुत्र ईधे। इन्धीदीप्तौ। आदीपयति। कथंभूतं त्वामादीपयति। "वृत्रहणम्" पाप्मनो हन्तारम् "पुरन्दरम्" असुरपुरां च दारयितारम्। वाग्वै दध्यङ् आथर्वण इति श्रुतिः॥ ३३॥ "तमुत्वा"। तमेव त्वां "पाथ्यो वृषा"। "मनो

वृत्रहणंपुरन्दरम्॥ ३३॥ तमुंत्वा। पाथ्योवृषासमीधेदस्युहन्तमम्॥ धनञ्जयꣳरणेरणे॥ ३४॥ सीदहोतः। सीदहोतःस्वऽउंलोके चिकित्वान्त्सादयायज्ञꣳसुकृतस्ययोनौ॥ देवावीदेवान्हविषायजा

वै पाथ्यो वृषे" तिश्रुतिः। मनसा हि मुक्तेः पन्था उपलभ्यते। तदुक्तम् मनसैवानुद्रष्टव्यमिति। मनसा अभिलष्य स्त्रियां रेतः सिञ्चति इति। वृषा मनः "समीधे" संदीपयति।* "दस्युहन्तमम्" शत्रुहन्तृतमम्, धनञ्जेतारम्, "रणेरणे"। संग्रामेसंग्रामे॥ ३४॥

---

दस्युनहतीतिदस्युहो भतिशयेनदस्युहादस्युहन्तमम् नलोपेदस्युहनस इतिभावे नाइस्ये तितमपीणुडागमैकपम्।

ऋ० "सीदहोतः"। सीद उपविश हे होतः। अग्ने। "स्वउलोके"। उकारो विनिश्चयार्थीयः।
य० स्वकीय एव लोके कृष्णाजिने। चिकित्वान् चेतनवान् परिदृष्टकारो स्वमधीकारं जा-
स० नानः। किञ्च। "सादयायज्ञम्"। स्थापय च यज्ञं त्वं "सुकृतस्य" साधुकृतस्य कर्मणः।
२३५ "योनौ" स्थाने कृष्णाजिने। "कृष्णाजिनं वै सुकृतयोनि" रितिश्रुतिः। यज्ञो हि तन्य-

उ० स्यग्नेबृहद्यजमानेव्वयोधाः॥ ३५ ॥ निहोता। होतृषदनेव्विदा

भा० नस्त्वेषोदीदिवाꣳ॥ ऽअसदत्सुदक्षः॥ अदब्धव्रतप्रमतिर्व्वसिष्ठः

माने अवधातः प्रेषणं सोमनिधा च कृष्णाजिने एवं भवतीत्येतदभिप्रायमेवमुच्यते।
यश्च त्वं "देवावी" देवानामवनशीलः तर्पणशीलः "देवान्हविषा" यजासि यजसि तं त्वां पुनः
प्रार्थयामि। हे "अग्ने बृहत्" महत् "यजमाने वयः" आयुरन्नं वा। *"धाः" धेहि॥ ३५॥
† "निहोता" नीत्ययमुपसर्गं असददित्यनेनाख्याते वसंबध्यते। न्यसदत् निषस्त उपविष्टः हो-

* दधातेर्लुङि मध्यमैकवचने धाः इति [illegible]।

† [illegible]।

तामग्नि। "होटपदने"। होता यस्मिन्सीदति तत् होटपदनं तस्मिन्। "विद्वान:" जानान: स्वमधिकारम्। "त्वेषो" दीप्तियुक्तः "दीदिवान्" देदीप्यमान:। "असदत्। सुदक्ष:" साधु चिप्रकारी:। "अदब्धव्रतप्रमति:"। अदब्धमनुपहिंसितं कर्म यस्य प्रकृष्टा मति: सएवमुच्यते। "वसिष्ठ:" वस्तृतम:। यस्य सहस्रम्भर:। सहस्रं बिभर्तीति सहस्रंभर: सर्वहित:। "शुचिजिह्व:"। शुचिर्जिह्वो यस्य स शुचिजिह्व: योयं नानादेवत्यानि हवींषि

सहस्रम्भरः शुचिजिह्वोऽअग्निः॥ ३६॥ सꣳसीदस्व महाँ२ऽअसि शोचस्व देववीतमः। विधूममग्नेऽअरुषम्मियेध्य सृज प्रशस्त दर्शत

अभ्यवहरति, नवोच्छोषयति सशुचिजिह्व इति शक्यते वदितुम्। अग्निरितिविस्मित इवाचष्टे॥ ३६॥ संसीदस्व (१)। हे "अग्ने" संगत्य सीदस्व। यत: त्वं "महानसि"। "शोचस्व" दीप्यस्व यतस्त्वं "देववीतम:"। अतिशयेन देवानामाप्यायिता। "विसृज" च विसृज्य चवि "धूमम् अरुषम्" अरोचनम् "मियेध्य"। यमेध्य इति प्राप्ते छान्दसो प्रकर्ष:।

हे "प्रशस्त" उत्तम। "दृशतम्" दर्शनीयमाकृतिपरिणामभूतम्। "इतो वा अयमूर्ध्व-
रेतः। सिञ्चति धूमं सामुत्र वृष्टिर्भूतो" ति श्रुतिः॥ ३७॥ अवाटे अपश्चात्सिञ्चति।
"अपोदेवीः"(१) अब्देवत्या बृहती। विधूममग्नेरूपंमिये‌ध्वेत्यनन्तरमौदग्निरुच्यते। यौवी
"अपो देवीरुपसृज निक्षिप वृष्टिरूपाः" मधुमती रसवतीः आरोग्यदायकाः। "अयक्ष्माय"

म्॥ ३७॥ [ १० ] अपोदेवीः। अपोदेवीरुपसृजमधुमतीरयक्ष्माय
प्रजाभ्यः॥ तासामास्थानादुज्जिहतामोषधयःसुपिप्पलाः॥३८॥
सन्ते। वायुर्मातरिश्वादधातूत्तानायाहृदयंयद्विकस्तम्॥ योदे

प्रजाभ्यः। यक्ष्मा व्याधिः भावप्रत्ययलोपः। अयक्ष्मत्वार्थम् प्रजानामिति विभक्तिव्यत्ययः।
"तासां" भूमिगतानाम् "आस्थानात्" अधिष्ठानात्। "उज्जिहताम्" उद्गच्छन्तु। "ओषधयः"
सुपिप्पलाः साधुफलाः पिप्पलं फलमुच्यते॥ ३८॥ वायुना संदधाति। "संतेवायुः"। त्रिष्टुप्।
अर्द्धर्चः या पार्थिवोर्द्धर्चो वायदेवत्याः। "सन्दधातु" तव "मातरिश्वा" वायुः पृथिवी।

* उत्तानायाः "यत्ता यदेतत् हृदय" मनटरूपेण । † "विकस्तम्" विकाशितम्। वायुरुच्यते । "योदेवानाम्" यस्त्वं देवानां चरसि "प्राणथेन" प्राणत्वेन थकारोभावप्रत्ययार्थकः। हे "देव" तस्मै "कस्मै" प्रजापतये "तुभ्यम्" इयं पृथिवी वषडस्तु वषट्कृता भवतु। "नोहे ताव-

वानाञ्चरसिप्राणथेनकस्मैदेवव्वषडस्तुतुभ्यम् ॥२८॥ सुजातोज्ज्योतिषा । सहशर्म्मवरूथमासदत्स्वः ॥ व्वासोऽअग्नेव्विश्वरूपꣳ सं

व्यन्याऊत्तिरतिरस्त्विषथेपे" तिश्रुतिः ॥ २८ ॥ आस्तीर्णयोरन्तरानुद्रुह्णाति (१)। ‡ "सुजातो-ज्योतिषा"। अनुष्टुवाग्नेयी। अयमग्निः सुजातः सुजन्मा ज्योतिषा सह संयुक्तः। "शर्म" शरण-म् "वरूथं" वरणीयम् गृहम् "आअसदत्" आसीदतु। "स्वः" स्वर्गाख्यम्। योक्त्रेणोपन-

(१) का॰ भास्तीर्णयोरन्तानुहृह्णातिसुजात इति १६। २। ५। अस्यार्थं। आस्तीर्णयोकृष्णाजिनपुष्करपर्णयो प्रान्तानुद्दैसा-दत्तद्दति।

* ऊर्ध्वमुखेनावस्थिताया।

† इडभार्या।

‡ अग्निदेवत्यानुष्टुप् द्वितीयेन मार्च।

य०
य०
सं०
२३७
उ०
भा०

च्छति। (१) "वासोऽग्ने"। हे अग्ने विभावसो विभूतधन। वासो विभूतयः। "विश्वरूपं" विचित्रम् "संव्ययस्व"। व्येञ् संवरणे परिधत्स्व ॥ ४० ॥ अथैनमादायोत्तिष्ठति (२)। * उदु-तिष्ठ। "आग्नेयी" बृहती। उत्तिष्ठ। उकारः पादपूरणः। हे स्वध्वर सुयज्ञिय। तत उत्थाय † अवपालय "नो" अस्मान्। "देव्याधिया" देव्या बुद्ध्या। किञ्च। "दृशेच" दर्शना-

**व्ययस्वविभावसो ॥ ४० ॥ उदुतिष्ठ। स्वध्वरावानोदेव्याधिया ॥ दृशेचभासाबृहतासुशुक्वनिराग्नेयाहिसुशस्तिभिः ॥ ४१ ॥ उदुइ**

य अस्माकम् "भासा बृहता सुशुक्वनिः" साधु सुशुचा संदीप्तः। "आयाहि" आगच्छ

(१) का० विहतामुञ्जयोक्रेणोपनह्यति वासोऽग्नइति। १६। २। ६। उष्णीतानृक्षाजिनपुष्करपर्णयोरन्तानुञ्जयोक्रेणोपनह्यत्युत्तरार्धेनेतिसूत्रार्थः।

(२) का० उत्तिष्ठतिपिण्डमादायोदुतिष्ठेति। १६। ३। ७। तंपिण्डं गृहीत्वोत्तिष्ठेदितिसूत्रार्थः।

* यदिदेवत्यायथाछन्दोऽपिउमनोहृत्यावतीपीवादम्यार्थं पर्वपदार्थो।

† यद। यदीतशिव् दर्शनविवायांदीर्घ।

हे "अग्ने मयस्तिभिः" । साधुशिष्ठैरश्वैः ॥ ४१ ॥ (१)अथैनमितऊर्द्ध्वं प्राञ्चं गृह्णाति । *"ऊर्द्ध्व-ऊषुण बृहती आग्नेयी । ऊर्द्ध्वस्तिष्ठ । ऊसू पादपूरणो । "नः ऊतये" । अस्माकमवनाय । कथमूर्द्ध्वस्तिष्ठ । "देवो न सविता" । नकार उपमार्थीयः । देव इव सविताः ऊर्द्ध्व-

ऊषुणऽऊतयेतिष्ठादेवोनसविता ॥ ऊर्द्ध्वोव्वाजस्यसनितायदञ्जिभिर्व्वाघद्भिर्विह्वयामहे ॥ ४२ ॥ सजातः । सजातोगर्ब्भोऽअसिरो

स्थितः "वाजस्य" न्नस्य "सविता" संभक्ता । भविष्यसीतिशेषः । "यदञ्जिभिः" । यस्मादञ्जिभिर्व्यञ्जकैर्व्याणां रश्मिभिः । "वाघद्भिः" । हविषां वोढृभिः सहितम् "विह्वयामहे" विविधमाह्वयामः तदूर्द्ध्वस्तिष्ठेति संबन्धः ॥ ४२ ॥ (२) अश्वमभिमन्त्रयते । "सजातोगर्भः" ।

(१) का० ऊर्द्ध्वबाहुं प्राञ्चमस्यक्रातपूर्वं ऊषुणइति । १६ । ३ । ८ । प्रसारितबाहुं प्राञ्चपिण्डं गृह्णाति ।
(२) मन्त्रद्वन्योपरिनाभिधारयन्त्र अश्वमश्ततोनभिमन्त्रयतेसजातस्थिरोभवशिवोभवेति । १६ । ३ । ३ । पिण्डं नीचैरेव त्तायंनाभ्युपरिष्टाभ्याधारयन् अगर्द्भाजानूसजातइत्यादितृक्रमेण प्रतिमवमन्त्रयते एकैकपश्यन्नेकैकमन्त्र जपतीति सूत्रार्थ ।

* पाणिदेवीपरितार्य सरीकसहहाचतुर्थे पादोशादमर्वोऽन्येवर्णोटार्या सोपरिष्टाद्बृहती ।

त्रिष्टुप् अग्निऋच्याश्वं स्तौति । अध्याहारव्यवहितपदप्रायो मन्त्रः । यस्त्वं । "रोदसो" द्यावापृथिव्यो "गर्भो * जाता" सि । यश्चत्वं हे "अग्ने चारुः" शोभनः "विभृतः" हृग्रहोर्भश्छन्दसि इत्येति हकारस्य भकारः । "ओषधीषु" पुरोडाशादिलक्षणासु दातव्यविषयासु भवसि ।

दस्योरग्ने चारुर्विभृतऽओषधीषु ॥ चित्रः शिशुः परि तमांस्यक्तून्प्र मातृभ्योऽअधि कनिक्रदद्गाः ॥ ४२ ॥ स्थिरो भव । वीड्वङ्गऽआशुर्भ

यश्च त्वं "चित्रो" नानारूपः "शिशु" शंसनीयः । "परितमांसिअक्तून्" रात्रीः अतिरोचसे । स त्वं "मातृभ्यः अधि" । ओषधिवनस्पतिभ्यः सकाशात् ‡ "कनिक्रदत्" अत्यर्थं शब्दं कुर्वन् "गाः" प्रयाहि ॥ ४२ ॥ रासभमभिमन्त्रयते । "स्थिरोभव" । उष्णिक्अनुष्टुब्वा । स्थिरो भव निश्चलोभव । "वीड्वङ्ग" दृढाङ्गश्च भव । "आशुः" शीघ्रश्च भवं "वाजी" वेजनवांश्च भव ।

* मघीतासि ।
‡ मार्थानं वर्धितं पतित् शाक निकरविनिबद्ध मवंतोनिपातितं ।

हे "अर्वन्" । पदार्थं प्रति इयर्त्तीति अर्वा । "पृथुः" इयुञ्च "भव" । "सुपदः" । स्वस्थे-यञ्च भव । यत "त्वमग्ने: पुरीषवाहणः" । पुरीषं पशव्यं यवसं वहतीति पुरीषवाहणो रासभः ॥ ४४ ॥ अजमभिमन्त्रयते । "शिवो भव" । अनुष्टुप् बृहती वा । हे अज शिवः शान्तो भव । "प्रजाभ्यो मानुषीभ्यो" थीय त्वम् हे "अङ्गिरः" । "अङ्गिरा वा अ-

वव्वाजव्युर्व्वन् ॥ पृथुर्भवसुषदस्त्वमग्ग्नेःपुरीषवाहणः ॥ ४४ ॥
शिवोभव । प्रजाभ्योमानुषीभ्युस्त्वमङ्गिरः ॥ माद्यावापृथिवीऽअ-
भिशोचीर्म्मान्तरिंक्षुम्माव्वनस्पतीन् ॥ ४५ ॥ प्रैतुं । व्वाजीकनिक्र-

ग्निराग्नेयोज" इतिश्रुतिः । मा च त्वं "द्यावापृथिवी अभिशोचीः" अभिसंतापयेः । "मान्तरिक्षं मा च वनस्पतीन्" ॥ ४५ ॥ (१) एतेषां पशूनामुपरिष्टात्प्रगृह्णाति । * "प्रैतुवाजी" ।

(१) का॰ धारयन्येषामुपरिपिण्डमनुयुगम प्रैतुव्वाज इयाग्निमिताश्वखरयोरिति ।१६।१०। अश्वादीनामुपरिपिण्डधारयतितान्पृष्ठानुप्रैतुव्वाजीत्यश्वोपरिद्वपाग्निमिति खरोपरीतिसूत्रार्थं ।

* महापङ्क्तिस्त्र्यवसानाषष्ठार्थषट्पादाभद्रापङ्क्ति आद्यावर्द्धर्चोवरदेवत्यौतनीयोर्द्धर्चोरासभदैवत्य तृतीयतुर्यौपादौव्यूधौ ।

व्यवसाना महापंक्तिः। अह्वंचोऽश्वदेवत्त्या। प्रकर्षेण एतु आगच्छतु वाजी अश्वः। "कनिक्रदत्" अत्यर्थं हेषितशब्दं कुर्वन् अयं च रासभोऽश्वयवसवाहनार्थं प्रकर्षेण एवागच्छतु। "नानदत्"। सोपहासमुच्यते। गर्दभरटितेन सर्वादिशो नादयन्। "रासभ." पत्त्वा। पतनशीलः। "यदश्वस्य यजुषि रासभं निराहतद्रासभे शुचन्दधतीति" श्रुतिः। "भरन्नग्निं पु-

दुनानंदद्भासंभुऽपत्वां ॥ भरंन्नुग्निम्पुंरीष्युम्मापाद्यायुंषःऽपुरा ॥ वृ
पाग्निम्वृषंणुम्भरंन्नुपाङ्गर्भंऽसमुद्रियंम् ॥ अग्नुऽआयांहिव्वीत

रीष्यम्"। अयं चाश्वो भरन्धारयन् अग्निम् पुरीष्यं पशव्यम् "मापदि" मा विनश्यतु। "आयुषः पुरा"। आयुश्शब्देन युक्तात्र कर्माभिहितम्। यज्ञसंयोगे न हि अश्वादीनां स्तुतिः। "आयुषः पुरा"। आसमाप्तेः कर्मणः। रासभ उच्यते। "वृषा" सेक्ता। "अग्निं वृषणं" सेक्तारम्। आकृतिपरिणामसमभिप्रेत्योक्तम्। भरन्धारयन्। "अपांगर्भम्" अपां मध्ये वस्थानात्-गर्भं उच्यते। "समुद्रियम्" त्रयो ह वै समुद्रा अग्निर्यजुषां महाव्रतम् साम्नां महदुक्थमृ-

चामि त्वेतदभिप्रायम् तव भवः समुद्रियः। खदाराहरति। (१) "अग्ने आयाहि"। एकपदा-ग्नेयी गायत्री। हे अग्ने आगच्छ "वीतये" हविरुपभोगाय ॥ ४६ ॥ छागस्योपरिधारन-जपति। ऋतं सत्यम् ऋतमग्निः सत्यमादित्यः। यदि वा आदित्य ऋतम् अग्निः सत्यम् ये ॥ ४६ ॥ ऋतꣳसत्यमृतꣳसत्यमग्निम्पुरीष्यमङ्गिरस्वद्भरामः ॥ ओषधयः प्रतिमोदध्वमग्निमेतꣳशिवमायन्तमभ्यत्त्रयुष्माः ॥ व्यस्यन्विश्वाऽअनिराऽअमीवानिषीदन्नोऽअपदुर्म्मतिञ्जहि ॥ ४७ ॥ उभय रूप मप्याहरामीतिशेषः। अनड्वापुरुषमीक्षते (२) अग्निं पुरीष्यम् व्याख्यातम् उपावह-

(१) का० धनधायाश्री त्वाहृत्यखराक्छाग स्वार्तमृस त्वभित्वानिधानात्। ५। २। १। अन्नद्वतिमन्त्रेणवासभात् पिण्माह त्वत्रत मतामितिमेव णाज्यस्योपरिनिधानपर्यन्तमिति मितिसूत्रार्थः।

(२) का० अनड्वापुरुषमीक्षनेपूर्ववदग्निपुरीष्यमिति। १६। २। १२। देवपितृकार्यविमुखोऽनद्वार्तमिच्छपुरीक्षति अग्निपु च्वलरस्वाहवनीयात्तोस्थित इति पूर्वपदेनलभ्यतइति सूत्रार्थः।

यु० य० सं० २४० उ० भा०

रति। (१) ओषधयः प्रति। द्वाभ्यां त्रिष्टुबनुष्टुब्भ्या मोषधिदेवताभ्यातम्। द्वितीयोऽर्द्धर्च आग्नेयः। हे ओषधयः प्रति मोदध्वम् प्रतिहर्षयत। प्रत्युत्थानादिभिः। अग्निम् एतं शिवं शान्तम् आयन्त मभ्यरत्न युष्माः। युष्मान् आगच्छन्तम् अलैवस्थितानाम् एव मह्य चैनोषधी रत्वा अथेदानी मग्नि माह। त्वमपि व्यस्यन् विध्यि पन् विश्वाः सर्वाः। * अनिराः। इवरे-

ओष॑धयः॒ प्रति॑। ओष॑धयः॒ प्रति॑गृभ्णीत॒ पुष्प॑वतीः सुपिप्प॒लाः॥

त्यन्ननामचभति। अन्नं याभिः सतीभि रद्यतिनिदाघाशनिभि गृह्यते विक्षिपन् "अमीवा" व्याधीन् निपीदन् निविशमानश्च। नो अपदुर्मतिं जहि। नोऽस्माकम् "अपजहि" अपनय दुर्मतिम् दुर्बुद्धिं नास्तिदत्तं नास्तिकृतमित्येवमादिकाम् ॥४७॥ ओषधयः। हे ओषधयः एत मग्नं गृह्णती। आदरतव्यः मत्यः। "पुष्यवतीः सुपिप्पलाः"। पुष्यवत्यः शोभनफला स्व भूत्वा। अयं हि वो

(१) का० उत्तरत आहवनीयस्योद्धतावोक्षितेसिकतोपकीर्णं परिश्रितप्राक्द्वारे पिण्ड निदधात्यो ऽषधयइति। १२। ३। १४। उद्यामभरणार्थं मृद्तस्माहवनीतस्योत्तरपूर्वमेवकृतपरिश्रित आच्छादित प्रदेशे ओषधयइति मन्त्राभ्यांपिण्ड स्थापयति। कोदृशेपरिश्रुते हतो ऽवनेजने यथोचिते सिक्तेप्राकृदिग्विद्वारेपश्यताशेदृसिकताव्याप्तेपत्राद्दृशेदतिसूत्रार्थः।

* भाविदराघव वाणिवार्चनिष्ठ वरैतायनाम।

युष्मांकम् गर्भं ऋत्त्वियः ऋतव्यः प्राप्तकालः प्रत्नं पुराणं शाश्वतिकम् सधस्थं सहस्थान मासीदति ॥ ४८ ॥ अथैनं विप्यति (१)। विपाजसा। वीत्यय सुपर्गो बाधस्वे त्वनेन संबध्यते। विबाधस्व। पाजसा। पाजइतिबल नाम। बलेन। पृथुना विस्तीर्णेन। शोशुचानो दीप्यमानः। द्विषः द्वेष्यात्। रक्षसः। अमीवाः व्याधीन्। एवं प्रत्यक्षं याचि त्वा अथे

अयंव्वोगर्ब्भऽऋत्त्वियःप्रत्नꣳसधस्थमासंदत् ॥ ४८ ॥ व्विपाजसा। पृथुनाशोशुचानोबाधस्वद्विषोरक्षसोऽअमीवाः ॥ सुशर्म्मणोबृहतःशर्म्मणिस्यामग्नेरहꣳसुहवस्यप्रणीतौ ॥ ४९ ॥ [ १२ ] आपो

दानी परोक्षो कृत्वा ध्यिप माशास्ते। "सुशर्मणः" साधुशरणस्य बृहतो महतः। शर्मणि शरणे। स्याम् भवेयम् अग्नेः अहं सुहवस्य। स्वाह्वानस्य। प्रणीतौ प्रणयने अभ्यनु-

(१) का॰ विपाजसेतिप्रमुच्येन मजलोमान्यादायप्रागुदीचः पशुनुत्सृजति। २६। २। १५। विपाजसेति मंत्रेणैनपिण्ड कृष्यानिन [illegible] विसं स्वकागरोमाणि गृहीत्वा ब्रादीनैशानीं दिशं प्रत्युत्सृजतीतिसूत्रार्थः।

न्नायाम् ॥ ४८ ॥ अपउपस्पृशति (१)। आ पोहि। अब्देवत्यास्तिस्रो गायत्र्यः। * आपो हि ष्ठा मयो भुवः। द्वितीये पादे तच्छन्दस्यवर्णा द्ध्याहारः कर्त्तव्यः। हे आपः या यूयं † मयो भुवः। मय इति सुख नाम सुखेन भावयित्र्यः स्थ भवथ सर्वप्राणिनाम्। छन्दः परि पूर्ति करो हि शब्दः। ता नः अस्मान् ऊर्जे अन्नाय ‡ दधात न स्थापयत। यथा वयं सर्व

हि। ष्ठामयोभुवस्तानऽऊर्ज्जेदधातन ॥ मुहेरणायुचक्षसे ॥ ५० ॥

स भोग्यस्य भोक्तारो भवेम तथा कुरु ते त्यभिप्रायः। § महते चरणाय रमणीयाय चक्षसे दर्शनाय। अस्मा न्दधातने त्यनुवर्तते। एतदुक्तं भवति। मह च यं दर्शनं परब्रह्म लक्षणं रमणीयं तदस्माकं कुरुते ति। अथवा हि शब्दो यस्मा दर्थे द्रष्टव्या व्याख्यायते नहि वेदे माव-

(१) का० आपोहिष्ठे तिपर्णकषाय पक्वमुदकमासिञ्चति पिण्डे। २६। २। १६। पलाशत्वक्क्वथितं जल पिण्डे ऋचत्रयेण सिञ्चेदिति सूत्रार्थः।

* ऋचो [illegible] गायत्रा सिन्धुद्वीपदृष्टा

† [illegible] यूयं भावयित्र्य [illegible] मयोभुव [illegible] सुखी[illegible]

‡ [illegible] अन्न[illegible] [illegible]यम्।

§ [illegible]

मन्त्रस्याप्यनर्थक्यमिष्यते संभवेषति । आपोहि । हे आपः हि यस्मान्मयो भुवः । ता न ऊर्जे । ताः शब्दस्य पञ्चम्यां सन्मतिः । तस्मा होता रसान् अन्नाय स्थापयत । महे तेच । रमणीयाय * चक्षसे दर्शनीयाय ॥ ५० ॥ † योवः । यश्च वः युष्माकं शिवतमः शान्ततमः रस° । तस्य भाजयत भागिनः कुरुत । इहैवस्थितान्नः अस्मान् ।‡ उशतीरिव ।

योवः॥ शिवतमोरसस्तस्यभाजयतेहनः॥ उशतीरिवमातरः॥५१॥

तस्माऽअरम्। तस्माऽअरङ्गमामवोयस्यक्षयायजिन्वथ। आपो

वशकान्ता । ‡ कृतसंप्रसारणस्य त द्रूपम । कामयमाना इव मातरः मातृशब्दः संबन्धवचनः यथाकामयमाना मातरः पुत्रस्य कल्याणं तैस्ते रथैर्भोजयेयुः एवं भाजयत ॥ ५१ ॥ तस्माअरम् । अज मिति मा‍प्ते लकारस्य रेफ श्छान्दसः । हे आपः तस्यच रसस्यअध स्तन

* [illegible]

† [illegible]

‡ [illegible]

मन्त्रयाचितस्य। वो युष्म त्संबन्धिनः अलं पर्याप्तं "गमाम" गच्छाम वयम्। पर्याप्तं नाम रसविषये * वैहव्याय सहाटण्याय वा यस्य क्षयाय जिन्वथ। क्षयो निवास इत्याद्युदात्तः। षष्ठ्यर्थे चतुर्थी यस्ये ति सामानाधिकरण्यात्। यस्य आकृति परिणामभूतस्य क्षयस्य निवासस्यै कदेशेन जिन्वथ। जिन्वतिः प्रीतिकर्मा। तर्पयथ। पञ्चा कृति परिणामक्रमेण दं

जनयथाचनः ॥५२॥ मित्रः सृंसृज्य ॥ पृथिवीम्भूमिं॒ञ्च ज्योति

ब्रह्मादि स्तंब पर्यंतं जगत। तत्र हे आपः † जनयथ। नः अस्मान् भोक्तृत्वेन। आजान देहत्व माशास्यते ॥ ५२ ॥ अज लोमैः संसृजति (१) ‡ मित्रः संसृज्य। मैत्री उपरिष्टा बृहती। अध्वर्यु राह। मित्रः आदित्यः "संसृज्य" एकोकृत्य पृथिवीम् द्युलोका न्तरिक्षम्

(१) का॰ अजलोमभि संसृजतिमित्रः सृज्येति। १६। ३। १८। अजाद्यानि पूर्वलोमानिरुद्धोत्पानितैःपिण्ड मिश्रयती तिसूत्रार्थः।

* महीयस्मुवेयमा सदार्द्रमिर्वा।

† उत्पादयत चाग्निविशिष्टस्वभौतमथाकृत।

‡ मित्रदेवत्योपरिष्टाद्बृहतियोऽस्यार्थोऽनुयोगादयार्थं।

भूमि वचनः पृथिवी शब्दः। इहतु द्युलोकवचनो गृह्यते। पृथिवीं द्युलोकम् भूमिञ्च मांज्योतिषा अजलोमैः सहसं सृज्यमद्यं प्रयच्छत्वि ति शेषः। अजस्था ग्नेयत्वा त्लोमानि ज्योतिः शब्देन भणितुं शक्यन्ते। अह मपि च गृहीत्वा सुजातं कल्याण जातं त्वां जात-

# षासुह ॥ सुजातञ्जातवेदमयुक्ष्मायंत्वासꣳसृंजामिप्प्रजाब्भ्यं ॥५३॥ रुद्राःसꣳसृज्ज्यं। पृथिवीम्बृहज्ज्योतिꣳ समीधिरे ॥ तेषांब्भानुर जंस्त्रऽइच्छुक्क्रोदेवेषंरोचते ॥ ५४ ॥ सꣳसृष्टांव्वसुभिꣳ ॥ सꣳसृष्टांव्व

वेद संजात मज्ञान मग्नि मजलोमाख्यं संसृजामि अयक्ष्माय अव्याधितायै। प्रजाभ्यः प्रजाना भिति संनतिः ॥ ५३ ॥ शर्करायोरसाश्मचूर्णैः संसृजति (१)। रुद्राः संसृज्य। अनुष्टु प्रौद्री। रुद्राः संसृज्य एकीकृत्यशर्करायो रसाश्म चूर्णैः पृथिवीं पार्थिवंपिण्डम्। इहन्महत्।

(१) का० शर्करायोरसाश्म चूर्णैर्व्वसद्रा सꣳसृज्येति। १६। ३। १८। सूक्ष्मसिकतालोह किट्टपाषाण चूर्णैं पिण्डं मिश्र यतीतिसूत्रार्थः।

यु० य० श० २४३ पु० भा०

ज्योतिरग्निलक्षणम्। उपायांसमोभिरे। संदीपितवन्तः उप स्वमग्निं संवत्सरं धारितवन्तः।
तेषामिदानीं फलमाह। तेषां रुद्राणां भानुर्दीप्तिः। अजस्रद्रुत्। अजस्र उपक्षये इच्छन्द एवार्थे।
अनुपक्षीण एव। शुक्रः। शुक्रः देवेषु निर्द्धारणे सप्तमी। रोचते देदीप्यते ॥ ५४ ॥ * तिसृभि
रनुष्टुभि सिनीवाल्य दितिदेवताभि र्मृदं संयौति (१)। संसृष्टाम् संसेविताम्। वसुभिः रुद्रै श्च

संसृष्टां वसुभी रुद्रैर्धीरैः कर्मण्यां मृदम्। हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु ताम् ॥ ५५ ॥ सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा ॥

धीरैः बुद्धिमद्भिः। धीशब्दो बुद्धिवचनः रोमत्वर्थीयः। कर्मण्याम् कर्मणा या संपद्यते सा कर्मण्या-
तां कर्मण्याम्। मृदं मृत्तिकाम्। हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु करोतु ॥ ५५ ॥
या सिनीवाली सुकपर्दा। कपर्दः केशसंयमनप्रकारः। साधु केशं संयमना। वेणीवीक-
पर्दः। सुकुरीरा। कुरीरो मुकुटः। शोभन मुकुटा। स्वौपशा। शोभन सुप शेते यासा-

(१) का० म सृष्टामितिम यौति। त्र्यृकत्रयेण मृत्पिण्डे सम्यकमिश्रयतीति।

* सिनीवालीदेवत्यं तृतीयादितिदेवत्यानि चोक्तम।

शिवम

खं यथा। विद् गधोशयने करकाण्ड कूजितादिभि र्विलासैः। सा तुभ्यं हे * अदिते महि महति। उखां दधातु स्थापयतु हस्तयोः ॥ ५६ ॥ उखां कृणोतु। करोतु शक्त्या सामर्थ्येन। बाहुभ्याम् अदितिः धियाबुद्ध्या च कृता सती। माता पुत्रं यथा उपस्थेउत्सङ्गे। अग्निं बिभर्तु धारयतु।

सातुभ्यमदितेमह्योखान्दधातुहस्तयोः ॥ ५६ ॥ उखाङ्कृणोतु । शक्त्याबाहुभ्यामदितिर्धिया ॥ मातापुत्रंयथोपस्थेसाग्निम्बिभर्तुगर्भऽआ ॥ मखस्य शिरोसि ॥ ५७ ॥ व्वसवस्त्वा ॥ कृण्वन्तु

गर्भे। आ। आकारआत्मनोयोग्यांक्रियामाक्षिपति। आधारय। गर्भशब्द उखाभ्यन्तर वचनः। मृत्पिण्डमादते(१)। ‡ मखस्य यज्ञस्य शिरोसि। आहवनीयो यज्ञस्य शिरस्तदुद्धारणादि ह्यपि

(१) का॰ यजमान उखाकरोति मदशा दायमखस्यशिरइति। १६। ३। २१। यजमानपश्चात्तत्पिण्डामदमादाय द्वादशाङ्गुलिविस्तार लिखितापाठमञ्चकेष्टकायां कृतायां यजमानं पिण्डमदमादा यस्य यमेवोखाकरोति एकपशुपक्षे प्रादेशायामविस्तारोर्ध्वां चतुरस्रा यत्रपशुपञ्चेविभागोनवयोविश्यत्यङ्गुलायामविस्तारार्भूर्ध्वां प्रादेशेनेवेतिसूत्रार्थः।

* पदीनं अदितिरदितिर्देवमातेतिनिरुक्त निरुक्त। ४। २२।   ‡ मृत्पिण्डदेवत्ययजु यजुर्गायत्रीछन्द।

प्रवर्ततेऽनयाया गिरः शब्दः ॥ ५७ ॥ तं द्रृंहयति ( १ ) । * वसवस्त्वा । वसवस्त्वा कुर्वन्तु हे उखे
गायत्रेण छन्दसाङ्गिरस्वत् यथाङ्गिरसाकृता । यत श्च त्वं कृता सतीध्रुवा स्थिरासि पृथिवी

गायत्रेणच्छन्दसाङ्गिरस्वद्ध्रुवासिपृथिव्यसिधारयामयिंप्रजाᳬं गाय
स्पोषङ्गौपत्त्यᳬसुवीर्य्यᳬसजातान्न्यजमानायरुद्रास्त्वाकृण्वन्तुत्त्रै
ष्टुभेनच्छन्दसाङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसिधारयामयिंप्रजाᳬंरा
यस्पोषङ्गौपत्त्यᳬसुवीर्य्यᳬ सजातान्न्यजमानायादित्यास्त्वाकृण्व
न्तुजागतेनच्छन्दसाङ्गिरस्वद्ध्रुवासिद्यौरसिधारयामयिंप्रजाᳬंरा
चा सि अत स्त्वां ब्रवीमि धारय स्थापय मयि । यजमानाये तिचतुर्ध्यन्त स्पद सुपरिष्टाच्छ्रूयते

(१) का० वसवस्त्वेतिप्रथयति । १६ । ३ । २२ । यजमान आत्ता मृदमुखातलाय प्रादेशमात्रविपुला करोतिमूत्रार्थं ।

* वस्वादिदेवताम् आद्योऽनुष्टुप् ।

तद्दिश्सप्तम्यन्तं कृत्वायोज्यते। सामानाधिकरण्यात्। अन्नं धनस्य च पुष्टिं। गोपतिं त्वं च। शोभनं च वीर्यं वीरकर्म। *सजातान् समानजातान् भ्रातॄन्। धारयेति सर्वत्राभिसंबध्यते। उत्तरेषु

यस्पोषङ्गौपत्यꣳसुवीर्य्यꣳ सजातान्यजमानायधुविश्वेत्वादेवाव्वै

श्वानराऽआवृन्त्वानुष्टुभेनच्छन्दसाङ्गिरस्वद्ध्रुवासिदिशोसिधार

यामयिप्रजाꣳ रायस्पोषङ्गौपत्यꣳ सुवीर्य्यꣳ सजातान्यजमाना

मन्त्रेषु विशेषः। (१) रुद्रा स्त्वा अन्तरिक्ष मसि। (२) आदित्यास्त्वा द्यौ रसि। (३) विश्वेत्वादे-

(१) का॰ पश्चानुवाय सर्वत प्रथम धातुमादधाति रुद्रास्त्वेति। १६। ३। २७। प्रथनानन्तर प्रथितततस्य प्रान्तान्स मानूर्ध्वं नीत्वाप्रथमां पिण्डकामन्ते स योजयतीतिसूत्रार्थः।

(२) का॰ स लिप्य प्रथ्य सत्वोत्तरमादित्यास्त्वेति। १६। ३। २८। तामुखां शिथिलमृदालिप्त्वा वारिणामृदुं कृत्वोत्तर धातु द्वितीय पिण्डिकापूर्वोपरियोजयतीतिसूत्रार्थः।

(३) का॰ विश्वेत्वेतिसमीकरोति। १६। ३। २९। पूर्वोक्तमानांकरोतिसूत्रार्थः।

* समानोदर्यान्भ्रातॄन्।

यजूंषि ॥६०॥ अभ्याखभ्नं खनति (१) अदितिष्ट्वा अदितिस्त्वां देवी * विश्वदेव्यावती। विश्वैर्देवैः सहितपृथिव्याः सहस्थाने अङ्गिरा इव खनतु।† हे अवट कूप। उखा मव दधातु। (२) देवानां त्वा।

व्याऽसुधस्थेऽअङ्गिरुस्वत्खनत्ववटदेवानान्त्वापत्नीर्देवीर्विश्वदे व्यावतीऽपृथिव्याऽसुधस्थेऽ अङ्गिरुस्वद्दधतूखेधिषणास्त्वादेवीर्वि श्वदेव्यावतीःपृथिव्याऽसुधस्थेऽअङ्गिरुस्वदभीन्धतामुखेव्वरूत्री ष्ट्वादेवीर्विश्वदेव्यावतीःपृथिव्याऽसुधस्थेऽअङ्गिरुस्वच्छ्रपयन्तुखे

इत उतरं पञ्चसु यजुःषु स्त्रीत्वेनाभिधेयानि व्याख्यायन्ते। ओषधयो वै देवानां पत्न्यः दधतु स्थाप-

(१) का० अभ्याखभ्य चतुरस्र खनत्यदितिष्ट्वेति। १६। ४। ८। अपाढोखाविश्व ज्योतिपाप्रायचतुरसूमश्वराखनतीतिसूत्रार्थः।

(२) का० देवानान्त्वेत्युखान्युवजाम्। १६। ४। ११। अधोमुखामपाढोतरतोगतस्थापयतीतिसूत्रार्थः॥

* विश्वे सर्वे देवाः यस्याः सा विश्वदेव्या ताः सन्ति यस्याः सा विश्वदेव्यावती मंत्रे सोमाश्वे त्यादिना दीर्घः।

† अवटेदवर्तमानपर्यायः।

यत उक्ते। अग्निनादीपयति। (१) धिषणा स्त्राम धिषणावाचः। अभीन्धताम्। इन्धीदीप्तौ यपयति। (२) वरूत्रीष्ठ्वा अहो रात्राणि वैवरूत्रयः। तानि हि इणवन्ति। पचति द्वाभ्याम्।

ऽअग्नास्त्वादेवीर्व्विश्वदेव्यावतीः पृथिव्याः सधस्त्थेऽअङ्गिरस्वत्पं चन्तूखेजनयस्त्वाच्छिन्नपत्रादेवीर्व्विश्वदेव्यावतीः पृथिव्याः सध स्त्थेऽअङ्गिरस्वत्पं चन्तूखे ॥ ६१ ॥ मित्रस्यं चर्षणीधृतः ॥ मित्रस्यं च

ग्नाना स्त्वाग्नाहेतामग्रे देव: छन्दांसि वैग्नाः। छन्दोभिर्हि स्वर्गं लोकं गच्छति। जनयस्त्वा। नक्षत्राणि वैजनयः। अच्छिन्नपत्राः अनवच्छिन्नपत्राः ॥ ६१ ॥ आचरति। (३) मित्रस्य चर्ष-

(१) का० अयणेनावच्छाद्य दक्षिणाग्न्यग्निनादीपयतिधिषणास्त्वेति। १६। ४। ४। १४। उखास्थापनानन्तरं विश्वज्योतिपस्तु यीज्यभ्रेऽवधायश्रपणं सर्वमाच्छाद्य दक्षिणाग्नेराभीतेनवह्निनोखांदीपयतीतिसूत्रार्थं।

(२) का० वरूत्रीष्ठ्वे तीखमाणोजपति। १५। ४। १२। सामर्थ्यादुखोपरिस्थश्रपणं छिद्रं कृत्वातेनोखापश्यन् त्रीणियजूंषि जपतीतिसूत्रार्थं।

(३) का० आचरतिमित्रस्येति १६। ४। १६। भस्मीभूतं श्रपणमुखाया पराकरोतीतिसूत्रार्थं।

ष्मनये ध्यान्यर्थम् पुर्वे ष्यः मायच्छत्प्रादात् धूपयाम् धूपयन्तु। इति करणः प्रयोजनव्याप

तिङ्धूपयानिति॥ ५९ ॥ व्वसंवस्त्वा । धूपयन्तुगायत्त्रेणच्छन्दंसा ङ्गिरुस्वद्रुद्रास्त्वांधूपयन्तुत्त्रैष्टुंभेनुच्छन्दंसाङ्गिरुस्वदांदित्त्यास्त्वां धूपयन्तुजागंतेनुच्छन्दंसाङ्गिरुस्वद्विश्श्वेत्त्वादेवाव्वैश्श्वानुराधूपयुन्त्वा नुंष्टुभेनुच्छन्दंसाङ्गिरुस्वदिन्द्रस्त्वाधूपयतुव्वरुणस्त्वाधूपयतुव्विष्णुस्त्वा धूपयतु ॥६०॥ [ ११ ] अदितिष्ट्वा ॥ देवीव्विश्श्ववेव्व्यावतीपृथि

नाथः ॥५९॥ सप्तभिरश्वशकृत्पिण्डांधूपयतिसप्तभिर्यजुर्भिः प्रतिमन्त्रम् * । (१)वसवस्त्वा। ऋच्यर्थानि-

(१) का॰ सप्तभिरश्वशकृत्पिण्डान्धूपयति दक्षिणाग्न्यादीप्य्यैरेकैकेनवसवस्त्वे तिप्रतिमन्त्रम् १६ ४ । ८ ।; दक्षिणाग्नौ प्रदीप्ते सप्तभिरश्वशकृत्पिण्डान्प्रतिमन्त्रं धूपयत्यध्वर्युः धूमायमानमेकैकमश्वशकृत्पिण्डमादायैकैकेन मन्त्रेण उखायामध्ये वह्नि-प्रज्वला मर्येदिति सूत्रार्थ ।

---

* सप्तयजुर्भ्यादश्वशकृन्निर्वापित्वमाथवा गुर्वसामगमदीपयमससमीयजुर्विधिहीपट यजुरजुद् प् ।

य० णीधृत: । मैत्रीगायत्री। मित्रस्या दित्यस्य चर्षणीधृत: । चर्षणयो मनुष्या: तेषां धार-
य० णे अधिकृतस्य अव: देवस्य। अव: रक्षणं । सनातनम् पुरातन पुराणम् द्युम्न च यश: अन्नं-
स० वा । चित्रश्रव स्तमम् । अतिशयेन चाकर्णनीयं श्रवणीयं च वयं स्तुम इतिवाक्यशेष: ।
२४७ र्षणीधृतोवोदेवस्यसानसि ॥ द्युम्नञ्चित्रश्रवस्तमम् ॥ ६२ ॥ देव
उ० स्त्वा ॥ सवितोद्वपतुसुपाणिःस्वङ्गुरिःसुबाहुरुतशक्त्या ॥ अव्यथ
भा० मानापृथिव्यामाशादिशऽआपृण ॥ ६३ ॥ उत्थायबृहती ॥ भवोदु
याचे महीतिवा। यद्वा। यस्य मित्रस्य चर्षणीधृत: पालने पुराण मस्ति द्युम्न चित्रश्रव-
मम् सयजमानस्या भिमेत मर्थं साधयतु ॥ ६२ ॥ उद्वपति। देवस्त्वा। बृहती उख्या। देव:
त्वा त्वां भवतीम् उद्वपतु । उद्वपनतु प्रकाशो करोतु। * सुहस्त: । † स्वङ्गुरि: शोभनाङ्गुलि: ।
लकारस्य रेफश्छान्दस: । सुबाहु: सुभुज: । उतशक्त्या अपिशक्त्या अपिवृद्धति । उत शब्द:

* शोभनौपाणीयस्यासौ ।
† , शोभनाब गुय स्त्वामसा

समुच्चयार्थः । उद्वपतीत्यनुवर्तते । त्वं च सवित्रा उद्वप्ता सती (१) अव्यथमाना अचलन्ती । पृथिव्याम् आश्रिता आशा दिशो दिश विदिशश्च आ पृण आपूरय आकृतिरसेन ॥ ६३ ॥ उद्गच्छति । उत्थाय बृहती । पूर्वार्द्धं तस्य उत्तरोमैत्रः । एतस्मा द्यजनस्थाना दुत्थाय ।

तिष्ठद्ध्रुवात्वम् ॥ मित्रैतान्तऽउखाम्परिददाम्यभित्त्याऽएषामाभेदि ॥६४॥ व्वसवस्त्वा । च्छृन्दन्तु गायत्रेणच्छन्दसाङ्गिरस्वद्द्रुद्रास्त्वा

बृहती महती भव । तत उत्तिष्ठ । प्रवर्त्तस्व । स्वकीये कर्मणि । यत स्त्वं ध्रुवा स्थिरासि स्वभावतः । परिगृह्य पात्रे करोति । (२) मित्रैतान्त इति । हे मित्र एतां ते तव उखां परिददामि प्रयच्छामि । किमर्थम् । अभित्त्यै अभेदनाय । एषा च उखा त्वया गृहीता

(१) का० उखामुतानां करोत्यव्यथमानेति । १६ । ४ । २१ । २२ । व्ययणमपाकृत्यापाढांवह्निर्निष्काश्योखामुतानामुतानामूर्ध्वं मुखीकरोतीति सूत्रार्थः ।

(२) का० पात्रेकरोतिमित्रैतान्तइति । १६ । ४ । ११ । हस्तगृहीतामुखामुतरतः पूर्वं स्थापिते कस्मिंश्चित्पात्रेस्थापयतीति सूत्रार्थः ।

तिव्याख्यातम् ॥६७॥ (१) उखा माहवनीये धिष्यति। मासुभित्थाइतिगायत्रीत्रिष्टुभ्यामुखादेवत्या-
भ्याम्। अग्नि इचे दमितिपादश्चाग्नेयश्च। हे उखे मा त्वं भित्थाः। भिदिरविदारणे। भिद्यस्व।

व्वीतसुरक्षाम् ॥ व्विश्वव्वीरायऽइषुध्यतिद्युम्नंव्वृणीतपुष्यसेस्वा
हा ॥ ६७ ॥ मासु। भित्थामासुरिषोम्बधृष्णुव्वीरयस्वसु॥ अग्निश्चेदङ्करिष्यथः ॥ ६८ ॥ दृर्ठहस्वदेवि। पृथिविस्वस्तयऽआसुरीमा

सुकारोनर्थकः। मारिषः। रिषति हिंसा कर्मा। माविनश्यस्व। हे अम्बअम्बे तियोषायाआ-
मन्त्रणम् धृष्णु धृष्टं प्रगल्भं वीरयस्व वीरकर्म कुरुष्व। अग्निधारण लक्षणम्। किञ्च। इत

(१) का० दण्डोच्छ्रयणान्तं कृत्वाध्वर्युयजमानयोरन्यतरउखामाहवनीयेऽधिश्रयतिमुञ्जकुलायशण कुलायावस्तीर्णामन्तरे शणामासुभित्था इति तिष्ठमुदङ्प्राङ्। १६। ४। ३१। श्रौद्ग्रभणहोमानन्तरं दीक्षणीयाशेषं समाप्यकृष्णाजिनदीक्षा दिदण्डोच्छ्रयणान्तं प्राप्तं कर्मकृत्वाध्वर्युर्यजमानो वेशानाभिमुखः प्राग्वातिष्ठन् दग्धयेनसमिद्धे आहवनीयेउखामारोपयतिकीदृशीमुखां मुञ्जतृणनिर्मितं पचिनीडं मुञ्जकुलायः शणनिर्मितं तच्छणकुलायस्ताभ्यांमध्येच्छादितामादौ शण कुलायेनततोन्येनेतिसूत्रार्थः।

उत्तरम् अग्नि श्च त्वं च इदं कर्म आसमाप्तेः करिष्यथः पचनम् ॥ ६८ ॥ दृम् हस्वदेवि । हे उखे दृंहस्वदृढीकुरु आत्मानम्। हे देवि पृथिवि। कार्ये कारणो पचारो वर्णनार्थः। रत्तये अग्निनाशाय। कस्मा त्त्व मिद मुच्यसे। यत आसुरीमाया। असुः प्राणः। रेफउपजनः। प्राण संबन्धिनीमाया प्रज्ञा। स्वधया अन्नेन निमित्त भूतेन कृतासि। किञ्च। जुष्टं

यास्वधयाकृतासि ॥ जुष्टन्देवेभ्यऽइदमस्तुहव्यमरिष्टात्वमुदिहियज्ञेऽअस्मिन् ॥ ६८ ॥ द्रन्नः सर्पिरासुतिःप्रत्नोहोताव्वरेण्यः ॥

प्रियं देवेभ्यो हुतम् इदं हव्यं हविः अस्तु। त्वं त्वत्प्रसादात्। या उख्येग्ना वाहुतयो हूयन्ते ताः पच्यन्ते। त्वमपि अरिष्टा अनवखण्डिता उदिहि उद्गच्छ। यज्ञे अस्मिन् वर्त्तमाने ॥ ६८ ॥ (१) उख्येग्नौत्रयोदशसमिधः प्रादेशमात्रीः आदधाति। त्रयो दशभिराग्नेयीभि र्ऋग्भिः।

(१) का० अग्नावाकङ्कत्रयोदशाग्नौ प्रादेशमात्री समिध आदधाति। १६। ४। २३। घृतौवाकासु कीद्रवदति अभितापादुखायांवह्नौजातिप्रादेशमिताश्रयोदशसंख्याका समिधोजुहोतिता क्रमेणाद्य घृतक्तिरत्नासुकसमिधमादौस्रुकोधमन इतिसूत्रार्थं।

द्वे गायत्री। द्रुन्नः सर्पिरासुतिः। द्रु रक्षो न्नमदनोऽयं यस्य सद्रुन्नः। द्रु शब्दो द्रुमपर्यायः। सर्पिरासुतिः। सर्पि घृंत मासवनं स्थानीयं यस्य ससर्पिरासुतिः। प्रत्नः पुराणः। होता देवाना माह्वाता। वरेण्यो वरणीयः। सहसस्पुत्रः। बलस्य पुत्रः। यतो मथ्यमानो जायते तस्मा-

सहंसस्पुत्रोऽअद्भुतः ॥ ७० ॥ शतम् ५०० ॥ परंस्याऽअधिं ॥ संव्वतोवंरार ॥ ऽअभ्यातंर ॥ यत्राहमस्म्मितार ॥ ऽअंव ॥ ७१ ॥ पुत्रम

देव मुच्यते। अद्भुतः अनन्यसमः। यद्दत्थंभूतो ग्निः स कार्मुकिंसमिधं भक्षय तिष्ठति शेषः। नह्युपाख्यातं विद्यते नचाख्यातेन विनावाक्यपरिसमाप्तिः॥ ७० ॥ शतम् ५००। * बैकङ्कतीमादधाति। (१) परस्या अधि संवत् इति संग्रामनामसु पठितम्। संपूर्वस्य वनतेर्गत्यर्थस्य। संगच्छन्ते-

(१) का० वैकङ्कतींपरस्यादिति। १६। ४। २६। विकङ्कतसमिधं जुहोतीतिसूत्रार्थ।

* चार्पे वीगायत्री[illegible]

ह्यत्रयोधाः । परस्याः संबन्धिन्याः संवतः अधिसकाशात् । अवरान् अस्मदीयान् अभ्यातर अभ्यागच्छ । ततो यत्र जनपदे अह मस्मितान् अव पालय । तर्पय वा ॥ ७१ ॥ (१) औदुम्ब-रीमादधाति । परमस्याः । तिस्रोनुष्टुभ । परावत इति दूरनामसु पठितम् परमस्याः परावतः । परम दूरम् तस्मात् । हे रोहिदश्व । रोहितोग्नेः हरित आदित्यस्येतिनिघण्टुः । हे अ-

स्याः परावतः ॥ परमस्याः परावतो रोहिदश्व इहागहि ॥ पुरीष्यः पुरुप्रियोग्ने त्वन्तरा मृधः ॥ ७२ ॥ यदग्ने । यदग्ने कानि कानि चि

ग्ने रश्व । इह आगहि आगच्छ । यतः त्वं पुरीष्यः पशव्योसि पुरुप्रियश्च * बहुजन प्रियश्च । औदुम्बरे बह्वन्येवायनानि तयोतदूर्ज्जं सर्वां वनस्पती न प्रति पच्यत इतिश्रुतिः । आगत्य च हे अग्ने त्वं तर विनाशय । मृधः संग्रामान् ॥ ७२ ॥ (२) अरशुहृतामादधाति । यदग्ने ।

(१) का० औदुम्बरीं परमस्याइति । ११ । ४ । ३७ । ४७ । उदुम्बरतरुसमिधं तृतीयामादधातीतिसूत्रार्थः ।

(२) का० अपर शुक्रूर्णायदग्नइति । १६ । ४ । ४८ । कुठारविनाछिन्नांवातादिनाभग्नांयज्ञियतरुसमिधं चतुर्थीमादधातीति-सूत्रार्थः ।

* बहुजनवेतिसि: ।

यच्छन्दो दध्मसी त्य नेन संवध्यते । यदा दध्मसि यदा दध्मः । हे अग्ने तव दारूणि कानि चित् चिच्छन्दो ऽनवक्लृप्तौ । यानि कानि चिदेत्यभि प्रायः । सर्वं तदस्तु ते न वघृत । तज्जुषस्व । सेवस्व । ० हे यविष्ठास्वार्थे यप्रत्ययः । युवतम ॥ ७३ ॥ (१)अधःशयामादधाति ।

दातेदारूणिदध्मसिं ॥ सर्व्वन्तदस्तुतेघृतन्तज्जुषस्वयविष्ठ्य ॥ ७३ ॥ यदत्तिं ॥ यदत्त्युपजिह्विकायद्वम्रोऽअतिसर्प्पति ॥ सर्व्वन्तदस्तुतेघृतन्तज्जुषस्वयविष्ठ्य ॥ ७४ ॥ अहंरहरप्रयावम् ॥ अहंरहरप्रयावु

यदत्ति । न भ्रजयति काष्टम् उपजिह्विका उपदीपिका । य च वम्रः वल्मीकः अतो त्यनु वर्त्तते । सर्वं न दिति व्याख्यातम् ॥ ७४ ॥ (२) पालाश्या उरा भवन्ति

(१) का० मध ग्रयांयदत्तीति । १६ । ४ । ३८ । अधोनोचैर्देशे शेतीत्ताभूलग्नासमिध पञ्चमीदन्धातीतिसूत्रार्थं ।
(२) का० पालाशी प्रत्यृचमष्टरहरितीति । १६ । ४ । ४० । अष्टभिं प्रत्यृचमष्टौपालाशी प्रादेशमिता समिधउर्थ्यो ऽग्नावादधातीति सूत्रार्थं ।

० यनिष्ठयेनयुवा यविष्ठ यविष्ठएवयविष्ठ्य ।

अहरहः। त्रिष्टुभौ। अस्मि न्मन्त्रे द्वितिय चतुर्थं पाद्यो र्विरोधः। अश्वायेवतिष्ठते घा- समस्मै। अत्र तिष्ठते अस्मै द्वे पदे परोक्ष मग्निं ब्रूतः। तथा ग्ने माते प्रति वेशारि- षामेति। अग्ने ते इति प्रत्यक्ष मग्निं ब्रूतः। नच वाक्य भेदेनार्थः सम्भवति। अतो द्वयोः पाद्यो र्लाक्षणिकया वृत्त्या व्याख्यायते। अहरहः सततम् अप्रयाँव सप्रमत्तम् भरन्तः आहरन्तः अशनानि। कथ मिव। तदुपमेयो दर्शयति। अश्वायेति। अश्वस्ये वस्याप-

मरन्तोश्वायेवतिष्ठंतेघासमस्मै॥ रायस्पोषेणसमिषामदन्तोग्ने मातेप्रतिवेशारिषाम॥ ७५॥ नाभापृथिव्याः॥ समिधानेऽअग्नौ

यन्तो वयं घासं यवसम् अस्मै तव। किञ्च। रायस्पोषेण। दक्षिणा लक्षणेन धनस्य पोषेण। समदन्तः उत्साहयन्तः इषा अन्नेन समदन्तः त्वां हे अग्ने। मारिषाम। मा विनश्येम। ते तव प्रतिवेशाः प्राति वेशिकाः। त्वदाश्रयाद्दूरस्थिर्थः॥ अध्याहारेण वाव्या- ख्यायते। अह रहः अप्रमत्ता आहरन्तो शनानि। यच्च अश्वाये वदत्तं घासं भक्षितम् घ्रदितं च अवतिष्ठते भक्ष अस्मै अग्नये तदुद्वयन्तः। भक्षो द्वपन मपि पठितम् अत

एव मपि व्याख्यायते। रायस्पोषेण समिषा मदन्तइत्यादि समानम् ॥ ७५ ॥ नाभापृथि- व्याइति। नाभौ पृथिव्याः। एषाह नाभिः पृथिव्यै यत्रै त त्समिध्यन्ते। समिधाने संदी- प्यमाने आहवनी यास्ये अग्नौ। रायस्पोषाय धनस्यपोषाय। बृहते महते। हवामहे आह्वयामः। अग्नेयोऽधिष्ठात्री देवता तदभिप्राय मेतत्। कथं भूत मग्नि मित्यत आह।

रायस्पोषायबृहतेहवामहे ॥ इरम्मदम्बृहदुक्थंयजत्त्रञ्जेतारमग्नि म्पृतनासुसासहिम् ॥ ७६ ॥ याःसेनाः ॥ याःसेनाऽअभीत्वरीराव्या

इरम्मदम्। इरया न्नेन माद्यति तृप्यति। बृहदुक्थं महदुक्थम्। यजत्रं यजनीयम् जेतारं पृतनासु संग्रामेषु। सासहिम् सोढारम् अभि भवितारम्। स.। धामिन अग्ना- विति आहवनीय विषयो ग्नि शब्दः। जेतार मग्नि मधिष्ठात्र्यग्नि विषयः॥ ७६ ॥ या सेनाः अनुष्टुभः पागन्नपतीयायाः। सा द्व परिष्टा दूहती। याः सेनाः अभित्वरीः। इणग। ता वित्यस्मा द्धातोः इणनशजिसतिभ्यः इति क्वरप्प्रत्ययः। ह्रस्वस्य पिति कृतोति तुगागमे कृते

टिट्ढाणञिति ङीपि कृते इत्वरी इतिसिद्धम् भवति इणः। अभियायिन्यः। आव्याधिनीः। आविध्यन्ति याः उगणाः उत। उत शब्दोप्यर्थे। अपि च। उग्र् गणाः। पृषो दरादि पाठान् मध्यम पद लोपः। येच स्तेना श्चौरा येच तस्कराः। तस्कर स्तत्करोति यत्पापक मिति निरुक्ताः। ता न्सर्वान् ते तव हे अग्ने अपिदधामि प्रक्षिपामि आस्ये मुखे भक्षणाय ॥ ७७ ॥ दंष्ट्राभ्याम। दशनशो-

धिनीरुगंणाऽउत्त ॥ येस्तेनायेचतस्करास्ताँस्तेऽअग्नेपिंदधाम्यास्ये ॥ ७७ ॥ दꣳष्ट्राभ्याम्मलिम्लूञ्जम्भ्यैस्तस्कराँ २। ऽउत ॥ हनुभ्याꣳस्तेनान्भगवस्ताँस्त्वङ्खादसुखादितान् ॥ ७८ ॥ येजनेषु। म

लाभ्यां दृढाभ्याम् राक्षसिके इति ये उच्येते ताभ्याम् मलिम्लून्। मलिम्लुचः उक्ताः गूढा स्तेन तया म्लोचयन्ति अदृश्याभवन्ति जनेकृत्वेचये जम्भैः स्तस्करान् जम्भाइति समाख्यिता जम्भ्याः ताभिः तस्करान् उत अपि। हनुभ्यां च हननशीलाभ्यां स्तेनान् हे भगवः हे भगवन् महदैश्वर्यं युक्त। तान् त्वं खाद यथा सुखादिता भवति ॥ ७८ ॥ जनेषु मलिम्लुचः जनेषुस्ते-

नाशः आवजसेरसुक् तस्कराः। वनेवनाश्रिताः। येचकक्षेषु। नदीपर्वतकाक्षेषु अघायवः। छन्दसिपरेच्छायामितिवक्तव्यम् इत्यघशब्दात्क्यनक्याच्छन्दसीतिउप्रत्ययः अघं परस्मै इच्छन्तो ऽघायवः तान् तव दधामि स्थापयामि जंभयोः भक्षणाय ॥ ७८ ॥ यो अस्मभ्यम् यो मनुष्य अस्मभ्यम् अस्मद्यैस् अरातीयान्। अराति रिवाचरेत्। अरातिः शत्रुः। यश्च

लिम्लवस्तेनासुस्तस्करावनें ॥ येकक्षेष्वघायवस्ताँस्तेदधामिजम्भयोः ॥ ७९ ॥ योऽअस्मभ्यम्। योऽअस्मभ्यमरातीयाद्यश्चनोद्वेषतेजनः ॥ निन्दाद्योऽअस्मान्धिप्साच्चसर्वन्तम्मस्मसाकुरु ॥ ८० ॥ सᳪशितम्मे ॥ सᳪशितम्मेब्रह्मसᳪशितंवीर्य्यम्बलम् ॥ सᳪशितङ्क्षत्र

नः अस्मान् द्वेषते द्वेष्टिजनः। निन्दात् च निन्दयति यो अस्मान् दिप्सा च दम्भोतेः सन्यभ्यास लोपः। दम्भितु मिच्छति यः। तान् तव दधामि। सर्वमेत च्छत्रुजातं मस्मसा कुरु। मस्मसेति शब्दो नुकरणे डाजन्तः। यथा भक्ष्यमाणा मस्मसा शब्दं कुर्वन्ति तथा कुर्वित्यर्थः ॥ ८०॥

पुरोहितस्ता दधाति। (१) संशितंमे ब्रह्म। शो तनूकरणे उपसर्ग व्यत्ययः। निशितं तीक्ष्णी-कृतं मे मम ब्रह्म। निशितं च वीर्यम् वीरकर्म बलम् निशितं च क्षत्रं जिष्णु जयन शीलम् यस्य अहम् अस्मि भवामि पुरोहितः ॥ ८१ ॥ (२) उदेषाम् वलियस्य उदति-

ञ्जिष्णुयस्याहमस्मिपुरोहितः ॥ ८१ ॥ उदेषाम् ॥ उदेषाम्बाहूऽअतिरमुद्वर्चोऽअथोबलम् ॥ क्षिणोमिब्रह्मणामित्रानुन्नयामिस्वाँ २ ।ऽअहम् ॥ ८२ ॥ अन्नपतेन्नस्य ॥ नोदेह्यनमीवस्यशुष्मिणः ॥

रम् उद्धरितवान् अस्मि एषां योद्धृणां बाहू उदर्चः उद्धरितवान् वर्चः। अथो अपि च बलम्। क्षिणोमि च विनाशयामि ब्रह्मणा पुरोहि संत्रेन अमित्रान्। उन्नयामि उद्गमयामि च स्वान्

(१) का॰ उपोत्तमामर्भियस्यं स्वदुत्तमापुरोहितस्य । १६ । ४ । ४१ । क्षत्रिययजमानस्यद्वादशींसंशितमित्येतामिच्छयाद-धातिपकादशनित्याः सर्वासामृचामन्ते स्वाहाकारयेतिसूत्रार्थः।

(२) का०एषांस्वकीयानांराजब्राह्मणादीनांमधेएकैकस्यबाहुभुजौउदतिरमुत्कर्षेणवर्धितवानस्मितिर्तृतिप्रद्यर्थे. लौकिकोऽपिरियं लोकेहियोऽस्मादुत्कृष्टोभवतिजनाएवंवदन्ति मयांस्वहस्तमुपरिसृतवानिति।

मग्नेः ॥१॥ द्वाभ्याम् परि गृह्णाति । (१) नक्तोषासा । आग्नेयो त्रिष्टुप् नक्ता रात्रिः । उषा शब्देना ह रुच्यते । रात्राहनी । समनसा एकमनस्के विरूपे । नानारूपे कृष्णा रात्रिः शुक्ल मह: । धापयेते यापयेते । सायं प्रात रग्निहोत्रादिभिः कर्मभिः । शिशुं बाल मिव माता पितरौ एकम्

नक्तोषासासमनसा ॥ विरूपेधापयेतेशिशुमेकᳲसमीची ॥ द्यावाक्षा मारुक्मोऽअन्तर्विभातिदेवाऽअग्निन्धारयन्द्रविणोदाः ॥ २ ॥ वि

अग्निलक्षणम् । स मीची सम्यग ञ्चते संश्लिष्टे वा । ये दृत्थं भूते ताभ्यां गृह्णामी ति शेषः हरन् ॥ जपति । (२) द्यावाक्षामा । द्यावा पृथिव्यौ यो रुक्मः रोचनः अन्त विभा-

भूता उक्तविन्दव पिण्डा उच्यन्ते । कृष्णाजिनखण्डे श्वेतकृष्णरोमस्थाने स्यूतम् त्रिगुणशणसूत्रे प्रोत नाभेरूर्ध्वं वर्तमान पिण्डा वह्निर्भवन्तितथा धार्य मिति सूत्रार्थः

(१) का० परिमण्डलाभ्या मिण्डुभ्या मुखापरिगृह्णाति नक्तोषासेति । १५ । ५ । ३ । वर्तुलाभ्या सुखाधारणसाधकपाभ्या मिण्डूाभ्या मुखांगृह्णातो ति सूत्रार्थ ।

(२) का० हरति द्यावाक्षामेति । १६ । ५ ।४। आहवनीयोपरिस्था मुखा मेव मिण्डुभ्या मादाय द्यावेति पादेनासन्दो मत्ति त हरतीति सूत्रार्थं ।

ति अन्तरा दीयते तं हरामी ति शेषः । नि दधाति । (१) देवा अग्नि न्धारयन्द्रविणोदाः । य मग्नि देवा द्रविणोदाः धन दातारो धारितवन्तः त महं धारयामीति शेषः ॥ २ ॥ शि-क्य पाशं प्रतिमुञ्चतो (२) विश्वा रूपाणि *जगती सावित्री । यः विश्वानि सर्वाणि रूपाणि प्रति-

भ्विश्वारूपाणि ॥ व्विश्वारूपाणिप्रतिंमुञ्चतेकविःप्प्रासांवीद्भद्रन्द्विप

चतुंष्पदे ॥ व्विनाकंमक्ख्यत्सविताव्वरेण्योनुंप्प्रयाणंमुषसोव्विराज

मुञ्चते प्रतिबध्नाति द्रव्येष्व पहत्य शार्वन्तमः प्रकाशयतीत्यर्थः । कविः क्रान्तादर्शनः । य य मासावीत् प्रसौति । भद्रं भन्दनीयम् द्विपदे चतुष्पदे । द्विपाद्भ्य श्चतुष्पाद्भ्य श्च । विना-

(१) का० आहवनीयस्य पुरस्ता दुद्दात्त्यासन्दीवदासव्यां चतुरस्राङ्ग्य शिक्यवत्या मादधातीति देवाऽग्नि मिति । १६ । ५ । ५ । आहवनीयात्पूर्वदिशि भूमौस्थापिताया मासद्या मुखा निदधाति देवा इति पादेन उद्वासन्दीव दिति प्रादेशमात्रपाद्या मौदुम्बर्योरत्निमात्त्राद्या मुञ्जरज्ज्वा व्युताया मिति लभ्यते तथा चतुरस्राणि चतुष्कोणानि अङ्गानीपोपलपादरूपाणि यस्यास्तस्यासश्चिक्या श्चेति सूत्रार्थः ।

(२) का० शिक्यपाशं प्रतिमुञ्चते षडुद्याम विश्वारूपाणीति । १५ । ५ । ६ । उत् ऊर्ध्वं यम्यतेनियम्यते यैस्ते उद्यामा रज्जव षडुद्यामारज्जव ऊर्ध्वाकर्षणहेतवो यस्य दृश मासन्दीस्थं शिक्यपाशं यजमान कण्ठे बध्नातीति सूत्रार्थः ।

क मस्य सविता वरेण्यः। यद्यव्यख्यत् विख्यापयति प्रकाशयति। नाकं द्युलोकम् सविता सर्वस्य प्रसविता। वरेण्यः वरणीयः। अनु प्रयाणमुषसो विराजति। स सविता उषसः प्रयाणं प्रगमनम् अनुपश्चात् विराजति दीप्यते। उषाः सवितुः पुरोगाभिनीति सवितुः स्तुतिः। य स्त्विंभूतः सविता सशिक्यं प्रतिमुञ्चत्वित्यर्थः ॥ २ ॥ (१) विकृत्या भिमन्त्रयते विकृतिस्वत

ति ॥ २ ॥ सुपर्णोसि ॥ गरुत्माँस्त्रिवृत्ते शिरोगायत्रञ्चक्षुर्बृहद्रथन्तरे पक्षौ ॥ स्तोमऽआत्माच्छन्दाᳬंस्यङ्गानि यजूᳬंषिनाम ॥ सामतेतनूर्वामदेव्यंयज्ञायज्ञियम्पुच्छन्धिष्ण्याः शफाः ॥ सुपर्णोसिगरुत्मा

न्दिवङ्गच्छ स्वः पत ॥ ४ ॥

रवसाना। गारुत्मतो विपक्षी। सुपर्णोसि। सु पतन स्त्व मसि। गरुत्मान् गणवान् अशनवात्। त्रिवृत् स्तोमः ते तव शिरः गायत्रं चक्षुः। बृहद्रथन्तरे सामनी पक्षौ पञ्च विंशः स्तोमः। आत्माच्छन्दांस्येकविंशतिरङ्गानि। यजूंषिनाम। सामतेतनूर्वामदेव्यम्। यज्ञायज्ञियंपुच्छम्।

(१) का० सशिक्य प्राच प्रस्थान्ति सुपर्णोसीत्ति पिण्वत्। १६। ५। ७। शिक्यसहित मुख्याग्निमाच्या मुखं स्मारय त। पिण्वदित्यूर्ध्वबाहु अनेनोख्याग्नेरभिमन्त्रण सुपर्णा मोषिदिति मुत्राः।

धिष्ण्या.अग्नय:शफा:खुरा:। *यतश्चत्वं सुपर्णोसि गरुत्मान् अतोब्रवीमि त्वाम् दिवं गच्छ स्वः स्वर्लोक * पत ॥४॥ (१) विष्णु क्रमान् क्रमते। † विष्णोः क्रमोसि। ‡ विष्णोः यज्ञस्या ग्ने यतः

न्दिवङ्गच्छस्वःपत ॥ ४ ॥ विष्णोःक्रमः ॥ विष्णोःक्रमोसिसपत्नहागायत्रञ्छन्दऽआरोहपृथिवीमनुविक्रमस्वविष्णोःक्रमोस्यभिमातिहात्रैष्टुभञ्छन्दऽआरोहान्तरिक्षमनुविक्रमस्वविष्णोःक्रमोस्यरा

क्रमोसि सपत्नहा च शत्रुघातक श्च अतः गायत्रं छन्द आरोह पृथिवी मनु विक्रमस्व। अभिमातिहा। अभिमाति रपि केन चि द्गुण विशेषेण शत्रु रेवो च्यते। महज्जन्यत्। अरातीयतोहन्ता। अराति रिवा चरति अरातीयति। अरातिः शत्रुः। तस्य अरातीयतः शत्रूयतो-

(१) का० विष्णुक्रमान् क्रमते विष्णोरिति प्रतिमन्त्र मनव्यु द्गृह्य च तस्मिन् स्तस्मिन्। १६।५।११। विष्णुक्रमसंज्ञान् पाद न्यासान् करोति तस्मि स्तस्मिन् क्रमते उख्यसागनेरूर्ध्वं ग्रहण कार्यमिति सूत्रार्थं।

* प्राप्नुहि। † चत्वारियजूंष्युख्याग्निदेवतानि क्रमाद्बृहतीछन्दस्कानि त्रीणि चतुर्थं प्राजापत्याबृहती। ‡ विष्णु शब्दे नाभिधीयते सर्वेण यज्ञ ॥ यत यज्ञोऽयमेव यज्ञोऽयमभिधीयते।

हन्ता। अग्रस्तनेन व्याख्यातम् ॥५॥ (१)ऊर्ध्वभाक्: प्रदक्षिणं गृह्णा त्यग्निम् * अक्रन्ददग्निःत्रिष्टुप्। अस्या मध्य ग्नि पर्जन्यौ कथ्येते। अक्रन्दत् क्रान्दते विस्फूर्जति अग्निः। स्तनयन्निवद्यौः। द्यौः शब्देना त पर्जन्य उक्तः यथा स्तनय न्पर्जन्यः शब्दं करोति एव मग्निः पर्जन्यवत्

तौयतोहुन्ताजागंतुच्छन्दऽआरोहुदिवमनुविक्रमस्वविष्णोः क्रमो

सिशत्रूयतोहुन्तानुष्टुभुच्छन्दऽआरोहु(१) दिशोनुविक्रमस्व ॥५॥ अ

क्रन्ददग्निः ॥ अक्रन्ददग्निस्तनयन्निवद्यौःक्षामारेरिहद्वीरुधः स

शब्दं करोति अथा न्यान्यपि पार्जन्यानि रूपाण्य ग्नेः प्रदर्श्यन्ते। क्षामारेरिह वीरुधः समञ्जन् क्षामा शब्देन पृथिव्यु च्यते। द्वितीयार्थे च प्रथमा। लिह आस्वादनेयथा पर्जन्य उदक भाय सुपगच्छन्न त्ययं पृथिवीं लेढि आस्वादयति वीरुधः समञ्जन् व्याप्नुवन् एव मय मग्निः

(१) का० पिण्डवत्प्रागुदग्भूमग्रन्थात्यक्रन्ददग्निरिति। १६। ५। १४। ऊर्ध्वबाहुः प्रागूर्ध्वं मग्निं प्रपत्क्रान्तीतिसूत्रार्थः

(१) का० दिशोवीक्षतेदिशोनुविक्रमस्वेति। १६। ५। ११। सर्वादिशः पश्यतीत्यर्थः।

* अग्निर्देवत्यात्रिष्टुप् वत्सप्रोदृष्टा।

पृथिवी मत्यर्थं मास्वादयति स्वकीय ज्वाला समूहे नौषधीः समंजन् । व्यानुवन् । अन्य दप्युच्यते । सद्यो जज्ञानो विह्वी मिद्धो अख्यत् । यथा पर्जन्यः सद्य एवाभ्र रूपेण जाय-मानो व्यख्यत् वि रुपसर्गः ख्याति नाम वध्यते तेन विख्यापयति हि ई इद्धो धारा शतसहस्रैः । हि ई इमौ निपातौ पादपूरणौ । एव मय मग्निः सद्य एव जायजानः इद्धः सन्

मञ्जन्॥ सुद्योजंज्ञानोव्विहीमिद्धोऽअक्ख्युदारोदंसीभानुनांभात्यन्तः॥ ६ ॥ अग्नेभ्यावर्तिन् । अग्नेभ्यावर्त्तिन्नुभिमानिवर्त्तस्वायुंषाव्वर्चं

इदं सर्वं विख्यापयति । अन्यच्च । आरोदसी भानुना भात्यन्तः । यथा पर्जन्य आभाति भानुना विद्यु द्रूपेण । रोदसी द्यावापृथिव्यो रन्त र्व्यवस्थितः । एव मय मग्नि राभाति भानुना दीप्त्या द्यावा पृथिव्यो रन्त र्व्यवस्थितः । एव मग्निः पर्जन्यवत् स्तूयते ऋषिणा ॥ ६ ॥

(१) अवहरति । * अग्ने अभ्यावर्तिन्निति इतः प्रभृति पञ्चाग्नेय्यः । अग्ने अभ्यावर्ति

(१) का॰ अवहरत्यग्नेऽभ्यावर्त्तिन्निति । १६ । ५ । १५ । ऋक्चतुष्टयेनचतुर्वारमुख्याग्निमासमीपमानयतीतिसूत्रार्थं ।

* अग्निदेवतोर्ध्व बृहतीद्वादशार्ण त्रिपादौ ।

उद्दहती । हे अग्ने अभ्यावर्तनशील । अभिनिवर्तस्व मां प्रति । आयुषा वर्चसा । अन्नेन । प्रजया धनेन । सन्या । लाभेन । मेधया । रय्या । सुवर्णो रूपेण । पोषेण धन पुष्ट्या ॥ ७ ॥ (१) अग्ने अङ्गिरः । महादहती । हे अग्ने अङ्गिरः । अङ्गानां रसभूत । शतं तव सन्तु आवृतः आवर्तनानि । शत शब्दोऽ संख्यान विषयः । सहस्रं

**सांप्रजयाधनेन ॥ सन्यामेधयारय्यापोषेण ॥७॥ अग्नेऽअङ्गिरः ॥ शतन्तेसन्त्वावृतःसहस्रन्तऽउपावृतः ॥ अधापोषस्यपोषेणपुनर्न्नो नष्टमाकृधिपुनर्न्नोरयिमाकृधि ॥ ८ ॥ पुनरुर्ज्जा ॥ न्निवर्त्तस्वपुनर**

बहूनि च उपावर्तनानि सन्तु । अथ अध समानार्थौ अथैवं भूयो भूयः करणे नावर्तमानः । पोषस्य पोषेण अनवच्छिन्न धनागमेन सह पुनः नो अस्माकं नष्टम् न आकृधि आगमय । रयिं धनं पुनरागमय । (२) करोति गतिकर्मा ॥ ८ ॥ पुन रूर्जा । गायत्री । पुनः पुन रभ्यासो ऽनवच्छे-

(१) का० आग्नेयीमहाबृहतीएक पादोद्वादशार्णचत्वारोष्टार्णा ।

(२) घुगृणपृजहभारुच्छन्दसीतिहेर्धिः व्यत्ययेनपोलुक् ।

दार्थः। पुन रपि ऊर्ज्जा दध्या द्युपसेचनेन निवर्त्तस्व पुनश्च हे अग्ने इषा अन्नेन सह आयुषा च सह। किञ्च पुनरेव नोस्मान् पाहि अंहसः पापा त्सकाशात् यथा पूर्वं रक्षिताः ॥ ९ ॥ सह- रय्या। सह धनेन निवर्त्तस्व। किञ्च। हे अग्ने पिन्वस्व पिन्वतिः सेचनार्थः। तां च रयिं सिञ्च। वसो धारया अनवच्छिन्न धनदानेन निवर्त्तस्व। पुनः पुनराप्यायस्वे त्यभिप्रायः।

ग्नऽइषायुषा ॥ पुनर्न्नःपाह्यꣳहसः ॥ ९ ॥ सहरय्या ॥ निवर्त्तस्वा ग्नेपिन्वस्वधारया ॥ विश्वप्स्न्याविश्वतस्परि ॥१०॥ आत्वा ॥

काय भूतया रय्या। विश्वप्स्न्या विश्वतस्परि। (१) प्सा भक्षणे सर्वजनोपभोग्यया। विश्वतस्परि। सर्वतो दिग तैः रयैः पूर्यमाणया रय्या ॥ १० ॥ (२) उपरित तना निधारय न्नभिमंत्रयते। * आत्वाहार्षम्। अलुट्, वत्राहार्षं त्वां यतः द्युलोकात्। हृञ् हरणे। † हृतवान्। त्वं

(१) विश्वं. प्सायतेपीयते भक्ष्यते इति विश्वप्सीतया।

(२) का० उपरिधारयन्नात्वाहार्षमित्यभिमन्त्रयते। १६।५।१६। नाभिरूपयुक्याग्निन्धारयन्नमभिमन्त्रयते इतिसूत्रार्थः।

* आत्वाहार्षम्, षहचा। † भाववर्गार्थमाष्पूर्वसहरवैर्लौकिकस्त्स्सैकवचनम्।

च। अन्तरभूः। अन्तः नाभ्या उपरि शरीर मध्ये अभूः। अतो ब्रवीमि। ध्रुवः स्थिरः तिष्ठ। अविचाचलिः। अविचलन शीलः। किञ्च विशः त्वां सर्वाः वाञ्छन्तु। अन्नं तवो पतिष्ठतु सर्वस् अन्नं विविडि तिष्ठुतिः। मात्वत् त्वतो राष्ट्रं जनपदसमूहः अधिभ्रशत् अधिभ्र

ह्यार्थिमुन्तरंभूर्ध्रुवस्तिष्ठाविंचाचलिः॥ विशंस्त्वासर्वांव्वाञ्छन्तुमात्व द्राष्ट्रमधिंभ्रशत्॥११॥ उदुंत्तमम्॥ उदुंत्तमं व्वंरुणपाशंमुस्मद वांधुमंव्विमंध्यमंश्रंथाय॥ अथांवुयमादित्यव्व्रुतेतवानांगसोऽअदिं तयेस्याम॥१२॥ अग्ग्रेबृहन्॥ अग्ग्रेबृहन्नुषसांमूर्द्धोऽअंस्थान्निर्ज्जं

शयतु॥११॥ (१) पाशा न्विमुञ्चति। उदुत्तमम्। वारुणी त्रिष्टुप्। उद्रित्य य सुपसर्गः श्रथाये त्यनेन संबध्यते। हे वरुण उत्तमं पाशम् उच्छ्रथय। श्रथ शैथिल्ये। श्लथौ कार्यौ इंनय अस्मत् अस्मत्तः अवाधमसम् अधमं च पाशम् अवाचीनं श्लथय। वि मध्यमम्

(१) का० पाशउन्म्, चोदुत्तममिति। १६। ५। १७। एकपाशशिक्यपाशौगलादूर्ध्वमार्गेणनिष्काशयती तिसूत्रार्थः।

स्थान स्थित सेवनिवलथय मध्यमम्। अथैवं क्षते सति वयं हे आदित्य अदितेः पुत्र व्रते त वकर्मणि वर्तमानाः अनागसः अनपराधाः अदितये आदीनताये स्याम भवेम ॥ १२ ॥ प्रदक्षिणान् गृह्णाति । *अग्रे । वृहन् । त्रिष्टुप् । आदित्यात्मनोऽग्नेः स्तुतिः । यः अग्रे उषसां वृहन् महान् प्रभावतः उर्द्ध्वं अस्थात् स्थितः । य च निर्जगन्वान् तमसः निर्गतो रात्रि

गन्वान्तमंसोज्योतिषागांत् ॥ अग्निर्भानुनारुशंतास्वङ्गऽआजा तोविश्वासद्मान्यप्राः ॥ १३ ॥ हुꣳ सꣳशुंचिषत् ॥ हुꣳ सꣳशुंचिषद्

लक्षणा त्मसः अह संलक्षणेन ज्योतिषा सह अगात् आगतः सोऽग्निः भानुना रुशता रोचिष्णुना । स्वङ्गः शोभनाङ्गः । आ जातो विश्वा सद्मा व्यप्राः । प्रापूरणे । आ अप्राः आपूरितवान् जातः संजात रश्मिः विश्वा सद्मानि । इमे वै लोका विश्वासद्मानी ति श्रु-

(१) का० पिण्डवदाग्दक्षिणा प्रगह्णात्ययमेहत्विति । १६ । ५ । १८ । पूर्वमन्त्रेणपाशादुन्मुच्योर्ध्वंवाहुरापेयोदिमं प्रत्यस्याभिन्धारयतीतिसूत्रार्थः ।

तिः सर्वाणि सद्नानी प्रत्यच्च हृत्तिता ॥ १३ ॥ अवहरति । हृ ॐ० सः शुचिप दिति । ज-
गती यजु रन्ता । हंहदिति यजुः । जगत्या गजगती हे माह्लोका निति श्रुतिः । तथा
हृइ दिति निद्धातीति राजसूये अतिच्छन्द स मित्युक्तम् । व्याख्यातो मन्त्रार्थः ॥ १४ ॥
उपतिष्ठते सोदत्त्व मिति तिसृभि राग्नेयीभिः । एका त्रिष्टुप् द्वे अनुष्टभौ । सोदत्त्वम् ।

सुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसद्ब्जागोजाऽऋतजाऽअद्रिजाऽऋतंबृहत् ॥ १४ ॥ सोदत्वम् । सोदुत्वम् । सोदत्त्वम्मातुरस्याऽउपस्थेविश्वान्यग्नेव्वयुनानिव्विद्वान् ।

अवसानं कुरु त्वम् अस्या उखाया मातुः उपस्थे उत्सङ्गे । विश्वानि सर्वाणि हे अग्ने
वयुनानि प्रज्ञानानि विद्वान् प्रजानन् पदार्थं सात त्व वेदोसन् । किञ्च । उखाया मय-
स्यानं कुर्वन् । मैनां तपसा मार्चिषा भिशोचो । मा अभिशोचोः मा अभिताप येः
एना सर्वां तपसा तापेन मार्चा त्विषा ज्वालया । किञ्च । अन्तः अस्यांमध्ये अस्यासु-

खाया मवस्थित शुक्रज्योतिः शुक्ल कर्म साधनं ज्योतिः विभाहि विविधं दीप्यस्व ॥ १५ ॥ (१) अन्तरग्ने । व्यवहित पद सम्बन्ध मायो यं मन्त्रः । हे अग्ने यस्याः उखायाः त्वमन्त मं-ध्यतः रुचा । दीप्त्या सहितः सदनेस्वे । स्वकीये स्थाने वर्तसे । तस्या एव उखायाः त्वं

मैनान्तपंसामास्विंषाभिशोंचीरुन्तरंस्याᳬंशुक्रज्ज्योंतिर्व्विभाहि ॥१५॥ अन्तरंग्गने॥ रुचा त्वमुखायाᳬंसदंनेस्वे॥तस्यास्त्वᳬहरंसातपञ्जातंवेदᳬशिवोभंव ॥१६॥ शिवोभूत्त्वा ॥ मह्यंमग्गनेऽअथोंसीदशिवस्त्वम् ॥

हरसा ज्योतिषा तपन् । तप तापे । हे अग्ने (२) जातवेदाः जातं जातं वेत्तीति जातवेदा स त्वं शोभने हे जातवेदः जातप्रज्ञान । शिवो । भव शान्तो भव ॥ १६ ॥ शिवो भूत्वा । शान्तो भूत्वा मह्यं हे अग्ने । अथो अपि च । सीद उपविश उखायाम् । शिवस्त्वम्

(१) अग्नि देवत्ये द्वे अनुष्टुभौ।

(२) जातवेदोग्रान यस्येतिवा जातविज्ञान।

शिवा: कृत्वा दिश: सर्वा स्वं योनिं स्थानम् (१) इहासद इह आसदः आसीद ॥ १७ ॥ वात्स प्रे णो पतिष्ठते ।(२) दिवस्परि ।※ द्वादशा ग्नेय्य: त्रिष्टुभः । दिव: परिदिव: सकाशात् प्रथमं यज्ञे जात: । अग्नि: । प्राणो वै दिव: प्राणा द्वा एष प्रथम मजायते ति श्रुति: । तं जात मग्नि प्राणि

शिवाऽकृत्वादिशऽसर्व्वांऽस्वंय्योनिमिहासदऽ॥१७॥[१७] दिवस्परि॥

प्रथमञ्जज्ञेऽअग्निरस्माद्द्वितीयम्परिजातवेदाऽ॥ तृतीयमप्सुनृमणा

ति प्राणो वा अग्नि जात मेवैन मेत त्सन्तं जनयतो त्येतदभि प्रायम् । अस्म द्वितीयं परिजात वेदा: । अस्मत् अस्मत्त: पुरुष विधात् द्वितीयं जातवेद: जात: यदेन मदो द्वितीयं पुरुष विधो जन यदि ति श्रुति: । मसुष्याश्च योने र्हस्ताभ्यां वाग्नि मस्कन्ते त्यर्थं । पुरुष विधि: । तृतीय

(१) आसीदयागत्यउपविशछन्दसिलुङ्लङ्लिट् इति पा० लोडर्थेलुङ् ।

(२) का० वात्सप्रेणपदिवस्परीत्येकादशभिरनुवाकेनैके । १६ । ५ । २१ । दिवस्परीत्येकादशर्चेनवात्सप्रेणैवाग्निमुपतिष्ठते । एकेआचार्याअनुवाकेनद्वादशर्चेनवदन्तीतिसूत्रार्थं ।

* का० अग्निर्देवताद्वादशत्रिष्टुभोभलन्दनपुत्रवत्सप्रीदृष्टा ।

मप्सु। तृतीनं तस् च्प्मु व्यवस्थितं जनयति। य देन: अद्स्तृतीयमप्सो थि जनय दिति श्रुतिः। च्यथ्यो गर्भो न्तरासी त्वोन्नि रस्हज्यते स्येत च्युत्वसिप्रायम्। नृमणा अजस्त्रम्। नृपु मनोयस्ये ति न स्त्वाः प्रजापतिः अजस्त्र मनुपच्चीषास्। प्रजापति वैं न्हमणा अग्नि रजस्त्र इति श्रुतिः।

# ऽअजस्त्रमिन्धानऽएनञ्जरतेस्वाधीऽ ॥१८॥ विद्मातें॥ अग्नेत्रेधात्त्र

तृतीय सागरत व्यंवस्थितं जनयति नृमणा अजस्र मग्नि मिति वाक्यार्थः। य एवं बहु जन्मा- ग्निः तम् इन्धानः आदीपयन् यजमानः एन मग्निं जरते जनयतीति धातो रर्थान्तरे वृत्तिः। स्वाधीः शोभना आहिताधी बुद्धि यंस्य स स्वाधीः (१)॥ १८॥ (२) विद्माते। विद्मः जानीमः

(१) यद्वायमर्थं अग्नि प्रथमन्दिव परि द्युलोकस्योपरिजज्ञे सूर्यरूपेणोत्पन्न अस्मत्परि अस्मदीय मनुष्य लोकोपरि जातवेद इति यज्ञ प्रसिद्धवह्नि रूपेणद्वितीयजन्मप्राप्तवान् अप्सु समुद्रे तृतीय जज्ञे वडवानल रूपेण तृतीयवारमुत्पन्न अजस्र मिप्पपिजम्भरा न्हमणा नृपुमनोयस्य यजमानेष्वनुग्रहबुद्धियुक्त एनमी दृशमग्निमिन्धान पुरोडाशादिनादीपयन् स्वाधी स्वाय त्तचित्तोयजमान जरतेजोर्यते जरापर्यन्त चरतीत्यर्थं।

(२) यानिपूर्वमित्मन्त्रेतं धामरूपाण्युक्तानिआदित्याग्निवडवानलरूपाणि तानित्रयाणित्रिसंख्याकानितेतवसम्बन्धीनिरूपाणि वयविद्मजानीम।

विद्वा यचोऽतस्तिङः इति दीर्घत्वम् । ते तव हे अग्ने । त्रेधा त्रयाणि । त्रिधा प्रविभक्तानि त्रीणि रूपाणि अग्नि वायु सूर्याख्याणि । विद्मा ते धाम । धामानि त्रयाणि भवन्ति स्थानानि नामा नि जन्मानीति च जन्मा न्यत्वा भि प्रेतानि । धामानि जन्मानि आहवनीय गार्हपत्य दक्षिणा ग्न्यति प्रणीत धिष्ण्य प्रभृतीनि । विभृता विहृता पुरुत्रा बहुरूपाणि । विजानीमस्य तव नाम परम

याणिं विद्माते धाम विभृंता पुरुत्रा ॥ विद्माते नामं परमङ्गुहायद्विद्मात मुत्संयतं आजुगन्थं ॥ १९ ॥ समुद्रे त्वा ॥ नृमणां अप्स्वन्तर्नृचक्षां ईधे दिवो अंग्नऽऊधंन् ॥ तृतीये त्वा रजंसि तस्थिवांसंमपामुप

सत्कृष्टम् गुहाया मिव य द्गतिस्थितम् । य विद्म इति वा । अस्य त न्नाम विद्मात सुत्स म् । विज नीम श्च त सुत्स न्दन समूपं प्रथम सवस्थानं य तस्त्वम् आजगन्थ आगतवा नसि हे अग्ने॥१९॥ समुद्रे त्वा । हेग्ने समुद्रे त्वा त्वां पूर्ववर्तमानं नृमणाः प्रजापतिः ईधे दीपयां चकार । सो पो ऽसृजते त्युपक्रम्य तस्मा दग्नि र्हवैत मग्नि रित्योचक्षते इत्ये तदभि प्रायम् ।

अमृतं नृचक्षा दधे। अमृतं वर्तमानं नृचक्षा प्रजापति रेव दधे आदीपितवान्। तमग्न उपो दाधृत पुष्कर मथो वि वेदे इत्यादि श्रुति रुद्घाटिता। दिवो अग्न। जघन्। द्यु लोकस्य जघसि महो दके प्रदेशे आदित्यात्मना नृचक्षा एव दधे। तृतीये त्वा रजसि च त्वां द्युलोके आदित्यात्मना स्थितवन्तम् अपाम् उपस्थे उत्संगे नाव्याना मपां मध्ये

स्त्थेमहिषाऽअंवर्द्धन् ॥ २० ॥ अक्रन्ददग्निः ॥ अक्रन्ददग्निस्तनयं न्निवद्यौःक्षामारेरिहद्वीरुधःसमञ्जन् ॥ सद्योजज्ञानोव्विहीमिद्धोऽअख्यदारोदसीभानुनाभात्यन्तः ॥ २१ ॥ श्रीणामुदारः ॥ श्रीणामुदारोधरुणोरयीणाम्मनीषाणाम्प्रार्पणःसोमगोपाः ॥ व्वसुःसूनुःसह

व्यवस्थितम् महिषाः महान्तः प्राणाः अवर्द्धन् वर्द्धयां चक्रुः। प्राणा वै महिषा इत्यादि श्रुतिः ॥ २० ॥ अक्रन्ददग्नि रिति व्याख्यातम् ॥ २१ ॥ श्रीणा मुदारः। श्रीणां लक्ष्मीणा मुदारोऽयं दाता धरुणो रयीणाम्। च धनानाम्। मनीषाणाम् प्रार्पणः कश्चिद्धनवान पि

भवति नतु दाता। अयंतु मनसा एषितानां कामानां प्रापयिता। सोम गोपा। धिष्ण्या अग्नयः सोमं गोपयन्ति तदभि प्राय मेतत्। सोमिनो वा गोपायति। वसुः वासयिता। यद्वा० वसुः धनं एवाग्निः। यथा न्यानि धना न्युपकारं कुर्वन्ति शयनासन गवादीनि एव मय मप्युपकरोति भूतानां ताप पाक मन्नाद्यैः. अतो वसुः। सूनुः सहसः। पुत्रो बलस्य। मथ्य मानो जायते तस्मा देव मुच्यते। घाप्तु राजा। अप्सु वस्थितो वरुणा त्मना राजा। तथा

गोऽअुप्सुराजाविभात्युग्रंऽउुषसामिधानः॥ २२॥ विश्वस्यकेतुः॥ विश्वस्यकेतुर्भुवनस्युगर्भऽआरोदंसीऽअपृणाज्जायंमानः।

चोक्तम्। त्व मग्ने वरुणो जायते यतिदि विभात्यग्र उषसाम्। आदित्या त्मना। इन्धानः इन्धौ दीप्तौ। दीप्यमानः। यद्वा। उषः कालेग्नीनां प्रादुः करणं क्रियते तदभिप्राय मेतत्॥ २२॥ विश्वस्य केतुः। चतुर्थः पादोत्र प्रथमं व्याख्याते यच्छब्द योगात्। जनाय-दग्निमयजन्त पञ्च। यदि त्वविभक्तिकोनि र्देशः। य मग्निं पञ्चजनाः। चत्वारो वर्णा निषाद पञ्चमाः पञ्चजना उच्यते। अयजन्त इष्टवन्तः सविश्वस्य केतुः सर्वस्य प्राणिजातस्य

कोतुः प्रज्ञानम् अग्न्यात्मना। भुवनस्य गर्भः। भूत जातस्य वाय्वात्मना गर्भः सहि प्राणभा-
वेन भूताना मन्तःसञ्चरति। आरोदसी अपृणात् जायमानः। स एव आपूरयति द्यावापृ-
थिव्यौ जायमान आदित्यात्मना। स एव मध्यस्थान मारुह्य इन्द्रात्मना वीडुञ्चित्। दृढम
प्यद्रि मादारयितव्यं मेघं वा अभिनत् विदारयति। परायन् परामपरतो गच्छन्॥२३॥

वीडुचिदद्रिमभिनत्परायञ्जनायदग्निमयजन्तपञ्च ॥ २३ ॥ उशि
क्पावकः ॥ उशिक्पावकोऽअरतिःसुमेधामर्तेष्वग्निरमृतोनिधा
यि ॥ इयर्त्तिधूममरुषम्भरिभ्रदुच्छुक्रेणशोचिषाद्यामिनक्षन् ॥ २४ ॥

उशिक्पावकः। वश कान्तौ। अस्य हत सम्प्रसारणे तद्रूपम् उशिक्। कान्तः मेधावी वा।
पावकः पावयिता। अरतिः। अलं मतिः। पर्याप्त मतिः। सुमेधाः कल्याण प्रज्ञः साधु
यज्ञो वा। मर्तेषु मरणधर्मेषु मनुष्येषु। अग्निः। कथं भूतः। अमृतः अमरण ध-
र्मा। निधायि निहितः देवैः त्वं नो अस्य लोकस्य ध्यत्त एघीति। स इयर्ति उदियर्ति उद्ग-

मयति धूमम् अरुपम् अरोचनम् भरिभ्रत् धारय न्निदं जगत्। इतो वा अय मूर्द्ध रेतः सिञ्चति सासुव दृष्टि र्भवती त्येत च्छ्रुत्यभि प्रायो यं मन्त्रः। शुक्रेण शोचिषा। शुक्रेन शोचिषा। द्यां द्युलोकम् इन चन् व्याप्नुवन्। नक्षत्र ग्रह चन्द्र तारक संबन्धिना धूम मियर्तीति संबध्यते। इतः प्रदानाद्धि देवा उपजीवन्ती त्येत च्छ्रुत्यभि प्रायो यं मन्त्रः।॥ २४ ॥

दृशानोरुक्म॰ ॥ दृशानोरुक्मऽउर्व्याव्व्यद्यौद्दुर्म्मर्षमायुः श्रियेरुचानः॥ अग्निरमृतोऽअभवद्वयोभिर्यदेनन्द्यौरजनयत्सुरेताः ॥ २५ ॥ यस्ते॰ ॥ अद्यकृणवद्भद्रशोचेपूपन्देवघृतवन्तमग्ने ॥ प्रतन्नयप्रतरंव्व

दृशानो रुक्म इति व्याख्यातम् ॥ २५ ॥ यस्ते अद्य। य स्तव अद्य प्रति पदि। कृणवत् करोति हे भद्र शोचे। भन्दनीय दीप्ते। अपूपम् पुरोडाशम्। हे देव। घृतवन्तम्। हे अग्ने। स आज्य स्योपस्तीर्ये हि हविषो वदायाथो परिष्टादा ज्याभ्या वधारयती त्येत च्छ्रुत्यभि प्रायम्। प्रतन्नय। नयसीति प्राप्ते च्छान्दसो लोट्। प्रणयसि तं यजमानम्। प्रतरम्

अतितराम् वसो अच्छ। अच्छाभे राप्तु मिति शाकपूणिः। वसीयं स्थान मभि। वस्तुतर स्थानमभि। वस निवासे। तन् तुय छन्दसीति इयसुन् तुरिष्टेमेयस्विति तचोलोपः वसीय इति सिध्यति। स लोक मागच्छत्य शोकं। अहिमं तस्मि न्वसति शाश्वतीः समाः इति न्तुत्य तां तं माप्नुयात् अयं वसीयान् लोकः। अभिनयसि च सुम्नन् देव भक्ता देवा सेवितम् हे यविष्ठ।

## स्योऽअच्छाभिसुम्नन्देवभंक्तांय्यविष्ठ ॥ २६ ॥ आतम् ॥ आतम्भंज सौश्रवसेष्वंग्गनऽउक्थऽउंक्थऽआभंजशस्यमाने ॥ प्प्रियःसूर्य्यें प्प्रियोऽअग्नाभंवात्युज्जातेनंभिनदद्ज्जनिंत्त्वैः ॥२७॥ त्वामंग्गने ॥ त्वा

युवतम। अथवा मिश्रयितृतम ॥ २६ ॥ आतंभज। यदः स्थाने तदो वृत्तिः लटः स्थाने लोटः अयं संबन्धात्। हे अग्ने आभजसि यं यजमानम् * सौश्रवसेषु साधु श्रवणीयेषु यज्ञक्रतुषु। उक्थ उक्थ आभज। तत स्तोत्रे व यज्ञ क्रतुषु। उक्थे उक्थे शस्यमाने आभजसि

* शोभन श्रव कीर्ति सुश्रव सुश्रवस सम्बन्धीनि कीर्ति हेतुभूतानि कर्माणि सौश्रव सानितेषु यज्ञकर्मसु।

आसेवसे। यजमानः प्रियः सूर्यस्य * भवति प्रियश्चाग्ने र्भवति। किञ्च। उज्जाते न भिनदत्। उद्भिनति धर्मार्थ कामान् जातेनौरस पुत्र संघातेन। उद्भिनत्ति च। जनित्वैः जनिष्यमाणैः पौत्र प्रपौत्र सर्वैः वेदार्थान्। प्रजाप्यस्य स्वगयायिनी भवती त्यभिप्रायः॥ २७॥ त्वामग्ने। हे अग्ने त्वां यजमानाः। अनुद्यून् अन्वहम् अह न्यहनि। विश्वानि वसूनि

त्वाम॑ग्ने॒ यज॑मानाऽअनु॒द्यून्विश्वा॒ वसु॑ दधिरे॒ वार्य्या॑णि ॥ त्वया॑ स॒ह द्रवि॑णमि॒च्छमा॑ना व्र॒जं गोम॑न्तमु॒शिजो॒ विव॑व्रुः ॥ २८ ॥ अस्ता॑व्यु

धनानि। दधिरे धारयन्ति भूमि गो हिरण्यादीनि। वार्याणि वरणीयानि। किञ्च। त्वया च सह द्रविणं यज्ञ फल मिच्छमानाः कामयमानाः। व्रजम्। व्रज त्यनेन सुकृतिन इति व्रजो देवयान मार्गः गो मन्तम्। गावो रश्मय आदित्य सम्बन्धिनः तैः संयुक्तम्। उशिजो मेधाविनः ज्ञानकर्म समुच्चय कारिणः। विवव्रुः विसिद्रुः। आदित्य मण्डलस्य मध्येन मार्गं

* यथास्मै [redacted] पं शिरष्टिगोचरो भाषाभ यथियोगुरूणोऽशदिष्ट

क्षतवन्त इत्यर्थः। तदुक्तम्। ते य एवं विदु रित्युपक्रम्य देवलोका दादित्य मण्डलमिति ॥ २८ ॥

अस्ताव्यग्निः। स्तुतो ग्नि र्वैश्वानरः नरां सुशेवः मनुष्याणां शोभनं सुखयिता। ऋषिभिः। ऋत्विग् यजमानैः। सोमस्य गोपायिता। अद्वेषे। पादौ लिङ्गोक्ता देवताकौ। यतो ग्निः।

अस्ताव्यग्निर्नराᳬसुशेवो वैश्वानरऽऋषिभिः सोमगोपाः॥ अद्वेषे द्यावापृथिवी हुवेम देवा धत्त रयिमस्मे सुवीरम् ॥ २९ ॥

[ १२ ] समिधाग्निम्॥ समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम्

ग्निः स्तुतः अतः अद्वेषे द्वेष रहिते द्यावा पृथिव्यौ हुवेम आह्वयामः त दाग्नेय कर्म प्रार्थयेम्। हे देवा यूय मपि धत्त। दत्त। रयिं धनम् अस्मे अस्मभ्यम्। सुवीरं शोभनपुत्रम् ॥ २९ ॥ (१) वनीवाहनम्। आग्नेय्यः पञ्चकण्डिकाः। समिधाग्निम् व्याख्यातम् ॥ ३० ॥

अथवनीवाहनम्।

(१) का० प्रागनः शलोऽस्योत्तरतः समिदा धानर्ठं० समिधाग्निम्। १६। ६। १५। उख्याग्नेरुत्तरदिग्विभागे पंचकटं संस्थाप्य यजमान उख्ये ग्नौवनीवाहनेसमिधमाधत्त इति सूत्रार्थः।

उद्यच्छति । (१) उदृत्वा अनुष्टुप् हे अग्ने उद्धरन्तु त्वांविश्वे देवा: । चितिभि: यै रग्नि रुह्नियते । स त्वं विश्वै र्देवै रुह्नियमाण: न: अस्माकंशिवे भव । शिव: शान्त: । सुप्रतीक:

म् ॥ आस्मिन्न्हव्व्याजुंहोतन ॥२०॥ उदुंत्त्वा ॥ उदुंत्त्वाव्विश्श्वेंदेवा

ऽअग्ग्नेभरंन्तुचित्तिंभिः ॥ सनोंभवश्शिवस्त्त्वᳪसुप्प्रतींकोव्विभावंसुः ॥

२१॥ प्रेत् ॥ प्रेदंग्ग्नेज्ज्योतिंष्म्मान्न्याहिशिवेभिंरुर्च्चिंभिष्ट्वम् ॥ बृहद्

भिंर्भानुभिर्ब्भासुन्माहिंᳪसीस्तन्न्वाप्प्रजाः ॥२२॥ अक्रन्दुदग्ग्निः ॥

शोभन मुख: विभावसु: विभूत धनश्च ॥ २१ ॥ (२) प्र याति । प्रेदग्ने अनुष्टुप् । प्रयाहि हे अग्ने त्वं ज्योतिष्मान् भूत्वा । शिवेभि रर्चिभि: । शिवै: शान्तै: सुखकरै: अर्चिभि: गच्छ-

(१) का० मासन्दीकसुयस्योदुत्वे तिदक्षिणतोऽनसिकरोति । १७ । २६ १६ । समिदाधानान्तरमुदुत्वेतिमन्त्रे णासन्दीसहित मुख्याग्निमूर्द्ध कृत्वादक्षिणस्थितोयजमान शकटे तस्थापयतीतिसूत्रार्थं ।

(२) का० अनडुाहौ युक्ताप्रेदग्न इति प्राङ्यात्वायथार्थम् । १६ । ६ । १८ । शकटे तुयुक्तौ उभयोरुपरि दितिमन्त्रे ण प्राचींगत्वा यथार्थं प्रयोजनवस्तु देशगच्छे दितिसूत्रार्थं ।

स्व। त्वम् बृहद्भिः भानुभिः रश्मिभिः भासन् दीप्यमानः। माहिंसीः तन्वा शरीरेण प्रजाः॥ ३२॥ अक्रन्ददग्नि रिति व्याख्यातम्॥ ३३॥ (१) समिध मादधाति। प्र प्रा-यम्। त्रिष्टुप् प्र प्रायम्। प्रकर्षेण महता अय मग्निः। भरतस्य प्रजापतेः। शृणुवे।

अक्रन्ददग्निस्तनयन्निव द्यौःक्षामारेरिहद्वीरुधः समञ्जन्। सद्यो जज्ञानो विहीमिद्धो अख्यदारोदसी भानुना भात्यन्तः॥ ३३॥ प्र प्रा यम्॥ प्र प्रायमग्निर्भरतस्य शृण्वे वि यत्सूर्यो न रोचते बृहद्भाः॥

शृणोति वचनम्। कथ मेत दध्यवसीयते यथा प्रजापतेः शृणोति वचन मिति। वियत्सूर्यो नरोचते बृहद्भाः। य त्समिधा दान समनन्तर मेव विरोचते। सूर्यो न सूर्य इव बृहद्भाः महादीप्तिः। य श्च अभितस्थौ पूरुम् असुर राक्षसम् पृतनासु संग्रामेषु एतया

(१) का० यामेऽवहरन्त्युद्धतायोश्चितउत्तरत समिधान मप्रं ति। १६। २। २१। वामेस्थितौक्रियमाणे उत्तरदिशि उद्धतावो चितिप्रदेशेऽग्निमवहरन्त्युत्तारयन्ति ततोऽग्नौसमिदाधानम्।

समिधा आप्यायितः। यह्वा च। दीदाय दीप्यते। दैव्यः देवसम्बन्धी अतिथिः। अतिथि धर्मा जनानाम्। शिवः शान्तः नः अस्माकं भवति। तस्मा त्वजायते वंचनं शृणोति ॥ ३४ ॥ (१)आपो देवीः। दश कण्डिका भस्मा व्यवहरणम्। आपो देवी। अब्देवत्या त्रिष्टुप्। हे आपः देव्यः प्रतिगृभ्णीत प्रतिगृह्णीत। भस्मैतत् स्वागतादिभिः। तत्र अथ शिष्ट व्यवहारः। ततः स्वागतादिभिः परिगृह्य। स्योने कृणुध्वं सुरभा उ लोके स्योने सुखावहे कृणुध्वं स्थापयत। उकारः समुच्चयार्थः। सुरभौ शोभन गन्धे धूप पुष्पोपकारैः। लोके स्थाने शय्यायाम् तस्मै नमन्ताम्। तदः स्थाने एतदः प्रयोगः प्रकृतत्वात्। अस्मै भस्म

अभियऽपूरुस्पृतनासुतस्थौदीदायदैव्योऽअतिथिःशिवोनः ॥ ३४ ॥

आपोदेवीः ॥ आपोदेवीःप्रतिगृभ्णीतभस्मैतत्स्योनेकृणुद्ध्वꣳसुरभाऽउलोके ॥ तस्मैनमन्ताञ्जनयःसुपत्नीर्मातेवपुत्रम्बिभृता

(१) का० पलाशपुटेनापोदेवीरित्येकया। १६। ६। २६। वनीवाहना नन्तरं तडागादिजलस्थानं गत्वाघटादिपत्रपुटेनसाय-मातरुखाया सकाशादुद्धृत यद्भस्मितदेकया ऋचाजले क्षिपेदितिसूत्रार्थः।

रूपाया गनये नमन्तां जनयः उपतिष्ठन्तु जायाः। सुपत्नीः शोभनपत्न्यः। रूप लावण्य यौवनालाङ्कार वैदग्ध्य सपन्नाः। यूयं च। मातेव पुत्रं बिभृत। धारयत। पानं भोजन वासोभिः गोपयत। किञ्च। अप्सु स्वात्मनि एनत् भस्म॥३५॥ (१) अप्स्वग्ने। अधस्तनेन मन्त्रेण भस्मा तिथित्वेना प्स्व वस्थाप्य अथे दानीं गायत्र्या नुष्टुभ्या मग्नः सर्वगतत्त्वं प्रका-

प्स्वेनत्॥ ३५॥ अप्स्वग्ने॥ अप्स्वग्नेसधिष्टवसौषधीरनुरु ध्यसे॥ गर्भेसञ्जायसेपुनः॥ ३६॥ गर्भोऽअसि॥ गर्भोअस्योष

धयन् भस्माप्स्वग्नेहरण मेवा पन्हुते। अप्सु हे अग्ने सधिः समानस्थानम्। सधि स्तवा सौषधी रनु रुध्यसे सत्त्वं बीज मवस्थाय ओषधीः अनुरुध्यसे। ओषधि परिणाम मनु विपरिण-मसे। ततो गर्भं सन् विद्यमानः जायसे पुनरपि॥३६॥ (१) किञ्च। गर्भः असि भवसि ओषधीनां

(१) का० ततोद्वाभ्याम्। १६। ६। २७। ततोऽनन्तर पठिताभ्या द्वाभ्यामप्स्वग्नेगर्भोऽअसीत्ये ताभ्यामृग्भ्याम्पत्रपुटेन द्वितीय वारमुख्याग्निभस्माप्सु प्रास्यति।

(१) का० अनामिकयाप्रास्तादादतेप्रसद्येति। १६। ६। २८। अप्सु चिप्ताद्भस्मन सकाशादनामिकयाभस्मग्टह्णातिप्रास-द्येतिचतुर्ऋग्भि।

गर्भश्च वनस्पतीनाम् गर्भश्च विश्वस्य भूतस्य भूतग्रामस्य। हे अग्ने गर्भः अपाम् असि ॥ ३७ ॥
अप आदते प्रसद्य चतसृभि राग्नेयीभिः। द्वे अनुष्टुभौ द्वे गायत्र्यौ। प्रसद्य अवस्थाप्य भस्मना
भस्म रूपेण योनिं स्थानम् अप अ पृथिवीं च हे अग्ने संसृज्य संगत्य च मातृभिः अद्भिः

धीनाङ्गर्भोव्वनस्पतीनाम् ॥ गर्भोव्विश्वस्यभूतस्याग्नेगर्भोऽअ
पामसि ॥ ३७ ॥ प्रसद्यभस्मनायोनिमपश्चपृथिवीमग्ने ॥ सᳬ
सृज्ज्यमातृभिष्ट्वञ्ज्योतिष्म्मान्पुनरासदः ॥ ३८ ॥ पुनरासद्य । पु
नरासद्य सदनमपश्चपृथिवीमग्ने ॥ शेषेमातुर्य्यथोपस्थेन्तरस्याᳬ
शिवतमः ॥ ३९ ॥ पुनरूर्ज्जा ॥ निवर्त्तस्वपुनरग्नऽइषायुषा ॥ पुन

त्वम् ज्योतिष्मान् भूत्वा पुन रस्या मुखाया मासदः आसीद ॥ ३८ ॥ पुन रासद्य। पुनरप्या-
स्थाय सदनं स्थानम् अप अ पृथिवीं च हे अग्ने। ततो नन्तरं शेषे। शीङ् स्वप्ने इत्यस्य
तद्रूपम् स्वपिषि। मातुः यथा उपस्थे उत्सङ्गे। अन्त मध्ये अस्या मुखायाम् शिवतमः शान्त-

तमः ॥ ३८ ॥ पुन रूर्जा । द्वे व्याख्याते ॥ ४० ॥ (१) प्रास्थो पाया सुपतिष्ठते बोधाम इति द्वाभ्यां त्रिष्टुप् गायत्रीभ्याम् । गायत्री यजु रन्ता । विश्व कर्मणे स्वाहेति यजुः । बोधाम बुध्यस्व मम । अस्य वचसः । कि मभि मायो हम् ब्रवीमि । हे यविष्ठ मिश्रयिष्ट तम अथवा युव-

न्नंऽपाहत्य॑ऽहंसः ॥ ४० ॥ सुहस्थ्या ॥ निवंर्त्तुस्वाग्गनेपिन्न्वंस्वधारं या ॥ व्विश्वप्न्स्न्यांव्विश्वतुस्पारिं ॥ ४१ ॥ बोधामे ॥ ऽअस्यव्व चंसोयविष्ठमंऽहिंष्ठस्यप्रभृतस्यस्वधावः ॥ पीयंतिन्त्वोऽअनुंत्त्वो गृणातिव्वन्दारुंष्टेतुन्न्वं वन्देऽअग्गने ॥ ४२ ॥ सबोधि ॥ सूरिम्मघ

तम । मंहिष्ठस्य भूयिष्ठस्य प्रभृतस्य प्रोत्तयं मापितस्य । हे स्वधावः अन्नवन् । किञ्च पीयतित्वः । पीयति राक्रोश कर्मा । आक्रोशति त्वः । एकः पुरुषः त्वां हे अग्ने अनुत्वो

(१) का० प्रास्योपायामुपत्तिष्टते बोधामहति । १६ । ६ । ३० । तडागादागतयानामिकया गृहीत भस्मतूष्णीमुखाया म्याम्यबोधामहति त्रृचेनोख्याग्निमुपत्तिष्ठते ।

गृणाति। अनुगृणाति। स्तौति त्वः एकः पुरुषः। एष लोकस्य स्वभावः कश्चि दाक्रोशति कश्चित् स्तौतीति। एवं च सति वन्दारुः वन्दनशीलः सन् ते तव तन्वं शरीरं वन्दे ॥ ४२ ॥ सबोधि। य एव सूरिः पण्डितः मघवा धनमांश्च सः बोधि बुध्यस्व। हे वसुपते धन-स्यदातः। बुध्यस्व। युयोधि पृथक् कुरु अस्मत्तः द्वेषांसि दौर्भाग्यानि सुप्रीतः सन्। स-

व्वाव्वसुपतेव्वसुदावन् ॥ युयोद्ध्यस्मद्द्वेषाᳬसि विश्वकर्मणे स्वा हा ॥ ४३ ॥ पुनस्त्वा ॥ दित्त्या रुद्द्रा व्वसवः समिन्धताम्पुनर्ब्ब्रह्माणो व्वसुनीथयज्ञैः ॥ घृतेनत्वन्तन्वं व्वर्द्धयस्व सत्याः सन्तु यजमानस्य

मिधा उपहृत्या ज्यं जुहोति। विश्वकर्मणे स्वाहा ॥ ४३ ॥ (१) आदधाति समिधम्। पुनस्त्वा। आग्नेयी त्रिष्टुप्। निर्वाणं त्वां पुनः समिन्धतां सन्दीपयन्तु। आदित्याः रुद्राः वसवः पुनश्च ब्रह्माणः ब्राह्मणाः ऋत्विजः। यजमानाः। वसुनीथ। नीयास्तुति रुच्यते।

(१) का० उत्थायादधातिसमिधंपुनस्त्वेति। १६।७।२। घृतहोमानन्तरमुत्थायतामेवसमिधमुख्ये ऽग्नावादधाति।

वसु लाभ निमित्ता यस्य स्तुतिः स वसुनीथः। यज्ञैः यागैः घृतेन च त्वं तन्वं शरीरं वर्द्ध-
यस्व। सत्या श्च सन्तु यजमानस्य कामाः। ये भद्रा अवहरण व्यवच्छिन्नाः॥ ४४॥
(१) पलाश शाखया गार्हपत्यं व्यूहति। अपेत। त्रिष्टुप्। अर्द्धचैंनोदर सर्प्पिण उच्यन्ते।

कामाँ२॥ ४४॥ [ १५ ] अपेत॥ अपेतवीतविचसर्प्पतातोयेत्र स्थपुराणायेचनूतनाः॥ अदाद्यमोवसानम्पृथिव्याऽअक्रन्निमम्पि

पादेनयमः पादेनपितरः। अप इत अपगच्छत। वि इत विगच्छत। विच सर्प्पतातः। वि सर्पत च अतः स्थानात्। येत्रस्थ ये यूय मत्रस्थ भवथ। पुराणा श्चिरन्तनाः। ये च नूतनाः। इदानीन्तनाः कस्मा इय मप सर्प्पाम इति चेन्मतिः। अदात् अदत्तवान् यमः अव-

(१) का० प्रथगार्हपत्यचयनमृच्यते का० पलाशशाखयागार्हपत्यं व्युदूहतापेतवीतेतिपुच्छः प्रतिदिशम्पुरस्तात्प्रथमम्। १७। १।२। अथभाविन्याहृतशगलादार्योगार्हपतशब्देनोच्यते तदर्थाचितिचितयितेः स्थानमपिगार्हपतएवपलाश शाखया गार्हपत्यचितेः स्थानं व्युदूहति ऊर्द्धिरवप्रेरणं तत्रपतित तृणादिकं स्थानाद्दहि चिपती त्यर्थः अपेतवीति ऋचः पुच्छः पादे प्रतिदिशमादौप्राच्यामपेतवीतियेऽत्रस्थेतिदक्षिणो अदादिति पश्चादक्रन्नितुत्तरे इति सूत्रार्थः।

सानं स्थानम् । अवस्य न्तरिक्ष न्निति अवसानम् । पृथिव्याः अस्मै यजमानाय । अक्रा-
न्दन् अकृतवन्त श्च पितरः इमं लोकं स्थानम् अस्मै यजमानाय । अतो गच्छतेति ॥ ४५ ॥
(१) उखां निव पति उख संस्तव पशु संस्तव श्च तेषां मत स्तथैव व्याख्यायते । संज्ञान मसि ।

तरोलोकमस्मै ॥ ४५ ॥ सँज्ञानमसि ॥ कामधरणम्मयितेकाम
धरणम्भूयात् ॥ अग्नेर्भस्मास्यग्नेःपुरीषमसिचितस्थपरिचित

त्रीणि यजूंषि । समिति एकीभाव माचष्टे । यत एकं ज्ञान मसि उख संस्तवात् । तस्मा
दुसमानोख्याः समेव जानीते इति श्रुतिः । काम धरणं च कामा न्धारयति संपादयति
कामधरणम् पशवो वा उखाः पशवः कामधरण मिति श्रुतिः । अतो मयि ते तव कामध-
रणं भूयात् । मयि ते पशवो भूयास्त्विति श्रुतिः । उख्या भि प्राय मेक वचनम् (२) सिकता

(१) का० उदीचीरुमखामुदस्योपाभिवपतिसंज्ञानमिति । १७ । १ । ४ । अ याव्यदूहर्म सत्त तामाखामुदक्चिवामाहर्पत्य-
चिति स्थानि चास्मदोनिदधाति ।
(२) का० सिकताश्चाग्नेर्भस्मेत्य वपत । १७ । १ । ६ । ऊपत्रसिकतानिवपति ।

निवपति। अग्ने भंसासि। भम भसंन दीप्तेः। भसितं भस्म भसा साहश्यात् सिकता भस्मे त्युक्ताः। न वा अग्निः स्वं भस्माति दहतीति श्रुतिः। अग्ने इव पुरीषं पूरणम् असि भस्माभि प्राय मेक वचनम्। अग्ने रेत विश्वानरस्य रेतो यत्सिकता इति श्रुतिः। (१) परिस्वत उपद-

ऽऊर्द्ध्वचितःश्रयद्ध्वम् ॥ ४६ ॥ अयꣳसः ॥ अयꣳसोऽअग्निर्यस्मिन्त्सोममिन्द्रःसुतन्दधेजठरेवावशानः ॥ सहस्रियंवाजमत्यन्नस

धाति चितस्थ। विजयने अस्य क्वापि बहुवचनम्। या यूयं चिता भवथ। परि सर्वत इव चितस्य। ता उच्यन्ते। ऊर्द्ध्वचिता भूत्वा एन मग्नि माश्रयध्वम् ॥ ४६ ॥ (२) गार्हपत्य इष्टिकाभि

(१) का० परिश्रिद्भि परि श्रयति पूर्ववदेकविंश० मात्रा चित स्थेति। १७। १। ७।

(२) का० एकविंशतिपरिश्रिद्भिर्गार्हपत्यस्थानं वेष्टयति पूर्ववदित्ति प्रदक्षिणमुत्थास्ता खननीय इति मध्येऽर्द्ध हस्तीय-तस्मोदक्षिणोतर प्राचीरुपदधाति दक्षिणतऽउदड्डयठ० सोऽग्निरितिप्रताचम्। १७। १। ८। ततोध्वर्युर्मण्डलाद्दक्षिणेउदङ्मुखउपविश्य मध्येचतस्रोर्धं हस्तो सत्रा इष्टका शाची प्रागुक्तादक्षिणोत्तरपङ्क्त्योत्तरमारभ्योपदधाति अध्यात्मं चयनमित्युक्तं। अष्टकचतुष्कोणैकैकाम्। हस्तदीर्घास्तदर्धायामाः पद्मालोकद्वयव्यापिन्य इष्टका अर्धहस्त्यउच्यन्ते इतिसूत्रार्थः।

श्चीयते। अयं सो अग्निः षडर्च्चं माग्नेय त्रैष्टुभम्। चतुर्थी पञ्चमौत्तु अनुष्टुभौ। इष्टको पधानं कुर्वन्नभिनये न दर्शयति। अयंसः गार्हपत्यो ग्निश्चीयते यस्मिं श्चिते सति अभिषुतं सोमम् इन्द्रः दधे धारयति। जठरे उदरे वावशानः कामयमानः। कथं भूतं सोमं दधे। सहस्रियम् सहस्रार्हम्। वाजम् अन्नभूतं सर्वस्य जगतः। अत्यं न सप्तिम्। नकारः संप्रत्यर्थे। अनन्तरं भक्षणा देव सुष्करम्। सप्तिं शरणं तृप्तिकरम्। न केवलं यस्मिं श्चिते इन्द्रः

## सिꣳससुवान्त्स स्तूयसेजातवेदः ॥ ४७ ॥ अग्नेयत् ॥ अग्नेवर्त्तिं

सोमं जठरे धारयति। किन्तर्हि। त्व मपि स सवा न्म स्तूयसे जातवेदः। ससवान्सन् भविं पि संभजमानः सन् स्तूयसे ऋत्विग्भ्यजमानैः हे जातवेदः। अयं ताव दस्य मन्त्रस्य प्रगुणोऽर्थः श्रुति स्तु आहुति परिणामाभि प्रायेण व्याचष्टे। अय वै लोको गार्हपत्य आपः सोमः सुतो स्मिं ल्लोके य इन्द्रो धत्ते। जठरे वावशान इति। मध्यं वै जठर मित्यादि अयं सल्लोको गार्हप त्याग्नि र्यस्मि ल्लोके अभिषुतः सोम परिणामभूता अपः इन्द्रस्य जठरे मध्ये दधे स्थापयति। सहस्रियं वाजमत्यन्नसप्ति मिति। आपो वै सहस्रियो वाजः

अपां विशेषणानि। ससवा न्स न्स्तूयसे जातवेदः। इति व्याचष्टे। चितः संचीयसे जातवेद इति गार्हपत्य रूपेण चितः सन् चीयसे। आहवनीय रूपेणोतिवा अर्थान्तर निवृति त्वम् ॥ ४७ ॥ अग्ने यते। हे अग्ने यत्ते तव दिवि द्युलोके आदि त्यरूपं वर्चः। यच्च पृथिव्या मग्नि लक्षणं वर्चः यच्च ओषधीषु अन्त र्व्यवस्थितम् यच्च अ-प्स्व न्तर्व्यवस्थितम् आयजत्र। आयष्टव्यं मर्यादया यष्टव्यम् एता न्यधस्तादुक्तानि वर्चांसि

विश्वर्चैःपृथिव्यांयदोषधीष्वप्स्वायजत्र ॥ येनान्तरिक्षमुर्व्वाततन्थत्वेषःसभानुरर्णवोनृचक्षाः ॥ ४८ ॥ अग्नेदिवः ॥ अग्नेदिवो

तव लघीयांसि। ये नतु वर्चसा अन्तरिक्षम् उरु विस्तीर्णम् आतत्नथ आतनोषि। त्वेषः सभानुः। सह तद्वर्चः। अर्णवः। अर्णस्वान् उदकवान् अथवा अरणवान् गमनवान् वायुः स इति श्रुतिः। नृचक्षाः नृणां शुभाशुभ कर्म द्रष्टा। त्रिस्थानो वाग्निः स्तुतः ॥ ४८ ॥ अग्ने दिवः। हे अग्ने दिवः द्युलोकस्य संबन्धि अर्णं सुदकम् अच्छाजिगासि। अ-

च्छाभे राम्रु मिति शाकपूणिः अभि जिगासि। आपो वा अस्य दिवोऽर्व स्ता एष वृमे- नाह्नेतीति श्रुतिः। अच्छा देवान् अभि जिगासि च देवान्। कतमा न्देवा नित्यत आह। ऊ चिषे धिष्ण्या ये। प्राणावै देवा धिष्ण्या स्ते हि सर्वाधिप दृष्णान्ति उच्यन्त इति लिङ्गवचनयो र्व्यत्ययः। उच्यन्ते ये धिष्ण्या अग्नयः। विञ्च। रोचने लोके स्थित-

ऽअर्ण मच्छा जिगास्यच्छा देवाँ २॥ ऽऊचिषे धिष्ण्याये॥ यारोचने पुरस्तात्सूर्यस्य याश्चावस्तादुपतिष्ठन्तऽआपः॥ ४९॥ पुरीष्यासो ऽअग्नयः॥ प्रावणेभिः सजोषसः॥ जुषन्तांयज्ञमद्रुहोनमीवा

स्य सूर्यस्य। परस्ता दाप उपतिष्ठन्ते या श्च अध स्ता दुप तिष्ठन्ते आपः ता श्च त्व मभि जिगासि। त्व मेवैतैः रूपैः परिणमसी त्यभिप्रायः॥ ४९॥ पुरीष्यासः। बहुवचन मिष्ट कापेचन्। ये पुरीष्याः पशव्याः पशुभ्यो हिताः अग्नय इष्टकाः। प्राव- णेभिः। प्रुङ गतौ। प्रावणैः गमनैः। लोक व्याप्तिभिः। स जोषसः समानप्री

तयःसमान सेविमो वा। समानं हि ते लोकं सेवन्ते। अहं इहत्यो हिता अतस्तः। ते ज्जुपन्तां सेवन्तां यज्ञम् अद्रुहः अहिंसितारः। अनमीवा अ अनशना या बुभुक्षा निष्टत्ति करा इत्यर्थः। इषः अन्नभक्तीः महीः महतीः प्रभूताः ॥५०॥ (१) पश्चिमे उपदधाति। इडामग्ने। इडा मन्नं हे अग्ने पुरुदंसं बहुकर्म साधनभूतम्। यत्तु युत्या उत्राम् पशवो वा इडेति तदन्नो वदे

ऽइषोमहीः ॥ ५० ॥ इडामग्ने ॥ पुरुदꣳसꣳसनिङ्गोःशश्वत्तमꣳहवं मानायसाध ॥ स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्त्व

दयाद्यात इत्यनेनहे तुना। सनिं गोः गोः सम्बधिनीं चर्मनिं दानं पयोदधिष्टतादिकन्। शश्वत्तमं शा- श्वतिकतमम् शाश्वतिककर्म। अनपायिनीम् हवमानाय। यजमानाय। सहि देवानाह्वयति। साध प्रसाधय। एतदुक्तं भवति। अन्नं सोपसेचनं शाश्वति कतमं यजमानाय देहि।

(१) का० इडामग्नइति पश्चिमे प्रतिमन्त्रमुत्तरत्त इडामग्नइति ऋग्द्वयेन प्रतिमन्त्रं पश्चिमेद्वे पादमात्र्यौ पद्यौ तिरश्ची- उदग्लक्षणेउपदध्यात्। उत्तरतोऽवस्थितो दक्षिणामुख इडामिति दक्षिण अयन्तदत्तुत्तरामि। तिष्ठत्वार्थं।

किञ्च। सान्नः सूनु स्तनयः भवे चा स्माकं पुत्र औरसः। विजावा। प्रज्ञातिमान् वद्वा विनयशीलः। पितरं वा योजयति वीर्येण। य या सुमत्या त्वमे त्करोषिसा तेभूत् अस्मे अस्मासु ॥ ५१ ॥ द्वितीय सुपदधाति। अयन्ते। व्याख्यातम् ॥ ५२ ॥ (१) पुरस्ता

स्मे ॥ ५१ ॥ अयन्ते ॥ अयन्तेयोनिंर्ऋत्वियोयतोंजातोऽअरोचथाः ॥ तञ्जानन्नंग्गनऽआरोहाथानोव्वर्द्धयारयिम् ॥ ५२ ॥ चिदंसि ॥ चिदं सितयांदेवतंयाङ्गिरस्वद्ध्रुवासींदपरिचिदंसितयाङ्गिरस्वद्ध्रुवासीं

दुपदधाति। चिदसि। चिञ् चयने। चितासि। सादयति। तया देवत या सादिता मती अङ्गिरस्वत् प्राणवत्। यथा हि प्राणः सर्व मङ्गम् व्याप्यस्थितः एवं त्व मपि। ध्रुवा-सीद निविशस्व। तया देवतयेति वाग्ने तेवता ङ्गिरस्व दिति प्राणो वा अङ्गिरा

(१) का० चिदसीत्तिपूर्वं दक्षिणत प्रतिमन्त्रम्। १७। १। १२। तदुत्तरतोगरसार्गं णदक्षिणागत्वाचिदसीतिप्रतिमन्त्रं पूर्वं-तिरश्चो उदग्लक्षणे दीर्घक्षेस्थितउदग् खउपदधाति चिदसीतुत्तराम्परिचिदसीतिदक्षिणाम्।

इति श्रुतिः। द्वितीया सुपधाति। परि चिदसि। परि सर्वत श्चितासितया देवतयेति व्याख्यातम् ॥ ५३ ॥ (१) लोकं पृणा सुपदधाति। लोकं पृण। पद्यादि लोकं स्थानं पृण पूरय। छिद्रं पृण पूरय। अग्ने स्वयवभूता भव। अथो अपि च सीद नि विशस्व ध्रुवा

द ॥ ५३ ॥ लोकम्पृण ॥ छिद्रम्पृणाथोसीदध्रुवात्वम् ॥ इन्द्राग्नी त्वाबृहस्पतिरस्मिन्योनावसीषदन् ॥ ५४ ॥ ताऽअस्य ॥ सूद

निश्चला त्वम्। इन्द्राग्नौ च। त्वां बृहस्पति श्च अस्मिन् योनौ स्थाने असीषदन् आसादयन्तु। न हि मानुषो ध्वर्युः त्वां सादयितुं समर्थ इत्यभि प्रायः ॥ ५४ ॥ (२) सूददोह साधि-

(१) का॰ तिसृषु लोक म्पृणासमन्वोदशसुचइयो र्वादशसु कस्यां च ।१७।१।१७। आदीतिसृषुलोकम्पृणेष्टकासुतू ष्णोमुपहितासुलोक म्पृणं त्वभिमन्त्रणम् ततोदशसुमन्व यद्वादोऽयोलोंकम्पृणयोर्मन्त्रस्ततोदशसुततएकस्याम् एवमेकदि- श्रतोष्टकागार्हपतेश्युरितिसूत्रार्थं ।

(२) का॰ निर्तिमादनसूददोहसाउपधानादुत्तरेतयादेवतयाताऽअस्येति। १६। ७ १०। तयादेवतयेतिसादनम् ताअस्येति- सूददोहसाधिवदनम् एवंनितिसर्व से तिसूत्रार्थं ।

यदति। ता अस्य। * अनुष्टुप्। यज्ञाकृति परिणाम भूता आप उच्यन्ते। व्यवहित पद प्रायो मन्त्रः। ता यज्ञपरिणाम भूता दिव इत्यन्तम्पद मिह मंत्रध्यते। दिवः द्युलोकात् च्युताः। सूददो दुहः। आपो वै सूदोन्न दोह इति श्रुतिः। अन्न सहिता आपः। अस्ये त्यस्य पदस्य विश इत्यनेन संबन्धः। यज्ञो वै विश इति श्रुतिः। अस्य शिवः अस्य यज्ञस्य संबन्धिन सोमं श्रीणान्ति मिश्रयन्ति। पृश्नयः अन्नं वै पृश्नीतिः। एत

दोहसꣳसोमꣳश्रीणन्तिपृश्नयः॥ जन्मन्देवानांविशस्त्रिष्वारोचनेदिवः॥५५॥ इन्द्रंविश्वाः॥ इन्द्रंविश्वाऽअवीवृधन्त्समुद्र

इत्कं भाति। अस्मिन् लोके पतित्वा आप ओषधि वनस्पत्य न्न भूताः सोमस्यो पकुर्वन्ति। कस्मि न्काले श्रीणन्ति। जन्मन्देवानाम्। संवत्सरो वै देवानां जन्मेति श्रुतिः। संवत्सर स्तनिनः संवत्सरे सोम यागः तदभि प्राय मेतत् त्रिष्वा रोचने सवनानि वै त्रीणि रोचनानी ति श्रुतिः। त्रि ष्वारोचने ष्विति वचन व्यत्ययः। त्रिषु सवनेषु। एवं

* इन्द्रपुत्रप्रियमेधदृष्टान्दे वतानुष्टुप्।

श्रुतितो यं मन्त्रो व्याख्यातः ॥ ५५ ॥ (१) पुरीषंनि वपति । * इन्द्रं विश्वाः । ऐन्द्रा नुष्टुप् इन्द्रं विश्वाः सर्वाः गिरः स्तुतयः ऋग्यजुः साम लक्षणः । अवीवृधन् वर्द्धयन्ति । समुद्र व्यचसम् । समुद्र मिव विविधायनं नानागतिम् अक्षोभ्य वलं वा । रथीतमं रथीनाम् ।

व्यचसङ्गिरः ॥ रथीतमᳫं रथीनांवाजानाᳫं सत्पतिम्पतिम् ॥ ५६ ॥

समितम् ॥ समितᳫं सङ्कल्पेथाᳫं सम्प्रियौरोचिष्णूसुमनस्यमानौ ॥

सर्वेषां रथिनां मध्ये रथ युद्ध लब्धातिशयम् वाजानां सत्पतिं पतिम् । वाजाना मन्नानां पतिं सताञ्च पतिम् । श्रुति स्मृति कर्मा नुष्ठातारः सन्त उक्ताः ॥ ५६ ॥ (२) चित्येनौ

(१) का० चात्वालदेशात् पुरीष निवपतीन्द्रं विश्वाइति । १७ । १ । १८ । चात्वालस्थानात् कर्दमानीयगार्हपत्यचितेरुपरि-क्षिपति ।

(२) का० समविलौ कृत्वोखानिवपति समितमिति समाम्बिलं यस्याः सासमविलाविभक्त्यलुकांछान्दस गार्हपत्यचिति मृत्पूरणे नपरिष्यित्ससाङ्कृत्वातन्मध्ये नीचैरुख्याग्निं स्थापयतिचतुर्मन्त्रैः

* इन्द्रदेवत्यामधुच्छन्दः सुतजे दृष्टानुष्टुप् ।

वृष्यं निवपति * समित मिति चतसृभि रुष्णिग् परिष्टा द्बृहत्युष्णिग् पंक्तिभि र्दग्निदेवत्याभिः। तृतीया वाग्निदेवत्या। समितम्। द्वितीय पाद प्रभृति। व्याख्यायते। यो युवां संप्रियौ संगति प्रियौ रोचिष्णु चरोचन शीलौ च। तौ सुमनस्य मानौ परस्परं शोभनं चिन्तयन्तौ। इष मन्न मूर्जंतदुप सेचनं सर्पिं रादि अभि संवसानौ अभ्यवहरन्तौ। वस्ते

**इषमूर्ज्जमभिसंवसानौ ॥ ५७ ॥ संवाम् ॥ संवाम्मनाᳪसिसंव्व्रतासमुचित्तान्याकरम् ॥ अग्नेपुरीष्याधिपाभवत्त्वन्नऽइषमूर्ज्जं**

र्यान्तरे वृत्तिः एत त्कुर्वाणौ समितम् इण गतौ। संगतिं कुरु तम् सङ्कल्पेयां च। एक संकल्पौ। च भवत मित्ये त दाशास्महे ॥ ५७ ॥ † संवाम्। आसमस्तारम्। आभिमुख्येन स्थित्वा संस्कृतवान्। वां युवयो र्मनांसि। वृद्ध इंकार मनांसी ति बहुवचनम्। संव्रता। व्रत मिति कर्मनाम। संस्कृतवा न्युवयोः कर्माणि। मम चित्ता-

* चतस्रोदग्निदेवता समितम् उष्णिगिकाअधिका अनियताक्षरपादत्वेप्यष्टाविंशत्यक्षरत्वात्।
† उपरिष्टाद्बृहती अष्टसप्तनवकयोदशाक्षरपादत्वादेकाधिका।

नि । चित शब्देन संस्कारा मनो गता उच्यन्ते। सक्षतवा आग्निमनो गता न्संस्का-
रान्। उकार: समुच्चयार्थीय:। एवं मन: कर्मं संस्कारै रेकीभूतैरेकी भूतं त्वामेक देवता
भिमानिनं प्रार्थये। हे अग्ने पुरीष्य पशव्य अधिपाभव अधिपति र्भव। त्वन्न: अस्म-

भ्यंजमानायधेहि ॥ ५८ ॥ अग्नेत्त्वम् ॥ अग्नेत्त्वम्पुरीष्योरयिमा
न्पुष्टिमाँ२ ॥ असि ॥ शिवाऽकृत्वादिशऽसर्व्वाऽस्वंय्योनिमिहास
दऽ ॥ ५९ ॥ भवंतन्नऽ ॥ भवंतन्नऽसमनसौसचेतसावरेपसौ ॥ मा

ध्यम् इषं चोर्जं च यजमानाय च धेहि देहि। इय मन्त्र मूर्व्वां च तदुप सेचनं द-
ध्यादि ॥ ५८ ॥ * अग्ने त्वम्। हे अग्ने त्व पुरीष्य: रयिवा अ धनवा अ पुष्टिवा श्च
असि यत: अन: शिवा: कृत्वा दिश: सर्वा: स्वं योनि मिहासद:। इति व्याख्यातम ॥ ५९ ॥

---

* उष्याग्निदेवतोष्णिक् आर्ष्यंकाधिका अनियताक्षरपादत्वात्।

* भवतन्न इति व्याख्यातम ॥ ६० ॥(१) उखां शिक्या हिसुञ्चति मातेव पुत्रम्। अनुष्टुप्। उखा

य० स्तुतिः। ये य सुखा माता इव पुत्रं पृथिवी रूप मवस्थाय पुरीष्य पशव्यम् अग्निम्

य० युज्ञᳬहिᳬसिष्टम्मायुज्ञपतिञ्जातवेदसौशिवौभवतमुद्यनः ॥ ६० ॥

सं० मातेवपुत्रम् ॥ मातेवपुत्रम्पृथिवीपुरीष्यमुग्निᳬस्वेयोनावभारु

२७६ षा ॥ तांव्विश्वैर्द्देवैर्ऋतुभिःसंव्विदानः प्रजापतिर्व्विश्वकर्म्माव्विमु

उ०

भा० स्वे स्वकीये उत्सङ्गे कृत्वा अभाः। प्रथम पुरुषस्य तद्रूपम् उखा शब्द सामानाधि करण्यात् अभारुखा अभार्षीत् धारितवती। ता मिदानी कृत सत्यां सतीं विश्वे देवैः

११। का० सिकताभि समविलाकृत्वामातेवपुत्रमिति शिक्याद्विमुचाभि वविधायासिस्वतिपयम्मध्ये तूष्णीम्। १७। १। १२। शून्यासुखासिकताभि सम्पूर्य्यमावेर्तेतिमन्त्रे षाशिक्यात् पृथक्कृत्वाभि वदितिस्थपिताग्नेरुत्तरे ऽरत्निमात्रे गार्हं पतश्चितेरुपर्य्युखामिधायतन्मध्ये तूष्णीन्दुग्ध सिञ्चेदितिसूत्रार्थः।

* आर्षीपङ्क्ति अनियताक्षरपादत्वात् अग्निर्देवता।

ऋतुभि. संविदान:। अहो महत्कर्मैतत मित्येवं संवादं कुर्वन् प्रजापति विश्वकर्मा च विमुञ्चतु धिक्यात् ॥ ६१ ॥ (१) नैऋतीना मिष्टकाना मुपधानं तिसृभि रनुष्टुभि । असुन्वन्तम् सोमाभिष व मकुर्वाणम् यजमानं चान्यै: यज्ञ ऋतुभि: इच्छ परिगृह्णीष्व। कि-

ञ्चतु ॥ ६१ ॥ [ ७ ] असुन्न्वन्तमयंजमानमिच्छस्तेनस्येत्यामन्न्विंहितस्कंरस्य॥अन्न्यमुस्मादिच्छसातंऽइत्त्यानमोदेविनिर्ऋतेतुब्भ्यंम-

न्त्व। स्तेनमेत्र त्यामन्विहि। स्तेनस्य चौरस्य इत्यां गतिम् अनु कुर्वन् इहि। प्रपलाय्य याहि। तस्करस्य। तदेव यच्चौर कर्म क रोति नान्यत् सतस्कर: सन् तस्कर-इत्युच्यते। पुन रप्याह। अन्य मस्मदिच्छ अन्यं पुरुष मस्मत्त: इच्छ गृहीतुम्

(१) का० नैऋती कृष्णास्तुषपक्कास्तिस्रोऽलक्षणा पादमात्रीर्हविर्यज्ञच्छोभवद्भेदक्षिणोत्तरा कृत्वादक्षिणामुखोऽनुपसृज्यासुन्वन्तमितिप्रत्यृचम्पराची १७।१।२२। ततोऽध्वर्यु राजसूयेर्हविर्यज्ञच्छोभियाःश्रोदेशस्तादृशेस्वयम्प्रशीर्णेइरिणेवासुन्वन्तमितिप्रत्यृच तिस्रोनैऋतीसञ्ज्ञाइष्टकादक्षिणोत्तरा कृत्वाततस्ताअपसृज्यानुपदधाति। कीदृशी पाकेनक्षयावर्णा तुषैरेवपक्वा लक्षणहीना पद्या पराची मनात्म मुखी। स्वयदक्षिणामुख पूर्वमुत्तरान्निधायततोदक्षिणेहे-इतिसूत्रार्थ।

सातें तव इत्या गतिः। एवं दण्डगर्भं मुक्ता अथे दानीं साम्नाह। नमो दे वि निर्ऋते तुभ्य मस्तु। हे देवि निर्ऋते तुभ्यम् नमः अस्तु ॥ ६२ ॥ नमः सुते नमस्कारः शोभनः ते तव हे निर्ऋते अस्तु। निर्ऋतिः कृच्छ्रापतिः भूमि र्वा। तिग्म सुत्सा हन्ते नोयस्याः सा तिग्मते जाः तस्याः सम्बोधनं हे तिग्मतेज.। अयस्मयं विचृत। अयो

स्तु ॥ ६२ ॥ नमःसुतेनिर्ऋतेतिग्मतेजोयस्मयंव्विचृताबन्धमेतम्॥ यमेनत्त्वंयम्म्यासंव्विदानोत्तमेनाकेऽअधिरोहयैनम् ॥ ६३ ॥ यस्यास्ते॥ घोरऽआसञ्जुहोम्म्येषाम्बन्धानामवसर्ज्जनाय ॥ यान्त्वाजनो

मयं विच्छिन्धिवन्ध मेतम् येनाहं बद्धः अजस्र जोदभाव लक्षणेन। जनित्वा म्रियते मृत्वा जायत इति। किञ्च। यमेनाग्निना त्वं यम्या च पृथिव्या संविदानां एकमती भूय। उत्तमेनाके उत्कृष्टे स्वर्गे अधिरोहय एनं यजमानम् ॥ ६३ ॥ यस्याःस्ते। यस्याः तव हे घो रेविष मशीले। आसन् आस्ये मुखे जुहोमि हविः एषां बन्धानाम् अवसर्ज्जनाय विमोचना-

नाथ। साक्ष मेता मन्धान स्मतो विसृज। किञ्च। यां चत्वां जनो लोकः भूमि रिति कृत्वा प्रमन्दते स्तौति तां त्वा मह मपि स्तौमि। तथैव प्रतिष्ठा भूतानां जनयित्री मा ते व विभर्ति त्यादि भि गुणैः। किञ्च। निर्ऋति त्वाम् हं परिवेद जानामि विश्वतः सर्वतः।

भूमिरितिंप्रमदंतेनिर्ऋतिन्त्वाहम्परिवेदविश्वतः ॥ ६४ ॥ यन्ते देवीनिर्ऋतिराबबन्धपाशंग्रीवास्वविचृत्यम् ॥ तन्तेविष्याम्यायुषोनमध्यादथैतम्पितुमद्धिप्रसूतः ॥ नमोभूत्यैयेदञ्चकार ॥ ६५ ॥

नितरां हि विदित आमन्त्रितो हिनस्तो त्यत एतान् वन्धान वसृज असत्तः ॥ ६४ ॥

(१) शिक्य रुक्म पाशेष्वा संदीः परेण्वा सराति। यन्ते देवी। त्रिष्टुप्। यजमान उच्यते यंते देवी निर्ऋतिः आबबन्ध आवद्धवती शिक्य पाशं रुक्म पाशं च। ग्रीवासु कण्ठे। अविचृत्यम्।

(१) का० शिक्यरुक्मपाशेष्वासदो परेणास्यतियतहति १७।२।४। शिक्य रुक्मपाश इण्डु आसन्दीं च नैर्ऋतीष्टकात पश्चात्क्षिपति।

चृतो च्छेदने। अविच्छेद्यम् अनय खण्डनीयम् अनेनैव यजुषा तं पाशं ते तव विष्यामि ।
शु० स्यति रुप स्पृष्टो विमोचने। विमुञ्चामि। आयुषो न मध्यात्। अग्नि र्वा आयु स्तस्ये
य० त न्मध्यं य श्चितो गार्हपत्योऽभय त्यचित आहवनीयः नकारः संप्रत्यर्थे। अग्ने मध्यात्
सं० अथो न्मुक्तपाशः सन् अग्नि रूप मवसाय। यजमान एतं पितुमन्नम् अद्धि भक्षय। प्रसूतो
२७८ निवेशनःसङ्गमनः ॥ निवेशनःसङ्गमनोव्वसूनांव्विश्वारूपाभिचष्टे
उ० भ्यनुज्ञातो निऋत्या। (१) उदपात्रं न्निषिच्य अन्तरात्मे ष्टका सुपतिष्ठन्ति। नमो भूत्यै। विराडे
भा० कपदा भूति देवत्या। नमो भूत्यै श्रियै या इद मग्निलक्षण ङ्कर्म चकार कृतवती ॥ ६५ ॥
(२) शाला द्वार्यो पस्थानम्। निवेशनः। त्रिष्टुप्। पृथिवी लोक संस्तुतो य मग्नि र्यो य मग्नि
र्निवेशनः। निविशन्ते स्मि न्निति निवेशनः। संगच्छन्ते स्मि न्निति संगमनः। केषाम्।

(१) का० उदपात्रन्निषिच्यान्तरात्मेष्टकामुपतिष्ठन्तिनमोभूत्याइति १७।२।४। शिक्यादिनिरसनान्तरमात्मनोनैरृतीष्टकानां च मध्ये जलपूर्णंसमभन्त्रं प्रणीनिनो य ब्रह्मयजमानाध्वर्यवो नमइतिमन्त्रेणोत्तिष्ठन्तिनैरृतीसमीपादितिसूत्रार्थः।

(२) का० अनपेक्षमेत्यशलाद्वार्योपस्थानंनिवेशनइति १७।२।६। ब्रह्मयजमानाध्वर्यवोनैरृत्युपधानदेशात् पश्चादपश्यन्त शालाङ्गच्छन्तिअध्वर्युरेतांशालाद्वारिभवगार्हपत्याचितिरूपमग्निमुपतिष्ठते।

वसूनां धनानाम्। य आयं विश्वरूपा। सर्वाणि रूपाणि आहवनीय दक्षिणाग्न्य तिप्रणीता ग्नीध्र धिष्ण्याद्य प्रभृतीनि। अभिचष्टे अभिपश्यते। सचीभिः स्वैः स्वै युं ज्ञानि। कथं पश्यति। देव इव सविता। सत्य धर्मा अवितथ कर्मकारी। यश्च इन्द्रो न इन्द्र इवतस्थौ तस्थिवान्। समरे सग्रामे। पथीनां। परिपन्थिभिः सह। तं वयं स्तुम इति वाक्य शेष.॥ ६९॥

प्रचीभिः॥ देवऽइवसविता सत्यधर्मेन्द्रोनतस्थौसमरेपथीनाम्॥

६९॥ सीरायुञ्जन्ति॥ कवयोयुगावितन्वतेपृथक्॥ धीरादेवेषुसु

(१) सीरं युज्यमान मभि मन्त्रयते गायत्री त्रिष्टुभ्याम्। सीरा युञ्जन्ति। सीराणि लाङ्गलानि युञ्जति। कवयो मेधाविनः। युगा वितन्वते। युगानि च वितन्वन्ति। पृथक् नाना। कथं भूताः कवयः युञ्जन्ति। धीराः धीमन्तः अग्नि चेत्रविदः। किमर्थं युञ्जन्ति। देवेषु सुम्नया। सुम्न मिति सुख नाम। द्वितीयार्थे तृतीया। देवेषु सुम्नं सुखम् कर्तुं मिति शेषः।

(१) का० दक्षिणामग्निश्रोणिमपरेणतिष्ठन्युज्यमानमभिमन्त्रयत्ते सीरायुञ्जन्तीति १७। २। ११। चितेर्दक्षिणश्रोणे पश्चिमे तिष्ठध्वर्युं प्रतिप्रस्थातोत्तरासपूर्वषड्भिर्वादशभिश्चतुर्वि शत्यावावाहषे युज्यमानमौदुम्बरल हाभ्यामभिमन्त्रयते।

द्वितीयचयोलमासनमन्त्रः । अग्निरसि ज्योतिषा ज्योतिष्मान् अस्तु । रुक्मइव वर्चसा वर्चस्वानस्तु । (१) ग्रीवं पुरुषशिरउत्तमं ह्लाति । सहस्रदा असि । बहूनांदातासि एवं चेत् अतः सहस्रायत्वामुक्ष्णामि ॥४०॥ (२) पुरुषशिरउपदधाति । आदित्यं गर्भम् इतउत्तरं पटविष्टुभः । आदत्तेपशूनिति-

प्रज्ज्योतिष्मान्रुक्मोव्वर्चसाव्वर्चस्वान् ॥ सहस्रदाऽअसिसहस्राय त्वा ॥४०॥ आदित्यङ्गर्भम्पयसासमङ्धिसहस्रस्यप्रतिमांविश्वरूपम् ॥ परिवृङ्धिहरसामाभिमꣳस्थाःशतायुषङ्कृणुहिचीयमानः ॥

आदित्यः । आदित्यइनमादत्ते सर्वं पापशूनामितिआदित्यः । गृह्णातिपशूनितिगर्भः । चित्याग्निरुच्यते । आदित्यं गर्भंपयसादुग्धेनसमङ्धि । समञ्चयसि । पुरुषमुपदधातीत्येतदभिप्रायम् । सहस्रस्यप्रतिमाम् । बहुनः प्रतिमाभूतम् विश्वरूपंसर्वरूपम् । सर्वाणिहिरूपाण्यादित्यस्य आदित्यावच्छायस्तूयते । परिवृङ्ग्धिहरसा । परित्यज एनं हरसा । वीर्यापहारकं-

(१) का० सहस्रदाइतिपुरुषशिरउत्तमंप्रमध्ये १७ । ५ । ११ । पुरुषशिरआदायोखामध्ये वक्ष्यमाणमन्त्रेणोपदधातीतिसूत्रार्थः ।
(२) का० आदित्यं ग । भंमितिप्रतिमन्त्रं क्रमेण १७ । ५ । १७ । पुरुषादीनांशिरसि पञ्चमन्त्रक्रमेणैकैकमुपदधातीतिसूत्रार्थः ।

ज्योतिरग्नेहर इत्युच्यते। माभिमंस्थाः अभिपूर्वोमनिर्हिंसार्थः माहिंसीः। सर्वथा शतायुषं कृणुहि चीयमानः ॥ ४१ ॥ अश्वमुपदधाति। वातस्य जूतिम्। जूतिर्गतिः प्रीतिर्वा। वातस्यगतिभूतं प्रीतिजनकं वा। वरुणस्य नाभिम् वरुणस्य नाभिमिवान्तरम्। अश्वञ्जज्ञानं सरिरस्य मध्ये। अश्वञ्जज्ञानं यजमानं सरिरस्योदकस्य मध्ये। शिशुम् पुत्रम् नदीनां

४१ ॥ वातस्यजूतिं॥ वरुणस्यनाभिमश्वञ्जज्ञानꣳसरिरस्यमध्ये॥
शिशुन्नदीनाꣳहरिमद्रिबुध्नमग्नेमाहिꣳसीःपरमेव्योमन् ॥४२॥
अजस्रमिन्दुम॥ अजस्रमिन्दुमरुषम्भुरण्युमग्निमीडेपूर्वचित्तिन्न

हरितवर्णम्। अद्रिबुध्नम्। अद्रिःपर्वतः तस्यबुध्नमादिः तत्रभवा आपः अद्रिबुध्नाः। इहतु अद्भ्योजातोश्वो मत्यप्रत्ययलोपादद्रिबुध्न शब्देनोच्यते। प्रकरणात् हे अग्ने चित्य। माहिंसीः मावधीः। परमेव्योमन् निषीदन्तम्। इमेवैलोकाः परमं व्योमेत्यधिलोकं व्याख्यातम् ॥४२॥ गामुपदधाति। अजस्रम्। यस्य तव संस्कारार्थम् अजस्र मनुपक्षीणाम् इन्दुं सोमञ्चन्द्रमसम्

ग्लपम् अरोचनम भुरण्युम् भर्त्तारं वाग्दोहादिभिः अग्निम् आग्नेयम् तद्धितलोपः। ईडे। याचामि उपधानाय। पूर्वचित्तिम् प्राक्चयनम्। प्राचंह्यग्निमुद्धरन्तीति। अग्न्यध्यासेनगोस्तुतिः। नमोभिरन्ने रभ्युद्यतैः सत्वमेताभिः पर्वेष्टकाभिः पर्वभिः पश्चिष्टकाभिः ऋताष्टतौ। कल्पमानः गाम्माहिंसीः। अदितिमदीनां विराजम् तसैवस्तत्तसैव सद इत्यादि दशवीर्थाभि-

र्नोभिः ॥ सपर्वभिर्ऋतुशः कल्पमानो गाम्माहिंसीरदितिं विराजा म् ॥ ४३ ॥ वरुत्रीन्त्वष्टुः ॥ वरूत्रीन्त्वष्टुर्वरुणस्य नाभिमविं जज्ञा नाꣳरजसः परस्मात् ॥ महीꣳसाहस्रीमसुरस्य मायामग्ने माहिꣳसीः परमे व्योमन् ॥ ४४ ॥ योऽअग्निः ॥ योऽअग्निरग्नेरध्यजा

यम् ॥ ४३ ॥ अविमुपदधाति। वरुत्रीम्। वरान्वृणोतीति वाकम्बलादिना आच्छादयति। त्वष्टुः वरुणस्यचनाभिम्। नहनम्। वारुणीच हिस्वाष्टीचाविरितिश्रुतिः। अविज्ञजातानां यजमानानां रजसः परस्मात्। श्योव वैपरं रजोदिशोवैश्योव दिशः परं रजइतिश्रुतिः मही

महतीम् साहस्रीं सहस्रोपकारक्षमाम् । असुरस्य असुवतः प्राणवतः प्रज्ञानवतो वावरुण-
समायाम् मज्ञाम् हे अग्ने माहिंसीः । परमेव्योमन्निति व्याख्यातम् ॥ ४४ ॥ अजमुपदधाति ।
योअग्निः । यः अजः अग्निः अग्नेः अधिसकाशात् अजायत उत्पन्नः । शोकात्पृथिव्या अ-
धिअजायत । उतवान्दिवस्परि । अपिचदिवोधिअजायत । यद्वैप्रजापतिः शोकादजायतद्वै दि-

यतशोकात्पृथिव्याऽउतवांदिवस्परि ॥ येनंप्रजाविश्वकर्माजजा
नतमग्नेहेडःपरितेवृणक्तु ॥४५॥ चित्रन्देवानाम् ॥ चित्रन्देवाना
मुदगादनीकञ्चक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीऽअ
न्तरिक्षꣳसूर्यऽआत्माजगतस्तस्थुषश्च ॥ ४६ ॥ [ ९ ] इमम्मा ॥

वश्च पृथिव्याश्च शोकादजायतेति श्रुतिः । येनाजेनप्रजाः विश्वकर्मा प्रजापतिः जजानजनितवान् ।
वस्त्रा अजोवाचोवैप्रजाविश्वकर्माजजानेति श्रुतिः । तमज हे अग्ने हेडःक्रोधः परिहृणक्तु परिवर्जयतु
तेतवमंथन्वौ ॥ ४५ ॥ (१) चित्रन्देवानाम् होमेव्याख्यातम् ॥ ४६ ॥ अथपञ्चपशूनांशुचोत्सर्गः

(१) का० चित्र देवानामित्यर्धर्चेन स्रुवाहुतीमध्यमें । अइधंद्वयेनपुरुषशिरस्याहुति च्य जुहोतीत्यर्थः ।

(१) इमं नाहिंसी: । पञ्चविंशभोद्दायसाना उत्तराणियजूंषि । पुरुषस्योत्सृजति । इमंपुरुषंमाहिंसी: शुचा । द्विपादम्पशुम् । द्विपाद्वाएषपशुर्यत्पुरुष: । सह स्राक्ष: सन् हिरण्यशकलैर्वाएषसहस्राक्ष: मेधाययज्ञायअन्नायवा । चीयमान: चयनेन संस्क्रियमाण: । मयुं पशुं मेधम् हेअग्ने जुषस्व ।

हिंᳬसीर्द्विपादम्पशुᳬसंहस्राक्षोमेधायचीयमानः ॥ मयुम्पशुम्मेधम ग्नेजुषस्वतेनचिन्वानस्तन्वोनिषीद ॥ मयुन्तेशुगृच्छतुयन्द्विष्मस्तन्तेशुगृच्छतु ॥ ४७ ॥ इमम्मा ॥ हिंᳬसीरेकशफम्पशुङ्कनिक्रदं वाजिनम्वाजिनेषु ॥ गौरमारण्यमनुतेदिशामितेनचिन्वानस्तन्वो

किंपुरुषोवैमयु. । तेनकिंपुरुषेणचिन्वान: । तन्वोनिषीदआत्मानं संस्कुरुष्व । इतउत्तरं यजु: । मयुन्तेतवशुक्सन्ताप: ऋच्छतु । किञ्च । यंपुरुषं वयंद्विष्म: तंचतवशुकऋच्छतुहिनस्तु ॥ ४७ ॥

(१) धा० बर्हिर्वेद्युदङतिष्ठन् पतिष्ठत उत्सर्गैरिममाहिंᳬसीत्तिप्रतिमन्त्रम् । १७ । ५ । १८ । अग्नेरुत्तीर्यवेदेर्वहिर्दक्षिणे उदग्मुखस्तिष्ठन्निममेतुरात्मगं सर्वे पञ्चमन्त्रे पुरुषादि शिरांस्युगति छतेऽध्वयु । एकपशुपक्षेतमेव पञ्चभिरितार्थ. ।

यथाखख। इमंमाहिंसीः एकशफंपशुम् एकशफोगाएपपशुर्यदश्वः। कनिक्रदम अत्यर्थं क्रन्दितारम वाजिंनवेगवन्तम् वेगवत्सुमध्येव्यवस्थितम्। गौरम् गौरम्गम् अनुदिशामितेतव। तेनचिन्वानइति व्याख्यानम् ॥ ४८ ॥ अथगोः। इमंसाहस्रम। इमङ्गांसाहस्रम् सहस्राहमं शत-धारसुत्सम् उत्सः कूपः। बहुस्रोतसमिवकूपम् उपकारकम् वाहदोह्यादिभिः व्यच्यमान सरि-

निषीद ॥ गौरन्तेशुगृच्छतुयन्द्विष्मस्तन्तेशुगृच्छतु ॥ ४८ ॥ इमꣳ साहस्रम् ॥ इमꣳसाहस्रꣳशतधारमुत्सँव्यच्यमानꣳसरिरस्यमध्ये ॥ घृतन्दुहानामदितिञ्जनायाग्नेमाहिꣳसीः परमेव्योमन् ॥ गवयमारण्यमनुतेदिशामितेनचिन्वानस्तन्वोनिषीद ॥ गवयन्तेशुगृच्छतु

रस्यमध्ये। विविधमच्यमानसुपजीव्यमानम् सरिरस्यमध्ये। इमेवैलोकासरिर मित्यादिश्रुतिः। घृतं दुहानाम अदितिमदीनाम् जनायमनुष्यव्योर्थाय। पुंलिङ्ग स्त्रीलिङ्गाभ्यां मन्त्रोगौः स्तूयते। अग्नेमाहिंसीरित्यादिव्याख्यातम् ॥ ४९ ॥ अथावेः। इमम्नुर्णायुम्। इमम् ऊर्णा-

युम जर्णावन्तम्। वरुणस्य नाभिम् वरुणस्यानद्धनम् अपत्यम् त्वचं पशूनां द्विपदाञ्चतुष्पदाञ्च। उभयरूपाणां पशूनां त्वग्रक्षणं करोति कम्बलादि नेत्याशयः। किञ्च। त्वष्टुः प्रजानां प्रथमं जनित्रम्। एतच्चत्वष्टा प्रथमं रूपं चकारेतिश्रुतिः। जनिवञ्जनम्। व्याख्यातमन्यत् ॥ ५० ॥

यन्हिंस्मस्तन्तेशुगृच्छतु ॥ ४९ ॥ इममूर्णायुं ॥ वरुणस्यनाभिन्त्वचम्पशूनान्द्विपदाञ्चतुष्पदाम्॥ त्वष्टुः प्रजानाम्प्रथमञ्जनित्रमग्नेमाहिंसीः परमेव्योमन्॥ उष्ट्रमारण्यमनुतेदिशामितेनचिन्वानस्तन्वोनिषीद ॥ उष्ट्रन्तेशुगृच्छतुयन्द्विष्मस्तन्तेशुगृच्छतु ॥ ५० ॥ अजोहि ॥ अजोह्यग्नेरजनिष्टशोकात्सोऽअपश्यज्जनितारमग्रे॥

अथाजस्य। अजोहि। यः यत्र अग्नेः अजनिष्टजातः। शोकात्सन्तापात्। यद्वै प्रजापतेः शोकादजायततदग्नेः शोकादजायत इतिश्रुतिः। हिशब्दः पादपूरणः। सः अपश्यत् जनिता

शु० य० सं० २१० उ० भा०

रञ्जनयितारं प्रजापतिम। अग्रे प्रथमम् यथासीदृष्टव्य:। तेनचदेवा इन्द्रादय:। देव गा-
मग्रमायन् नायन्देवात्तलितिस्वार्थिक:। किन्तर्हि। तस्य भावस्त्वतलावितिभाव प्रत्यय: षष्ठ्यर्थे
चेयं द्वितीया देवत्वस्याग्रमायन्निति शब्द प्रकरणात्। तेनैवाजेन रोहंस्वर्गम् अयन् उपा-
गच्छन्तु। मेधांस: यज्ञयादेशा:। लोकमसिद्धा: शरभादयोव्याख्येया: ॥ ५१ ॥ (१) चित्योपस्था-

तेनदेवादेवताम्ग्रमायँस्तेनरोहमायन्नुपमेध्यासः ॥ शरभमारण्यमनुतेदिशामितेनचिन्वानस्तन्वोनिषीद ॥ शरभन्तेशुगृच्छतु यन्द्विष्मस्तन्तेशुगृच्छतु ॥ ५१ ॥ त्वंयविष्ठ ॥ दाशुषोनॄँःपाहिशृ

नम्। त्वं यविष्ठ। गायत्र्याग्नेय्यनिरुक्ता। त्वंहे यविष्ठयुवतम। यद्वा युमिश्रणे।
अतिशयेन मिश्रयितृतम। दाशुष: दत्तवतोहवीं षियजमानस्य नॄन्मनुष्यान् पाहिपालय। शृणु-
धिच गिर: स्तुतिलक्षणावाच:। किन्चरक्षातोकम पत्यम्। उतत्मना। अपिच आत्मानं

(१) का० एतावत्स्य यविष्ठेतिचितोपस्थानम्। १७। ६। १। अग्निर्वेदेरागताग्निसमीपेऽर्धचित्यमुपतिष्ठते।

शिवम्

रचेति । श्रुत्युक्तोव्यत्ययः ॥ ५१ ॥ (१) पञ्चदशच्छन्दस्याः पञ्चदशभिर्यजुर्भिरुपदधाति । अपां

गृधीगिरः ॥ * रचातोकमुतत्मना ॥ ५२ ॥ [ ६ ] अपान्त्वा ॥ अ

पान्त्वेमन्त्सादयाम्म्यपान्त्वोद्मन्त्सादयाम्म्यपान्त्वाभस्मन्त्सादयाम्य

पान्त्वाज्ज्योतिषिसादयाम्म्यपान्त्वायनेसादयाम्म्यर्णवेत्त्वासदनेसा

दयामिसमुद्रेत्त्वासदनेसादयामिसरिरेत्त्वासदनेसादयाम्म्यपान्

त्वेमन्त्सादयामि । श्रुत्युक्तान्यभिधेयानि । † अपांत्वाएमन् । ‡ सप्तम्यालुक् । एमनि । इणगतौ ।

(१) का० अपरेण स्वयमातृण्णामेतस्यापस्याः पञ्चपञ्चानूकान्तेष्वपान्त्वेमन्निति प्रति मन्त्रम् । १७ । ६ । २ । तीर्थेनाग्निमारुह्य-स्वयमातृण्णामपरेण पूर्वानूकान्तमेतत् चतुर्ष्वनूकान्तेष्वपान्त्वं मन्निति प्रतिमन्त्रं पंचपंचापस्यास्तत्राद्यष्टका उपदधातीति । सूत्रार्थः ।

* पिबासोमं पिबासुतस्ये त्यादि सूत्रेण गृणधीगिरः इत्यत्र रचातोकमित्यत्रदीर्घः । प्राति० अ० ३ । सू० १३० ।

† त्वा एमन् त्वा यो इत्येताच संहितायां समुद्रस्येमंस्त्वेमंस्त्वोद्मन्निति चेति सूत्रेण एकादेशो निपात्यते । प्राति० अ० ४ । सू ५५ ।

‡ एमनोति प्राप्ते संहितायां नियम्दोबहुलमितिसूत्रेण क्वचिदिकारमात्रस्य लोपोभवति प्राति० अ० ३ । सू० १८ ।

अस्य मनिप्प्रत्ययान्तस्यै तद्रूपम्। वायुर्वा अपामेमन्। वायौतांसादयति। अपांत्वाओद्मन्।
उन्दीक्लेदने। ओषधयो वा अपामोद्मन् तुल्यव्याख्यानमन्यत्। भस्मन्। भषभर्त्सनदीप्त्योः।
अन्नं वा अपांभस्मन्। ज्योतिषि। विद्युद्वा अपाञ्ज्योतिः। अयने। इयं पृथिवी अपामयनम्।



त्वाच्चयेसादयाम्म्युपान्त्वासधिंषिसादयाम्म्युपान्त्वासादनेसादया
म्म्युपान्त्वांसुधस्त्येसादयाम्म्युपान्त्वायोनौसादयाम्म्युपान्त्वापुरीषे
सादयाम्म्युपान्त्वापाथसिसादयामिगायत्रेणत्वाच्छन्दंतासादया
मित्त्रैष्टुभेनत्वाच्छन्दसासादयामिजागतेनत्वाच्छन्दसासादया
म्म्यानुष्टुभेनत्वाच्छन्दसासादयामिपाङ्क्तेनत्वा च्छन्दसासादया

अर्णवे। प्राणोवा अपामर्णवः। समुद्रे। मनोवैसमुद्रः। सरिरे। वाग्वैसरिरम्। च्चये।
चक्षुर्वा अपांच्चयोनिवासः। सधिषि। श्रोत्रं वा अपांसधिः। सदने द्यौर्वा अपांसदनम्।

सधस्थे। अन्तरिक्षम् वा अपांसधस्थम्। योनौ। समुद्रो वा अपांयोनिः। पुरीषे। सिकता वा अपांपुरीषम्। पाथसि। अन्नं वा अपांपाथः। अन्वेतांसादयति। पञ्चच्छन्दस्याः पञ्चभिर्यजुर्भिरुपदधाति गायत्रेणत्वाच्छन्दसासादयामीत्यादि ॥ ५३ ॥ प्राणभृताः पञ्चाशदिष्टका उपदधाति। पञ्चाशद्भिर्यजुर्भिः। अयंपुरोभुवः। अग्निर्वै पुरः। तद्यत्तदाहपुर इत्यादिनिर्वचनम्।

मि ॥ ५२ ॥ अयम्परः ॥ अयम्पुरोभुवस्तस्यंप्राणोभौवायनोव्वसन्तःप्राणायनोगायत्त्रीव्वासन्तीगायत्त्र्यैगायत्रङ्गायत्रादुपाᳬशुरुपाᳬशोस्त्रिवृत्त्रिवृतोरथन्तरंव्वसिष्ठऽऋषिःप्रजापतिगृहीतयात्त्वया

तस्यप्राणः अपत्यम् भौवायनः वसन्तः ऋतुः। प्राणायनः प्राणस्यापत्यम् नडादित्वात्फक्। गायत्री वासन्ती गायत्रीच वसन्तस्यापत्यम्। गायत्रीगायत्रम्। गायत्र्याः सकाशाद्गायत्रम् सामनिरमिमीत। गायत्रादुपांशुः। गायत्रात्साम्न उपांशुङ्ग्रहं निरमिमीत। उपांशोः त्रिवृत्। उपांशोर्ग्रहात् त्रिवृत् स्तोमं निरमिमीत। त्रिवृतोरथन्तरम्। त्रिवृतस्तोमात्रथन्तरं पृष्ठन्नि-

रश्मिमीत। वसिष्ठऋषिः। प्राणोवैवसिष्ठऋषिः। प्रजापतिगृहीतयात्त्वया। गृह्णाति स्वज-
तिवचनः। प्रजापति सृष्टयात्त्वया। प्राणं गृह्णामि प्रजाभ्यः। अयं पुरोभुव इत्यादिभिर्दशभि-
र्भेदैः प्राणमेवैकमविशेषेणगृह्णामि। प्रजाभ्यो विशेषेणावस्थितम् ॥ ५४ ॥ अथदक्षिणतः।

प्प्राणङ्गृह्णामिप्प्रजाब्भ्यः ॥ ५४ ॥ अयन्दक्षिणा ॥ व्विश्वकर्म्मातस्यमनोव्वैश्वकर्म्मणङ्ग्रीष्म्मोमानसस्त्रिष्टुब्ग्रैष्म्मीत्त्रिष्टुभः स्वारं स्वारादन्तर्य्यामोन्तर्य्यामात्पञ्चदशः पञ्चदशाद्बृहद्बृहद्भरद्वाजऋषिः प्प्रजापतिगृहीतयात्त्वयामनोगृह्णामिप्प्रजाब्भ्यः ॥ ५५ ॥ अयम्पु

अयंदक्षिणाविश्वकर्मा। अयंवैवायुर्विश्वकर्मायोयम्पवते। एषहीदं सर्वं करोमि तद्यत्तमाह
दक्षिणेति तस्मादेषदक्षिणैवभूयिष्ठं वात्यायोवर्त्तात्। तस्य मनोवैश्वकर्मण इत्यादि इत्यव्याख्या-
न व्रतस्वपिकाण्डिकासु ॥ ५५ ॥ अथ पश्चात्। अयंपश्चाद्विश्वव्यचा। असौवा आदित्यः-

विश्वव्यचा । यदाह्येवैषउदेति अथेदं सर्वं व्यचाभवति तदाक्तमाह । पश्चादितिक्रियानिर्देशः ॥ ५६ ॥

पश्चात् ॥ * अयम्पश्चाद्विश्वव्यचास्तस्यचक्षुर्वैश्वव्यचसंवर्षाश्चाक्षुष्योजगतीवार्षीजगत्याऽऋक्समम्ऋक्समाच्छुक्रःशुक्रात्सप्तदशः सप्तदशाद्वैरूपञ्जमदग्निर्ऋषिः प्रजापतिगृहीतयात्वयाचक्षुर्गृह्णामिप्रजाभ्यः ॥ ५६ ॥ इदमुत्तरात् ॥ इदमुत्तरात्स्वस्तस्यश्रोत्रंसौवंशरच्छ्रौत्र्यनुष्टुप्शारद्यनुष्टुभऽऐडमैडान्मन्थीमन्थिनऽएकविंशऽएकविंशाद्वैराजंविश्वामित्रऽऋषिः प्रजापतिगृहीतयात्वया

अथोत्तरतः । इदमुत्तरात्स्वः । दिशोवाउत्तरातद्यत् तमाहोत्तरादित्युत्तरात्तद्येतस्तस्वंस्माद्दिशः ।

---

* पश्चात्प्रतीचो दिशमच्छतिगच्छतीतिपश्चात् प्रतीचीगमनशीलो विश्व उदित सन्प्रकाशयतीतिविश्वव्यचाआदित्यो-यप्रसिद्धस्तद्रूपासा० विश्वव्यचसइदवैश्वव्यचसम् ।

अथयत्त्वरित्याह। स्वर्गोऽग्निलोकोदिश: ॥ ५७ ॥ अथमध्ये। इयमुपरिमिति:। चन्द्रमावा-
उपरितद्यत्तमाह्योपरीतिउपरिहिचन्द्रमा। अथयन्मतिरित्याह। वाग्वैमति:। समानंव्याख्या-

य० स० वं० भा०

स्रोनंइन्द्राग्निभ्यांप्रजाभ्य:॥ ५७ ॥ इयमुपरिमतिस्तस्यैवाङ्मात्या
हेमन्तोवाच्च्य:पङ्क्तिर्हैमन्तीपङ्क्त्यैनिधनवन्निधनवतऽआग्रयणऽआ
ग्रयणात्त्रिणवत्रयस्त्रिꣳशौत्रिणवत्रयस्त्रिꣳशाभ्याꣳशाक्वररैवते
विश्वकर्म्मऽऋषि:प्रजापतिगृहीतयात्त्वयावाचंइन्द्राग्निभ्यांप्रजाभ्यो
लोकन्ताऽइन्द्रम्॥ ५८ ॥ [ ५ ]

इतिश्रीवाजसनेयसंहितायान्त्रयोदशोऽध्याय: १३ ॥

नम्। लोकंतामिन्द्रमितितिस्र: प्रतीकगृहीता:। लोकंपृणाच्छिद्रंपृण। ताअस्यसूददोहस:।
इन्द्रंविश्वाअवीवृधन् ॥ ५८ ॥ इतिउवटकृतौ मन्त्रभाष्ये त्रयोदशोध्याय: ॥ १३ ॥

द्वितीयाचितिं देवा अपश्यन् तस्यांचितौ पञ्चाश्विन्यो यजुरन्ताः। अश्विनाध्वर्यू इत्यादियजुः। प्रथमाविराट्। द्वितीयाद्यायतस्त्रिष्टुभः। (१) ध्रुवचितिः। यात्वंध्रुवचितिः स्थिरनिवासा।

* ध्रुवक्षितिर्ध्रुवयोनिः॥ ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवंयोनिमासीदसाधुया॥ उख्यस्यकेतुम्प्रथमञ्जुषाणाऽअश्विनाध्व

ध्रुवयोनिश्च अनश्वरस्थानाच। ध्रुवाचासि अतएवतांत्वांब्रवीमि। ध्रुवंस्थिरंयोनिंस्थानम्

त्रयोदशेऽध्याये प्रथमा चितिरुक्ता सा भूलोकरूपा। अयं वै लोकः प्रथमा चितिरिति श्रुतेः। चतुर्दशेऽध्याये द्वितीयादिचितित्रयं वक्ष्यते भूमेरूर्ध्वमन्तरिक्षादर्वाग्भागो द्वितीया चितिः। एतां द्वितीयां चितिमपश्यन्यदूर्ध्वं पृथिव्या अर्वाचीनमन्तरिक्षात्तदामेष लोक इति श्रुतेः। देवैरश्विनौ प्रार्थितौ यद्युवां भिषजौ ततो द्वितीयां चितिमुपधत्तमिति ताभ्यामुक्तं चित्युपधाने किमावयोः फलमिति देवैरुक्तं युवां चित्युपधाने देवानामध्वर्यू भविष्यथ इति ततस्ताभ्यां द्वितीया चितिरुपहितेति श्रुत्या तेऽश्विनावध्वर्यू चित्यादिकयोक्तम्। तत्रादौ पञ्चाश्विन्य इष्टका द्वितीयचितिमन्त्रा देवदेवत्याः।

(१) का० आश्विनीध्रुवक्षितिरिति प्रतिमन्त्रम्। पञ्चकण्डिकाभिराश्विनीसंज्ञा इष्टका रेतःसिच्वेलायामुपदधाति प्रतीष्टकं नित्ये इति सूत्रार्थः।

---

* ध्रुवक्षितिः पट् सप्त ऋतुभिर्मुखीयपोहिं काश्चि द्वाग्नोद्यायुर्मेपट् कावाग्रस्थिदेकाग्नेभागोऽस्य कयाचतुष्कावष्टावेकत्रिंश० मत्।

आसीद् अधितिष्ठ। साधयामाधुम्। द्वितीयैकवचनस्थाने या। उख्यस्याग्नेः केतुं प्रज्ञानं प्रथममाद्यम् जु पाणासिवमाना। उख्यस्याग्नेः प्रथमंप्रज्ञानम् इयमेवप्रथमाश्चिति स्तस्याश्चोपरिष्टान्निधीयते तस्मादेवमुच्यते। उत्तरं यजुः। किञ्च अश्विनौचाध्वर्यू सादयताम् इह एतः सिग्वेलायाम् त्वान्त्वाम्। केचिच्चतुर्थमेतं पादं वर्णयन्ति विष्टभञ्च॥ १॥ कुलायिनी। कुलायं

य्यूँसांदयतामिहत्वां॥ १॥ कुलायिनीघृतवंती॥ कुलायिनीघृतवं तीपुरंन्धिःस्योनेसीदसदंनेपृथिव्याः॥ अभित्वांरुद्राव्वसंवोगृणन्तिव माब्रह्मपीपिहिसौभंगायाश्विनांध्वर्यूसांदयतामिहत्वां॥ २॥

गृहं तदाकाराकुलायिनी। साहिएतः सिग्वेलायामिष्टकाभिरुपहिताभिर्गृहाकाराभवति। एतवतोभविष्यतायोगेन। इहदिवमोर्हीरादयाआकृतयः शोध्यन्ते। पुरंधिः। बहूहि इष्टकाजातमियंधारयतिचितिसंबद्धम्। यात्वमित्थंभूतातांत्वांब्रूमः। स्योने सीदसदने पृथिव्याः। सुखरूपे उन्नविशस्थाने पृथिव्याः किञ्च। अभित्वा। अभिगृणन्तु त्वांरुद्रादयः। किञ्च। इमां। इमा-

निम्नाणि पीपिहि आप्यायस्व। सौभगायमहते ऐश्वर्याय। अश्विने तिव्याख्यातम् ॥ २ ॥ स्वैर्दक्षैः। स्वैर्वीर्यैः। दक्षपिता वीर्यस्यपालयिवीसती इहद्वितीयायांचितौसीद अवस्थानं-कुरु। दक्षशब्दइहवीर्यवचनः। प्रयोजनमाह। देवानांसुम्ने सुखाय। कथंननाम देवाः सुखंप्राप्नुयुरिति। बृहतेरणाय। महतेचरमणीयाय। यज्ञक्रतवे। किञ्च। पितेवैधिसूनवे।

स्वैर्दक्षैः॥ स्वैर्दक्षैर्दक्षपितेहसीदद्देवानां सुम्नेबृहतेरणाय॥ पितेवैधिसूनवऽआसुशेवास्वावेशातन्वासंविशस्वाश्विनाध्वर्यूसादयतामिहत्वा॥ ३॥ पृथिव्याःपुरीषम्॥ पृथिव्याःपुरीषमस्यप्सोनामताम्त्वाविश्वेऽअभिगृणन्तुदेवाः॥ स्तोमपृष्ठाघृतवतीहसीदप्र

पिताइवमत्पुत्राय। आसुशेवा। मर्यादयासाधु सुखयित्री। किञ्च स्वावेशा। स्वावेशेतिविभक्तिव्यत्ययः। स्वावेशया। तन्वाआत्मनासंविशस्व। अवस्थानं कुरु। अश्विनाध्वर्यू। उक्तार्थः॥ ३॥ पृथिव्याः पुरीषम्। यात्वं पृथिव्याः प्रथमायाश्चितेः पुरीषमिवासि। पृथिवीवैप्रथमाचितिः तस्या-

एतत्तृतीयमिव य द्वितीयेतिश्रुतिः। अप्सोनाम रसोनाम। अप्स इति रसपर्य्यायंदर्शयति। अपः र-
नोतीत्यप्सः। अपांहिरसोगुणः। तस्यवा एतस्ययजुषोरसएवोपनिषदित्येतच्छ्रुतिर्दर्शयति। तां-
त्वामुपधीयमानां विश्वेदेवाअभिगृणन्तु, अभिष्टुवन्तु। त्वमपिचस्तोमपृष्ठाघृतवतीचद्दृहसीदादिती-
यस्यांचितौ। यांस्तोमस्यान्तःसमानोभवति तैरेवास्तोमपृष्ठाघृतवतीचवसोर्धारादिभिर्होमैः।

जावेदस्मैद्रविणायंजस्वान्प्रश्रवनाद्ध्वत्र्यूँसादयतामिहत्वा॥४॥ अदि-
त्यास्त्वा॥ पृष्ठेसादयाम्यन्तरिक्षस्यधर्त्रीं विष्टम्भनीन्दिशामधि-
पत्नीम्भुवनानाम्॥ ऊर्म्मिर्द्रप्सोऽअपामसिविश्वकर्म्मातऽऋषि-

ततः। प्रजावद्स्मै द्रविणायजस्व। प्रजासंयुक्तानि अस्मभ्यंद्रविणानिदेहि। यजतिर्दानार्थः।
शेषमुक्तम्॥ ४॥ आदित्यास्त्वा। यात्वम् ऊर्मिः कल्लोल राशिः द्रप्सः रसः अपामसि।
यस्याश्चतेतव विश्वकर्मा प्रजापति ऋषिर्द्रष्टा। तान्त्वाम् अदित्याः पृथिव्याः पृष्ठे प्रथमायाश्चिते-
रुपरिसादयामि। कथंभूतामित्यत आह। अन्तरिक्षलोकस्य धारयित्रीम् विष्टम्भनीं संस्तंभनीम्

अन्तरिक्षस्यैव । दिशामधिपत्नीम् । दिशामीशिनीम् भूतजातानांच । शेषंसमानोदर्कम् ॥ ५ ॥

रुग्भिश्चनांद्द्रव्यैसांदयतामिहत्वा ॥ ५ ॥ शुक्रश्च ॥ शुक्रश्चशुचि॑श्चग्रैष्मावृतूऽअग्नेरन्तःश्लेषोसिकल्पेतान्द्यावांपृथिवीकल्पन्तामापऽओषधयःकल्पन्तामग्नयःपृथङ्ममज्यैष्ठ्यायसव्रताः ॥ येऽअग्नयःसमनसोन्तराद्यावापृथिवीऽइमे ॥ ग्रैष्मावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ ६ ॥ [ ६ ] सजूर्ऋतुभिः ॥ सजूर्विधाभिःसजूर्देवैःसजूर्देवैर्व्वै

ऋतव्यउपदधाति । (१) शुक्रश्चशुचिश्च व्याख्यातम् ॥ ६ ॥ वैश्वदेवीरुपदधाति । विश्वेषान्देवाना-

(१) का० शुक्रश्च शुचिश्चेतामृतव्ये पूर्वयोरुपरि । प्रथमचितुरपचितयोर्ऋतव्ययोरुपरि द्वे ऋतव्ये पद्ये प्राग्लक्षणे अनूकमभित उदक्षु च उपदधाति , शुक्रश्च शुचिश्चेति प्रतीकमुपधाय । ग्रैष्मावृतू इति मन्त्रशेषो द्वे अप्यालभ्य पठ्य इति सूत्रार्थः ।

मोपंम्। (१)सजूर्ऋतुभिः। यथा समानजोषणः ऋतुभिः प्रजापतिर्भूत्वाइष्टकाउपहितवान्। १४ऋ०
यथाच समानजोषणः विधाभिः। आपोवैविधाः। अद्भिर्हीदंसर्वंविहितम्। यथाच समान-

योनाधैरग्नयेंत्वावैश्श्वानरायाश्श्विनाद्ध्वर्य्युंसांदयतामिहत्वांसजूर्ऋतुभिं÷ सजूर्व्विधाभिं ÷ सजूर्व्वसुंभिःसजूर्द्देवैर्व्वयोनाधैरग्नयेंत्वावैश्श्वानरायाश्श्विनाद्ध्वर्य्युंसांदयतामिहत्वांसजूर्ऋतुभिं÷ सजूर्व्विधाभिं÷सजूरुद्रैः सजूर्द्देवैर्व्वयोनाधैरग्नयेंत्वावैश्श्वानरायाश्श्विनाद्ध्वर्य्युंसांदयतामिहत्वांसजूर्ऋतुभिं÷सजूर्व्विधाभिं÷सजूरांदित्यैः सजूर्द्देवैर्व्वयोनाधैरग्नयेंत्वावैश्श्वानरायाश्श्विनाद्ध्वर्य्युंसांदयतामिहत्वां

जोषणोदेवैः। यथाच समानजोषणः देवैर्वयोनाधैः। प्राणावैदेवावयोनाधाः। प्राणैर्हीदं-

(१) का० वसवदेवो सजूर्ऋतुभिरिति प्रतिमन्त्रम्। पञ्चमन्त्रे गत्त्व वैश्वदेवीसञ्ज्ञा दृष्टका पूर्वादिपूर्वदधातीतार्थः।

सर्वं युनं नद्धम् अथोछन्दांसि वैदेवानयोनाधाः। छन्दोभिर्हीदं सर्वं मद्यानं नद्धम। एवमहमपि एताभिर्देवताभिः समानप्रीतिर्भूत्वा उपदधामि। अग्नयेवैश्वानरायत्त्वाम्। संवत्सरोवा अग्नि-र्वैश्वानरः। अश्विनौच अध्वर्यू सादयतामिहत्त्वाम्। एवमुत्तरेष्वपिमन्त्रेषु वसुरुद्रादित्यविश्वेदेवा

# सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वैर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा ॥ ७ ॥ प्राणम्मे पाह्यपानम्मे पाहि व्यानम्मे पाहि चक्षुर्म्मऽ उर्व्या विभाहि श्रोत्रम्मे श्लोकय ॥ अपः पिन्वौषधीर्ज्जिन्व द्विपादव चतुष्पात्पाहि दिवो वृ

याज्या.॥७॥प्राणभृत उपदधाति। (१)प्राणमेपाहि। गोपाय। अपानंमेपाहि। व्यानंमेपाहि चक्षु-र्मेउर्व्याविभाहि। विभावय। श्रोत्रंमेमश्लोकय। श्लोकइतिवाग्नामसुपठितम्। श्लोकपाहि

(१) का॰ प्राणभृत प्राणं महति। पञ्चयजुर्भिः प्राणभृत्पञ्चका पूर्वादिषूपदधाति १७।८।२०। पच वायुदेवतानि यजूंषि। प्राणो वायुर्वायुमेवास्मिन् तद्दधातीति श्रुते।

योलं कुरु। अपस्याउपदधाति। अपः पिन्व। पिन्वतिः सेचनार्थः। ओषधीर्जिन्व। जिन्वतिः प्रीतिकर्मा। द्विपादव। द्विपादमितिविभक्तिव्यत्ययः। अवगोपाय। चतुष्पात्पाहि। चतुष्पादं-गोपाय। दिवोवृष्टिमेरय। द्युलोकात्‌वृष्टिम् आईरय। आगमय॥ ८॥ वयस्या उपदधाति।

ष्टिमेरय ॥ ८ ॥ [ २ ] मूर्द्धाव्वयंः प्रजापतिश्छन्दः क्षत्रंव्वयोमयन्दञ्छन्दोव्विष्टम्भोव्वयोधिपतिश्छन्दोव्विश्वकर्म्मा व्वयः परमेष्ठीच्छन्दोवस्तोव्वयोव्विवलञ्छन्दोव्वृष्णिर्व्वयोव्विशालञ्छन्द ६ पुरुषोव्वयस्तन्द्रञ्छन्दोव्व्याघ्रोव्वयोनाधृष्टञ्छन्दः सिᳫ होव्वयञ्छदिश्छ

अत्रयुत्युक्तं निदानम्। प्रजापतेर्विस्रस्ता तपश्चउत्क्रामन् छन्दांसिभूत्वा तान्‌गायत्रीभूत्वा वयसाभोत्प्रजापतिः। (१) मूर्द्धावयः प्रजापतिश्छन्दः चतुर्भिर्मन्त्रैः गायत्रीरूपः प्रजापतिः कल्प्यते।

(१) का० वयस्याः पंच पंचानूकान्तेषु मूर्द्धा वय इति प्रतिमन्त्रं चतस्र पुरस्तात्। दक्षिणोत्तरपश्चिमेष्वनूकान्तेषु पंच पंच पूर्वं तुचतस्रो वयस्यासञ्ज्ञका उपदधातीत्येकोनविंशतिमन्त्रैरित्यर्थः।

महांप्रजापतिः प्राधान्यात्। वयः शरीरावस्था। प्रजापतिः स्वयमेवछन्दः। चत्रं वयः। प्रजापतिर्वै चत्रमयोभवत्। मयन्दच्छन्दः अनिरुक्तत्वात्प्रजापतिः। मयंसुखं ददातीतिमयन्दः। विष्टम्भोवयः। प्रजापतिर्विष्टम्भः। सहीदंसर्वंविष्टभ्नोति। अधिपतिश्छन्दः। प्रजापतिर्वा अधिपतिः। विश्वकर्मावयः। प्रजापतिर्वै विश्वकर्मा। परमेष्ठीछन्दः। आपोवै प्रजापतिपरमेष्ठी।

न्दः॑पष्ठवाड्वयो॑बृहती॒च्छन्द॑ऽउ॒क्षा व्वयः॑ क॒कुप्छन्द॑ऽऋष॒भो व्वयः॑स॒तोबृ॑हती॒च्छन्दो॑ऽन॒ड्वान्व्वयः॑ ॥ ९ ॥ अ॒न॒ड्वान्व्वयः॑ ॥ प॒ङ्क्तिश्छन्दो॑धे॒नुर्व्वयो॒ जग॑ती॒च्छन्द॒स्त्र्यवि॒र्व्वय॑स्त्रि॒ष्टुप्छन्दो॑दित्य॒वाड्वयो॑ वि॒राट्छ

अपमष्टात्रयस्त्रो गायत्रीरूपः प्रजापतिः पञ्चदशवक्ष्यमाणान्पशून्गृह्णाति। वयसा वयोवस्थया जरया। असाज्जोर्णं पशुं वयसाप्त इतिश्रुतिः। बस्तोवयो विवलच्छन्दः। बस्तः पशुः त्रियलंछन्दोरूपमाश्रित्यो दक्रामत् तंप्रजापतिर्गायत्रीरूपोवयसाप्नोत् एकपदावै विवलंछन्दः तद्विविधं वरमुत्कृष्टम्। पुरुषसंबन्धिहितच्छन्दः। एवमुत्तरेष्वपि मन्त्रेषुयोज्यम् दृष्णिर्वै-

योविशालं छन्दः। वृष्णिमेषं वयमाविवत्तं विशालं द्विपदाछन्दआप्नोति। पुरुषोवयस्तन्द्रं-
छन्दः। तन्द्रंछन्दः पंक्तिः। व्याघ्रोवयोनाधृष्टंछन्दः विराड्वा। अनाधृष्टं छन्दः। सिंहोवयः 
छदिश् छन्दः। अतिछन्दावैछदिः छन्दः अथातोनिरुक्तानिवपञ्चन्निरुक्तानि छन्दांस्यभिदधाति।
पष्ठवाड्वय इत्यादिदश निगदव्याख्याता : ॥ ९ ॥ १० ॥ तृतीयांचिति मिन्द्राग्नीविश्वकर्मा नाप-

न्टः पष्ठवाड्वयोगायत्रीच्छन्दस्त्रिवत्सोवयऽउष्णिक्छन्दस्तुर्य्यवा
वाड्वयोनुष्टुप्छन्दोलोकन्ताऽइन्द्रम् ॥ १० ॥ (२] इन्द्राग्नीऽअ
व्व्यथमानाम् ॥ इन्द्राग्नीऽअव्व्यथमानामिष्टकान्दृंहतंयुवम् ॥

यत्। तत्नम्स्वयमातृण्णा प्रथमा। (१) इन्द्राग्नी अव्यथमानाम्। अनुष्टुप्। पूर्वार्द्धं च ऐन्द्राग्न-
उत्तर: स्वयमातृण्णायाः। तत्रोत्तरार्द्धं चं: पूर्वंव्याख्यायते। तत्रविबाधत इतिपुरुषव्यत्ययः।
येयंद्यौनद्यावापृथिवी अन्तरिक्षञ्च विबाधते अभिभवति। तामिन्द्राग्नीअव्यथमानाम् अचल-

(१) पा० तृतीयायाए स्वयमातृण्णामीन्द्राग्नी इति मध्ये। तृतीयायां चितावात्मनो मध्ये स्वयमातृण्णामुपदधाति।

न्तोमिष्टकां ह॑४ तांहृढीकुरु तम् युवंयुत्राम् ॥ ११ ॥ विश्वकर्मात्त्वा प्रजापतिः सादयत्विद्यादि

पृष्ठेनद्यावांपृथिवीऽअन्तरिक्षम्विबाधसे ॥ ११ ॥ विश्वकर्म्मात्वा ॥

सादयत्वन्तरिक्षस्यपृष्ठे व्यचस्वतीम्प्रथस्वतीमन्तरिक्षंयच्छान्तरिक्ष

दृ॑ᳫंहान्तरिक्षम्माहि॑ᳫंसीः॥ विश्वस्मैप्राणायापानायव्यानायोदा

नायप्रतिष्ठायैचरित्राय ॥ वायुष्ट्वाभिपातुमह्यास्वस्त्याछर्दिषाश

न्तमेनतयादेवतयाङ्गिरस्वद्ध्रुवासीद ॥ १२ ॥ शतम् ७०० ॥ राज्ञ्य

सि॥ राज्ञ्यसिप्राचीदिग्विराडसिदक्षिणादिक्सम्राडसिप्रतीचीदि

क्स्वराडस्युदीचीदिगधिपत्न्यासिबृहतीदिक् ॥१३॥ विश्वकर्म्मात्वा ॥

पूर्ववद्याख्येयम् अन्तरिक्षस्य पृष्ठे वायुष्ट्वा इति विशेषः ॥ १२ ॥ शतम् ७०० पंचदिश्या उपदधाति ।

वायुरपश्यत् (१) राज्ञ्यसीति प्रतिमन्त्रणम् ॥ १३ ॥ विश्वज्योतिष मुपदधाति । (२)विश्वकर्मा त्वा ।

सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीम् ॥ विश्वस्मै प्राणायापा
नाय व्यानाय विश्वञ्ज्योतिर्यच्छ ॥ वायुष्टेऽधिपतिस्तया देवतयाङ्गि
रस्वद् ध्रुवा सीद ॥ १४ ॥ नभश्च ॥ नभस्यश्च वार्षिकावृतूऽअग्नेर
न्तःश्लेषोऽसि कल्पेतान्द्यावापृथिवी कल्पन्तामापऽओषधयः कल्प
न्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः ॥ येऽअग्नयः समनसोऽन्तरा
द्यावापृथिवीऽइमे ॥ वार्षिकावृतूऽअभिकल्पमानाऽइन्द्रमिव देवाऽ

(१) का० पनूकेषु पञ्च दिश्या वैश्वदेवीवद्राज्ञ्यसीति प्रतिमन्त्रम्। वैश्वदेवीवदिति प्रतिदिशं रेत सिग्वेलायामनूकेषु पंच दिश्य सञ्ज्ञका इष्टका उपदधाति पंचमीं दक्षिणायोत्तरेणेति सूत्रार्थः ।

(२) का० विश्वकर्मेति विश्वज्योतिषमुपरि पूर्वस्याः । प्रथमोपहितायाः विश्वज्योतिष उपरि विश्वज्योतिषमिष्टकामुपदधाति।

वायुदेवत्या ॥ १४ ॥ (१) ऋतव्या । नभस्वदेवत्या ॥ १५ ॥ १६ ॥ दशप्राणभृतः । आयुर्मेपाहि

अभिसंविंशन्तुतयांदेवतंयाङ्गिरस्वध्रुवेसीदतम् ॥ १५ ॥ इषश्चोर्ज्जं ॥
इषश्चोर्ज्जश्चशारदावृतूऽअग्नेरन्तःश्लेषोसिकल्पेतान्द्यावापृथि
वीकल्पन्तामापऽओषधयःकल्पन्तामग्नयःपृथङ्ममज्यैष्ठ्यायस
व्रताः ॥ येऽअग्नयःसमनसोन्तराद्यावापृथिवीऽइमे ॥ शारदावृतूऽ
अभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसंविंशन्तुतयांदेवतंयाङ्गिरस्व
ध्रुवेसीदतम् ॥ १६ ॥ [ ६ ] आयुर्म्मे ॥ पाहिप्प्राणम्मेपाह्यपानम्मेपा
हिव्यानम्मेपाहिचक्षुर्म्मेपाहिश्श्रोत्रम्मेपाहिव्वाचम्मेपिन्वमनोमे

(१) का० ऋतव्ये नभश्च नभस्यश्चेति । पूर्वं तव्ययोरुपरि द्वे ऋतव्येउपदधाति । ऋतुदेवतामुत्कृतिच्छन्दस्कं यजुः । नभः श्रावणः नभस्यः भाद्रपदः । शेषं व्याख्यातम् ।

गोपाय। वाचमेपिन्व। तयोलक्षणांवाचं मेमम पिन्वसिंच। कामैः पूरय। मनोमेजिन्व।

यु० जिन्वतिः प्रीतिकर्मा। ज्योतिर्मेयच्छ देहि। सुखबोध्य मन्यत् ॥ १७ ॥ षट्त्रिंशच्छ- १४अ०

य० न्दस्या। उपदधाति। (१) माछन्दः। अयंलोकोमितइवमा छन्दः छादनात्। प्रमाछन्दः।

मं० जिन्वात्क्मानंम्मेपाहिज्ज्योतिर्म्मेयच्छ ॥१७॥ माच्छन्दः॥ प्प्रमा

३२० च्छन्दःप्प्रतिमाच्छन्दोऽअस्त्रीवयश्छन्दःपङ्क्तिश्छन्दऽउष्णिक्छन्दोबृ

उ० हतीच्छन्दोनुष्टुप्छन्दोव्विराटछन्दोगायत्रीच्छन्दस्त्रिष्टुप्छन्दोजग

भा० तीच्छन्दःपृथिवीच्छन्दः ॥ १८ ॥ पृथिवीच्छन्दोन्तरिक्षञ्छन्दोद्यौ

अन्तरिक्षलोकोवैप्रमा। अन्तरिक्षलोकः अस्माल्लोकात्प्रमित इवदृश्यते। प्रतिमाच्छन्दः।

द्यौः प्रतिमा साह्यन्तरिक्षलोकेप्रतिमिता। अस्त्रीवयः छन्दः अन्नमस्त्रीवयः। यदेभ्योलोकेभ्य शिवम्

(१) का० छन्दस्याः द्वादशद्वादशाध्ययेषु मा च्छन्द इति। अध्ययेषु पञ्चपुच्छात्मसन्धिषु विषु द्वादशद्वादश छन्दस्यासञ्ज्ञा

इष्टका उपदधातीति सूत्रार्थः। ३२०

आहुतिपरिणामभूतमन्नं सवतितदसमय:। परतोनिरुक्तानि छन्दांसिपंक्तिप्रभृतीनि ॥ १८ ॥ (१) पृथिवीछन्दइति। यान्येतद्देवत्यानि छन्दांसितान्युपदधाति। छादयन्तीतिछन्दांसुच्यन्ते

म्छन्दः समाश्छन्दोनक्षत्राणिच्छन्दोवाक्छन्दोमनश्छन्दः कृषिश्छन्दोहिरण्यञ्छन्दोगौश्छन्दोजाच्छन्दोश्वश्छन्दः ॥१९॥ अग्निर्देवता ॥ अग्निर्देवतावातोदेवतासूर्य्योदेवताचन्द्रमादेवतावसवोदेवतारुद्रादेवतादित्यादेवतामरुतोदेवताविश्वेदेवादेवताबृहस्पतिर्देवतेन्द्रोदेवतावरुणोदेवता ॥ २० ॥ मूर्द्धासि ॥ मूर्द्धासिराड्ध्रुवासि

॥ १९ ॥ (२) अग्निर्देवता वातोदेवता ह्येतावैछन्दांसिता अपिछादयन्ति ॥ २० ॥ चतुर्दश

(१) का० पृथिव्यादिदेवत्यानि। यानि छन्दांसि तद्रूपाणि। समा संवत्सरः। स्पष्टमन्यत्।

(२) का० इष्टके त्वमग्न्यादिदेवतारूपासि तामुपदधामीति सर्वत्र शेषः। अग्न्यादीनां देवतात्वं प्रसिद्धम्। अग्निर्देवता वातोदेवतेत्येतावै देवताश्छन्दांसि तान्येवैतदुपदधातीति श्रुतेः।

वालखिल्या उपदधाति द्वाभ्यामनुष्टुप्परोष्णिग्भ्याम् (१) मूर्द्धासिराट् । मूर्द्धासिशिरोभूतासि राट् । राजृदीप्तौदीप्ताचासि । ध्रुवास्थिरासि । धरुणाचधारयित्रीच धर्त्र्यसिधारयित्रीअसि । धरणी । धरणीचविधरणीच । मर्यादाभूताच । एवन्त्रिलोकसंस्तवः तिसृणामिष्टकानाम् । आयुषेत्त्वा वर्च-

धुरुणाधुर्त्र्यसिधरुणी॥ आयुषेत्त्वाव्वर्च्चसेत्त्वाकृष्ष्यैत्वाक्षेमायत्वा॥२१॥ यन्त्रीराड्यन्त्र्यसियमनीध्रुवासिधरित्री॥ इषेत्त्वोर्जेत्त्वारय्यैत्वापोषाय त्वालोकन्ताऽइन्द्रम् ॥ २२ ॥ [ ६ ] आशुस्त्रिवृत् ॥ आशुस्त्रिवृद्धा

सेत्त्वा कृष्यैत्वाक्षेमायत्वा उपदधामीतिशेषः । एतासांचतसृणांवालखिल्या नां मन्त्रस्तवः ॥ २१ ॥ परतोपि तिसृणां द्युलोकप्रभृतिलोकसंस्तवः । यंत्रीराट् । यमनीदीप्ताचासि । यंत्रीअसि । यमनीधुराअसि । धरित्री । पशुसंस्तवः पूर्ववत् । इषेत्त्वोर्जेत्त्वा रय्यैत्त्वापोषायत्वा (२) लोकन्ता-

(१) का० वालखिल्या मध्ये पुरस्तात्प्राणभृद्भ्यो यापरा द्वादशभ्याऽपरास्तु मूर्द्धासि राडिति प्रतिमन्त्रम् । प्रागुत्तरप्राणभृद्भ्य पूर्वा अपरा वा मध्ये वालखिल्यासप्त्या इष्टका उपदधाति मूर्द्धासीत्यादिसप्तमन्त्रै ।

(२) का० उत्तरयोर्णरधि लोकम्पृणा पूर्ववत् । उत्तरयोर्णेरारभ्य प्रथमचितिवदेव लोकम्पृणा उपदधाति । तत. पुरोषनिवा पोपस्थाने ।

इन्द्रमिति व्याख्यातम् ॥ २२ ॥ चतुर्थीञ्चितिस्त्यपयो पश्यन् । (१) आशुस्त्रिवृ दित्यष्टादशे ष्टकाः प्रतिमन्त्र मुपदधाति । स्तोमसंख्योपलक्षितैर्मन्त्रैः स्तोमानुपदधातीति श्रुतिः । प्रकटार्थामन्त्राः श्रुत्याच व्याख्याताः तथापि किञ्चित्किंचिदुच्यते । आशुः त्रिवृत् यएवत्रिवृत् स्तोमः सोनेन-मन्त्रेणोक्तः इत्येकं व्याख्यानम् । अथो वायुर्वा आशुः शीघ्रः त्रिवृत् त्रिलोकसंचारी । एवमु-

न्तःपञ्चदशोव्व्योमासप्तदशोधरुणऽएकविंशःप्रतूर्तिरष्टादशस्तपो नवदशोऽभीवर्तःसविंशोवर्चोद्वाविंशःसम्भरणस्त्रयोविंशोयोनि श्चतुर्विंशोगर्भाःपञ्चविंशऽओजस्त्रिणवःक्रतुरेकत्रिंशःप्र

परितनान्यपि व्याख्येयानि । भान्तः पञ्चदशः । चन्द्रमाउच्यते । सहिभातिच पञ्चदशा-हान्या पूर्यतेच अपक्षीयतेच । व्योमासप्तदशः । संवत्सरउक्तः । सहिविविध मवतिप्राणिनः सप्तदशावयवश्च । धरुणएकविंशः । आदित्यः स्तोमो वोच्यते । प्रतिष्ठावैधरुणः प्रतिष्ठैक-

(१) इतितृतीयाचिति का० उत्तरा पूर्वयोराशुस्त्रिवृदिति । पूर्वानूक्तान्तविहितयोर्दक्षिणोत्तरयोर्मध्ये उत्तरां जघ्नामावीमुन्द-ष्ठ,ख उपदधातीति सूत्रार्थः ।

विंशः स्तोमः। आदित्यावामतिवा। मासादिभिः एकविंशात्रयवञ्च। परतः संवत्सरस्व- 
रूपाणि व्याख्यानि प्रतूर्तिः संवत्सरः। सहिसर्वाणिभूतानि प्रतिरतिप्रवर्द्धयति। तपः।
संवत्सरोहि सर्वाणिभूतानि तपतिशीतोष्णवर्षैः। अभीवर्त्तः। संवत्सरोहि सर्वाणिभूतान्य-
भिवर्तते। तेनहि अभिवर्त्तेन ऋतुलिङ्गानिभूतेषुदृश्यन्ते। वर्चः। संवत्सरोहि सर्वेषाम्भू-
तानां वर्चस्वितम इतिश्रुति मुवन्तीमतुलोपंदर्शयति वर्चस्वीमहभाग्यवान्। संभरणः संवत्स-
रोहिसर्वाणि भूतानिसंभरतिउत्पादयति। संहरतिवाविनाशयति। योनिः स्थानम्। गर्भः।

# तिष्ठाचंयस्त्रिꣳशोब्ध्रुध्नस्यंविष्टुपंचतुस्त्रिꣳशोनाकःषट्त्रिꣳशोविं

संवत्सरः त्रयोदशमासइहोच्यते। सचगर्भोभूत्वा ऋतून्प्रविशति। कथंपुन स्त्रयोदशमासः
ऋतून्प्रविशति। उच्यते। एकोनपञ्चाशाहोरात्रै श्चन्द्रोद्वादशराशीन् विभ्रमति स चान्द्र ऋतुर्भ-
वति। आदित्यस्त्वेकपञ्चासदिवसैः राशिद्वयमतिक्रामति ससौरऋतुर्भवति। तैश्चसौरैर्ऋतुभिः
संवत्सरोभवति। ततश्चैकस्मि न्नृतौसौर चान्द्रोऋतुर्भवतः तिथिद्वयंच। एवंषड्ऋतुषु द्वाद- 
शतिथयः प्रविशंति अपरेषुषट्सुअपरा द्वादशअपरेषुषट्तिथयः। सएषोद्वंद्वतीयेषु संवत्स- 

रेपुचान्द्रोमासः प्रविशति। सएवाधिमासः सएवत्रयोदशोमासः सौगान्द्र न्द्राभ्यांतिथिभ्यां प्रविशति। ओजः। अत्रापिमतुब्लोपः। ओजस्वीसंवत्सरः ऋतुः। संवत्सरोहि सर्वाणि भूतानि करोतिइतिश्रुतिः। प्रतिष्ठाधिष्ठानम्। ब्रध्नस्यविष्टपम्। स्वाराज्यं वैब्रध्नस्य विष्टपम्

वर्त्तोष्टाचत्वारिꣳ शोधर्त्रञ्चतुष्टोमः॥ २३॥ [१] अग्नेर्भागः॥ अग्नेर्भागोसिदीक्षायाऽआधिपत्यम्ब्रह्मस्पृतन्त्रिवृत्स्तोमऽ इन्द्रस्य भागोसिविष्णोराधिपत्यङ्क्षत्रꣳ स्पृतम्पञ्चदशस्तोमोनृचक्षसाम्भागो सिधातुराधिपत्यञ्जनित्रꣳ स्पृतꣳसप्तदशस्तोमोमित्रस्यभागोसिव

स्वाराज्यं स्वतन्त्रता। नाकः काम्यतइतिकंसुखम् तद्विपरीतमकं दुःखम नास्त्यकमसुखम-स्मिन्निति नाकः। विवर्त्तः। विविधंवर्त्तन्ते तत्रगतानि भूतानीति विवर्त्तं पिटयाणः। धर्त्रं धारणम्। चतुष्टोमः चतुरुत्तरः स्तोमः चतुष्टोम उत्तरपदलोपीसमासः॥ २३॥ स्पृतं-

शु० य० सं० २२३ उ० भा० 

दशइष्टकाउपदधाति दशभिर्मन्त्रैः (१) अग्नेर्भागोसीत्यादिभिः। तत्रार्थवादः। प्रजापतिर्गर्भसे-
केभ्यो देवेभ्य आधिपत्यमेकेभ्यः कल्पयित्वा ब्रह्मप्रसूतानि भूतानि पाप्मनोव्यष्टभत् त्रिष्टदा-

स्यंगास्याधिंपत्यन्दिवोवृष्टिर्व्वातंस्पृतऽएकविंᳪशस्तोमोव्वसूनाम्भागः
॥२४॥ व्वसूंनाम्भागोसिरुद्राणामाधिंपत्युञ्चतुंष्पात्स्पृतञ्चंतुर्विं
ᳪशस्तोमंऽआदित्यानाम्भागोसिमरुतामाधिंपत्यङ्गर्भास्पृताःपंञ्च
विंᳪशस्तोमोदिंत्यैभागोसिपूष्णऽआधिंपत्यमोजंस्पृतन्त्रिंणवस्तो

दिभिः स्तोमैः। इष्टकोच्यते। यात्वाम् अग्नेः भागोसि। यस्यांच त्वयि दीक्षाया आधि-
पत्य ज्ञातम् ययाच त्वया ब्रह्मब्राह्मण्यं स्पृतंपाप्मनोमृत्यो। रपनीतम्। त्रिवृत्स्तोमः त्रिवृ-
त्स्तोमेनेति विभक्तिव्यत्ययः। तान्त्वामुपदधामीतिशेषः। यद्वा। यात्वमग्ने भागोसि यस्यास्त्वत-

(१) का० दक्षिणा पूर्वयोरग्नेर्भाग इति। पूर्वानूकाश्ते त्रिष्टितयोर्जङ्घामात्रोमध्ये दक्षिणामुपदधात्युदग्य उत्तरा पूर्वमुप
हिता॥ दश यजूंषि चतुर्भिस्त्र्युमोहिन्युपधान षड भि षदपद्योपधान दशेष्टकाः सप्तसप्ताय।

वत्रिवृत्स्तोम॰ यस्यांत्त्वयिदीत्ताया आधिपत्याम् ययात्त्वया ब्रह्मक्षत्रामौचितम् तांत्वामुपद-धामीतिशेषः। एवमन्यदपिव्याख्येयम्। जनित्रम्। आग्नेयेणजायत इतिजनित्रम् ॥ २४ ॥ २५ ॥

मोदेवस्यसवितुर्भागोसिबृहस्पतेराधिपत्यꣳसमीचीर्दिशस्पृताश्चतुष्टोमस्तोमोयवानाम्भागः ॥२५॥ यवानाम्भागोस्ययवानामाधिपत्यम्प्रजास्पृताश्चतुश्चत्वारिꣳशस्तोमऋभूणाम्भागोसिविश्वेषान्देवानामाधिपत्यम्भूतꣳस्पृतन्त्रयस्त्रिꣳशस्तोमः सहश्च॥२६॥ सहस्यश्च ॥ सहस्यश्चहैमन्तिकावृतूअग्नेरन्तःश्लेषोसिकल्पेतान्द्यावा

यवाः पूर्वपक्षाः अथवाअपरपक्षाः ॥ २६ ॥ (१) ऋतव्ये सहश्चसहस्यश्चेति ॥ २७। सृष्टीरुपदधाति

(१) का॰ ऋतव्ये सहश्च सहस्यश्चेति। अनुक्रमभितो द्वे पक्षे उपदधाति। ऋतुदेवत्य यजु। सहो मार्गशीर्ष सहस्य पौष एतौ हैमन्तिको हेमन्तावयवौ। शिष्टं पूर्ववत्तुल्यम्।

सप्तदशेष्टकाः सप्तदशभिर्मन्त्रैः । (१) एकयास्तुवते इत्यादिभिः तत्तन्निदानभूताश्रुतिः । एतद्वैप्रजापति

पृथिवीकल्पन्तामापऽओषधयुः कल्पन्तामुग्नयः पृथङ्ममुज्यैष्ठ्याय सव्रताः ॥ येऽअुग्नयुः समनसोन्तुरा द्यावापृथिवीऽइमे ॥ हैमन्तिकावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ २७ ॥ [ ४ ] एकयास्तुवत ॥ प्रजाऽअधीयन्तप्रजापतिरधिपतिरासीत्तिसृभिरस्तुवतब्रह्मासृज्यतब्रह्मणस्पतिरधिपतिरासीत्पञ्चभिरस्तुवतभूतान्यसृज्यन्तभूतानाम्पति

रित्युपक्रम्य तेवेकेनस्तोष्यामहइति । मयाचैव युष्माभिश्चेति तथेतरेप्राणैश्चैव प्रजापतिना ।

(१) का० रेत सिग्वेलायां च सप्तदश सर्वतो नव दक्षिणेनानूकं० स्तोरेकया स्तुवतेति प्रतिमन्त्रम् । सर्वासु दिक्षु रेत सिग्वेलायां सृष्टिसंज्ञा सप्तदशेष्टका उपदधाति तन्मध्ये प्रागनूकं दक्षिणेन नव अष्टावुत्तरेणेति सूत्रार्थः ।

यास्तुवतेति। एकया वाचा। अस्तुवत अस्तुतवान्। कः। सामर्थ्यात्प्रजापतिः। इदानीम्फल-

रधिपतिरासीत्सुप्तभिरस्तुवत सप्तऽऋषयोऽसृज्यन्त धाताधिपतिरा

सीन्नवभिरस्तुवत ॥२८॥ (१) नवभिरस्तुवत ॥ पितरोऽसृज्यन्तादि

तिरधिपत्न्यासीदेकादशभिरस्तुवतऽऋतवोऽसृज्यन्तार्त्तवाऽअधि

पतयऽआसँस्त्रयोदशभिरस्तुवत मासाऽअसृज्यन्त संवत्सरोधिपति

रासीत्पञ्चदशभिरस्तुवत क्षत्रमसृज्यतेन्द्रोधिपतिरासीत्सप्तदश

(१) नवभि सप्त भिर. प्राणौ द्वावध इति नवप्राणै प्रजापतिरस्तौत् तत पितर अग्निस्वात्तादय सृष्टा अदिति अत्र पिङ्ता प्रजापतिमक्षि सृष्टानां पितॄणामधिपत्नी स्वामित्वे नाधिकां पालयित्र्यासीत् नव वै प्राणा सप्त शीर्षन्नवाञ्चौ द्वौ तैरिति श्रुते।

माह। प्रजाअधीयन्त। या: गर्भीभूता: प्रजा: प्रजापते रासन् ता: प्रजापत्यर्थम् अस्याप्यन्त

भिंरस्तुवतग्ग्राम्म्याः पुशवोऽसृज्जान्तबृहस्प्पतिरधिंपतिरासीन्नवदुश

भिंरस्तुवत ॥२६॥ (१) नवदशभिंरस्तुवत ॥ शूद्रार्यावसृज्ज्येतामहो

रात्रेऽअधिंपत्नीऽआस्तामेकविंᳪशत्यास्तुवतैकशफाः पुशवोऽसृज्ज्य

न्तव्वरुणोधिंपतिरासीत्त्रयोविंᳪशत्यास्तुवतक्षुद्राः पुशवोऽसृज्ज्यन्त

पूषाधिंपतिरासीत्पञ्चविंᳪशत्त्यास्तुवतारण्याः पुशवोऽसृज्ज्यन्तव्वा

युरधिंपतिरासीत्सप्तविंᳪ शत्यास्तुवतद्यावांपृथिवीव्व्यैतांव्वसंवोरु

(१) नवदशभि: दश हस्ताङ्गुलय: ऊर्ध्वाधःस्थच्छिद्ररूपा नव प्राणास्तैरस्तौत्। तत: शूद्रार्यौ शूद्रवैश्यावसृज्येतां सृष्टौ। अर्यः स्वामिवैश्ययोः। अहोरात्रे तयोः स्वामित्वेनास्ताम्। दश हस्ता अङ्गुलयो नव प्राणा इति श्रुतेः।

स्थिताः । प्रजापतिरधिपतिरासीत् असांस्तुतौ । एवंषोडशानामिष्टकानां मन्त्राः एकव्या-

द्द्राऽआदित्याऽअनुव्यायँस्तऽएवाधिपतयऽआसन्नवविᳬंशत्यास्तुव

त ॥ ३० ॥ नवविᳬंशत्यास्तुवत ॥ वनस्पतयोसृज्ज्यन्तसोमोधि

पतिरासीदेकत्रिᳬंशतास्तुवतप्रजाऽअसृज्ज्यन्तयवाश्चायवाश्चा

धिपतयऽआसँस्त्रयस्त्रिᳬंशतास्तुवतभूतान्यशाम्म्यन्प्रजापतिःपर

मेष्ठ्यधिपतिरासील्लोकन्ताऽइन्द्रम् ॥ ३१ ॥ [ ४ ]

इतिसंहितायांचतुर्द्दशोऽध्यायः १४ ॥

ख्याना: ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥

इतिउवटकृतौ मन्त्रभाष्ये चतुर्दशोऽध्यायः १४ ॥

अग्ने जातान् पंचमीं चितिं परमेष्ठ्यपश्यत्। (१) तत्रादौ पंचासपत्ना उपधीयन्ते। तत्रादौ वि-
विष्टुभा वाग्नयौ पुरस्तादुपदधाति। (१) हे अग्ने जातानुत्पन्नान् प्रणुदप्रेरय नाशय अपुनरागम-

* अग्ग्नेजातान् ॥ * अग्ग्नेजातान्प्प्रणुदानःसपत्क्नान्प्प्रत्यजाता
न्नुदजातवेदः ॥ अधिनोब्रूहिसुमनाऽअहेडँस्तवस्यामशर्म्मँस्त्रिवरू

नाय। नः अस्माकं सपत्नान् समानपतित्वान् समानपतित्वदर्शिनः शत्रून्। प्रत्यजातान् नुद। प्रति-
कूलायप्रतिकूलायअजातान् अनुत्पन्नान् जनिष्यमाणान् नुद प्रेरय हे जातवेदः किञ्च। अधि-

(१) चतुर्दशेऽध्याये चितोयतृतीयचतुर्थ चितिमन्त्रा नुक्तापञ्चदशेपञ्चम चितिमन्त्रावाख्या.

(१) का० पञ्चम्यामसपत्नाश्विनीवदसपत्ना अग्ने जातानिति प्रतिमन्त्रम् १७। ११। १। २। पञ्चम्यां चितावाश्विनीवत्
असपत्नास्ता इष्टका अग्ने पूपदधाति अग्ने जातान् सहसा जातान् षड्शो चतुश्चत्वारिंशं अग्नेः पुरीषम् इति
पञ्चमन्त्रे प्रत्येकमिति सूत्रार्थः।

---

* अग्नेजातान्पञ्चरश्मिनामत्यायचतस्रो राधस्त्वपुर पचकावग्निमूर्द्धकोनविंशं॰ शयो नङ्क्षपयोष्टौतपयनवसप्तपचपष्टि।

* धारयामयोजाव सचस्व नुद सोपु जयतोरुष रच यज यच्छ मत्सथ पिपृत गायतातु येन नकारे इत्यनेनसत्वे ण
प्रणुदानस्य नकारपरेदीर्घोभवति प्रा० प्र० ३। सू० १०८।

नोब्रूहिसुमनाअहेडन्। एवंनिर्द्धारितेपु मपपुगृहीतेषुच तदत्तेपुअधिब्रूहि अधिवदउपदिश यज्ञसंबन्धिनीमितिकर्त्तव्यताम् नः अस्माकम् सुमनाः स्नेहानुबन्धमनाः अहेडन्। अक्रु-ध्यन्। तत्रचस्यामभवेम। शर्मन् शरणेआश्रयेवि वरूथे। निवरूथे। वरूथंगृहम् विगृ-हेचिपुरे। उक्तौ। द्विपदचतुष्पदधनधान्योद्भूतशक्तौ। यद्वा। विवरूथेयज्ञगृहेस्याम। त्रौणि-

थऽउद्गौ॥ १॥ सहंसाजातान्॥ सहंसाजातान्नप्रणुदानःसुपत्नान्प्रत्यजाताञ्जातवेदोनुदस्व॥ अधिनोब्रूहिसुमनस्यमानोव्वयंस्यामप्रणुदानःसुपत्नान्॥ २॥ षोडशीस्तोमः॥ षोडशीस्तोमऽ

ह्वियज्ञगृहाणिसदोहविर्द्धानाग्नीध्राणि। उक्तौ। उद्गतरि। अन्येषां यज्ञक्रतूनाम॥ १॥ सहसाजातान् वलेनोद्भूतशक्तीन्। प्रणायय अस्माकंसपत्नान्। यद्वा। सहसावलेस्वशक्त्या-उत्पन्नान् प्रेरय अस्मत्कुलान्। प्रत्यजाताञ्जातवेदोनुदस्व। प्रतिनुदस्वअजाताननुत्पन्नान् हेजातवेदः। किञ्च। अधिनोब्रूहि सुमनस्यमानः। अधिब्रूहि अधिवद नः अस्माकं सु-

मनस्समान: शोभनचित्त:। यथाचवयमेवभवाम तथाकुरु। भूयोभूयश्चप्रणुद न: अस्माकंसप-
त्नान् ॥ २ ॥ दक्षिणत:। षोडशीस्तोम:। यस्यास्तवषोडशीआदित्य: पञ्चदशकपालस्त्वन्-
भर्त्तास्तोमभृत: ओजोबलंचद्रविणंधनं तान्त्वासुपदधामि। उत्तरत:। चतुश्चत्वारिंश:। यस्या-

ओजोद्रविणञ्चतुश्चत्वारिᳪशस्तोमोवर्च्चोद्द्रविणम् ॥ अग्नेःपुरीषम् स्यप्सोनामतान्त्वाविश्वेऽअभिगृणन्तुदेवाः ॥ स्तोमंपृष्ठाघृतवती हसीदप्रजावदस्मेद्रविणायंजस्व ॥ ३ ॥ एवश्छन्दोवरिवश्छन्दःशं

स्त्वंचतुश्चत्वारिंश: त्रिष्टुप्त्र्याक्षरसम्मित: स्तोम: वर्च्चश्चद्रविणं तांत्वासुपदधामि। पञ्चमी।
अग्ने: पुरीषम् त्रिष्टुप्। यात्वमग्ने: पञ्चदशकपालरूपस्यपूरयित्री। व्याख्यातमन्यत् ॥ ३ ॥ (१)
चत्वारिंशद्विराज श्चत्वारिंशद्भि र्यजुर्भि रुपदधाति। एवश्छन्द:। अयंवैलोक एवश्छन्द:।

(१) का० विराजो दश दश प्रतिदिश पुरस्तात यममेवश्छन्द इति प्रतिदिश दशदश विराट्संज्ञा इष्टका उपदधाति तायत्वारि शत्पदा एवेति सूत्रार्थ:।

वरिवश्छन्दः अन्तरिक्षंवैवरिवश्छन्दः । शंभूश्छन्दः द्यौ वैशंभूश्छन्दः । परिभूश्छन्दः दिशो दै-
परिभूश्छन्दः । आच्छच्छन्दः । अन्नंवा आच्छच्छन्दः । मनश्छन्दः प्रजापतिर्वैमनश्छन्दः । व्यच-
श्छन्दः असौवा आदित्योव्यचश्छन्दः । सिन्धुश्छन्दः प्राणावैसिन्धुश्छन्दः । समुद्रश्छन्दः मनो-

म्भूश्छन्दः परिभूश्छन्दऽआच्छच्छन्दो मनश्छन्दो व्यचश्छन्दः सिन्धु
श्छन्दः समुद्रश्छन्दः सरिरञ्छन्दः ककुप्छन्दस्त्रिककुप्छन्दः काव्य
ञ्छन्दोऽअङ्कुपञ्छन्दोऽक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्दो विष्टारपङ्क्ति
श्छन्दः क्षुरोभ्रजश्छन्दऽआच्छच्छन्दः प्रच्छच्छन्दः ॥ ४ ॥ आच्छच्छ

वैसमुद्रश्छन्दः । सरिरञ्छन्दः वाग्वैसरिरञ्छन्दः । ककुप्छन्दः । प्राणोवककुप्छन्दः । त्रिककु-
प्छन्दः उदानोवैत्रिककुप्छन्दः । काव्यञ्छन्दः त्रयीवैकाव्यञ्छन्दः । अङ्कुपञ्छन्दः । आपोवा-
अङ्कुपञ्छन्दः । अक्षरपङ्क्तिश्छंदः असौवैलोकोऽक्षरपङ्क्तिश्छंदः । पदपङ्क्तिश्छंदः अयंवैलोकः पद-
पंक्तिश्छंदः । विष्टारपङ्क्तिश्छंदः दिशोवैविष्टारपङ्क्तिश्छंदः । क्षुरोभ्रजश्छंदः असौवा आदित्यः क्षुरो-

शु० य० सं० ३२८ ष० भा० १५ अ०

भजश्छन्दः ॥४॥ * आच्छन्दः प्रच्छन्दः अन्नं वा आच्छन्दोन्नं प्रच्छन्दः। संयच्छन्दः रात्रिर्वै संयच्छन्दः। वियच्छन्दः असौ वै लोको वियच्छन्दः। निकायश्छन्दः वायुर्वै निकायश्छन्दः। विवधश्छन्दः अन्तरिक्षं वै विवधश्छन्दः। गिरश्छन्दः अन्नं वै गिरश्छन्दः भज छन्दः अग्निर्वै भजश्छन्दः।

न्दः प्रच्छच्छन्दः॥ संयच्छन्दो वियच्छन्दो बृहच्छन्दो रथन्तरञ्छन्दो निकायश्छन्दो विवधश्छन्दो गिरश्छन्दो भ्रजश्छन्दः सꣳस्तुप्छन्दो नुष्टुप्छन्द ऽएवश्छन्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दो विष्पर्द्धाश्छन्दो विशालञ्छन्दश्छदिश्छन्दो दूरोहणञ्छन्दस्तन्द्रञ्छन्दो ऽ

सꣳस्तुच्छन्दो नुष्टुप्छन्द इति वाग्वै सꣳस्तुप्छन्दो वागनुष्टुप्छन्दः। एवश्छन्दः वरिवश्छन्द इति तस्योक्तो बन्धुः। यथाश्रुतिव्याख्यानम्। यास्कस्तु एवः अवनात्पृथिवीलोकः छन्दः छादनात्

* आच्छत् आच्छादयति शरीरमाच्छदनम्। प्रच्छत् प्रच्छादयतीति प्रच्छदनम्। अन्नं वा आच्छन्दोन्नं प्रच्छन्द इति श्रुतेः।

तान्यत्रासुपदधामि इतिव्याख्या धर्म्मप्रदर्शनम् ॥ ५ ॥ एकोनत्रिंशत्स्तोमभागानुपदधाति ।
(१) रश्मिनासत्यायसत्यं जिन्वेति । अत्र श्रुतिकृताव्याख्या । असुनादोजिन्व । अदोऽसुमैत्वा अ-

अङ्काङ्कञ्छन्दः ॥५॥ [ ५ ] रश्मिना सत्याय ॥ सत्यञ्जिन्व प्रेतिना धर्म्मणा धर्म्मञ्जिन्वान्वित्या दिवा दिवञ्जिन्व सन्धिनान्तरिक्षेणान्तरिक्षञ्जिन्व प्रतिधिना पृथिव्या पृथिवीञ्जिन्व विष्टम्भेन वृष्ट्या वृष्टिञ्जिन्व प्रवयाह्नाहर्ज्जिन्वानुया रात्र्या रात्रीञ्जिन्व वोशिजा वसु

धिपतिनोर्जोर्जञ्जिन्वेति । विधाविहितामन्त्राः । तत्र प्रथमस्य मन्त्रगणस्य द्विकण्डिकावधिपरि-पठितस्य व्याख्यानम् । असुनारश्मिना अदः सत्यं जिन्व । जिन्वतिः तर्पणार्थः । रश्मि-

(१) का० सर्वतोऽपाढावेलायाः स्तोमभागा रश्मिना सत्यायेति प्रतिमन्त्रं पञ्चदश दक्षिणेनानुक्रमम् १७।११।१० । अपाढावेलायां सर्वदिक्षु स्तोमभागामन्त्रा इष्टका उपदधाति रश्मिनेत्याद्येकोनत्रिंशन्मन्त्रैः तन्मध्ये पञ्चदश प्रागनूकं दक्षिणेन पर्याचतुर्दश प्रागनूकमुत्तरेणोपधेया इति सूत्रार्थः ॥

नाग्नन्नेनसख्यायउपहितासती सत्यंतपंय। मेतिनाग्नन्नेन। धर्मणाधर्मायेति विभक्तिव्यत्ययः।
नदिवादिवेअर्थायोपहितासतीदिवंजिन्व ॥ ६ ॥ ७ ॥ द्वितीयस्यमन्त्रवर्गस्यव्याख्यानम्। अदो-

ऽभ्योवसूञ्जिन्न्वप्प्रकेतेनादित्येभ्यंऽआदित्याञ्जिन्न्वतन्तुनारायः॥६॥
तन्तुंनारायस्प्पोषेणरायस्प्पोषंञ्जिन्न्वस६सुर्प्पेणाऽश्रुतायश्श्रुतञ्जि
न्न्वैडेनौषधीभिरोषधीर्ज्जिन्न्वोत्तमेनतनूभिस्तनूर्ज्जिन्न्ववयोधसा
धीतेनाधीतञ्जिन्न्वाभिजितातेजसातेजोजिन्न्व॥७॥ प्रतिपदसि॥
प्प्रतिपदेत्वानुपदस्यनुपदेत्वासम्पदसिसम्पदेत्वातेजोसितेजसेत्वात्रिवृ
दसि॥ ८॥ त्रिवृदसि॥ त्रिवृतेत्वाप्प्रवृदसिप्प्रवृतेत्वाव्विवृदसिव्विवृ

धर्मायोपहितामतोधर्मंजिन्व। एवंद्वितीयान्तंपदं चतुर्थ्यन्तंकर्त्तव्यं सर्वत्रमन्त्रेषु। अग्निरस्याग्नन्ने-
समुसंच्चा। अदः असिनिवृदसि। अमुष्मैत्वानिवृतेत्वा वाक्यशेषः। यतः विवृदसि

विगुणासि। अन्नं हि विगुणम् अन्नं चत्वम् अतः त्रिवृतेथीयत्वामुपदधामि ॥ ८ ॥ प्रवृणो-तिभ्रतानीतिप्रवृत् अन्नमृयतस्त्वंप्रवृदसिअतः प्रवृतेथीयत्वामुपदधामीति। तृतीयोव्याख्या-यते। अधिपतिनाईश्वरेण। ऊर्जाअन्नरसेन ऊर्जमन्नरसंजिन्वतर्पय। अभिधेयगतांक्रियां

तेत्वासुवृदसिसुवृतेत्वाक्रमोस्याक्रमायत्वासङ्क्रमोसिसङ्क्रमायत्वोत्क्रमो स्युत्क्रमायुत्वोत्क्रान्तिरस्युत्क्रान्त्यैत्वाधिपतिनोर्जोर्जञ्जिन्व ॥९॥

[४] राज्ञ्यसि ॥ राज्ञ्यसिप्राचीदिग्वसवस्तेदेवाऽअधिपतयो ग्निर्हेतीनाम्प्रतिधर्ताविवृत्त्वास्तोमःपृथिव्याᳫश्रयत्वाज्यमुक्थ

पर्यालोच्याभिधानव्युत्पत्तिः कर्त्तव्या ॥ ९ ॥ नाकसद उपदधाति। (१) राज्ञ्यसि। यात्वंराज्ञी राजन्तीमी। ईश्वरीत्यसिप्राचीचदिक्। अस्याश्ववसवः तेतवदेवाअधिपतयः अधिष्ठातारः।

(१) का० नाकसदोऽनूकेषु पूर्वंपर्जन्तव्यावेलायामाश्विनीवद्राज्ञ्यसीति प्रतिमन्त्रम् १। पूर्वानूके स्थानाभावात् पूर्वानूकवर्जं त्रिदिग्वनूकेषु ऋतव्यवेलायामनूकोपरि राज्ञील्यादिपञ्चकाण्डकाभिराश्विनीवन्नाकसत्सञ्ज्ञ इष्टका उपदधातीति सूत्रार्थः।

यस्मात्त्वं अग्निर्हन्तीनामस्त्राणां वधहेतुभूतानांशरयिनिधारयिता तांत्वांब्रवीमि। त्रिवृत्स्तोमः पृथिव्यांव्ययतुस्थापयतु। राज्यंचउक्थम्। अव्यथायैअचलनाय स्तभ्नातुस्थिरीकरोतु। रथन्तरंचसामप्रतिष्ठित्यैप्रतिष्ठानायस्तभ्नातु। अन्तरिक्षेलोके। ऋषयस्त्वांप्रथमजाः। प्राणावाऋषयः प्रथमजाः। देवेषुमध्ये। दिवः द्युलोकस्यमात्रयावरिम्णाच उरुत्वेनचप्रथन्तु पृथ्वीं

मव्व्यथायैस्तभ्नातुरथन्तरꣳसामप्प्रतिष्ठित्या ऽअन्तरिक्षऽऋषयस्त्वा प्प्रथमजादेवेषुदिवोमात्रयाव्वरिम्णाप्प्रथन्तुव्विधर्त्ताचायमधिपति श्चतेत्वासर्व्वेसंव्विदानानाकस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु॥१०॥

व्विराडसि ॥ व्विराडसिदक्षिणादिग्गुद्रास्तेदेवाऽअधिपतयऽइन्द्रोहे





कुर्वन्तु। प्रथयन्त्विवतिमाक्षेणिचोलोपः। विधर्ताचायमधिपतिश्च। निधर्त्तावाक्। अधिपति मंनः। एतेचप्रथयताम्। तत्रएतेवस्वादयोयथोक्ताः सर्वेसंविदानाः। ऐकमत्येनावस्थिताः। नाकस्यपृष्ठेस्वर्गेलोके यजमानंचत्वांच सादयन्तु॥ १० ॥ उत्तरासुकण्डिकासु

तीनाम्प्रतिधर्ता पंञ्चदशस्त्वास्तोमः पृथिव्या ७ श्रयतु * प्रउगमुक्थम
व्यथायै स्तभ्नातु बृहत्साम प्रतिष्ठित्या अन्तरिक्ष ऋषयस्त्वा प्रथमजा
देवेषु दिवो मात्रया वरिम्णा प्रथन्तु विधर्त्ता चायमधिपतिश्च ते त्वा स
र्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानञ्च सादयन्तु ॥११॥ सम्म्रा
डसि ॥ प्रतीची दिगादित्यास्ते देवा अधिपतयो वरुणो हेतीनाम्प्रति
धर्त्ता सप्तदशस्त्वा स्तोमः पृथिव्या ७ श्रयतु मरुत्वतीयमुक्थम व्यथा
स्तभ्नातु वैरूप ७ साम प्रतिष्ठित्या अन्तरिक्ष ऋषयस्त्वा प्रथमजा देवे
षु दिवो मात्रया वरिम्णा प्रथन्तु विधर्त्ता चायमधिपतिश्च ते त्वा सर्वे
देवाः हेतीनां प्रतिधर्त्तारः स्तोमाः। उक्थानि सामानि चान्यानि भविष्यन्ति।

---

• प्रउगमुक्थं गा इति १ प्रउगं शस्त्रम।

०य संव्विदानानाकंस्यपृष्ठेस्वुर्ग्गेलोकेयजंमानञ्चसादयन्तु ॥१२॥ स्वरा
य० डंसि ॥ स्वुराडस्युदीचीदिङ्मुरुतंस्तेदेवाऽअधिंपतयुःसोमोंहेतीना
सं० म्प्रतिधुर्त्तैकविुः शस्त्वास्तोमंःपृथिव्याछंश्रयतुनिष्केवल्ल्यमुक्थमव्व्यं
३३१ थायैस्तभ्नातुव्वैराजःसामप्प्रतिंष्ठित्याऽअन्तरिंक्षुऽऋषंयस्त्वाप्प्रथम
उ० जादेवेषुंदिवोमात्रयाव्वरिम्णाप्प्रंथन्तुव्विधुर्त्ताचायमधिंपतिश्चुते
भा० त्वासर्व्वेसंव्विदानानाकंस्यपृष्ठेस्वुर्ग्गेलोकेयजंमानञ्चसादयन्तु ॥१३॥

समानमन्यत् ॥ ११ ॥ (१) १२ ॥ (१) १३ ॥

(१) मय पश्चात् । सम्यग्राजते सम्राट् । (१) आ त्वा रथं यथोतये इति मरुत्वतीयं शस्त्रम् ।

(२) यथोत्तरतः । स्वे नैव राजते स्वराट् । अभि त्वा शूर नोनुम इत्यादिक (२) निष्केवल्यं शस्त्रम् ।

---

(१)——ऋ० वे० ८।१।८।१।

(२)——ऋ० वे० ७,२,१५:२२।

(१) १४ ॥ पञ्चचूडाउपदधाति। (२) अयंपुरः। योयमग्निः पुरः परस्तादुपधायोचर्य्यं त

अधिपत्न्यसि ॥ वृहतीदिग्विश्वेतेदेवाऽअधिपतयोबृहस्पतिर्हे तीनाम्प्रतिधर्त्तात्त्रिणवत्रयस्त्रिᳬशौत्त्वास्तोमौपृथिव्याᳬश्रयतांवै श्वदेवाग्निमारुतेऽउक्थेऽअव्यथायैस्तभ्नीताᳬशाक्वररैवतेसामनी प्रतिष्ठित्याऽअन्तरिक्षऽऋषयस्त्वाप्रथमजादेवेषुदिवोमात्रयावरि म्णाप्रथन्तुविधर्त्ताचायमधिपतिश्चतेत्त्वासर्वेसंविदानानाकस्यपृ ष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु ॥ १४ ॥ [५] अयम्पुरः ॥ अयम्पुरो

(१) अथ मध्ये। हे इष्टके अधिक पालयित्री वृहती मौढोर्ध्वा दिगसि। त्रिणवत्रयस्त्रिंशौ स्तोमौ त्वा पृथिव्यां श्रयताम्। वैश्वदेवाग्निमारुते शस्त्रे अचलनाय स्तभ्नीताम्। शाक्वररैवते समानी चान्तरिक्षे स्थितौ त्वां स्तभ्नीताम्। द्विवचने विशेष। तत्सवितुर्वृणीमहे इत्यादि वैश्वदेवं शस्त्रम्। वैश्वानराय पृथुपाजसे इत्यादिकमाग्निमारुत शस्त्रम् उक्तमन्यजत्।

(२) का० पुरोपमोध्योपर्यय पुर इति पचचूड़ा प्रतिमन्त्रं प्रतिदिश यथालिङ्गम् १। नाकसत्सु तूष्णीं चात्वालमृद प्रक्षिप्य नाक-

पुरइति इत्युच्यतेहरिकेशश्च हरितज्वालः सुवर्णवर्णार्चिरिति यावत् । सूर्य रश्मिश्च । सूर्यस्येवाग्नेः रश्मयः तस्यरथगृत्सश्च रथेवस्थितोगृत्सः मधावी । गृणतेः स्तुतिकर्मणः रथयुद्धकुशल-इत्यर्थः । रथौजाश्च । रथेओजोयस्येति रथौजाः । चकारौसमुच्चयार्थीयौ । सेनानीग्रामण्यौ । सेनांनयतीतिसेनानीः ग्रामंनयतीतिग्रामणीः । वासन्तिकौतावृतूइतिश्रुतिः । पुञ्जिकस्थला-

हरिकेशःसूर्यरश्मिस्तस्यरथगृत्सश्चरथौजाश्चसेनानीग्रामण्यौ ॥ पुञ्जिकस्थलाचक्रतुस्थलाचाप्सरसौदङ्क्ष्णवःपशवोहेतिःपौरुषेयोवधःप्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मो

चक्रतुस्थलाचाप्सरसौ । पुञ्जीकृतरूप लावण्यसौभाग्यगुणस्थला । क्रतूनांसंकल्पानांस्थलमिव । स्त्रीद्रव्यस्वरूपादिज्ञानं संकल्पः तन्मूलकस्तुकामः । दिशश्चउपदिशश्चेतिमहिष्यः । सेनाचसमितिश्चेतिश्रुतिः । दङ्क्ष्णवः । दशनशीलः पशवोहेति वज्रः आयुधम् । पौरुषजनितः बधः

सदासुपरि सर्वदिक्षु यथालिङ्गं लिङ्गानतिक्रमेण यल्लिङ्गको मन्त्रस्तद्दिशि तन्मन्त्रेण पंचचूडासंज्ञकाः पंचेष्टका उपदधातीति सूत्रार्थः ।

विनाशः। महेतिः प्रकृष्टमायुधम्। तेभ्योनमः अस्तु। तेभ्योहेतिप्रहेतिभ्यः नमस्कारोस्तु। तेचनोस्मानवन्तुगोपायन्तु। तेनोमृडयन्तु। तेअस्मान्सुखयन्तु। तेवयंहेतिप्रहेतिभिर्गुप्यमानाः यंपुरुषंद्विष्मः। यस्यानिष्टंचिन्तयामः यश्चपुरुषः नः अस्मान् द्वेष्टिअस्माभ्‌ न प्रत्यप्रीतिंक-

यश्चनोद्वेष्टितमेषांजम्भेदध्मः ॥ १५ ॥अयन्दक्षिणा ॥ विश्वक र्मातस्यरथस्वनश्चरथेचित्रश्चसेनानीग्रामण्यौ ॥ मेनकाचसह जन्याचाप्सरसौयातुधानाहेतीरक्षांसिप्रहेतिस्तेभ्योनमोऽअस्तु

रोति। तंपुरुषम् एषांहेतिप्रहेतीनाम् वयं जंभे दंष्ट्राकरालेमुखे। दध्मः प्रक्षिपामः ॥ १५ ॥

उक्तरीपु। (१) अयंदक्षिणा। दक्षिणतोविश्वकर्मासर्वस्यकर्त्तावायुः तस्यवायोरथस्वनः रथेवस्थितो-

(१) अथ दक्षिणत। दक्षिणस्यां दिशीति दक्षिणा दक्षिणादाजिति सप्तम्यन्ताद्दक्षिणशब्दादाच् प्रत्यय दक्षिणा दक्षिणत अयं विश्वकर्मा विश्व सर्वं कर्म यस्य विश्व करोतीति वा विश्वकर्मा वायु। अय वै वायुर्विश्वकर्मा योऽय पवत एष हीदंं सर्वं करोति तद्यत्तमाह दक्षिणत इति तस्मादेष दक्षिणैव भूयिष्टं वातीतिश्रुते.।

महाध्वनः। स्वनः शब्दः। रथेचित्रः रथेवस्थितोविचित्रयोधी। मेनकाचसहजन्याच। मेनामानयन्त्येनां। समानानांजनानांसहजन्या। अप्सरसोहिसामान्याः। यातुधानाः रक्षांसि॥१६॥

तेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ १६ ॥ अयम्पश्चात् ॥ अयम्पश्चाद्विश्वव्यचास्तस्यरथप्रोतश्चासमरथश्चसेनानीग्रामण्यौ ॥ प्रम्लोचन्तीचानुम्लोचन्तीचाप्सरसौव्याघ्राहेतिःसर्पाःप्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनो

(१) अयंपश्चात्। विश्वव्यचाः आदित्योविश्वव्यचाः। सद्युदयेन सर्वंव्यञ्जनवत्करोति। तस्यरथ-

(१) पश्च पश्चात्। अवरस्मिन् प्रदेशे इत्यर्थे पश्चादिति सूत्रेण निपातः। पश्चात्पश्चिमदेशेऽयं विश्वव्यचाः आदित्यः विश्वं सर्वं सुदयेन विचति प्रकाशयति व्याप्नोति वा विश्वव्यचाः अमुन् पश्चिमायां स्पष्टं दृश्यत इति पश्चात्। असौ वा आदित्यो विश्वव्यचा। यदा ह्येवैष उदेत्यथेदं० सर्वं व्यचो भवति तदनत्तमाह पश्चादिति तस्मादेतं प्रत्यञ्चमेव यन्तं पश्यन्तीति श्रुतिः।

प्रोतश्च। रथेनस्थितः प्रोतइव। असमरथः। अन्यैः रथिभिरतुल्यरथः। (१) प्रम्लोचन्तीचानु-म्लोचन्तीच। तुल्यव्याख्यानम्। व्याघ्राः सर्पाः॥ १७॥ (२) अयमुत्तरात्। अयंयज्ञः उत्तरतः।

मृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ १७ ॥ अयमुत्तरात्॥ अयमुत्तरात्संयद्वसुस्तस्यतार्क्ष्यश्चारिष्टनेमिश्चसेनानीग्रामण्यौ॥ विश्वाचीचघृताचीचाप्सरसावापोहेतिर्वातःप्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनो

संयद्वसुः। संयन्तिवसुनोधनस्य लिप्सवोयं प्रति ससंयद्वसुर्यज्ञः। दीयतेहि तत्रमहद्भ्यः। तार्क्ष्यः तौक्ष्णोन्तरिक्षेक्षिपति पक्षाविति तार्क्ष्यः। अरिष्टनेमिः अनुपहिंसितायुधः। विश्वाचीचसर्वं प्रतिअं-

(१) प्रम्लोचति नर प्रतात्मान दर्शयतीति प्रम्लोचन्ती॥ अनु वार वारम्लोचन्तीत्यनुम्लोचन्तीतापसरसौ।
(२) यथोत्तरत। उत्तरस्मिन्नित्युत्तरात् उत्तराधरेत्यादिना आत्प्रत्यय अयमुत्तरत सयद्वसु यत्र सम्यक् यन्ति गच्छन्ति वसुने धनाय य प्रति जना स सयद्वसु यत्र गतेभ्यो हि दानमावश्यकम् यज्ञस्योत्तरोपचारत्वादुत्तरात्।

चलयीला। साधारणाहिसा। घृतचीघृताञ्चना। घृतंहिअप्सरसामन्नम्। तथाचोर्वशीवा-
क्यम् घृतस्यस्तोकं सकृदह्नः आश्नामीति। आपः वातः॥ १८॥ मघेत्र। (१) अयमुपरि।
अयंपर्जन्यउपरि। अर्वाग्वसुः। अर्वागचनं वसुधनमुदकलक्षणं प्रजाभ्योददातीत्यर्वाग्वसुः

नोह्वै ष्ष्टितमेषाञ्जम्भेदध्मः॥ १८॥ अयमुपरि॥ अयमुपर्य्यर्वाग्व
सुस्तस्यसेनजिच्चसुषेणश्चसेनानीग्ग्रामण्यौ ॥ उर्व्वशीचपूर्व्व
चित्तिश्चचाप्सरसावबस्फूर्ज्जन्हेतिर्व्विद्युत्प्रहेतिस्तेभ्योनमो ऽ अ
स्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चचनोद्वेष्टितमेषाञ्जम्भे

पर्जन्यः। तस्यसेनजिच्च। सेनांजयतीतिसेनजित्। सुषेणश्चशोभनसेनश्च। उर्वशीचउरः पृथुः
वशः। कामोयस्या इति। उर्वशी। पूर्वचित्तिश्च। पूर्वंप्रथमं पुंसांचेतस्ताम भ्युपैतिसौभाग्यातिश-

(१) अथ मध्ये। उपरि ऊर्द्ध्वदेशेऽयमर्वाग्वसु पर्जन्य उपर्यु परिष्टादिति निपात ऊर्द्ध्वप्रदेशे इत्यर्थं अर्वागधोमुखं य
वसु धनं जलरूप यस्मात्सोर्वाग्वसु अधो जल प्रजाभ्यो ददातीत्यर्थ

यात्। अवस्फूर्जन्पर्जन्यः। हेतिः। स्फूर्जतिर्वज्रनिर्घोषार्थः। विद्युत्प्रहेतिः॥१९॥ छन्दस्या उपधाति। (१)अग्निर्मूर्द्धा। आग्नेयं प्राक्तपश्चतपस्य चेत्यतः। प्रथमः त्र्यचोगायत्रः। प्रथमाव्याख्याता॥२०॥ अयमग्निः। ऋषिरभिनयेन दर्शयति। अयमग्निः सहस्रिणः। सहस्राणि बहूनियस्यवि-

दन्वसः॥ १९ ॥ [ ५ ] अग्निर्मूर्द्धा॥ दिवःकुकुत्पतिः पृथिव्याऽअयम्॥ अपाꣳरेताꣳसिजिन्वति॥ २० ॥ अयमग्निः॥ सहस्रिणोवाजस्यशतिनस्पतिः॥ मूर्द्धाकवीरयीणाम्॥ २१ ॥ त्वामग्ने॥ त्वामग्नेपुष्करादध्यथर्वानिरमन्थत॥ मूर्ध्नोविश्वस्यवाघतः॥

द्यन्तेतस्य। वाजस्यान्नस्य शतिनश्चपतिरधिपतिः। मूर्द्धाचरयीणाम् प्रधान भूतश्चधनानाम् अग्निर्हि सर्वेषां धनानां प्रधानं दृष्टा दृष्टसाधनं हि। कविः क्रान्तदर्शनश्च अतः

(१) का॰ छन्दस्यास्तिस्रोऽनुकान्तेषु पुरस्ताद्गायत्रीरग्निर्मूर्धेति प्रतृचम् २। वक्ष्यमाणा गायत्र्याद्याश्छन्दस्या एकैकस्मिन् स्थाने तिस्र उपदधाति तासां मध्यमा पश्चानूके तासामितो द्वे अर्धपद्यो अत पूर्वदिश्यनूकान्ते तिस्रो गायत्रीरग्निर्मूर्धेति प्रतृचम् एवं वक्ष्यमाणा अपीति सूत्रार्थः।

स्तुमः ॥ २१ ॥ त्वामग्ने पुष्करात् । व्याख्यातम् ॥ २२ ॥ (१) भुवोयज्ञस्य । त्रैष्टुभ स्त्र्यृचः । प्रथमा व्याख्याता ॥ २३ ॥ अबोध्यग्निः । योयमग्निः । अबोधिप्रतिबुध्यते कर्माणिस्वमभिकारम् । समिधासमिन्धनेन । जनानामग्नि होत्रीणां सत्त्वातिथिज्ञान श्रद्धासंपन्नानाम् ।

२२ ॥ भुवोयज्ञस्य ॥ भुवोयज्ञस्यरजंसश्चनेतायत्रानियुद्भिःसचंसेशिवाभिः ॥ दिविमूर्द्धानंन्दधिषेस्वर्षाञ्जिह्वामग्नेचकृषेहव्यवाहम् ॥ २३ ॥ अबोध्यग्निः ॥ समिधाजनानाम्प्रतिधेनुमिवायतीमुषासम् ॥ यह्वाऽइवप्रवयामुज्जिहानाःप्रभानवःसिस्रतेनाकम

कथमिव प्रतिबुध्यते । धेनुमिवायतीम् यथा धेनुमागच्छन्तीं वत्सः प्रतिबुध्यते । यथा च उषासमागच्छन्तीं मनुष्याः प्रतिबुध्यन्ते । तस्याहुतिभिर्दीप्तस्य । यह्वा इव प्रवयामुज्जिहानाः

(१) पुरस्ताचित्रु भो रेत सिग्वेलायां भुवो यज्ञस्येति १ पूर्व दिशि रेत सिग्वेलायां त्रिष्टुप्संज्ञा इष्टका उपदधाति ऋचेन तिस्र त्रिष्टुप्छन्दस्काभिस्ताभिरुपधेया इष्टकास्त्रिष्टुभ एवमग्रेऽपि ।

यन्न इति महतोनाम धेयम्। यथा महान्तो जातपक्षा पक्षिणः वयां वृक्षशाखासुज्जिहाना. परिक्षरजन्तः ऊर्द्ध गच्छेयु। एवम्। प्रभानवः सिस्रते। प्रसिस्रते प्रसर्पन्तिभानवः अर्चींषिमहान्ति। नाकमच्छ। अच्छाभेराप्तुमितिशाकपूणिः। स्वर्गलोकमभि ॥ २४ ॥

अवोचाम। उद्गातारोभुवन्ति। अवोचामउक्तवन्तोवयम् कवयेक्रान्तदर्शनाय। मेधग्राय यज्ञि-

यं ॥ २४ ॥ अवोचामकवये ॥ अवोचामकवयेमेध्यायवचोवन्दारुं वृषभायवृष्णे॥गविष्ठिरोनमसास्तोममग्नौदिवीवरुक्ममुरुव्यञ्चमश्रेत्॥२५॥ अयमिह॥ प्रथमोधायिधातृभिर्होतायजिष्ठोऽअध्वरे

याय। वचः स्तुतिलक्षणं वाक्यम् वन्दारुवन्दनशीलम। वृषभाय वर्षित्रे। आहुति परिणामाभिप्राय मेतत्। वृष्णे सेक्तयूने परिणाम रहिताय। इदानीम् गविष्ठरः होता गवियाचिस्थिरोप्रच्याव्यः। तस्माद्धि अग्निरधिष्ठात्रीदेवता। नमसान्नेन संयुक्तं स्तोमंस्तुतिः। अग्नौ आहवनीयाख्ये। अश्रेत् आसंजयिष्यति अग्नि संबद्धं करिष्यते। कथमिव। दिवी-

वसूनाम्। यथा द्युलोके रश्मिरोचनमादित्यम्। उरुव्यञ्चम् बहुभि. स्तुतिभक्तिभिर्युक्ताम् स्वरसौ-
ष्ठवादि युक्तम् स्तोम आदित्येनोपमीयते ॥ २५ ॥ अयमिह। (१) जागतस्त्यृचः। प्रथमाव्या-
ख्याता ॥ २६ ॥ जनस्य गोपाः। योयजनस्य यजमानस्य गोपाः गोपायिता अजनिष्टजातः

ष्पवीड्र्यः॥ यमप्न्वानो भृगवोव्विरुरुचुर्व्वनेषुचित्रं विभ्वं विशे विशे ॥ २६ ॥ जनस्य गोपाः ॥ जनस्य गोपाऽअजनिष्टजागृविरग्निः सुदक्षः सुवितायनव्व्यसे ॥ घृतप्रतीको बृहता * दिविस्पृशा द्युमद्वि

जागृविः जागरणशीलः अग्निष्टज्ञानः अग्निः। सुदक्षः शोभनोत्साहः। सुवितायनव्यसे।
सुप्रभूताय कर्मणेनवतराय। सः घृत प्रतीकः घृतमुखः। बृहता महता भानुना। दिविस्पृशा।
दिवस्पृशतीति दिविस्पृक् तेदिविस्पृशा। द्युमद्विभाति। द्युतिमद्विविधं दीप्यते। भरतेभ्यः

(१) का० जगतीय पश्चादयमिहेति १। तिसृभि पयाद्रेत सिग्वे लाया तिसृो जगतीमत्रप्रेष्टका दक्षिणामुख उपदधातीति सूत्रार्थ।

* दिविस्पृशेतावमा॰ पथार: मनुसन्तनोतुद्ध्वस्पर्तिसुतश्चेतरादिमूर्ध्र्णानिपिध्यते प्रा० प्र० ३। सू० ==।

ऋत्विग्भ्योर्थाय। शुचिः। वह्नन्यपि हवींपि भक्षन्नुच्छिष्टो नभवति। शोधकोवा। यद्वा। योसौयजतानस्य गोपायिता अजनिष्टभरतेभ्यः ऋषिभ्यः सकाशात्। ऋत्विग्यजमानेभ्यो वा। जागृविः अग्निः सुदक्षः सुप्रभूताय कर्मणे नवतराय। सोयं घृतमुखो महता भानुनादिविस्पृशा। द्युतिमद्विभाति। शुचिः शोचते ज्वलति कर्मणः। यद्वा। मनुष्येभ्यो

भातिभरतेभ्यःशुचिः ॥ २७ ॥ त्वामग्ने ॥ त्वामग्नेऽअङ्गिरसोगुहाहितमन्वविन्दञ्छिश्रियाणंवनेवने ॥ * सजायसेमथ्यमानः

विजायमानो मनुष्य सम्बन्धैर्दोषैर्नलिप्यते ॥ २७ ॥ त्वामग्ने। यंत्वाम् हेअग्ने अंगिरसः ऋषयः। गुहाहितं निगूढे प्रदेशेवस्थितम् अप्सु अग्निर्देवेभ्य उदक्रामत्सोपः प्राविशदि त्येव मादिभिर्दानमस्य मन्त्रस्य। अन्वविन्दन् लब्धवन्तः। पुनरपि नष्टंसन्तम् शिश्रियाणं वनेवने घयस्थितम् ओपधि वनस्पतिषु। अन्वविन्दन्नङ्गिरस इति वर्तते सत्वमिदानीमपिजायसे

---

* स जायसेत्यत्रसहि तायामत्रनेच व्यञ्जनेपरे सपदस्वन्धीविसर्जनीयोलुप्यत इतिलोप। प्रा० अ० ३। सू० १६।

अरणिकाष्ठेभ्यो मथ्यमानः। सहोभरत्। सहसा बलेन महता इति विभक्तिव्यत्ययः। अ-
तश्चकारणात् त्वम् आहुः ऋषयः सहसः पुत्रम् बलस्य पुत्रम्। अङ्गिरः। अङ्गिरइत्यग्नेः
संबोधनम् हे अङ्गिरः ॥२८॥ (१)सखायः सम्। आनुष्टुभः त्र्यृचः। यजमान ऋत्विजः संबोधयति।
हे सखायः संगत्य हे ऋत्विजः युष्मान् ब्रवीमि। सम्यञ्चम् संगतम् एकीभूतम् इषम् हविर्लक्ष-

सहोजातत्वामाहुःसहसस्पुत्रमङ्गिरः ॥२८॥ सखायःसम् ॥ सखा
यःसंवःसम्यञ्चमिषःस्तोमञ्चाग्नये ॥ वर्षिष्ठायक्षितीनामूर्ज्जो न
प्त्रेसहस्वते ॥२९॥ सᳬसमित् ॥ सᳬसमिद्युवसेवृष न्नग्नेविश्वा

णमन्नम् स्तोमंच त्रिवृत्पञ्चदशादि। अग्नयेभरत। कथंभूतायाग्नये। वर्षिष्ठायक्षिती-
नाम् वृद्धतमायमनुष्याणाम्। ऊर्ज्जोनप्त्रे। अपां पौत्राय। अद्भ्य ओषधि वनस्पतयोजाय-
न्तेताभ्य अग्निः। सहस्वतेबलवते ॥ २९ ॥ सᳬसमित्। समुपोदः पादपूरण इत्युपसर्गा-

(१) का० परास्ताभ्योऽनुष्टुभः सखाय समितिः। जगतीभ्योऽपराश्चिमोऽनुष्टुप्सज्ञेष्टकाः पाशुष उपदधाति सखाय इत्यनुष्टुभेति सूत्रार्थः।

भ्याम:। इदितिपादपूरणः। युवस इति विकरण व्यत्ययः। यस्त्वं। संयोपिसंगमयसि हे
वृषन् वर्षितः अग्ने। विश्वानि वसूनि। अर्य्यं ईश्वरः सन् अलोच्यालोच्य। यजमानानाम्
इडायास्पदे कर्दमार्थं समिध्यसे। यद्वा। इडायाः पृथिव्याः पदे उत्तरवेदौसंदीप्यसे। स नः
अस्मभ्यम् वसूनि धनानि आभर आहरदेहि॥ ३०॥ त्वांचित्रश्रवस्तम। "हेअग्ने चित्रश्रव-

न्युर्य्यऽआ॥ *इडस्पदेसमिध्यसेसनोवसून्याभर॥३०॥ त्वाञ्चि
त्रश्रवस्तम॥ हवन्तेविक्षुजन्तवः॥ शोचिष्केशम्पुरुप्रियाग्नेह

स्तम। चित्रं नानारूपं श्रवोऽन्नमतिशयेनयस्यसचित्रश्रवस्तमः तस्यसंबोधनम् हेचित्रश्रवस्तम।
त्वांहवन्तेत्वामाह्वयन्ति। विक्षुमनुष्येषु मध्येव्यवस्थितम् जन्तवोमनुष्याः। कथंभूतम् शोचि-
ष्केशम् शोचन्तिदीप्यन्तेज्वालाः केशसंस्थानीयाः अस्येतिशोचिष्केशः। हेपुरुप्रिय। बहू-
वोयजमानाः प्रियाअस्य। बहूनांयजमानानांवाप्रियः। बहुव्रीहिः प्रियमस्येति समासवि-

* इडस्पद इत्यत्र इड इत्येतत्दविसर्गस्य अविनिरडडाया वसतिर्वरिवर्द्धति सूत्रेण सकारादेशोविधीयते प्रा॰ अ॰ ३। सू॰२२

शेषा:। तस्यसंबोधनं हेपुरुप्रिय। किमर्थमाह्वयन्ति। हव्यायवोढवे। हवींषिवोढुम् परि-
णाम: ॥ २१ ॥ (१) एनाव:। प्रगाथोयम्। तत्रद्वहतीपूर्वा सतोबृहत्युत्तरा। तत्रप्रगथन धर्मे-
णातिस्रो बृहत्य: संपादिता: द्वयोस्तुव्याख्यानम् नहिशास्त्रेव्यूढानां मन्त्राणामथान्तरं विद्यत्
इति तथाच आत्वाजिघर्मीतिस्तुतिव्यतिषिक्ताभ्यां होमसुत्का प्रगुणाभ्या मेवव्याख्यानं करोति

व्यायुवोढवे ॥ २१ ॥ एनावः॥ एनावोऽअग्निन्नमसोर्ज्जोनपातमा
हुवे ॥ प्रियञ्चेतिष्ठमरतिꣳस्वध्वरंव्विश्वस्यदूतममृतम् ॥ २२ ॥

अत: प्रगुणो व्याख्यायते। एनाअनेन नमसाअन्नेन। वइतिपादपूरणार्थ: संभ्रात्।
अग्निम ऊर्जोनपातम् अपाम्नोवम् आहुवे आह्वयामि। सर्वजनप्रियम् चेतिष्ठम् आज्ञतिशयेन-
चेतनायुक्तम्। अरतिम् अलंमतिंपर्य्याप्तमतिम्। स्वध्वरम् शोभनोयज्ञो अस्यविद्यन्तइतिस्व-
ध्वर:। विश्वस्यसर्वस्य यजमानजनस्यदूतम्। अमृतम् अमरणधर्माणाम् ॥ २२ ॥ सयोजते।

(१) का० अपाढावेलाया पुरस्ताद्बृहतीरेना व इति १। अपाढावेलाया पुरस्तात्तिस्रो बृहतीष्टका एना व इति तिसृभिरुप-
दधातीत्यर्थ:।

सएवाग्निः ये,जतेयुनक्ति। अरुपा अक्रोधनाअश्वौरथे। विश्वभोजसासर्वस्यभोक्तारौ। द्वितीयाद्विवचनस्यस्थाने द्वयोः प्रातिपदिकयोराकारः। सएवचदुद्रवत् द्रवतिगच्छति। स्वाहुतः शोभनप्रकारेणाहुतः सन् ॥ ३३ ॥ वागच्छतीत्यतआह। यत्र सुब्रह्मायज्ञः। सुब्रह्मग्रहणं

व्विश्वस्यदूतम् ॥ व्विश्वस्यदूतममृतंव्विश्वस्यदूतममृतम् ॥ सयोजतेऽअरुपाव्विश्वभोजसासदुद्रवत्स्वाऽहुतः ॥ ३३ ॥ सदुद्रवत् ॥ सद्रुद्रवत्स्वाऽहुतःसद्रुद्रवत्स्वाऽहुतः ॥ सुब्रह्मायज्ञःसुशमीव्वसूनान्देवꣳराधोजनानाम् ॥ ३४ ॥ अग्नेर्व्वाजस्य ॥ अग्नेर्व्वाजस्य

सर्वर्त्विगुपलक्षणार्थम्। शोभनर्त्विग्यज्ञः। सुशमीच। शमीतिकर्मनाम। शोभनानिकर्माणियस्मिन्यज्ञेसमुशमी। वसूनान्देवम्। वसूनां रुद्राणामादित्यानां देवानांयस्मिन्यज्ञे लृप्तानिसवनानि। एवमध्याहारेणविभक्तिव्यत्ययेनचवाक्यसामञ्जस्यम्। राधोजनानाम् राधोधनञ्च

यत्रजनानासुपकृप्तम् तत्रसयोजतइति संबन्धः ॥ २४ ॥ (१) अग्नेवाजस्य । औष्णिहः त्र्यृचः । हे अग्ने यस्त्वं वाजस्यान्नस्यगोमतः। गोभिः संयुक्तस्य ईशानः ईश्वरः। हे सहसो यह्वो- बलस्यपुत्र। सहइतिबलनाम। यह्वरितिपुत्रस्यनाम। मथ्यमानो जायतेतस्मादेवमाह सहस- स्पुत्रमित्यादि। सत्त्वम् अस्मेधेहि। अस्मभ्यन्देहि। हे जातवेदः। महिमहत् श्रवोन्नलक्ष-

गोमतऽईशानःसहसोयह्वो ॥ अस्मेधेहिजातवेदोमहिश्रवः ॥३५॥ सऽइधानः ॥ सऽइधानोव्वसुष्कविरग्निरीडेन्न्योगिरा ॥ रेवदस्मभ्य

णम् धनम् गोभिः संयुक्तम ॥ ३५ ॥ सइधानः। सउक्तगुणः इधानोदीप्यमानः। वसुः। उप- कारभूतः वासयितावा। कविः। मेधावी। अग्निः। इडेन्यः स्तुत्यः। गिरावाचा त्वोत्त- चणया। तत्रार्थवादः प्रत्यक्षवत्ततः ततोभिन्नंवाक्यमेयम्। रेवत् धनवत्। अस्मभ्यम् अस्म- दर्थम्। हे पुर्वनीक। बहुमुख। अनीकं मुखम् पुरुवहुनाम। यतोह्यवकुतश्चाग्रावस्मादधाति।

(१) का० अपरा गायत्रीभ्य उष्णिहोग्न वाजस्येति। गायत्रीभ्योऽपरास्तिस्र उष्णिक्संज्ञा इष्टका अग्न इति ऋतव्ये- योपदधातीति सूत्रार्थः

ततएवमदस्तीतिश्रुतिः। दीदिहिदीप्यस्व। एकंवाक्यंतत्त्वाव्याख्यायते। यत्तदोर्व्यत्ययेन। वसुः धनं तापपा कमकार्यैकपकारकः। कविः क्रान्तदर्शनः। अग्निः। ईडेन्यः स्तुत्यः ऋषिभिः। गिरावाचा। तंत्वांब्रवीमि। रेवत् धनवत् अस्मदर्थंपुर्वणीकदीप्यस्व ॥ ३६ ॥ क्षपोराजन्।

वभ्यंम्पुर्वणीकदीदिहि ॥ ३६ ॥ क्षपोरांजन् ॥ क्षपोरांजन्नुतत्मना ग्नेव्वस्तोंरुतोषसंः ॥ सतिंग्मजम्भरक्षसोंदहप्रतिं ॥ ३७ ॥ भद्रो नंः ॥ भद्रोनोंऽअग्निराहुतोभद्रारातिःसुंभगभद्रोऽअंध्वरः ॥ भद्रा

यस्त्वंक्षपः क्षपयिता। हेराजन्। रक्षसाम्। उतत्मना। अप्यात्मनैवस्वभावतएव। हेअ-ग्नेवस्तोः सहसंबन्धिनांरक्षसाम् उतउषसः अपि उषसः संबन्धिनाम् सः। हेतिग्मजंभ। वज्रदंष्ट्र। तिग्ममितिवज्रनाम। जंभेतिदंष्ट्रानाम। रक्षसोदह। प्रतीत्य ॥ ३७ ॥ (१) भद्रोनः।

(१) का॰ भद्रो न इति ककुभम्राध्य २। इहतोंथ पुरस्ताच्चितु ककुबिष्टका भद्रो न इत्यृक्, येणोपदधातीति सूत्रार्थः।

द्वेऋचौ। पूर्वाककुप्सतोबृहतरा। * तिस्रः ककुभः संपादिताः। सुभगइतिचित्यमग्निं संबोधयमार्थयति। भद्रः भन्दनीयः नोस्माकम् अग्निः आहुतः अभिहुतः। भवत्त्वितिशेषः। भद्रारातिः। रादाने। रातिः दानम् भवतु। हेसुभग महदैश्वर्ययुक्त। ऐश्वर्यस्य समग्रस्यधर्मस्य

ऽउतप्रशंस्तयः ॥ ३८॥ भद्राऽउत ॥ प्रशंस्तयोभद्रम्मनः॑कृणुष्ववृत्रतूर्ये ॥ *येनासमत्सुसासहः॑ ॥ ३९ ॥ येनासमत्सु ॥ सासहोवं

यशसः श्रियः। ज्ञानवैराग्ययोश्चैवषण्णांभगइतीङ्गना। भद्रश्चाध्वरोयज्ञोभवतु। किञ्च। भद्राउत अपिप्रशस्तयः। प्रशंसनानिभवन्तु अस्माकम्॥ ३८॥ भद्रं मनः। भद्रं स्तुत्यं मनः। कुरुष्वहत्वतूर्ये। वृत्रवधाय तूर्यंतिर्वधकर्मा। येनमनसासमत्सुसंग्रामेषु। साहस। षहमर्षणे। छन्दस्यभिभवे। अभिभवसि॥ ३९॥ किञ्च। अवस्थिरातनुहि। अवतारयस्थिराणिकठि-

* येनासमत्स्वि तात्वपिवासोममभितासादिसूत्रेण येनि तास्यसमत्सुपरेदिर्घ प्रा० अ० ३। सू० १२०।

* प्रगाथ ककुसतोबृहतीभ्यां तिस्रः ककुभ, पादाभ्यां कृत्वा पाअस्य गार्भास्तम्। भद्रो नोऽग्निरा० प्रगाथ इति ककुप् मध्य पादौ द्वादशक याववती यावत्कावित तत्त्वक्षणम्।

नानिधनूंपि। भूरियर्द्दताम्। वङ्कप्रकारंवलमात्मनिकुर्वताम्। शर्द्दइतिबलनाम। अभिव-
लायमानानाम्। ततोवयंयत्तुभिरप्रतिवध्यमानाः। वनेमसंभजेमहि तानेवशत्रून् तेतवअभि-
ष्टिभिः अभीष्टयागैः॥ ४० ॥ (१) अग्निंतंमन्ये। पांक्तः त्र्यचः तमहमग्निंमन्येजाने। योवसुः
धनम्। तापपाकप्रकाशैरुपकुर्वन् धनमित्युच्यते। यद्वा। वसुर्वासयिता। अस्तंयंयन्तिधेनवः।

# स्त्युरातंनुहिभूरियर्द्दताम्॥ * वनेमातेऽअभिष्टिभिः॥ ४० ॥ अग्निन्तम्मन्येयोव्वसुरस्तंय्यंय्यन्तिधेनवः॥ अस्तमर्व्वन्तऽआशवो

यच्चाग्निमुद्दृतंज्ञात्वा प्राप्तोस्माकं दोहकालइति अस्तंगृहं यन्तिधेनवः। अस्तंगृहमर्वन्त.
अश्वाः। आशव. शीघ्राः यन्ति। स्वामीह्यिपशूनामग्निः। यत्तज्जातः पशूनविन्दतेत्युप-
क्रम्य तस्मात्सशान्तंपशवोग्निमभि सपन्तोतिश्रुतिः। अस्तंचनित्यासः शाश्वतिकाः वाजिनः

(१) क्रा॰ पनूकान्ते दक्षिणपङ्क्तौरग्निन्तमिति २। दक्षिणेऽनूकान्ते तिस्रः पङ्क्तिसत्ज्ञा दृष्टका अग्निन्तमिति तिसृभि
रुपदधातीति सूत्रार्थः।

* वनेमाते इतावापितिपरे पिवामोर्ममि वादिसूत्रेणैव वनेमेतस्यदीर्घः। प्रा॰ अ॰ २ सू॰ १२०।

मुख्याः। सेन्धशाभिप्रायमेतत्। यउशास्यमान एतत्सर्वंयजमानस्यो त्पादयतितमग्निं मन्ये। अधस्तनाश्चत्वारः पादाः परोक्षकृताः अथन्तुप्रत्यक्षकृतः। अध्याहारेण परिपूर्त्तिः। यदिस-त्यमग्निः इषमन्नं स्तोतृभ्यआभरदेहि ॥ ४१ ॥ सोग्निः। सएवाग्निः योवसुरितिगीयतेस्तो-तृभिः। संयमायन्तिधेनवः। समायन्तिच यंधेनवः। समर्वन्तोरघुद्रुवः। समायन्तिचअर्वं-

स्तन्नित्यासोवाजिनइषंस्तोतृभ्यआभर॥४१॥ सोऽअग्निः॥

सोऽअग्निर्यो वसुर्गृणे संयमायन्तिधेनवः॥ समर्वन्तोरघुद्रुवः

सꣳसुजातासःसूरयइषꣳस्तोतृभ्यआभर ॥४२॥ * उभेसुश्चन्द्र ॥

न्तोश्वाः। लघुद्रवणाः। समागच्छन्तिच। सुजातासः। कल्याणजन्मानः। सूरयः पण्डिताः। एतदुक्तम्भवति। किन्तेनाग्निनायएतत्सर्वमात्मद्वारा यजमानस्योपनयति। सत्वंहत्वम् इषं स्तोतृभ्यआभर ॥४२॥ उभेसुश्चन्द्र। हेअग्नेसुचन्द्र। शोभनचन्द्रइव धनानामुत्पादक। शोभनेद्वि-



* उभेसुश्चन्द्रेतावचन्द्रे ण मकारेण। चन्द्रे मतयेसु शब्द मकारेणव्यवधीयते इतिश्च प्रा० अ० ३। ५४।

चन्द्रमसिघनान्युत्पद्यन्त इतिज्योतिः शास्त्रविदः प्रतिजानन्ति । यद्वा । कल्याणह्लादन । उभेदर्वी । उभौहस्तौदर्व्यौ कारौकृत्वा श्रीणीपेश्यसि । आश्लेषसि आसनियास्थे मुखे । सर्पिषः पानाय । उतोनउत्पुपूर्या अपिचत्वंनृपे यदिनाम उतृष्णिपसर्पिषोभारङमत्यर्थमजलिम्पूरयेरस्माकंसाधु क्रतंस्यात् । उक्थेषुयज्ञेषु हेशवसस्पते वलस्यपते यद्येवम् इषंस्तोतृभ्यआभर ॥ ४२ ॥

सुर्पिषोदर्व्वीश्रीणीषआसनिं ॥ उतोनुउत्पुंपूर्याउक्थेषुंशवसस्पतुइषंस्तोतृभ्युआभंर ॥ ४२ ॥ अग्नेतमुद्याश्वुन्नस्तोमैःक्रू

(१) अग्नेतमद्य । पदपांक्तः च्यृचः । हे अग्ने तम्पावकम् यज्ञम् अद्यास्माभिःसमर्द्धयेमहि । कथमिव । अश्वंनस्तोमैः । यथा अश्वमाश्वमेधिकम् स्तुतिभिः समर्द्धयेयुः एवं समर्धयेमहि । क्रतुन्नभद्रम् । क्रतुं संकल्पमिवच । भद्रं हृदिस्पृशम् । हृदि आत्मनास्पृश्यते । बहुकालाभिध्यातम् यथा समर्द्धयेयुः एवं समर्द्धयेमहि । तेतवसम्बन्धिभिः ओहैः । वहैरेतद्रूपम् प्रापणैः ।

(१) का० उत्तरेपदपङ्क्तौ रगृतमिति१ ।[उत्तरानुकाम्यं तिस्र पदपङ्क्तीष्टका अग्नेतमिति तिसृभिरुपदधातीति सूत्रार्थं ।

तं नामवन्नुक्रमरूपसंयुक्ताभिः स्तुतिभि र्दक्षिणाभिश्च यज्ञं समर्द्धयेमहीति समस्तार्थः ॥ ४४ ॥
अधाह्यग्ने। अधासमनन्तरमेव। हिः पादपूरणः। हे अग्नेक्रतोः भद्रस्य कल्याणस्यभन्दनी-
यस्य। दक्षस्य। तस्यैवसमृद्धस्य। समृद्धोसङ्कल्पोदक्ष उच्यते। साधोरतिशययुक्तस्य। रथीः

तुन्नभुद्दहृदिस्पृशंम् ॥ *ऋद्ध्यामातऽओहैः ॥४४॥ अधाहि ॥ अधा
ह्यग्नेक्रतोर्भद्रस्यदक्षंस्यसाधोः ॥ रथीर्ऋतस्यंबृहतोबभूर्थं ॥ ४५ ॥
एभिर्न्नः॥ एभिर्न्नोऽअर्कैर्भवानोऽअर्वाङ्स्वर्णज्ज्योतिः॥ अग्ने

रथीःइवबभूवथ। भव। ऋतस्ययज्ञस्यच। बृहतोमहतः बभूवथभव। अथवा यज्ञ एवोच्यते।
अथ अग्नेःक्रतोः यज्ञस्यभन्दनीयस्य। दक्षस्य उत्साहयुक्तस्य दक्षिणाभिः समृद्धस्य। साधो-
रथीरिव ऋतस्य यज्ञस्य बृहतोभव ॥ ४५ ॥ एभिर्नः। एभिः अर्कैः मन्त्रैः नः अस्माकं
सम्बन्धिभिः स्तूयमानइतिशेषः भवनःअस्मान् अर्वाङ् अभिमुखोऽञ्चनः। कथमिव स्वर्णज्योतिः।

* ऋध्यामातइतात्रा पिपिबेतादिसूत्रेण वदीर्घ। पा अ॰ ३ सू १२०।

यथा स्वराख्यं ज्योतिरुदया दाराख्यावीगञ्चनम सर्वप्राणिनोनुगृह्णाति । एवम्भवावीगञ्चनो नुग्रह-परतया । हे अग्ने विश्वेभिः अनिकैः सर्वैर्सुखैः । अनीकम सुखम् । सुमनाः शोभनमनस्कः सन् ॥ ४६ ॥ (१) अग्निं होतारम् । * अतिच्छन्दाः । अष्टिरत्यष्टिर्वा । तमहमग्निं होतारमन्ये-

व्विश्वेभिःसुमनाऽअनीकैः ॥ ४६ ॥ अग्निꣳहोतारम् ॥ अग्निꣳ होतारम्मन्न्येदास्वन्तुंव्वसुꣳसूनुꣳ सहसोजातवेदसंव्विप्रन्नजातवेदसम् ॥यऽऊर्द्ध्वयास्वद्ध्वरोदेवोदेवाच्च्याकृपा॥ घृतस्युविभ्राष्टिमनु

जानामि । दास्वन्तं दानवन्तम वसुं वासयितारम् सूनुं सहसः । बलस्यपुत्रम् । जातवेदमज्ञा-तमज्ञानम् । विप्रन्नजातवेदसम् । विप्रमिवजातमज्ञानम् । यः देवोदानादिगुणयुक्तः ऊर्द्ध्वं-यात्मालयाम्वध्वरः साधुयज्ञः । देवाच्याकृपा । देवान् प्रत्याचयादेवान्प्रतिगतया । कृपा-

(१) का॰ पुरीषवत्या पूर्वामतिच्छन्दसं प्राच्यो पुरीषसहिते भद्रा रातिष्ठं वतूर्यऽवस्थिराग्निꣳ॰होतारमिति १ ।

---

* प्रतिच्छन्दा पयसानत्रिकोपेता । छन्दांसि गायत्र्यादीनि समातिक्रान्तातिच्छन्दाः । चतु षष्ट्यक्षरत्वादष्टिः ।

फलितया। घृतस्य विभ्राष्टिमनुव ष्टिशोचिषा। घृतमयविभ्राष्टिं सपातम् अनुकामयतेदीप्त्या आनुह्वानस्य। आह्वयमानस्य। सर्पिषोघृतस्य। तमहमग्निं होतारंमन्य इति सम्बन्धः॥ ४७॥

नुवष्टिशोचिषाजुह्वानस्यसुर्पिषः॥४७॥ अग्नेत्वम्॥ अग्नेत्वन्नोऽअन्तमऽउतत्राताशिवोभवावरूथ्यः॥ वसुरग्निर्वसुश्रवाऽअच्छानक्षिद्युमत्तमᳬरयिन्दाः॥ तन्त्वाशोचिष्ठदीदिवःसुम्नायनूनमीमहेसखिभ्यः॥ ४८॥ [ २९ ] येनऽऋषयः॥ येनऽऋषयस्तपसास

(१)अग्नेत्वम्। द्विपदः ऋचोव्याख्याताः॥ ४८॥ (१) येन ऋषयः। अष्टाभि ऋग्भिः पुनश्चिति-

(१) का० अग्ने त्वमित्यनूकान्ते ऽपरे द्विपदा १। अग्ने त्वम् वसुरग्नि तन्त्वा इति तिसृभिरपरेऽनूकान्ते द्विपदेष्टका उपदधातीत्यर्थः।

(१) का० पुनश्चिति चोपरि तद्द्व्येन ऋषय इति प्रत्यृचम् २। मध्योपहितस्याष्टेष्टकास्य गार्हपत्यस्योपरि गार्हपत्यवदेव पुनश्चितिमुपदधाति येनेत्याष्टर्चेन प्रत्यृचमित्यर्थः।

च्चीयते। तत्रषट्त्रिष्टुभः द्वे अनुष्टुभौ। येनतपसा ऋषयो वसिष्ठप्रभृतयः सत्रम् आयन् आगतवन्तः। इन्धानाः अग्निम् आदीपयन्तः अग्निम् उच्यम् स्वराभरन्तः। स्वर्लोकमाभरन्तः स्वीकुर्वाणाः। तेनैवाहन्तपसा सत्रमागत्याग्निं सन्दीप्य स्वर्लोकञ्चस्वीकृत्य। तस्मिन्नहं

न्त्सत्रमायन्निन्धानाऽअग्निᳪस्वराभरन्तः॥ तस्मिन्नहन्निदधेनाकेऽ

अग्निंयमाहुर्मनवस्तीर्णबर्हिषम्॥ ४९॥ तम्पत्नीभिः॥ तम्प

त्नीभिरनुगच्छेमदेवाःपुत्रैर्भ्रातृभिरुतवाहिरण्यैः॥ नाकङ्गृभ्णा

नाःसुकृतस्यलोकेतृतीयेपृष्ठेऽअधिरोचनेदिवः॥ ५०॥ आवाचः॥

निदधेस्थापयामि। नाकेअग्निम्। नविद्यते अकंयत्रगतानां सनाकः स्वर्गोलोकः। यमाङ्ग-मैनवः मननप्रधानाः। तीर्णवर्हिषम् सर्वैर्यज्ञसाधनैः सम्पादितमित्यर्थः॥ ४९॥ तंपत्नीभिः। तद्‍ः यथणाद्यदोध्याहारः। द्वितीया दृढचीत्याख्यायते। नाकङ्गृह्णानाःस्वीकुर्वन्तः ऋषयः।

मुष्यतस्यलोके साधुकृतस्यस्थाने। तृतीयेपृष्ठे अधिरोचनेवस्थितादिव एकदेशीभूते यत्रादित्यस्तप-
तीति तं पत्नीभिः सह अनुगच्छेम। हे देवाः पुत्रैः भ्रातृभिः अपिचहिरण्यैः ॥ ५० ॥
आवाचोमध्यमरुहत्। अरुहत् वाचोमध्यम्। एतत् वाचोमध्यम् यत्रैषएतच्चीयते। भुरण्युः
भर्त्ता। अयमग्निः सत्पतिः। शोभनानांपतिः। चेकितानः चेतयमानः। किञ्च। पृष्ठे-

आवाचोमध्यमरुहद्भुरण्युरयमग्निःसत्पतिश्चेकितानः ॥ पृष्ठेपृ
थिव्यानिहितोदविद्युतदधस्पदङ्कृणुतांयेपृतन्यवः ॥ ५१ ॥ अय
मग्निः ॥ अयमग्निर्व्वीरतमोव्वयोधाःसहस्रियोद्योततामप्रयुच्छ

पृथिव्याः निहितः स्थापितः। दविद्युतत् देदीप्यमानः। अधःपदम् पादयोरधः कृणुतां करोतु।
येपृतन्यवः। येपाप्मानस्तान्सर्वान् ॥ ५१ ॥ अयमग्निः। वीरतमः अतिशयेन वीरः। वयोधाः
वयोन्नंहविर्लक्षणमस्मि न्धीयते। सहस्रियः सहस्रार्हः। द्योततान्दीप्यताम्। अप्रयुच्छन्

अप्रमत्तः । विभ्राजमानः सरिरस्यमध्ये । इमेवैलोकाः सरिरम् । दीप्यमानएषुलोकेषु । उप प्रयाहि । याहइतिपुरुषव्यत्ययः परोक्षकृतत्वान्मन्त्रस्य । दिव्यानिधामानीति बहुवचनेनसन्नतिः । स्थानानीतिपर्यायः ॥ ५२ ॥ संप्रच्यवध्वम् । ऋषीनाहमन्त्रदृक् संप्रच्यवद्ध्वमेनमग्निम् उपसंप्रयातच त्वम् हेअग्नेपथः देवयानान्पोणांकुरु इतिवचनव्यत्ययः । किञ्च पुनरपिकृण्वानाः

न् ॥ विभ्राजमानः सरिरस्यमध्यऽउपप्रयाहिदिव्यानिधाम ॥५२॥ सम्प्रच्यवध्वमुप ॥ सम्प्रयाताग्ने पथो देवयानान्कृणुध्वम् ॥ पुनः कृण्वाना पितरायुवानान्वातांसीत्त्वयितन्तुमेतम् ॥ ५३ ॥ उद्बुध्यस्व ॥ उद्बुध्यस्वाग्ने प्रतिजागृहित्वमिष्टापूर्ते सꣳसृजेथामयञ्च ॥

कुर्वाणा ऋषयः । पितरोयुवाना । वाक्चमनश्चपितरोयुवानेतिश्रुतिः । वाङ्मनसे युवानातरुणे अयातयामे अन्योन्यंसंगतेवा । संगतेहिवाक्चमनश्च यज्ञं साधयतः । अन्वाताꣳसित्वयितन्तुमेतम् । अन्वातनोतु त्वयितन्तुं यज्ञम् एतम् हेअग्ने ॥ ५३ ॥ उद्बुध्यस्व । प्रतिबुद्धा-

भत्र। हेअग्ने प्रतिजागृहि चत्वम। ततः इष्टापूर्तेंचसंसृजेथाम् त्वत्प्रसादाद्यजमानेन सह। अयंच। यजमान. इष्टापूर्ताभ्यां संसृष्टोभवतु। ततः संसृष्टेष्टापूर्तोव्यपगत कल्मषः सन्। अस्मिन्सधस्थे सहस्थाने देवैः पुनरपिविशिनष्टि। अध्युत्तरस्मिन्। सर्वोत्कृष्टे आदित्यलोके। विश्वेदेवा यजमानश्चसीदत। विश्वैर्देवैर्यजमानस्य समानलोकताप्रार्थ्यते॥ ५४॥ येनवहसि। येनहेतुना

अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥५४॥

येनवहसि॥ सहस्रंयेनाग्नेसर्व्ववेदसम्॥ तेनेमंयज्ञन्नोनय स्वर्देवेषुगन्तवे॥५५॥ अयन्ते॥ अयन्तेयोनि *र्ऋत्वियोयतोजातो

सामर्थ्येन वावहसिप्रापयसि सहस्रम्। येन हेअग्ने सर्ववेदसं सर्वधनम्। तेनइमंयज्ञम् नः अस्मत्संबन्धिनम् नयप्रापय। स्वर्देवेषु गन्तवे। स्वर्लोकं देवेषुदेवान्प्रति। गन्तवेगमनाय। यज्ञेहिस्वर्लोकंगते अस्माकमपिगमनं भवति। तदुक्तम। सोस्ययज्ञोदेवलोकमेवाभिप्रेति

* ऋकारोत्तरवर्तिरेफस्यद्व्युच्चारणप्रमाणमाह अपरान्तस्थस्था युतान्यद्दल सयुतास्योः मात्रकारेरे कारसहितोच्चारणम् प्रतिज्ञापरि० सू० द्वि० कण्डिका।

तदन्चोदक्षिणायांददाति सेतिदक्षिणामन्वारभ्य यजमानइति ॥ ५५ ॥ अयन्तइति व्याख्या-

ऽअरोचथाः ॥ तस्मान्नंग्नऽआरोहाथानोवर्द्धयारयिम् ॥ ५६ ॥

[ ८ ] तपंश्च ॥ तपंश्चतपस्यश्चशैशिरावृतूऽअग्नेरंन्तःश्लेषोसि

कल्पेंतान्द्यावांपृथिवीकल्पंन्तामापऽओषंधयःकल्पंन्तामग्नयःपृ

थङ्ममज्यैष्ठ्यायसव्रंताः ॥ येऽअग्नयःसमंनसोन्तराद्यावांपृथिवी

ऽइमे ॥ शैशिरावृतूऽअंभिकल्पंमानाऽइन्द्रंमिवदेवाऽअंभिसंविंशन्तु

तयादेवतंयाङ्गिरस्वद्ध्रुवेसींदतम् ॥ ५७ ॥ परमेष्ठीत्त्वां ॥ सादय

तम् ॥५६॥ (१) ऋतव्ये। तपश्चतपसश्चेतिव्याख्यातम् ॥५७॥ विश्वज्योतिषम्। (२) परमेष्ठीत्त्वा

(१) का० ऋतव्ये तपश्च तपस्यश्चेति १। ऋतव्ये द्वे पदी एके उपदधाति।

(२) का० विश्वज्योतिष परमेष्ठी त्वे ति। यजमानकृता पद्या विश्वज्योतिष तृतीयोपहिताया विश्वज्योतिष उपर्युपदधाती ति सूत्रार्थः।

य०
य०
सं०
२४६
उ०
भा०

इति व्याख्यातम् ॥ ५८ ॥ (१) लोकंपृण ॥ ५९ ॥ ताऽअस्य ॥ ६० ॥ इन्द्रंविश्वा ॥ ६१ ॥

तु *दिवस्पृष्ठेज्ज्योतिष्मतीम् ॥ विश्वस्मैप्राणायापानायव्याना १५अ०
युविश्वञ्ज्योतिर्यच्छ ॥ सूर्य्यस्तेधिपतिस्तयादेवतयाङ्गिरस्वद्ध्रुवा
सीद ॥ ५८ ॥ लोकम्पृण ॥ च्छिद्रम्पृणाथोसीदद्ध्रुवात्वम् ॥ इन्द्रा
ग्नीत्वाबृहस्पतिरस्मिन्न्योनावसीषदन् ॥ ५९ ॥ ताऽअस्य ॥ सू
ददोहसःसोमंश्रीणन्तिपृश्नयः ॥ जन्मन्देवानांविशस्त्रिष्वारो
चनेदिवः ॥ ६० ॥ इन्द्रंविश्वाः ॥ इन्द्रंविश्वाऽअवीवृधन्त्समुद्र
व्यचसङ्गिरः ॥ रथीतमंरथीनांवाजानाःसत्पतिम्पतिम् ॥ ६१ ॥ शिवम्.

(१) का० दक्षिणाएं सामत्वगर्तात्रिमाद्वादधि लोकम्पृणाः पूर्ववत्। आत्मनो दक्षिणादाग्नेयकोणादपरस्यां दिश्यरत्निमात्रादधि-पद्यालोकद्वयं परित्यज्य तृतीयलोकादारभ्य प्रथमचितिवल्लोकम्पृणा उपदधातीति सूत्रार्थः। २४६

* दिवस्पृष्ठे ज्योतिष्मती मिताव दिवोऽककुत्पृथिव्याः। दिवइतोतस्य सम्बन्धीविसर्जनीय. सकारमापद्यते इतिसः प्रा० प० ३। सू० २४।

व्याख्याता: ॥ ॰ ॥ विश्वकर्णीमुपदधाति । (१) प्रोथदश्वः । आग्नेयी त्रिष्टुप् । मध्यमानोग्निरश्वोच्यते । प्रोथतिः शब्दार्थः । शब्दायतेऽग्निः । अश्वोनयवसेविष्यन् । अश्वइवयवसेघासेविषयभूते अविष्यन् ग्रसिष्यन् । यदायस्मिन्काले । महतः संवरणात् । संव्रियतेऽस्मिन्नग्निरितिसंवरणमरणिकाष्ठमुच्यते । अरणिकाष्ठात् । व्यस्थात् व्युत्तिष्ठते प्रकाशीभवति । आत्

प्रोथदश्वः ॥ प्रोथदश्वोनयवसेविष्यन्यदामहःसंवरणाद्व्यस्थात् ॥ आदस्यवातोऽअनुवातिशोचिरधस्मतेव्रजनङ्कृष्णमस्ति॥६२॥

अथानन्तरमेव । अस्याग्नेः । वातः अनुवाति । शोचिः संदीपनः । अध अथ समानार्थौछन्दसि । स्मनिपातोनर्थकः । ते । अथैतस्य त्वर्थः । नह्यत्र युष्मदः प्रयोगः परोक्षकृतत्वान्मन्त्रस्य । श्रुतिरप्यसमर्थं दर्शयति । अथैतस्यव्रजनं कृष्णंभवतीति । व्रजतिगच्छत्यनेनेति व्रजनं

(१) का० प्रच्छाद्य पुरीषेण विकर्णीसमाख्ये शर्करे संस्पृष्टे छिद्रे प्रोथदश्वद्वयुत्तरां विकर्णीम् । पञ्चमीं चितिं पुरीषेण पूर्ववत् प्रच्छाद्य शर्करामय्यौ परस्परमलग्ने सच्छिद्रे विकर्णीसंज्ञे द्वे इष्टके उपधेये । तयोर्मध्ये उत्तरदिश्यनूकरेखा मध्ये प्रोथदश्व इति विकर्णीष्टकामुपदधातीति सूत्रार्थः ।

कृष्णं भवति ॥ ६२ ॥ स्वयंमातृणामुपदधाति । (१) अयोष्ट्वा । आयाद्यांभामीत्याद्यारंभः यच्छ-
न्दप्रयोगात् । अयाद्यांभासि । द्युलोकसंस्तवोस्याः स्वयमातृण्यायाः । आभासिप्रकाशयसि-
यास्त्वन्द्यांद्युलोकम् । आपृथिवीम् आभासिचपृथिवीम् आभासिच उरू विस्तीर्णमन्तरिक्षम् ।

आयोष्ट्वा ॥ आयोष्ट्वासदनेसादयाम्यवतश्छायायाᳬंसमुद्रस्यहृदये ॥ *रश्मीवतीम्भास्वतीमायाद्याम्भास्यापृथिवीमोर्वन्तरिक्षम् ॥६३॥

तांत्वांरश्मीवतीं रश्मिसंयुक्ताम् । आयोः अयनस्यआदित्यस्य त्वांसदने अवस्थाने सादयामि ।
अवतः अवनस्य पालयितुः दीप्यतोवा । छायायाम् आश्रये । समुद्रस्यसमुन्दनस्यादित्यस्य ।
हृदयेप्रधानप्रदेशे । आदित्योहिसर्वंसमुन्दतीतिसमुद्रउच्यते ॥ ६३ ॥ परमेष्ठीत्वासादयत्वेति

(१) का॰ आयोष्ट्वेति स्वयमातृण्णाम् । आयोरिति कण्डिकाद्वयेन विकर्णीं दक्षिणां स्वयमातृण्णामुपदधातीत्यर्थः ।

---

* रश्मीवतीमित्यत्र अक्षरप्रिमसति सुमतीत्यादि नासूत्रेण वकारे प्रत्ययेरश्मि इति इकारस्य दीर्घोभवति प्रा॰ । प॰ ३ । सू॰ ८८ ।

व्याख्यातम् ॥६४॥ अग्निम्प्रोक्षति। (१) हिरण्यशकलसहस्रेण शतेन द्वे प्रकिरति सहस्रस्येति प्रतिमन्त्रम्। सहस्रस्य प्रमासि प्रमाणम्भवसि। सहस्रस्य प्रतिमा प्रतिमानम्भवसि। सहस्रस्य उन्मा उन्मा-

पुरमेष्ठीत्वा॥ सादयतु*दिवस्पृष्ठेव्यचस्वतीम्प्रथस्वतीन्दिवंयच्छदिवन्दृᳪहदिवम्माहिᳪसीः॥ विश्वस्मैप्राणायापानायव्यानायोदानायप्रतिष्ठायैचरित्राय॥ सूर्यस्त्वाभिपातुमह्यास्वस्त्याच्छर्दिषा शन्तमेनतयादेवतयाङ्गिरस्वद्ध्रुवासीदतम्॥६४॥ सहस्रस्यप्रमासि॥ सहस्रस्यप्रतिमासिसहस्रस्योन्मासिसाहस्रोसिसहस्रायत्वा॥६५॥ [६] इतिसंहितायांपञ्चदशोध्यायः १५॥

नं तुलामानं भवसि। साहस्रोसि सहस्रात्मकोसि। यतः अतः। सहस्राय त्वां प्रोक्षामि ॥६५॥

इति उवटकृतौ मन्त्रभाष्ये पञ्चदशोध्यायः १५॥

(१) का॰ तिष्ठन्नग्निम्प्रोक्षति हिरण्यशकलसहस्रेण शते द्वे द्वे प्रकिरति सहस्रस्येति प्रतिमन्त्रम्। इष्टकाचितं सपक्षपुच्छमग्निं पश्चादुत्तरपूर्वदक्षिणपरिमेषु शतद्वयं सोदकास्तिष्ठन् प्रकिरतीत्यर्थः।

* दिवस्पृष्ठेव्यचस्वती मिथ्यापिदिवोऽकद्रुष्टथिव्यो रितिसूर्वं षेवस आ॰ भ॰ ३। सू॰ २४।

य० य० सं० २४८ उ० भा०



(१) शतरुद्रियहोमः । अथातःशतरुद्रियं जुहोति इत्युपक्रम्य सएषोऽग्निश्चितो वुभुक्षमाणो

* नमस्ते॥ नमस्तेरुद्रमन्न्यवऽउतोतऽइषवेनमः ॥ बाहुब्भ्यामुतते

रुद्ररूपेणावतिष्ठते। तस्मतर्पणंदेवैः कृतम्। द्वितीयन्दर्शनम्। यद्वैशतरुद्रियंजुहोतीत्युपक्र

पञ्चदशे ध्याये चयनमन्त्रान् समाप्य षोडशे शतरुद्रियाख्यहोममन्त्रा उच्यन्ते ।

(१) का० शतरुद्रियहोम उत्तरपक्षस्यापरस्यासक्त्या परिश्रित्स्वर्कपर्णेनार्ककाष्ठेन शातयन् सन्तत जार्तिलमिश्रान् गवेधुका-सक्तूनजाक्षीरमेके तिष्ठन् उदङ् मुखस्तत्राध्यायेन अनुवाकान्ते स्वाहाकारो जानुमात्रे पश्चान्ते च नाभिमात्रे प्राक्च प्रत्य वरोहेभ्यो मुखमात्रे प्रतिलोम प्रत्यवरोहान् जुहोति प्रमाणे पुनर्मोऽस्त्विति प्रतिमन्त्रम् । अस्यार्थः । हिरण्यशकलैरग्निप्रोक्षणा-नन्तर शतरुद्रियसंज्ञो होम । तस्याहवनीये प्राणवणवादमाह । उत्तरपक्षपश्चिमकोणे या परिश्रितो जङ्घामात्रादय· पूर्वं निखातास्तासु होम । तत्र विधि । जर्तिलैरारण्यतिलैर्मिश्रान् गवेधुकासक्तूनर्कपत्रेण जुहोति। किं कुर्वन्। अर्ककाष्ठेन सन्ततं धारयन् परिश्रित्सु पातयन् अर्कपत्रं दक्षकरेणादायार्ककाष्ठं वामेनादाय तेन पातनीयम्। सक्तुस्थाने अजादुग्ध-मिति केचित्। उदङ्मुखो नमस्तऽइत्यध्यायेन। तत्रानुवाकत्रयान्ते ऽर्भकेभ्यश्च वो नम इत्यत्र जानुमात्रे परिश्रिति स्वाहाकारो विधेय। पश्चानुवाकान्ते सुधन्वने चेत्यत्र नाभिमात्रे परिश्रिति स्वाहाकार । नमोऽस्तुरुद्रेभ्य इति प्रत्यवरो-

● नमस्ते षोडशहिरण्यबाहवऽउर्णोपिषेतच्चभोज्ये छायपश्चका सुतायचतस्र अं भवाये कापार्यायपञ्चद्वापेभ्यं धसोविंठ० शतिर्नवषट्पष्टिः ।

म्य प्रजापतेर्विस्रस्तादित्य भिधाय मंत्रार्थानुगुण्येन श्रुतिर्भणति। सएवशतशीर्षोरुद्रः समभवदिति नम स्तेरुद्रमन्यवे रौद्रोध्यायः परमेष्ठिन आर्षन्देवानांवा प्रजापतेर्वा आद्योनुवाक षोडशभिऋग्भिः। तत्र एकोरुद्रो देवता एकागायत्री तिस्रोनुष्टुभ स्तिस्र.पंक्तयः सप्तानुष्टुभो द्वेजगत्यौ ॥ नमोस्तुते। हेरुद्र तवसंबन्धिने मन्यवेक्रोधाय। उतअपिच। तेतव संबन्धिने इषवेकाण्डायनमोस्तु बाहुभ्याम् उत। अपि तेतवसंबन्धिभ्यां नमोस्तु ॥ १ ॥ याते यातव हेरुद्र शिवाशान्ता तनूः शरीरम्। अघोराअविषमा। अपापकाशिनी। नपापकाशिनी अपापकाशिनी। पापमसुखंयाप्रकाशयति सापापप्रकाशिनी नपापप्रकाशिनी। तया नः अस्मान् तन्वाशन्तमया। सुखतमयासुखयितृतमया। अतिशयेन सुखयित्र्या। गिरिशन्त। गिरौपर्वतेकैलासाख्ये अवस्थितः शंसुखन्तनो

नमः ॥ १ ॥ याते ॥ रुद्रशिवातनूरघोरापापकाशिनी॥ तयानस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि ॥ २ ॥ यामिषुम् ॥ यामिषुं

षमन्त्रा तेभ्य प्राक् मुखमात्रपरिमिति स्वाहाकार। नमोऽस्त्विति कण्डिकात्रयेण प्रतिलोम होम येदिवीति मुखमात्रे। येन्तरिक्षमिति नाभिमात्रे। येपृथिव्यामिति जानुमात्रे। इति सूत्रार्थः।

तीति गिरिशन्तः । यद्वा गिरिवाच्यवस्थितः सुखन्तनोतीति । यद्वा गिरौमेवेवस्थितो दृष्टि द्वारेण सुखन्तनोतीति । तस्यसंबोधनं हेगिरिशन्त । अभिचाकशीहि । अभिपश्य । सुख यितु मितिशेषः । चाकशीतिः पश्यतिकर्मा ॥२॥ यामिषुम् । याम् इषुं काण्डम् हे गिरिशन्त । गिरौपर्वते वस्थितः कैलाशाख्ये सुखन्तनोतीति गिरिशन्तः तस्यसम्बोधनम् हे गिरि-

## ङ्गिरिशन्तुहस्तेंविभर्ष्यस्तंवे॥शिवाङ्गिरित्र ताङ्कुरुमाहिंꣳसीःपुरुषञ्ज गंत् ॥ २ ॥ शिवेनुव्वचंसा॥ त्त्वागिरि* शाच्छांव्वदामसि ॥ यथांनुःस

शन्त । हस्तेविभर्षि धारयसि । अस्तवे असितुं क्षेप्तु मित्यर्थः । शिवाङ्गिरित्र । गिरौकैलाशे वस्थितः त्रायते भक्ता नितिगिरित्रः तस्यसम्बोधनं हे गिरित्र । तांकुरु । किञ्च । माहिंसीः मावधीः पुरुषम् जगत् जङ्गमञ्जगवादि ॥ २ ॥ शिवेनवचसा । शिवेन वचनेनत्वा त्वां । गिरिश । गिरौपर्वते कैलाशाख्ये शेतेइति गिरिशः तस्य सम्बोधनम् हे गिरिश । अच्छावदा-

* पच्छावदामसी स्यत्रसंहितायां एवाऽच्छ मसमाऽय इतिसूत्रेणदीर्घ तेनअच्छाव्वदाम सीत्यत्रदीर्घः सिध्यति प्रा० अ० ३ सू० । १२५ ।

मसि। अच्छाभिराप्नुमितिशाकपूणिः। इदं तोममि। तथा अभिवदाम। यथायेन प्रकारेण नः अस्माकं सर्वम् इत्। इच्छब्दएवार्थे। सर्वमेव जगत् जङ्गमादि। अयक्ष्मम् यक्ष्माव्याधिः। व्याधिरहितम् सुमनाश्चशोभनमनस्कञ्च असत् भूयात् ॥ ४ ॥ अध्यवोचत्। अधीत्युपरिभाव मैश्वर्य्यंवा। अधिवदतु ब्रवीतुकञ्चित्स्वकीयं पुरुषम भगवान् रुद्रः। अधिवक्ता।

व्विमिज्जगंदयुक्ष्मᳪसुमनाऽअसंत् ॥ ४ ॥ अध्यवोचत्॥ अध्यवोचदधिवुक्ताप्प्रंथुमोदैव्व्योंभिषक् ॥ * अहींश्च्चसर्व्वाञ्जुम्भयन्त्सर्व्वांश्च्चयातु

ऐश्वर्य्येणैव योवदति जानाति। प्रथमो देव्योभिषक्। मुख्योदेवसम्बन्धीभिषक् वैद्यः। किमधिवदत्वित्यत आह। अहींश्च सर्वान् जम्भयन्। जभजृभी गात्रविनामे। सर्वान् सर्वप्रकारान् नाशयन्। सर्वाश्च यातुधान्यः। यातनाः दुःखंकष्टं तत्प्राणिषु धारयन्तीति यातुधान्यः

---

* अहीन् चेतावसंहितायांचच्छयोः शम् चकारच्छकार प्रत्यययोर्नकार शकारमापद्यते अनुनासिकं चोपधा अहींश्चेतिसिद्धम् पा० अ० ३। स्० १३५।

राक्षसीः जम्भयन् अधराचीः अधोञ्चनाः कृत्वा। परासुव पराक्षिप। यद्वा। रुद्रएवोच्यते। अध्यवोचदधिवक्ता अधिवदतु ईश्वरोवक्ता। प्रथमोदैव सम्बन्धीभिषक् वैद्यः। अहींश्च सर्वान्। जम्भयन् सर्वाश्चयातुधान्यः अधराचीः कृत्वा परासुवक्षिपतु ॥ ५ ॥ असौयः। आदित्यरूपेणा-वरुद्रः स्तूयते। अभिनयेन दर्शयन्नाह। असौयस्ताम्रः ताम्रवर्णः। उदयकाले अस्तमनका-

धान्योधराचीःपरासुव ॥५॥ असौयः ॥ असौयस्ताम्रोऽअरुणऽउत बभ्रुःसुमङ्गलः ॥ येचैनꣳरुद्राऽअभितोदिक्षुश्रिताःसहस्रशोवैषा

लेच। अरुणः। अरुणवर्णः रक्तवर्णः। उतबभ्रुः। अपिच बभ्रुवर्णः कपिलवर्णः। सुम-ङ्गलः। शोभनानि मङ्गलान्यस्येति सुमङ्गलः। अवोसहेडईमहे इत्यनुषङ्गः। येचएनं भगव-न्तमादित्यं रुद्राः रश्मयः। अभितः इतश्चेतश्च। दिक्षु सर्वासुच श्रिताःस्थिताः सहस्रशः असंख्याताः। अत्रएषांहेडईमहे। अवईमहे अवनयामः। एषां सम्बन्धी हेड़ःक्रोधः। हेडइति क्रोधनामसुपठितम्। यद्वारुद्रएवोच्यते। असौयस्ताम्रवर्णः अरुणवर्णः अपिच बभ्रु-

वर्णः सुमङ्गलः । अनेकानिहिरूपाणि रुद्रः करोति कार्यवशात् । समञ्जसमन्यत् ॥ ६ ॥ असौयः आदित्यः । अवसर्पति अवाचिनं सर्पति गच्छति अस्तमयकाले । नीलग्रीवः नीलग्रीवइवास्तङ्गच्छन् लच्यते । विलोहितः धारणाधनुमात्रेण प्राप्तविलोहिमण्डलाभिप्रायम् । उतैनङ्गोपा अदृश्यन् । अथेनं गोपालाः अभिपश्यन्ति गवांप्रवेशनं कालं मन्यमानाः । अदृ-

ॐहेडऽईमहे ॥ ६ ॥ असौय॰ ॥ असौयोवसर्प्पतिनीलंग्रीवोविलोहितः ॥ उतैनंगोपाऽअदृश्श्रन्नदृश्श्रन्नुदहार्य्यः सदृष्टोमृडयातिनः ॥ ७ ॥ नमोस्तु ॥ नमोस्तुनीलंग्रीवायसहस्राक्षायमीढुषे ॥

श्नुदहार्य्यः । इषेरुडागमश्छान्दसः । पश्यन्तिच उदकहार्यः कुम्भदास्यः । आगोपालाङ्गनादिप्रसिद्धइत्यर्थः । सदृष्टोदृष्टमात्रोमृडयाति । मृडसुखने । सुखयति । नः अस्मान् । अत्यन्तं मृद्धृदयतम इत्यभिप्रायः । यद्वा रुद्रएवोच्यते । स्तपिराह । असौयः अवाचीनं सर्पति अभिमुखगच्छति । नीलग्रीवो नीलकण्ठः विलोहितः विगत कलुषभावः । उतैनंगोपा अदृ-

यन्नुदहार्थं इतिगोपालांगनादि प्रसिद्धिं दर्शयति। समञ्जसमन्यत् ॥ ७॥ नमोस्तु। नमस्कारोस्तु नीलग्रीवायनीलकण्ठाय सहस्राक्षायवह्वक्षाय। मीढुषे सिञ्चसेचने। सेक्तृत्वाय। अविपरिणामीतिस्तूयते। अथोअपिच येअस्यसत्वानः सत्वभूतारुद्राः अहन्तेभ्यः अकरम् अकरवम् करोमि। नमस्कारम् ॥ ८॥ प्रमुञ्च। धन्वनः धनुषः त्वमुभयोः आर्त्न्योर्धनुरन्तयोः ज्यांगुणाम्। याश्च तेतव हस्तेइषवः। परातापभगवोवप। परावप। पराक्षिप। ताः हेभगवन् महदैश्वर्ययुक्त ॥ ९॥ विज्यंधनुः। विगतगुणं धनुः। कपर्दोस्यास्तीतिकपर्दी।

* अथोयेऽअंस्यसत्वानोहन्तेभ्योंकरुन्नमः ॥८॥ प्रमुंञ्च ॥ प्रमुंञ्चुधन्न्वंनुस्त्वमुभयोरात्न्योंर्ज्याम् ॥ याश्चंतेहस्तऽइषंवुःपरातांभगवोव्वप ॥ ९ ॥ व्विज्ज्यन्धनुंः ॥ कपुर्दिनोव्विशंल्ल्योबाणंवार२ऽ॥ उत ॥

* यथोपूर्वकस्ययकारस्य नजकारोच्चारणम् तदुक्तं याज्ञवल्क्यशिक्षायां अथमासनशब्दयो विभाषाम्रेडितेयथो अथ मास नशब्दपूर्वकस्यविकल्पेन जकारोच्चारणम्भवति।

कपर्दोस्यजटाबन्धः। विशल्यः शल्यरहितः। बाणवान् इषुधिः। उतअपिच। अनेशन् णश-अदर्शने। नष्टा। अस्ययाइषवः आभुः रिक्तः। अस्यनिषङ्गधिः खड्गनिक्षेपः। निषज्यतइति निषङ्गः खड्गउच्यते तद्यस्मिन्नियते सनिषङ्गधिः। न्यस्तसर्वशस्त्रइत्यभिप्रायः ॥ १० ॥ याते: यातव हेतिरायुधम् हेमीढुष्टम मिहसेचने। सेक्तृतम युवतम परिणामनिषेध द्वारेणस्तुतिः।

नेशन्नस्युयाऽइषवऽआभुरस्यनिषङ्गधिः ॥ १० ॥ याते ॥ हेतिर्म्मीढु ष्टमुहस्तेबभूवतेधनुः ॥ तयास्म्मान्विश्श्वतस्त्वमयक्ष्मयापरिभुज ॥ ११ ॥ परितेधन्न्वनोहेतिरस्म्मान्वृणक्तुविश्श्वतः ॥ अथोयऽइषु

अस्मात्सर्वम्भवति। हस्तेबभूव। भूता। तेइतिनिरर्थकः। धनुरितिहेतिविशेषणम्। तयाहेत्या अस्मान्विश्वतः सर्वतः त्वम् अयक्ष्मयायक्ष्माव्याधिः व्याधिरहितया परिभुजपरिपालय ॥ ११ ॥ परिते। परिवृणक्तु परिवर्जयतु। तेतवधन्वनः धनुषः सम्बन्धिनाहेतिः। आयुधंकाण्डलक्षणम् अस्मान् विश्वतः सर्वतः। अथोअपिच। यइषुधिर्बाणवान् तवतमारेदूरे अस्मत् अस्मत्तः निधेहि

स्थापयतम् इषुधिम् ॥ १२ ॥ अवतत्या। अवताय धनुः त्वम् हे सहस्राक्ष। शतेषुधे। शत-शब्दो बहुपर्यायः। निशीर्य्य शल्यानां मुखा। शातयित्वा फलानां मुखानि। शिवः शान्तः नः अस्माकं सुमनाः शोभनमनस्कश्च भव ॥ १३ ॥ नमस्ते। नमोस्तु ते तव आयुधाय अनातताय अव-

धिस्तवारेऽअस्म्मन्निधेहितम् ॥ १२॥ अवतत्यधनुः ॥ अवत्यधनुष्ट्‌ᳫँ सहस्राक्षशतेषुधे ॥ निशीर्य्यशल्ल्यानाम्मुखाशिवोनः सुमनाभव ॥ १३ ॥ नमस्ते ॥ नमस्तऽआयुधायानाततायधृष्ण्णवे ॥ उभाब्भ्यां मुततेनमोबाहुब्भ्यान्तवधन्न्वने ॥ १४ ॥ मानः ॥ मानोमहान्तमुत मानोऽअर्भकम्मानऽउक्षन्तमुतमानऽउक्षितम् ॥ मानोव्वधीः पितर

तारिताय। धृष्णावेधर्षणशीलाय प्रगल्भाय। उभाभ्याम् उत अपि च। ते तव नमोस्तु। बाहुभ्यां तव धन्वने। धनुषे नम इत्यनुवर्त्तते ॥ १४ ॥ मा नः मा वधीः नः अस्माकम् महान्तं वृद्धं वयः

प्रभृतिभिः। उतमानोअर्भकम्। अपिचमावधीः नः अस्माक मर्भकमल्पम्। मानउक्षन्तम्। मावधीः नः अस्माक मुक्षन्तम्। उक्षसेचने। सिंचन्तं तरुणमिति यावत्। उतमानउक्षितम्। अपिचमावधीः नः अस्माकमुक्षितंसिक्तं गर्भस्थमित्यर्थः। मानोवधीः पितरम्। मावधीः नः अस्माकंपितरम्। आदरार्थं पुनर्वचनं महान्तमितिसिद्धत्वात्। मोतमातरम्। मावधीः अपि-

म्मोतमातरम्मानःप्प्रियास्तन्न्वोरुद्द्ररीरिषः ॥ १५ ॥ मानस्तोके ॥ तनयेमानऽआयुषि मानोगोषु मानोऽअश्श्वेषुरीरिषः ॥ मानोव्वीरा न्नुद्द्रभामिनोव्वधीर्हविष्म्मन्तःसदमित्त्वाहवामहे ॥ १६ ॥ [ १६ ] अ

चमातरम्। मानः प्रियास्तन्वः रुद्ररीरिषः। रिषतिर्हिंसार्थः। मारीरिषः माहिंसीः नः अस्माकं प्रियास्तन्वः प्रियाणिशरीराणिपुत्रपौत्रलक्षणानि। हेरुद्र ॥ १५ ॥ मानः। मारीरिषः। रिषतिर्हिंसाकर्मा। माहिंसीः नः अस्माकम् तोकेपुत्रविषये। माहिंसीः तनयेपौत्रविषये। माहिंसीः नः अस्माकम् आयुषिविषयभूते। मानोगोषु। माहिंसीः नः अस्माकं गोषुविषय-

भतासु। मानोअश्वेषु। माहिंसीः नः अस्माकमश्वेषुविषयभूतेषु। यद्वा विभक्तिव्यत्ययेन-व्याख्यानम्। मारोरिषः अस्माकंतोकंतनयमायुर्गो अश्वानिति। मानोवीरान् रुद्रभामिनो-वधीः। मावधीः नः अस्माकं वीरान् हे रुद्रभामिनः। भाम। क्रोधः। क्रोधसंयुक्तान् कः प्रत्युपकारइतिचेत्। हविष्मन्तः। हविषासंयुक्ताः सदंसदाकालम् इच्छन्तएवाथें। त्वामेवा-

# तम् ८०० नमोहिरंण्यबाहवे॥ सेनान्ये दिशाञ्चपतयेनमोनमोवृ

ह्वयाहे। आह्वयामोयागार्थम्। अनन्यशरण वयमित्यभिप्रायः॥ १६॥ (१) नमोहिरण्यबाहवे। इतउत्तरंयजूंषि द्रापेअन्धसस्पते इतियावत् ह्वयोर्द्वयोरुद्रयोस्तुतिः। तिस्रोशीतयो रुद्राणाम् कण्डिकायां कण्डिकायामष्टौवष्टौरुद्राः। तेषांचोभयतो नमस्काराः अन्येअन्य-

(१) नमो हिरण्यबाहव इत्युत्तर द्रापे इति (४७) ऋक्पर्यंतं सर्वाणि यजूंषि। तत्र नमो हिरण्यबाहव इत्यादीनां धनुष्कृद्भ्यश्चवो नम इत्यन्तानां (४६) चत्वारि शदधिकद्विशतसङ्ख्याकानां यजुषां तावन्तो रुद्रा देवता नमो व किरिके भ्य इत्यादियतुर्णाम् (४६) अग्नि वायुसूर्या देवता रुद्राणां प्रधानभूता। छन्दांसि तु। चतुरक्षर दैवी वृहती पञ्चाक्षरं दैवी पंक्ति षडक्षर यजुर्गायत्री म माच यजुरुष्णिक् अष्टाक्षर यजुरनुष्टुप् यजुर्बृहती दशाक्षर यजु पङ्क्ति एकादशाक्षर यजु स्त्रिष्टुप्, द्वादशाक्षरं यजुर्जगता चतुर्दशाक्षरं सामोष्णिगिकमेव किरिकेभ्य इति। एतान्येवाव छन्दांसि।

तरतो नमस्काराश्चन्येरुद्रास्तेघोरतरा अथान्ततरा यतउभयतो नमस्कारादृति । नमोस्तु हिरण्यालंकारभूपितवाहवे सेनान्येच । सनांनयतीतिसेनानी: । दिशांचपतयेनम: । नमो-ष्टचेभ्योहरिकेशेभ्य: ष्टचरूपेभ्यो रुद्रेभ्योनमस्कारदृति । हरितानिपर्णानि केशादूवयेषां लच्यन्ते ।

वृक्षेभ्योहरिकेशेभ्यः पशूनाम्पतयेनमोनमःशष्पिञ्जराय * त्विषीमतेपथीनाम्पतयेनमोनमोहरिकेशायोपवीतिनेपुष्टानाम्पतयेनमोनमोवभ्लुशाय ॥१७॥ नमोवभ्लुशाय ॥ व्याधिनेन्नानाम्पतयेनमोन

पशूनाम्पतयेनम: । नम: शष्पिञ्जराय । नवप्ररूढानि तृणानिशष्पम् तद्वर्णाय । त्विषीमते । त्विषिर्दीप्ति: । पथीनांपतयेनम: पथामितिप्राप्ते छान्दसम् । नमोहरिकेशाय लोहितकेशाय । उपवीतिने । यज्ञोपवीतिने पुष्टानांसमृद्धानांपतयेनम: ॥ १७ ॥ नमोवभ्लुशाय वभ्रुवर्णाय ।

* त्विषीमत इत्यत्र शृणुत त्विषि प्रजि भवत पिव स्मातिष्ठरचमकारे शृणुतत्त्विषिप्रजिभवतपिबस्मातिष्ठरचएते ऋस्वाम-कारेमत्वर्थेदीर्घमापद्यन्ते इत्यनेनदीर्घं प्रा० अ० ३। सू० ११७।

बभ्रुः कपिलः। व्याधिने व्यध्यतीतिव्याधी। अन्नानांपतयेनमः। नमोभवस्यहेत्यै। भवः संसारः हेतिरायुधम्। संसारस्यछेत्रे। जगतांपतयेनमः जगतांजङ्गमानाम्। नमोरुद्राय-आततायिने। आततेनधनुषाएतीत्याततयी। उद्यतायुधाय। क्षेत्राणांपतयेनमः। नमः सूताय सूतोश्वसारथिः। अहन्त्यअहंत्ये नहिसूतः किञ्चिदपिहन्ति। वनानांपतयेनमः॥ १८॥

मोभुवस्यंहेत्यैजगंताम्पतंयेनमोनमोरुद्रायातताायिनेक्षेत्रांणाम्पतंये नमोनमःसूतायाहंन्त्यैव्वनांनाम्पतंयेनमोनमोरोहिंताय॥१८॥ नमो रोहिंताय॥ स्थपतंयेव्वृक्षाणाम्पतंयेनमोनमोभुवन्तयेंव्वारिवस्कृता यौषंधीनाम्पतंयेनमोनमोमुन्त्रिणेंव्वाणिजायुकक्षांणाम्पतंयेनमोनमं

नमोरोहिताय। वर्णतोनिर्द्देशः। स्थपतये। स्थपतिर्गृहादीनांचेता। चयनंकरोतिविश्व-कर्मरूपेण वृक्षाणांपतयेनमः। नमोभुवन्तये भुवंपृथिवींतनोति विस्तारयतीतिभुवन्तिः। वारिवस्कृताय। वरिवोधनम् तत्कृतं येनसवारिवस्कृतः। दीर्घत्वंछान्दसम्। ओषधीनांपतये

नमः । नमोऽसंविणे । प्रसिद्धएवमंत्री वाणिजः । वणिगेववाणिजः कक्षाणाम्पतयेनमः । नदी-कक्षः पर्वतकक्षोवा । नमउच्चैर्घोषाय महाशब्दाय । आक्रन्दयते आक्रन्दः प्रसिद्धः । पत्तीनां पतयेनमः । हस्त्यश्वरथ पदातिसंख्यापत्तिः ॥ १८ ॥ नमःकृत्स्नायतया । कृत्स्नायततोयेति प्राप्तेतकारलोपश्छान्दसः । कृत्स्नञ्चासावायतञ्च कृत्स्नायत । पूरितधनुः तस्यभावः कृत्स्न.य-

ऽउच्चैर्घोषायाक्क्रन्दयंतेपत्तीनाम्पतंयेनमोनमंःकृत्स्नायतयां ॥१८॥ नमंःकृत्स्नायुतयां ॥ धावंतेसत्त्वंनाम्पतंयेनमोनमुःसहंमानायनिव्याधिनं ऽ आव्याधिनीनाम्पतंयेनमोनमोंनिषङ्गिणेंककुभायंस्तेनानाम्पतंयेनमोनमोंनिचेरवेंपरिचरायारंण्यानाम्पतंयेनमोनमोव्वञ्चं

तता तयाहेतुभूतयाधावते । आकर्णापूरितधनुषेत्यर्थः । सत्त्वनांसत्त्वानांपतयेनमः । नमःस-हमानाय अभिभवनशीलायनिव्याधिने । नितरांविध्यतीतिनिव्याधी । आव्याधिनीनांपतयेनमः आविध्यन्तियाः सेनास्ताआव्याधिन्यः । नमोनिषंगिणे निषङ्ग.खड्गम् । ककुभाय ककुभइति

मद्गन्नामसुपठितम् । स्तेनानांपतयेनमः स्तेनश्चौरः । नमोनिचेरवे नितरांचेरतीतिनिचेरः । परिचराय मर्वतोगंत्रे । अरण्यानांपतयेनमः ॥ २० ॥ नमोवञ्चतेवञ्चतिर्गत्यर्थः । गंत्रे परिवं- चतेसर्वतोगत्रे स्तायूनांपतयेनमः । स्तायुश्चौरएव । नमोनिषंगिने पङ्गिने । इषुधि मते इषुधिरस्यास्तीतिइषुधिमान् । तस्कराणांपतयेनमः । तस्करश्चौरएव । नमः सृकायिभ्यः । सृकइति

तॆ॥२०॥ नमोवञ्चते॥ * परिवञ्चतेस्तायूनाम्पतयेनमोनमोनिषङ्गिणे ऽइषुधिमतेतस्कराणाम्पतयेनमोनमःसृकायिभ्योजिघांᳬसद्भ्योमु ष्णताम्पतयेनमोनमोसिमद्भ्योनक्तञ्चरद्भ्योविकृन्तानाम्पतयेन मः ॥२१॥ [५] नमऽउष्णीषिणे ॥ गिरिचरायकुलुञ्चानाम्पतये नमो

वज्रनामसुपठितम सृकेणगृहीतेन एतुंशीलमेषामितिसृकायिणः । जिघांसद्भ्यः हन्तुमिच्छद्भ्यः मुष्णतांपतयेनमः । मुषस्तेये नमोसिमद्भ्यः । असिःखड्ग तत्सयुक्तेभ्यः नक्तंचरद्भ्यः रात्रौगच्छ- द्भ्यः विकृन्तानांपतयेनमः । विकर्तनशीलाविकृन्ताः ॥ २१ ॥ नमः उष्णीषिणे उष्णीषोस्यास्ती-

* उपसर्गपूर्वकस्य वकारस्य गुरुत्वमभवति इति वक्ष्यमाणः ।

त्युष्णीषी । उष्णीषः शिरोवेष्टनम् । गिरिचराय । गिरौपर्वतेचरतीति गिरिचरः । कुलुञ्चानांपतयेनमः कुत्सितंलुञ्चति कुलानिवालुञ्चतीतिकुलुञ्चः । नमइषुमद्भ्यः धन्वायिभ्यश्चवोनमः । व्याख्यावज्रवचन धर्मः प्रदृश्यते । नमोस्तुयेयूयमिषु मन्तस्तेभ्यइषुमद्भ्यः । धनुपागृहीतेन एतुंशीलमेषा मितिधन्वायिनः । वासंज्ञायामिति धनुपश्चधन्वन् धन्वायिभ्यः ।

नमऽइषुमद्भ्योधन्न्वायिभ्यश्चवोनमोनमऽआतन्न्वानेभ्यः प्प्रतिदधानेभ्यश्चवोनमोनमऽआयच्छद्भ्योस्यद्भ्यश्चवोनमोनमोव्विसृजद्भ्यः ॥ २२ ॥ नमोव्विसृजद्भ्योव्विध्यद्भ्यश्चवोनमोनमः स्वपद्भ्योजाग्ग्रद्भ्यश्चवोनमोनमः शयानेभ्यऽआसीनेभ्यश्चवोनमोनमस्तिष्ठद्भ्यः ।

चकारः समुच्चयार्थीयः । वः युष्मभ्यं नमः । नमः आतन्वानेभ्यः । उत्क्षिप्तज्या । कानि धनूंपिकुर्वाणेभ्यः । प्रतिदधानेभ्यश्चवोनमः । प्रतिदधानाः संधानकुर्वाणाः । नमः आयच्छद्भ्यः । आकर्षन्तोधनूंपि । अस्यद्भ्यश्चवोनमः । असुत्क्षेपणे काण्डानिक्षिपद्भ्यः ॥ २२ ॥ नमोवि-

सृजद्भ्यः। काण्ड।निक्षिपद्भ्यः योद्धारंप्रति। विध्यद्भ्यश्चवोनमः। विध्यन्तिताडयन्ति येशरैस्तेभ्योविध्यद्भ्यः। नमः स्वपद्भ्योजागृद्भ्यश्चवोनमः। नमः शयानेभ्य आसीनेभ्यश्च-वोनमः। नमः तिष्ठद्भ्यो धावद्भ्यश्चवोनमोनमः। शतशानजन्तानेतानि पदानिऋजून्येव ॥२३॥

धावद्भ्यश्चवोनमोनमः सभाभ्यः ॥ २३ ॥ नमः सभाभ्यः ॥ सभापतिभ्यश्चवोनमोनमोऽश्वेभ्योऽश्वपतिभ्यश्चवोनमोनमऽआव्याधिनीभ्योविविध्यन्तीभ्यश्चवोनमोनमऽउगणाभ्यस्तृᳫंहतीभ्यश्चवोनमोनमोगणेभ्यः ॥ २४ ॥ नमोगणेभ्यो ॥ गणपतिभ्यश्चवो

इत उत्तरं जातेभ्योजुहोति। जाताजाति विशेषाः तद्द्योच्यन्ते रुद्रैत प्रतिपादनाय। रुद्रलोके किलेत्थंभूता रुद्राः सन्ति। तदुक्तम्। अथोएवᳫं हैतानिरुद्राणां जातानि। नमः सभाभ्यः सभादिभ्यः रुद्रदृष्टिः कर्त्तव्येतितात्पर्यार्थः। सभापतिभ्यश्चवोनमः। नमः अश्वेभ्यः अश्वपतिभ्यश्चवोनमः। नमः आव्याधिनीभ्यः आविध्यन्तीत्या व्याधिन्यः सेनाः

विविध्यन्तीभ्यश्चवोनमः । विविधंविध्यन्तीति विग्रहे सेनाएवाभिधेया । नम उगणाभ्यः । उदुपसर्गस्यान्त्यलोपः । उद्गूर्णगणा समूहायासुसेनासुताएवसुच्यन्ते । तृर्ठंहतीभ्यश्चवोनमः । तृंहतिहिंसाकर्मा । हिंसन्तीभ्यः ॥ २४ ॥ नमोगणेभ्यः । गणाः समूहः । गणपतिभ्य-

नमोव्व्रातेभ्योव्व्रातपतिभ्यश्चवोनमोनमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमोनमोव्विरूपेभ्योव्विश्वरूपेभ्यश्चवोनमोनमःसेनाभ्यः ॥ २५ ॥ नमः सेनाभ्यः ॥ सेनानिभ्यश्चवोनमोनमोरथिभ्योऽअरथेभ्यश्चवोनमोनमः क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्चवोनमोनमो

श्चवोनमः । नमो व्रातेभ्यः । व्रातमहन्तिव्राताःगणविशेषाः । व्रातपतिभ्यश्चवोनमः नमोगृत्सेभ्यः । गृत्सोमेधावी । गृत्सपतिभ्यश्चवोनमः । नमोविरूपेभ्यः निकृष्टरूपेभ्यः नानारूपेभ्योवा । विश्वरूपेभ्यश्चवोनमः । विश्वरूपाः सर्वरूपाः ॥ २५ ॥ नमः सेनाभ्यः । सेनाचमूः सेनानिभ्य-श्चवोनमः । सेनांनयतीतिसेनानीः नमोरथिभ्यः । रथायेषांसन्तितेरथिनः । अरथेभ्यश्चवोनमः

रथारथवर्जितायोद्वार: । नम:क्षत्तृभ्य: रथानामधिष्ठातार: (१) क्षत्तार: । संग्रहीतृभ्यश्चवोनम: संग्रहीतार: सारथय: । नमोमहद्भ्य: महान्तोजाति विद्यादिभिरुत्कृष्टा: । अर्भकेभ्यश्चवो-नम: अर्भकाअल्पका: प्रमाणादिभि: ॥ २६ ॥ नम:तक्षभ्यो रथकारेभ्यश्चवोनम: । रथकारो

महद्भ्योऽअर्भकेभ्यश्चवोनमः ॥ २६ ॥ नमस्तक्षभ्यः ॥ नमस्तक्षभ्योरथकारेभ्यश्चवोनमोनमः कुलालेभ्यः कर्मारेभ्यश्चवोनमोनमोनिषादेभ्यः पुञ्जिष्ठेभ्यश्चवोनमोनमः श्वनिभ्योमृग

रथंकरोतीति तक्षाविशेषएव । नम:कुलालेभ्य: कर्मारेभ्यश्चवोनम: कुलाला:कुम्भकारा: कर्मारालोहकारा: । नमोनिषादेभ्य: पुंजिष्टेभ्यश्चवोनम: । निषादामात्सिका: पुंजिष्टा जात्यन्तरसंज्ञा पुल्कसादय: नम:श्वनिभ्य: । शुनोनयन्तीतिश्वन्य: तेभ्य:श्वनिभ्य: । नयतेर्ड्वि-

(१) क्षिनिवासगत्यो: तुदादि: क्षियन्तिनिवसन्तिरथेष्विति क्षत्तार: यद्वाक्षिप् प्रेरणे क्षिपन्तिप्रेरयन्तिसारथीनिति क्षत्तार: रथाधिष्ठातार ।

स्वत्वंछान्दसम् श्वागणिकाउच्यन्ते । म्हगयुभ्यश्चवोनमः इदंयुरिदंकामयमानइतियास्काः । म्ह-
गान् कामयन्तीतिम्हगयवः पापर्द्धिकाः तेभ्योम्हगयुभ्यः ॥ २७ ॥ (१) नमःश्वभ्यः श्वपतिभ्यश्चवोनमः
इत्युभयतोनमस्काराः समाप्ताः । नमइषुमद्भ्योधन्वायिभ्यश्च वोनमइत्यारभ्ययेवःशब्दाश्रुति-

युभ्यंश्चवोनमोनमःश्वभ्यः ॥ २७ ॥ नमःश्वभ्यःश्वपतिभ्यश्च
वोनमोनमोभवायचरुद्रायचनमः शर्वायचपशुपतयेचनमोनीलग्री

क्रान्ताः तेपूजावचनावा नयुष्मदादेशाः । इतउत्तरंरुद्रनामानि (२) नमोभवायच (३) रुद्रायचनमः
(४) शर्वायच (५) पशुपतयेच । (६) नमोनीलग्रीवायच (७) शितिकण्ठायच नीलग्रीवः कृष्णग्रीवः ।

(१) श्वान कुक्कुरास्तद्रूपेभ्यो नम शुनां पतय श्वपतय श्वपालकास्तेभ्योवो युष्मभ्यं नमः । श्वपतय किरातवेषस्य रुद्रस्यानुचर ।
(२) भवन्त्युत्पद्यन्ते जन्तवोऽस्मादिति भवस्तस्मै नम । (३) रुत् दुःख द्रावयति नाशयति रुद्रस्तस्मै नम । (४) शृणाति हिनस्ति पापमिति शर्वस्तस्मै नम । (५) पशून् अज्ञान् पाति रचतीति पशुपतिस्तस्मै नम । (६) विषभक्षणेन नीला नीलवर्णा ग्रीवा कण्ठे कदेशो यस्य स नीलग्रीवस्तस्मै नम. ।
(७) शिति श्वेत कण्ठोनीलातिरिक्तभागो यस्य शितिकण्ठस्तस्मै नम । शिती धवलमेचकौ ।

शितिकण्ठः श्वेतकण्ठः ॥२८॥ नमः कपर्दिने च व्युप्तकेशायच । कपर्दी जटामुकुटधारी व्युप्तामुण्डिताःकेशायस्यव्युप्तकेशः नमःसहस्राक्षायच शतधन्वनेच बह्वक्षाय बहुधनुष्कायच । नमोगिरिशयायच शिपिविष्टेतिष्टायच गिरौशेतइतिगिरिशयः । शिपिविष्टः शिपइवनिर्वेष्टितः खल्वतिरित्यभिधेयः प्रजननवत् वेष्टनरहितः । यद्वाउदितमात्र आदित्यउच्यते शिपिशब्देनचबालरश्मयउच्यन्ते ।

वाचशितिकण्ठायचुनमं÷कपर्द्दिनें॥ २८ ॥ नमं÷कपर्द्दिनें ॥ चुव्व्युप्तकेशायचुनमं ÷ सहस्राक्षायंचशतधंन्वनेचुनमोंगिरिशयायंचशिपिविष्टायंचुनमोंमीढुष्टमायचेषुंमतेचुनमोंह्रस्वायं ॥ २९ ॥ नमोंह्रस्वायं ॥ चव्वामनायंचुनमोंबृहतेचुव्वर्षीयसेचुनमोंवृद्धायंचसुवृधेंच

नमोमीढुष्टमायचेषुमतेच । मीढुष्टमः सेक्तृतमः युवापरिणामरहित इत्यर्थः । इषुमानिषुसंयुक्तः ॥ २९ ॥ नमोह्रस्वायच वामनाच । रूपतोनमस्काराः । ह्रस्वालघुप्रमाणः वामनःसंकुचितावयवः । नमोबृहतेचवर्षीयसेच । बृहतेमहतेवर्षीयसेवृद्धतरायच । नमोवृद्धायच सवृद्धेच

दृढ:प्रवृद्ध: महद्ध: तेनसमानवया: नमोग्रायच प्रथमायच अग्रेभवोग्र: प्रथमोमुख्य: ॥ ३० ॥ नमआशवेचाजिरायच शीघ्रनामनी । आशुरश्वना व्यापार: । अजिर: । अजगतिक्षेपणयो: । अजतीत्यजिर: । नम:शीघ्र्यायच शीभ्यायच । शीघ्रशीभशब्दौ क्षिप्रनामनी एवंतत्रभवइतिछान्दसो यत्प्रत्यय: अधिष्ठातृदेवतावचन: । उपरितनेष्वेवमेवयोज्यम् । नमऊर्म्याय-

नमोग्राायचप्रथमायंचनमऽआशवें ॥ ३० ॥ नमऽआशवें ॥ चाजिरा

यंचनमः शीघ्र्यायचुशीभ्यायचनमऽऊर्म्यायचावस्वन्यायचनमो

नादेयायंचुद्वीप्यायच ॥ ३१ ॥ [ ५ ] नमोज्येष्ठायं ॥ चकनिष्ठा

यंचुनम ÷ पूर्व्वजायंचापरजायंचनमोमध्यमायंचापगल्भायंचनमो

चावस्वन्यायच । ऊर्मिर्जलकल्लोल: । अवाचीनमुदकस्यगच्छत: । स्वनोध्वनि:अवस्वन: नमोनादेयायच द्वीप्यायच । नद्यांभव: द्वीपेभव: द्वीपोनद्या मध्येउदकरहित:प्रदेश: ॥ ३१ ॥ नमोज्येष्ठायच कनिष्ठायच वयोऽवस्थाभिप्राया: षट्नमस्कारा: । नम:पूर्वजायचा परजायच । पूर्वोजात:

पूर्वजः अपरोजातः अपरजः । नमोमध्यमायचापगल्भायच मध्येभवो मध्यमः अपगतगर्भः अपगल्भः । एकगर्भान्तरितः । नमोजघन्यायच बुध्न्यायच । जघनः पश्चाद्भागः बुध्नादिःतत्रभवः । इतिद्वादशयत्नत्ययान्तारुद्राः ॥ ३२ ॥ नमःसोभ्यायचप्रतिसर्य्यायच । सो-भइतिगन्धर्वनगरंसुभमितिवा । अभिचारकर्मसरः प्रतिसरःप्रत्यभिचारः । नमोयाम्यायच

जघन्न्यायचबुध्न्यायचनमः सोभ्याय ॥ ३२ ॥ नमः सोभ्याय ॥ चप्रतिसर्य्यायचनमोयाम्म्यायचक्षेम्म्यायचनमः श्लोक्यायचावसा न्न्यायचनमऽउर्व्वर्य्यायचखल्ल्यायचनमोव्वन्न्याय ॥ ३३ ॥ नमो व्वन्न्या ॥ चकक्ष्याायचनमः श्रवायचप्रतिश्रवायचनमऽआशु

क्षेम्यःयच । नमःश्लोक्यायचावसान्यायच श्लोकःशब्दः । अवसानंसमाप्तिः नमउर्व्वर्य्याय खल्यायच । उर्वरःसीतयोरन्तरंसर्वसस्याढ्ययेः । सीतयोर्लाङ्गलमार्गयोरन्तरम् । खलेधा-न्यखलः ॥ ३३ ॥ नमोवन्यायच कक्ष्यायच । वनंवृक्षसमूहःउदकंवा कक्षोनदीकक्षःपर्वतकं-

घोवा । नमःश्रवायचप्रतिश्रवायच । श्रवःशब्दःप्रतिश्रवःप्रतिशब्दः । नमःआशुषेणाय- चाशुरथायच । आशुसेनःशीघ्रसेनःआशुरथःशीघ्ररथः । नमःशूरायचावभेदिनेच । शूरःश- वते: । अवाचीनंभेत्तुं शीलमस्येत्यवभेदी ॥ ३४ ॥ नमोविल्मिनेचकवचिनेच । बिल्ममस्यास्ती- तिबिल्मी । बिल्मभासनम् उत्तराङ्गमुच्यते । कवचंमष्टसूतं कार्पासगर्भम् । नमोवर्मिणेच

पेणायचाशुरंथायचनमःशूरायचावभेदिनेच नमोबिल्मिने ॥ ३४ ॥
नमोबिल्मिनेचकवचिनेच नमोवर्म्मिणेचवरूथिनेच नमः श्रुतायच
श्रुतसेनायच नमोदुन्दुभ्यायचाहनन्न्यायच नमोधृष्णवे ॥ ३५ ॥
नमोधृष्णवेचप्रमृशायच नमोनिषङ्गिणेचेषुधिमतेच नमस्तीक्ष्णेषं

वरूथिनेच वर्मलोहं वरूथंहस्तिनउपरिगृहाकारः । कोष्टकः नमःश्रुतायच श्रुतसेनायच । श्रुतायसर्वलोकविदिताय । श्रुतसेनाप्रसिद्धाच सूर्यस्य । नमोदुन्दुभ्यायच हनन्यायच । दुन्द भीभवः दुन्दुभ्यः आहननेभवआहनन्यः ॥ ३५ ॥ नमोधृष्णवेचप्रमृशायच । धृष्णुः प्रगल्भः-

प्रहरः सर्वंपरिमृयतिपरिडतइत्यर्थः। नमोनिपङ्गिणेचेषुधिमतेच। निषंगंखड्गं तदस्यास्तीति-निपङ्गी इषुधिमान् इषवः धीयन्ते असिन्नितिइषुधिः। नमः तीक्ष्णेषवेचा युधिनेच। तीक्ष्णइषवोस्य विद्यन्तइति तीक्ष्णेषुः आयुधमस्यास्तीत्यायुधी। नमः स्वायुधायच सुधन्वनेच। शोभनायुधः स्वायुधः शोभनधनुः सुधन्वा ॥ २६ ॥ नमः स्रुत्याचपथ्यायच। नद्या-

वेचायुधिनेंच नमः॑ स्वायुधायंचसुधन्वंनेच ॥ ३६ ॥ [ ५ ] नमःस्रु त्याय ॥ च पथ्यायच नमःकाट्यायच नीप्प्यायच नमः कुल्ल्यायच सरस्यायच नमोनादेयायंचवैशन्तायंच नमःकूप्प्याय ॥ ३७ ॥ नमः कूप्प्याय ॥ चावट्यायच नमोव्वीध्र्यायचातप्प्यायच नमोमेघ्यायच

एकादिशोदक याहिनीस्रु ति स्तत्रभवः स्रुत्यः। पथिभवः पथ्यः नमः काट्यायच नीप्यायच। काटेभवः काट्यः। काटः कूप। नीचैर्यन्तियंत्राप सनीपः तत्रभवोनीप्प्यः। नमः कुल्यायच। सरस्यायच। कुल्यायांभवः कुल्यः सरसिभव सरस्य। नमोनादेयायच वैशन्तायच। नद्यां-

भवोनादेयः। स्तोभ्योठक्। वेशन्तः तडागः तत्रभवोवेशन्तः॥ ३७॥ नमः कूप्यायचावट्यायच। कूपेभवः कूप्यः अवटेभवः अवट्यः। अवटोगर्त्तः। नमोवीध्र्यायचातप्यायच। इन्ध्रीदीप्तौ विगतदीप्तिर्वीध्रः घनागमः तत्रभवोवीध्र्यः। आतपेभवआतप्यः। नमोमेघ्यायचविद्युत्यायच। निगद्व्याख्यानम् नमोवर्ष्यायचावर्ष्यायच। वर्षेभवः वर्ष्यः अवर्षेभवः अवर्ष्यः॥ ३८॥ नमोवात्या-

विद्युत्यायचनमोवर्ष्यायचावर्ष्यायचनमोवात्याय ॥ ३८ ॥ नमो वात्याय॥ चरेष्म्यायचनमोवास्तव्यायचवास्तुपायचनमःसोमाय चरुद्रायचनमस्ताम्रायचारुणायचनमःशङ्गवे ॥३९॥ नमःशङ्गवे॥ चपशुपतयेचनमः उग्रायचभीमायचनमोऽग्रेवधायचदूरेवधायचन

चरेष्म्यायच। वातेभवोवात्यः। रिषतिर्हिंसार्थः। अन्येभ्योपिचदृश्यन्तइतिमनिन्। रेष्म। तत्रभवोरेष्म्यः नमोवास्तव्यायच वास्तुपायच वास्तुगृहं तत्रभवोवास्तव्यः वास्तुपतिर्वास्तुपः। नमः सोमायचरुद्रायच। नामतोनमस्काराः। नमस्ताम्रायच। वर्णतो नमस्काराः॥ ३९ ॥

नमः शङ्गवेच पशुपतयेच। शंसुखंगवांकरोतीति शंगु:। पशूनाम् पतिः। नमः उग्रायचभीमा-
यच। उग्रउगूर्णः भीमाभीषणः। नमोग्रेवधायच दूरेवधायच अग्रेस्थितोहन्तिअग्रेवधः।
दूरेस्थितोहन्तिदूरेवधः। नमोहन्त्रेच हनीयसेच। हन्तीतिहन्ता हनीयान्हन्तृतमः। नमो
वृक्षेभ्यो हरिकेशेभ्यः। हरितवर्णानियेषांपर्णानि पलाशानि तएवमुच्यन्ते। नमस्ताराय। तार-

मोहुन्त्रेचुहनीयसेच नमोवृक्षेभ्योहरिकेशेभ्योनमस्ताराय ॥ ४० ॥
[ ४ ] नमःशम्भवाय ॥ चमयोभवायचुनमःशङ्करायच * मयस्कराय

यन्तिउत्तारयति संसारात् तारः॥ ४० ॥ नमः शंभवायच मयोभवायच। शमउपशमे।
अस्यशंसुखनाम। शमाद्भवतीतिशंभवः। शमासुखेनयाभावयतीतिशंभवः। यद्वा। शंचआ-
नन्दरूपश्च। कालदेशानवच्छिन्नं भवनं तच्छक्तिश्च। आनन्दविज्ञानरूपार्थः। इयमेवव्याख्या
मयोभवशब्दस्य। नमः शङ्करायच। मयस्करायच। शङ्करोतीतिशंकरः। मयः करोतीतिमय-

* मयस्कराय चेत्वसकारस्य नविलं अपान्तस्याध्यमपर्श यतीष्य. परसर्गादिरुच्यते इत्यनेनमाकारस्यैवद्वित्वं प्रा० अ० ४। सू० १०२।

स्कार: । नम: शिवायच शिव: शान्तोनिर्विकार: । शिवतरस्ततोप्यधिको निरतिशयसर्वज्ञ-
बीज: ॥ ४१ ॥ नम: पार्यायचा वार्यायच । पारेभव:पार्य्य: । अवारेभव: अवार्य: । नम: प्रतर-
णाय चोत्तरणायच । प्रतरन्तियेनतत्प्रतरणम् उदकमुच्यते । उत्तरन्तियेनतदुत्तरणम् नौरु-
च्यते । नमस् तीर्थायच कूल्यायच । तीर्थेभवस्तीर्थ्य: कूलेभव: कूल्य: । नम: शष्प्यायच

चुनम॑:शिवाय॑चशिवत॑रायच ॥४१॥ [ १ ] नम॒ᳬपार्य्या॑य ॥ चावार्य्या॑
यचुनम॑:प्रतर॑णायचो॒ त्तर॑णायच॒ नम॒स्तीर्थ्या॑यच॒ कूल्या॑यच॒ नम॒ᳬ
शष्प्या॑यचुफेन्या॑यचुनम॑:सिकत्या॑य ॥४२॥ नम॑:सिकत्या॑य ॥ चप्र
वाह्या॑यचुनम॑:कि॒ᳬशिला॑यचक्षयणा॑यचुनम॑: कपर्दिने॑चपुलस्तये॑च

फेन्यायच । मरूढानितृणानिशष्पमुच्यन्ते तत्रभव: शष्प्य: फेनेभव: फेन्य: ॥ ४२ ॥ नम:
शिकत्यायच प्रवाह्यायच । सिकतासुभव: सिकत्य: प्रवाहेभव: प्रवाह्य: किंशिलायचक्षय-
णायच । किमेतदुदकंहिमीभूतमुतशिलेति यत्रवितर्क: सकिंशिल: । यद्वाकिं शिलाचतक-

कंर:। चयन्तग्निन्नाप इतिक्षयणः। नमः कपर्दिनेच पुलस्तयेच। कपर्दीजटामुकुटधारी। पुरस्तिष्ठतीतिपुलस्ति। शुभाशुभदिदृक्षया। नमद्दूरव्यायचप्रपथ्यायच। दूरणेभवद्दूरव्यः। निरुदकप्रदेशदूरणम्। प्रपथेभवः प्रपथ्यः॥ ४३॥ नमो व्रज्यायचगोष्ठ्यायच। व्रजेभवोव्रज्यः। गावस्तिष्ठन्त्यस्मिन्निति गोष्ठः तत्रभवोगोष्ठ्यः। नमस्तल्प्यायच गेह्यायच। तल्पः शयनम् गेहं-

नम॑ऽइरिण्या॑यचप्रपथ्या॑यच नमो॑व्रज्या॑य ॥४३॥ नमो॑व्रज्या॑य ॥ चगोष्ठ्या॑यचनमस्तल्प्या॑यचगेह्या॑यचनमो॑हृदय्या॑यचनिवेष्प्या॑यच नम॑ऽकाट्या॑यचगह्वरेष्ठाय॑च नम॑ऽशुष्क्या॑य ॥ ४४॥ नम॑ऽ शुष्क्या॑य ॥ चहरित्या॑यच नम॑÷पाᳫंसव्या॑यचरजस्या॑यच नमो॑लोप्या॑यचोलप्या

सम्भगृहम् तत्रभवइतितद्धितः। नमोहृदय्यायच निवेष्प्यायच। हृदयेभवोहृदय्यः निवेष्पेभ-वोनिवेष्प्यः। निवेष्पआवर्तः। भ्रमः। नमः काट्यायचगह्वरेष्ठायच। काटेभवः काट्यः। काटः कूपः। गह्वरेतिष्ठतिगह्वरेष्ठः गह्वरं महदुदकम् ॥ ४४॥ नमः शुष्क्यायचहरित्या-

यच। शुष्केभवः शुष्क्यः। हरितेभवोहरित्यः। हरितमार्द्रम्। नमः पाठं॰मव्यायच रज-
स्यायच। पांसुपुभव. पांसव्यः रजसिभवोरजस्यः। नमोलोप्यायचोलप्यायच। लोपेभवोलोप्यः
लुपग्रतइतिलोपः। उलपेभवउलप्यः। उर्द्धलपग्रतेउच्चार्यतेनतुलोपइवाग्रवण सुपैति उलप्यः।

यच नमऽऊर्व्व्यायच सूर्व्यायच नमःपर्णाय ॥४५॥ नमःपर्णाय ॥ च
पर्णशदायचनमऽउद्गुरमाणायचाभिघ्नतेचनमऽआखिदतेचप्रखि
दतेचनमऽइषुकृद्भ्योधनुष्कृद्भ्यश्चवोनमोनमोवःकिरिकेभ्यो * दे

नम ऊर्व्यायच। ऊर्वेभवऊर्व्यः। ऊर्वोवडवाग्निः। सएवशोभन.सूर्वः तत्रभव.सूर्व्यः ॥ ४५ ॥
नम.पर्णायच पर्णशदायच। पर्णमसिद्धम् पर्णशब्द.पतितपर्णाविस्तानवान्। नमउद्गुरमाणाय-
चाभिघ्नतेच। उद्गुरमाणउद्यमनशील:। अभिघ्नतेअभिहननम् कुर्वते। नमआखिदतेच खिददैन्ये

* अत्रापिकर्षिद्विशेषोऽमोघनन्दिन्यांशिक्षायाम् अनुस्वारोद्विमात्रः स्याद्वर्णं व्यञ्जनोदये उदाहरण देवानांॅ॰हृदयेभ्य। भवतजंन्य प्रसारे प्रमाणम् दीर्घेरङ्गे चतजंन्या प्रसार परिकीर्तित

दैन्यभावङ्कुरुते । अभक्तानाम्भकर्पेण दैन्यभावंकुर्वते निपिद्धसेविनाम् नमद्भ्युष्मभ्यो धनुष्कृद्भ्यश्च-वोनमः । इपून्येकुर्वन्तिते इपुकृतःतेभ्योनमः । येयूयं धनुष्कृतः तेभ्योयुष्मभ्योनमः । युष्मदा-देश योगात्प्रत्यक्षाएतेरुद्राः । समाप्तास्तिस्रोशीतयः इदानींरुद्राणां हृदयभूतानामग्निवायुसू-र्याणां संवन्धो नियजुंपि उच्यते । नमोवः किरिकेभ्यः नमोवःयुष्मभ्यं येयूयंकिरिकाः कुर्वंतीदं जगत् इष्टाद्यु । पकारेण किरिकाः अग्निवायु सूर्याः देवानाऽं० हृदयेभ्यः रुद्राणांहृदय

वानाऽं हृदयेभ्योनमोव्विचिन्वत्केभ्योनमोव्विक्षिणत्केभ्योनमऽआ निर्हतेभ्यः ॥४६॥ [ ५ ] द्रापेऽअन्धंसः ॥ द्रापेऽअन्धसस्पतेदरिद्रनीलंलोहित ॥ आसाम्प्रजानामेषाम्पशूनाम्माभेर्म्मारोङ्मोचनःकिञ्च

भूताः । नमो विचिन्वत्केभ्यः विचिन्वन्ति पृथक्कुर्वन्ति धर्मकारिणाम् पापकारिणाञ्च तेवि चिन्वत्काः । नमोविक्षिणत्केभ्यः । विविधंक्षिणन्तिहिंसन्ति येतेविक्षिणत्काः । नमआनिर्हतेभ्यः हन्तिर्गत्यर्थः । एतेह्यग्नि वायुसूर्याः सर्गादावाभिमुख्येन तेभ्यो लोकेभ्योनिर्गता ॥ ४६ ॥ द्रापे-अन्धसस्पते । सप्तकण्डिकाएकरुद्रस्तुतिः । उपरिष्टाद्बृहती । हेद्रापे । द्रकुत्सायांगतौ । द्राप-

यतीतिद्रापिः। अयथोक्तकारिणं कुत्सितांगतिंनयति। हेअन्धसस्पते। सोमस्पते। हेदरिद्र हेनिःपरिग्रह। हेनीललोहित। नानानिचास्यैतानि रूपाणिचेतिस्तुतिः। एवसंबोध्यरुद्रम्। अथेदानीमभयं याचते। आसांप्रजानाम् अस्मदीयानाम् एषांपशूना मात्वंभेषीः। मारोक् अविध्यश्चमात्वंरजः मात्वंभांची मोच्चन किञ्चनाममत्। माच्चन अस्माकंकिञ्चनअपत्यादिकम्। आममत्। अमरोगे। माचास्माकमपत्यादिकंरोगसंयुक्तं कथाइत्यर्थः॥ ४७॥

नामंमत्॥ ४७॥ इमारुद्राय॥ तवसेकपर्दिनेंक्षयद्वीरायप्रभरामहे मतीः॥ यथाशमसद्द्विपदेचतुष्पदेविश्वंपुष्टङ्गामेऽअस्मिन्ननातुरम्॥

इमारुद्राय। जगती। इमा मतीः याभिः स्तूयतेतारुद्राय। तवसे। महतेबलवतेवा। उभयत्रापि तवः शब्दः पठ्यते। कपर्दिने। जटामुकुटधारिणे। क्षयद्वीरा। क्षयन्तिवसन्त्यस्मिन्वीरा इतिक्षयद्वीरः तस्मैक्षयद्वीराय। प्रभरामहे प्रेरयामः तथाद्यंप्रेरयामः। यथायेनप्रकारेण। शमसत् द्विपदेचतुष्पदे। शंसुखम् असत् भवतिद्विपदांचचतुष्पदांच। यथाविश्व-

सर्वंपुष्टं सम्द्गग्रामे अस्मिन् अनातुरम् आपद्रहितं स्वस्थंभवति ॥ ४८ ॥ याते रुद्र। अनुष्टुप्। हे रुद्रयातवशिवाशान्तातनूः शरीरम्। शिवा। अतिशयार्थंपुनर्वचनम्। विश्वाहाभेषजी। सर्वदाभिषत्त्वेनवर्तते। शिवारुतस्यव्याधेः भेषजी। रुतशब्दोव्याधिवचनः। यद्वा। शिवारुतस्यशिवाफेत्कारस्यशब्दस्यभेषजी। अपशकुनहन्त्रीत्यर्थः। तयातन्वानःअस्मान्

तुरम् ॥ ४८ ॥ याते ॥ यातेरुद्रशिवातनूः शिवाविश्वाहाभेषजी ॥ शिवारुतस्यभेषजीतयानोमृडजीवसे ॥ ४९ ॥ परिनः ॥ परिनोरुद्रस्यहेतिर्वृणक्तुपरित्वेषस्यदुर्मतिरघायोः ॥ अवस्थिरामघवद्भ्यस्तनु

मृडसुखय। जीवसेजीवनाय ॥ ४९ ॥ परिनः। अनुष्टुप्। परिवृणक्तुपरिवर्जयतु। नः अस्मान्। रुद्रस्यहेतिः आयुधम्। परित्वेषस्यदुर्मतिरघायोः। परिवृणक्तुत्वेषस्यक्रोधिनोज्व- लितस्य दुर्मतिः दुष्टामतिः। अघायोः। अघंपापंयः कामयते परस्मैकर्तुमसअघायुः तस्य- अघायोः। उत्तरोर्द्धर्चः मघवद्दतो द्वितीयंवाक्यम्। अवस्थिरामघवद्भ्यस्तनुष्व। अवतनुष्व

तिचक्षुतिः । हेयविष्ठ युवतम । यतश्वत्वामेव शश्वन्तःशाश्वतिकाः उपदन्ति उपगच्छन्ति वाजाःअन्नानि अतोदीदिहीतिसंबन्धः ॥ ७६ ॥ तिस्रआहुतीर्जुहोति । अग्नेतमद्येतिव्याख्यातम् ॥ ७० ॥ चित्तिञ्जुहोमि । वैश्वकर्मणीजगत्यतिजगतीवा । चित्तिम चित्तमेपाम्चत्विग्यज-

न्तुव्वाजाः ॥ ७६ ॥ अग्नेतम् ॥ अग्नेतमद्याश्वन्नस्तोमैःक्रतुन्नभद्रहृदिस्पृशम् ॥ ऋध्यामात ऽओहैः ॥ ७७ ॥ चित्तिञ्जुहोमि ॥ चित्तिञ्जुहोमिमनसाघृतेनयथादेवा ऽइहागमन्वीतिहोत्राऽऋतावृधः ॥ पत्त्येव्विश्वस्यभूमनोजुहोमिविश्वकर्म्मणेव्विश्वाहादाब्भ्यह

मानानाम् जुहोमिअग्निसंबन्धं करोमि । अग्नितत्वपरिज्ञानचिन्तनसन्तानं करोमीत्यर्थः । मनसाच घृतेनचसह । तथाज्जुहोमि । यथादेवाइहागमन् इहआगच्छेयुः । कथंभूताः वीतिहोत्राः कामितयज्ञाः । होत्राइतियज्ञनामसु पठितम् । ऋतावृधः सत्यवृधः किञ्च । पत्त्येविश्वस्यभूमनो जुहोमिविश्वकर्मणे । अधिपतिभूताय विश्वस्यभूतग्रामस्य । जुहोमिविश्वकर्मणे विश्वाहासर्वदा

अद्दाभ्यम् अनुपक्षीणम् हविः ॥ ७८ ॥ सप्ताग्नेयी । (१) सप्ततेतव हेऽग्ने समिधःसमिन्धनाः प्राणाःयतःसन्ति । यतश्चसप्तजिह्वाः तत्रसन्ति । सप्तपुरुषान्संहृत्यैकीकृतोयमग्नि स्तदभिप्राय-मेतत् । यतश्चसप्तऋषयः तत्रयष्टारःसन्ति । यतश्चसप्तधामानि प्रियाणि । सप्तछन्दांसिप्रिया

हुविः ॥ ७८ ॥ सप्तते ॥ ऽअग्नेसुमिधःसुप्तजिह्वाःसुप्तऽऋषयःसुप्त धामप्प्रियाणि ॥ सुप्तहोत्राःसुप्तधात्वायजन्तिसुप्तयोनीरापृणस्व घृतेनुस्वाहा ॥ ७९ ॥ [ १५ ] शुक्रज्योतिश्च ॥ चित्रज्योतिश्च सु

णितत्रसन्ति । यतश्चसप्तहोत्राः आग्नोध्रपर्यन्ताः । सप्तधात्वात्वायजन्ति । अतोब्रवीमि सप्तयोनीः सप्तचितीः आपृणस्वआपूरयस्वघृतेनस्वाहा सुहुतंचैतद्धविर्भवतु ॥ ७९ ॥ मारुतान्जुहोति शुक्र-ज्योतिरितिपड्भिर्नव गिम मीरुतीभिः । तत्रचैकैकस्या ऋचिसप्तमरुतः । प्रथमाउष्णिक् चतुर्थीच । द्वितीयातृतीयेगायत्र्यौ । पञ्चमीजगती पष्ठीगायत्र्युष्णिग्वा । (२) शुक्रज्योतिः पुरोडाशस्य स्व-

(१) का० पूर्णाहुतिश्च सप्त तद्दृति । स्रुचा पूर्णाहुतिश्च जुहोति घृतपूर्णया स्रुचा आहुतिः पूर्णाहुतिरित्यर्थः ।

(२) का० वैश्वानरेण प्रचर्यसर्वहुतेन हस्तेन मारुतान् जुहोतीतुपविश्य वैश्वानरे वा वैश्वानरं पृथुं कृत्वा शुक्रज्योतिरिति प्रतिमन्त्रम् विमुखे नारण्येऽनूच्यम् वैश्वानरपुरोडाशेन यागं कृत्वोपविश्याहवनीये हस्तेन मारुतान् पुरोडाशान् सर्वहुतान् जुहोति शुक्रज्योतिरित्येकैकमन्त्रेणैकैकम् यद्वा वैश्वानरपुरोडाशस्योपर्येव मारुतान् जुहोति किं कृत्वा प्रथनकाले वैश्वानरं पुरोश विस्तीर्णं कृत्वा अरण्येऽनूच्यं सप्तमं पुरोडाशं विमुखेनोपरि भोमयेति वक्ष्यमाणमन्त्रेण जुहोतीत्यर्थः ।

संधंभन्नयतु । चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च । शुक्रश्चऋतपाश्चात्यंहाश्च । अथैकपदनिरुक्तम् । शुक्रंज्योतिर्यस्य शुक्रस्येवचाज्योतिर्यस्य सशुक्रज्योतिः । चित्रं ज्योतिः सत्यंज्योतिः । ज्योतिष्मान् ज्योतिपातद्वान् । शुक्रःशुक्रः ऋतपाःसत्यंयज्ञं वापाति । अत्यंहाः अतीत्य अंहःपापंवर्ततइत्यत्यंहाः ॥८०॥ ईदृङ्च । अनेनान्येनच समानदर्शनः ईदृङ् । ईदृङ्च ।

त्यज्ज्योतिश्चज्ज्योतिष्माँश्च ॥ शुक्रश्चऽऋतपाश्चात्यंहाः ॥८०॥ ईदृङ्चं ॥ ईदृङ्चान्यादृङ्चंसदृङ्चप्रतिसदृङ्च ॥ मितश्चसम्मितश्चसभराः ॥८१॥ ऋतश्चंसत्यश्चध्रुवश्चधरुणश्च ॥ धर्ता

पुरोडाशस्य समंशंमतिगृह्णातु । अन्यादृङ्च । अन्येनान्येनच समानदर्शनः अन्यादृङ् । सदृङ्च प्रतिसदृङ्च । तेनतेनसमानदर्शनः सदृङ् । तंतंप्रतिसदृशः प्रतिसदृङ् । मितश्च-उत्तमाधममध्यमे स्तुत्यः मितः । संमितश्चएकीभावेन मितः समितः । सभराश्चसहविभर्तिस-भराः ॥ ८१ ॥ (१) ऋतश्च । ऋतश्चसमंशं पुरोडाशस्य प्राश्नातु । (२) सत्यश्च (३) ध्रुवश्च

(१) ऋत सत्यरूप । (२) सति वस्तुनि भव सत्य । (३) ध्रुव स्थिर ।

(१) धरुणश्च । (२) धर्ताच (३) विधर्ताचविधारय: विविधंधारयतीतिविधारय: । ऋजु: ॥८२॥ (४) ऋतजिच्च । (५) सत्यजिच्च । (६) सेनजिच्च । (७) सुषेणश्च शोभनसेनश्च । (८) अन्तिमित्र आसन्नमित्र: । (९) दूरेअमित्रश्चगण (१०) ऋजु: ॥ ८३ ॥ ईदृक्षास: । व्यवर्ध्रि-

चंव्विधर्त्ताचंव्विधारयः ॥८२॥ ऋतजिच्चं ॥ सत्यजिच्चंसेनजिच्चंसुषे णंश्च ॥ अन्तिमित्तश्चदूरेऽअमित्तश्चगणः ॥८३॥ ईदृक्षांसऽए तादृक्षांसः ॥ ईदृक्षांसऽएतादृक्षांसऽऊषुणः सदृक्षांसःप्रतिसदृक्षा

तपदमाधोर्यमंत्र: सादृश्येनावमतत: स्तूयन्ते । येयूयम् ईदृक्षास: । इदंदर्शना: सर्वएव । येच एतादृक्षास: एतद्दर्शना: सर्वएव । ऊषुण: लौकिकपदानि । छन्द: परिपूर्त्तिंकुर्वंति । येचयू-

(१) धरुण धारक (२) धारयतीति धर्ता । (३) विशेषेण धारयतीति विधर्ता । (४) उचितम् ऋतं यज्ञं जयतीति ऋतजित् । (५) सत्यं याताथ्यं जयतीति सत्यजित् । (६) सेनां शत्रुसैन्यं जयतीति सेनजित् छन्द पादार्थं । (७) शोभना सेना यस्य सुषेण । (८) अन्ति समीपे मित्राणि यस्य स: अन्तिमित्र । (९) दूरे अमित्रा शत्रवो यस्य स दूरेअमित्र महतान्व पादमिति सन्धाभाव हलदन्तात्सप्तम्या इति विभक्तालोप । (१०) गणयति सर्वमिति गण ।

यंसहत्त्वास: समानदर्शना: सर्वएव। येचयूयंप्रतिसहत्त्वास: प्रतिसमानदर्शना: सर्वएव। येच-
यूयमितास: मित: प्रमाणत: सर्वएव। येचयूयसम्मितास: सङ्गत्यमिता: सर्वएव। येचयूयंस-
भरस: समानमलङ्काराद्दिविभ्रत:। तान्ब्रवीमि। एतन्नोअद्यमरुतो यज्ञेअस्मिन्। एतन-
आगच्छन्तिन: अस्माकम् अद्यअस्मिन्द्यवि।। हेमरुत: यज्ञेअस्मिन्। एवंव्यवस्थितानिपदानि

सऽएतन॥ मितासंश्चचसम्मितासोनोऽअद्यसभंरसोमरुतोयज्ञेऽअ
स्मिन्॥८४॥ स्वतवांश्चच॥ प्रघासीचंसान्तपनश्च्चंगृहमेधीचं॥
क्रीडीचंशाकीचोज्जेषी॥८५॥ इन्द्रन्दैवीः॥ इन्द्रन्दैवीर्विशोमरुतो

पश्चात्सर्वै रेवमंबन्धनीयानि॥ ८४॥ स्वतवांश्च। स्वकीयंतवोबलंयस्य मरुतवान् स्वतवाश्च
स्वमंशं पुरोडाशस्य भक्षयतु। प्रघासीच। घस्लृअदने। प्रकर्षेण अदनशील:। सान्तपनश्च
गृहमेधीचक्रीडीच। पञ्चचातुर्मास्यदेवता:। शाकीचशक्त: उज्जेषीच उज्जयनशील:॥ ८५॥
इन्द्रं दैवोरितिमारुतं यजुर्जपति। इन्द्रंराजानदेवी: विश: मरुतो मरुल्लक्षणा:। अनुव-

त्मानः अनुपश्चात् वर्त्मवर्तनं यासांताअनुवर्त्मानः अनुगामिन्यइत्यर्थः । अभवन् । स्वरूपाख्यानमेतत् । यथाइन्द्रं दैवीः विशः अनुवर्त्मानः अभवन् उपमानम् । एवम् इमंयजमानम् द्वौवीश्चविशः मरुतः मानुषीश्चविशः मनुष्याः अनुवर्त्मानः अनुगामिन्यः भवन्त्वितिप्रार्थना ॥ ८६ ॥ इमᳪस्तनम् । त्रयोदशाग्नेयौत्रिष्टुभो यजमानं वाचयति । घृतस्तुतिश्चदृश्यते-

नुवर्त्मानोभवन्यथेन्द्रन्दैवीर्विशोमरुतोनुवर्त्मानोभवन् ॥ एवमिमंयजमानन्दैवीश्चविशोमानुषीश्चानुवर्त्मानोभवन्तु ॥ ८६ ॥

[७] इमᳪस्तनम् ॥ इम ᳪ स्तनमूर्जस्वन्तन्धयापाम्प्रपीनम

वसो र्धारानन्तरम्भविष्यति तदभिप्रादिन्योवा । वसोर्धारामुपाह्वयते सावरूपकल्पनयास्तनउक्तः । इमंमुग्लक्षणंस्तनम् ऊर्जस्वन्तवलवन्तम् धय । धेटपाने । पिव अपांप्रपीनम् अपशब्देनात्र घृतमुक्तंमाहश्यात् । यद्वाअथापितद्वितेनक्षत्त्वन्निगमाभवन्तीति क्षत्त्वर्वन्निगमः । घृतमपूरितम् हेअग्नेसरिरस्यमध्येवर्तमान । इमेवैलोकाःसरिरमितिश्रुतिः । एषुलोकेषु मध्येवर्तमानः । किञ्च

उत्संजु पस्वचत्स्यन्दनं सुलक्षणं कूपञ्जस्य सेवस्व । मधुमन्तंमधुस्वादेनरसेन युक्ताम् । हेअर्वन् । अटगतौ अस्यैतद्रूपम् हेअरणसर्वतोगत । किञ्च । समुद्रियम् समुद्रसम्बन्धिनम् सदनं गृहम् । आविशस्वसेवस्व । वयोह्वैसमुद्राअग्निर्यजुषां महाव्रतंसाम्नां महदुक्थमृचा मित्येतदभिप्रायम् । अन्तरिक्षंवासमुद्रः ॥ ८७ ॥ घृतम्मिमिक्षे । योयमग्निर्घृतम्मिमिक्षे ।

ग्नेसरिरस्युमज्ज्ञ ॥ उत्संजुषस्वमधुमन्तमर्व्वन्त्समुद्रियꣳ सदनमा विशस्व ॥ ८७ ॥ घृतम्मिमिक्षे ॥ घृतमस्ययोनिर्घृतेश्रितोघृत म्मवंस्यधाम ॥ अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्य

घृतमुदकमाकृति परिणामभूतम । मिमिक्षे सिञ्चामि । अथवा । यस्यास्याग्ने मुखेहुतं मिमिक्षेसिञ्चामि । घृतञ्चास्य योनिरुत्पत्तिस्थानम् । अग्निर्यस्यैयोनेरसृज्यततस्यैघृतमु लबसासीदित्येतदभिप्रायम् । यश्चायं घृतेश्रितः अवस्थितः । यस्यचास्यघृतमेवधाम तेजः । दीप्तिर्नो-मया । तमग्निम् अनुष्वधमावह । हेअध्वर्यो अनुस्वधम् अन्वन्नम् पूर्वमन्नमुपकल्प्यपश्चादा-

ह्वय। आह्वयचमादयत्र तर्प्पय। तर्पयित्वा चैवंब्रूहि। स्वाहाकृतम्। स्वाहाकारेणाभिहुतम्।
हेद्दृपभवर्पितः। वह्निर्हव्यम् हविः देवानां वहनं च हविषामावाहनं च देवतानामित्यग्नेः
कर्मणी ॥ ८८ ॥ समुद्रादूर्मिः अन्नाभ्यासेन घृतमन्नस्तूयते प्राणाभ्यासेनवाग्निः। तस्मात्समु-
द्रात् घृतमयात् अक्षोणत्वात् घृतसत्रसमुद्रेनोपमानम् अन्नदेवताभिप्रायंवा माध्वनुमच्चो-
णेव। ऊर्मिः महाराशिः घृतकल्लोलः। मधुमान् रसवान् उदारत् उदगच्छत्। उद्गत्यच-

म् ॥८८॥ समुद्रादूर्मिः॥ समुद्रादूर्मिर्मधुमाँ॥ उदारदुपांशुनास
ममृतत्वमानट् ॥ घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्य

उपांशुना समनृतत्वमानट् उपसंव्याप्नोत्। अंशुना। प्राणेनजगत्प्राणभू तेनाग्निनाएकीभूय
अमृतत्त्वममरणधर्मित्वम् प्राणश्चान्नं चैकीभूया मृतत्त्वं प्राप्नुतइत्यर्थः। तस्यघृतसत्रनामगुह्य
मविज्ञातमविद्वद्भिः श्रुतिमन्त्रपदिपठितं यदस्तितत् अहंवेद्मि। जिह्वादेवानाम् अत्यभिलापा-
जिह्वास्थाननिमितं देवानाम्। अग्नेर्जिह्वासीति यदावाएतदग्नौ जुहृत्य थाग्ने जिह्वा-
द्वोत्तिष्ठत्तीति यच्चसर्वंप्रकाशन्तदप्यहंवेद्मि। अमृतस्यनाभिः अमरणधर्मित्वस्य नहनमबन्धनम्

योऽङ्घृतमश्नातिसदीर्घायुर्भवति। यद्वा अर्द्वैनस्वस्तूयते अर्द्वैनघृतं मन्त्रस्य समुद्रात् आग्निकात्यजुः समुद्रात् यः ऊर्मिः शब्दसंघातः। नामख्यातोपसर्गनिपातलक्षणः उपमोत्प्रेक्षारूपकाद्यलंकारोपेतः। मधुमान् रसवान् वाक्यगुणैर्युक्तः। उदारत्उदगान्मुखतः। सएव उपांशुनासवनेन क्रियमाणः। तदेतत् यजुरुपांशु रत्ननिरुक्त मितिवचनात्। संप्राप्नोदमृतत्वम् अतोग्निविद्भिः

नाभिः ॥८८॥ वयन्नाम ॥ वयन्नामप्रब्रवामाघृतस्यास्मिन्यज्ञे

* धारयामानमोभिः ॥ उपब्रह्माशृणवच्छस्यमानञ्चतुःशृङ्गोवमी

प्रकाशनीय.। घृतस्यनामगुह्यं यदस्तितदपिजिह्वास्थाननिमित्तं देवानांकिमुतसाक्षाद्धोमः। अथास्यघृतकीर्त्तावेवाग्निर्वैश्वानरो जज्वालेत्येतदभिप्रायं वचनम्। अक्षतरवस्यचनाभिः नह्नं यजमानानाम् अतोग्निचिद्भि र्हूयतेस्तूयतेच ॥ ८८ ॥ वयनाम। यतोनामोच्चारणमपिप्रियन्देवाना मतो वयंनामप्रब्रवाम घृतस्यअस्मिन्यज्ञे। धारयामचयज्ञंनमोभिः हविर्भिः। विञ्च

* धारयाम योजाव सचस्व नुद सोपुजयतोरुष्य रचयज च्छमत्स्य गायता तुयेन नकारं प्रतिक्षस्वा नकारंप्रतायेदीर्घाम पद्यते इति सूत्रेण धारयामानमोभिरि तावदीर्घ प्रा० अ० ३। सू० १०८।

उपद्रष्टाश्चैतत् स्तोत्रं ब्रह्माऽऽर्त्विज्यं शस्यमानम् । यथाचतुःशृङ्गःयज्ञः । ऋत्विजोऽस्यशृङ्गाणि । अवमेत्त्वङ्गिरति । यज्ञपरिणामाभिप्रायम् गौरः गौरवर्णः एतत्घृतम् ॥ ९० ॥ चत्वारिशृङ्गाः । चतुःशृङ्गोवभौदित्युक्त्वा अधुनाचतुःशृङ्गंयज्ञरूपशब्दं रूपमंप्रतिपादयितुमाह । यस्यास्यचत्वारिशृङ्गाणि । ब्रह्मोद्गातृहोत्रध्वर्य्वाख्यानि यस्यचास्यत्रयः पादाः ऋग्यजुःसामलक्षणाः । द्वस्यचास्यद्वेशीर्षे हविर्धानप्रवर्ग्याख्ये । यस्यचास्यसप्तहस्ताः सप्तहोतारोहस्तादृव्याप्रियन्ते । यद्वा सप्त-

ङ्गौरऽएतत् ॥ ९० ॥ चत्वारिशृङ्गा ॥ चत्वारिशृङ्गास्त्रयोऽअस्यपादा द्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोम

छन्दांसिहस्तादृव । यज्ञविधाभिः प्रकारं संबद्धः प्रातःसवनमाध्यन्दिनतृतीयसवनैः । वृषभोवर्षिता । रोरवीति शब्दे । अत्यर्थंशब्दंकरोति । सोयंमहोदेवः महोदेवोमहान्देवः हिरण्यगर्भस्तंबपर्यन्तानां प्राणिनामुपजीव्यः । ज्ञानकर्मसमुच्चयकारिणांशरीरभूतः । मर्त्यान्मनुष्यान् आविशति । शब्दग्रामोवाभिधेयः । चत्वारिशृङ्गाणिनामाख्यातोपसर्गनिपाताः त्रयोऽस्यपादाः प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषाः । द्वेशीर्षेनामाख्याते । सप्तहस्ताः सप्तविभक्तयः । त्रिधाबद्धः एकव-

चनद्विवचनबहुवचनैः। वृषभद्रवामपादन्यानिशास्त्रा स्वध: पदीकृत्यरोरवीति । यउक्तगुण: सोयमहान्देवोमर्त्यान् आविशतिप्रतिपादयति ॥ ६१ ॥ त्रिधाहितम्। अन्नपरिणामभूतं यथा- घृतं तथात्रिधानिहितं स्थापितमेषुलोकेषु। पणिभिः सुरैः। गुह्यमान गुप्यमानम् । गवि- देशः घृतम् अन्वविन्दन् आनुपूर्व्याल्लब्धवन्तः। यत् तस्यघृतस्य इन्द्रः एकं भागंजजान

त्यां२ ॥ आविवेश ॥ ६१ ॥ त्रिधाहितम् ॥ त्रिधाहितम्पणिभिर्गुह्य मानङ्गविदेवासोघृतमन्वविन्दन् ॥ इन्द्रऽएकꣳसूर्य्यऽएकञ्जजानव्वे नादेकꣳस्वधयानिष्टतक्षुः ॥ ६२ ॥ एताऽअर्षन्ति ॥ एताअर्षन्तिहृ

जनयति। तेवाएते आहुतीहुते उत्क्रामतस्ते अन्तरिक्षमाविशत इत्यादिश्रुतिरिन्द्रस्य जन- कत्वं दर्शयति। सूर्यएक भागंजनयति। तेततउत्क्रामतः तेदिवमाविशन्त इत्यादिश्रुतिः सूर्यस्य- जनकत्वं दर्शयति। वेनात् अग्नेर्यज्ञसाधनभूतात् एकंभागंस्वधयान्नेनाहुतिलक्षणेन निष्टतक्षुः निष्कर्षितवन्तः द्विजातयः। यस्तत: पुनोजायतेसलोकः प्रत्युत्थायोत्थ तदुक्तं भवति ॥ ६२ ॥

एतात्र्प्रर्षन्ति । ऊर्मयः याएतावाच! अर्पन्तिवगच्छन्ति। हृद्यात् समुद्रात् अन्नोदकात्तुतादेव। तायायात्म्यचिन्तन सन्तानगर्भान्निगमनिरुक्त निघंटुव्याकरण शिचाच्छन्दोभिः परिपूरिताः शव्द्रव्रजाः। बहुगतयोवह्वर्थाः। याश्चैतात्र्प्रर्षन्त्या रिपुणाः कुतार्किक इन्द्रशत्रु संघातेन। नावचचे नापवदितुं शक्याः। ताः घृतस्येवधारा देवानांतृप्तिकराः। अभिचाकशीमि। अह-मभिगच्छामि। हिरण्मयश्च वेतसोग्निः मध्येआसांवाग्व्यक्तीनांविद्यमानं चाकशीमि। अह-

द्यात्समुद्राच्छतव्रंजारिपुणानावचर्चे॥ घृतस्युधाराऽअभिचाकशीमि हिरुण्ययोंवेतुसोमध्यंऽआसाम्॥ ९३॥ सुम्यक्स्त्रवन्ति॥ सुरितो

मभिशासयामि। हिरण्मयोवेतसोग्नि राहवनीयाख्यः। मध्येआसांवाग्व्यक्तीनां विद्यमानं चाक-शीमि। अग्निर्हिवाचामधिष्ठात्रीदेवता। यद्वा घृतस्यधारा एवोच्यन्ते। याएतात्र्प्रर्षन्तिगच्छन्ति हृद्यात्समुद्रात्। हृदयेनहि संकल्प्यपश्चात् यजंतेताएवमुच्यन्ते। शतव्रजावहुगतयः। याश्चे-तारिपुणा शत्रुणायज्ञपरिपन्थिना नावचचे नावदृष्टुंशक्यन्ते ताः घृतस्यधारा अहमभिचा-कशीमिपश्यामि। यश्चायंहिरण्म योवेतसोग्निराहवनीयाख्यो मध्येआसांव्यवतिष्ठति तम-

प्यहंपश्यामि । याथात्म्यतोहन्द्रव्यं देवताञ्च पश्यामीत्युक्तंभवति ॥ ९३ ॥ सम्यक् । याएताःसाधुस्र वन्ति सरितोनधेनाः नद्यइवानवच्छिन्नोदक सन्तानप्रवद्धाः । धेनावाचः धेनाइतिवाग्नामसुपठितम् । अन्तर्हृदामनसा पूयमानाः अन्तर्व्यवस्थितेन हृदयेन परिपश्यमानो येनमनसाचपूयमानाः विविच्यमाना शब्ददोषेभ्यः । ताअग्निमेवस्रवन्तीतिशेषः । येचैतेअर्षन्ति गच्छन्ति ऊर्मयः संघाता

नधेनाऽअन्तर्हृदामनंसापूयमानाः ॥ एतेऽअंर्षन्त्यूर्मयोघृतस्यंमृगाऽइंवक्षिपणोरीषंमाणाः ॥ ९४ ॥ सिन्धोरिवप्राध्वने ॥ सिन्धोरिव प्राध्वनेशूघनासोवातंप्रमियःपतयन्तियह्वाः ॥ घृतस्युधाराऽअरु

घृतस्य स्रुक्परिभ्रष्टा मृगाइवक्षिपणोः व्याधात् ईषमाणाः मपलायमानाः । तेप्यग्निमप्यर्षन्तीतिशेषः । एतदुक्तम्भवति । श्रुतिश्चद्रव्यवाग्न्यर्थमेव ॥ ९४ ॥ सिन्धोरिव । याएताः सिन्धोरिवनद्याः प्राध्वने प्रगतोध्वा प्राध्वामहोदकप्रपातः तस्मिन्महोदकप्रपाते शूघनासः शूघ्रइति क्षिप्रनाम । हन्तेर्गत्यर्थस्य घनः क्षिप्रगमना. वातप्रमियः तरङ्गवीयः पतयन्ति । स्वार्थेणच

प्रपतन्ति । यह्वाः महत्यः । सुङ्मुखात्परिभ्रष्टाः घृतस्यधाराः ताश्चपतन्तीरभ्यत्यग्निः । कदू- वेत्यत आह । अरुषोनवाजी । नकारउपमार्थीयः । यथा अरोचने,जात्यादिभि रुत्कृष्टो वाजीवेजनवान् अश्वः । पुनरप्यश्वंविशिनष्टि । काष्ठाभिन्दन् । अजरंतान् विदारयन् ।

षोनवाजीकाष्ठांभिन्दन्नूर्म्मिभिःपिन्वमानः ॥ ९५ ॥ अभिप्रवन्त ॥ अभीप्रवन्तसमनेवयोषाःकल्ल्यण्यः * स्मयमानासोऽअग्निम् ॥

ऊर्मिभिः पिन्वमानः । आज्यन्तविभेदनप्रमयोगाचम्वेदादूर्मिभिः पिन्वमानः . प्रसिञ्चनभू- मिम् । यथैतद्घाविशिष्ठोश्वोन्नाति एवमग्निरप्यश्नातीतिवाक्यार्थः । नतु हीनोपमानमग्ने रश्वः ज्यायांस्तत्र गुणोभिप्रेतः इतिपरिहृतं यास्केन ॥ ९५ ॥ अभिप्रवन्त । अभिनमन्तयो-

* अयोगवाहा विज्ञेया आश्रयस्थानभागिन इति । पाणिनीय शिक्षायामुक्तत्वादेकमात्रिकसाम्ये एकमात्रिको विसर्गः प्राप्तः परन्तु स्थान त्रेन विभाग क्वत पाणिनिनानतूच्चारणत्वेन उच्चारण तु विसर्गमात्र नान्तरीयकार्धमात्राकालापेक्षया किंचिदधिकमवसानं कृत्वाऽग्रिमवर्णोच्चारण कार्यमित्यादोष अत्रापि कस्य न विशेष उक्तो महर्षिणा भगवता योगियाज्ञवल्क्येन । ऊर्ध्वं चेपाश यथोष्मा अधःचेपाश यो भवेत् एकैकामुरस्कहोर करितं तूभयं चिपेत् हिमात्रिके भवेदेका मात्रिके

यन्ति प्रह्वीभवन्ति। कापुनस्ताः। घृतस्यधाराः। कमभिप्रह्वीभवन्ति। अग्निम्। कदमिव। समानमनस्काइवयोषाः। एकभर्तारंप्रति संगतमनसः। कल्याण्यः रूपयौवनसंपन्नाः। स्मयमानाः। स्मिङ्ईषद्धसने। ईषद्धसमानाः। समिधः समिन्धनाः। इत्थंभूताधाराअग्निमभिप्रह्वीभूय। ततस्तमेवाग्निं नसन्त। नसतिराप्नोतिकर्मावा नमतिकर्मावा। व्याप्नुवन्ति।

घृतस्यधाराऽसुमिधोनसन्तताजुषाणोहर्यतिजातवेदाऽ॥ ९६ ॥ कन्याऽइवव्वहतुम्॥ कन्न्याऽइवव्वहतुमेतवाऽउंऽअञ्ज्यञ्जानाऽअभि

ताश्चधाराः जुषाणः हर्यतिजातवेदाः। हर्यतिः प्रेप्साकर्मा। प्रेप्सतिप्रतिकामयते। नास्यग्रहणं शक्तिपरिहाणमस्तीत्यभिप्रायः। जातप्रज्ञानोग्निः॥ ९६॥ कन्याइव। याएताः कन्याइव नवपरिणीताइव। वहतुम् वोढारं भर्तारम्। एतवै। एतुगमनाय। अञ्जिप्रजननम्। अञ्जनाऽव्यक्तं कुर्वाणाः। अभिचाकशीमि अभिपश्यामि। ताः घृतस्यधाराः यत्रसोमाभिषूयते

तूभय स्थिवेत् स्वरित यद्वेविल्विषकारसह सयुतम् तत्रोभयि विजानीयाश्चिचेप उभयोरपि कर्त्तव्यस्तूभयो. चेप वायव्यैरिति दर्शनम्। जातेर च स्वरिते चैव यकारो यत्र दृश्यते। कर्त्तव्यस्तूभयो चेपा सदस्यैरितिनिदर्शनम्।

यलचसौत्रामण्याख्यो यज्ञस्तायते अभितपवन्ते । ततनवेत्यर्थः । अभितस्यन्ते अभिगच्छन्ति यज्ञसहचरिताघृतस्यधारा इत्यभिप्रायः ॥ ९७ ॥ अभ्यर्षत । हेदेवाअभ्यर्षत अभ्यागच्छत । एतांसुष्टुतिम् शोभनांस्तुतिम् । एतं चगव्यमाजिम् गोविकारैर्ध्ृतैर्जनितंगव्यम् आजिमान मनमभ्यागच्छत । अभ्यागत्यच अस्मासु भद्राभद्राणि द्रविणानिधनानि । धत्तस्थापयत दत्तवा

चाकशीमि ॥ यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत्पवन्ते ॥ ९७ ॥ अभ्यर्षत ॥ सुष्टुतिङ्गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ॥ इमं यज्ञन्नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ॥ ९८ ॥ धामन्ते ॥ धामन्ते विश्वम्भुवनमधिश्रितमन्तः समुद्रे हृद्यन्तरायुषि ॥ अपा

किञ्च । इमयज्ञं नयत तत्र देवादेवत्वं नः अस्माकम् अस्माभिर्योदेवलोकोजितइत्यर्थः । याश्चैताघृतस्य धारामधुमपवन्ते मधुसंयुक्तापवन्ते ताभ्यामर्जितंलोकम् नयतेत्यनुवर्तते ॥ ९८ ॥ धामन्ते । तत्र आहुतिपरिणामभूत मिदंजगत् ब्रह्मादिस्तम्बपर्यन्तम् मन्यमानआह । धाम

धामानिविभूत्यांतेतव विश्वंभुवन भूतजातमधिथितम् अध्याश्रितम् यच्चान्तः समुद्रे समुद्रस्य-मध्ये किञ्चित् यच्चश्रायुपि किञ्चदपि धामानितव अधिश्रित मित्यनुवर्तते। यतएवम्। अतस्त्वां-ब्रवीमि। अपामनीके सुखेवर्तमानो यजमानैराहूतः। समिथेसंग्रामेच पणिभिः सहवर्तमा-

मनीकेसमिथेयऽआभृतुस्तमश्यामुमधुमन्तन्तऽऊर्म्मिम् ॥९९॥ [१३]

# इतिसंहितायांदीर्घपाठेसप्तदशोध्यायः १७ ॥

नोय जमैराहूतः। तदुक्तम पणिभिर्गुह्यमानमिति। तम् अश्याम: भजयाम:। व्याप्नुयामवा मधुमन्तम् रसवन्तम् तेतवसम्बन्धिनम् हेइत ऊर्मिः परिणामिनोरसस्य वयंभोक्तारोभवेम। देवत्त्वं प्राप्नुयामेति वक्रोक्त्याप्रार्थ्यते ॥ ९९ ॥

इतिउव्वटकृतौमन्त्रभाष्येसप्तदशोध्यायः १७ ॥

(१) इतउत्तरं वसोर्धारिकाणि यजूंषि सप्तविंशतिकण्डिकाः । (२) वाजश्चमे वाजःअन्नञ्चमे । प्रसवःअन्नदानविषयाभ्यनुज्ञादीयतां भुज्यतामिति । प्रयतिश्चमे प्रसितिश्चमे प्रयतनं प्रयतिःआज्ञा

* व्वाजश्चच ॥ मेप्रसवश्चचमेप्रयतिश्चचमेप्रसितिश्चचमेधीतिश्चचं

प्रसयनं प्रसितिः । तन्तुर्बीजालंवा तेनचावबन्धनं स्नेहउपलक्ष्यते । धीतिश्चमेक्रतुश्चमे । ध्यैचिन्तायाम् । तस्यधीतिःसंप्रसारणंछान्दसम् । क्रतुःसंकल्पः संस्कारोवा स्वरश्चमेश्लोकश्चमे ।

(१) सप्तदशेऽध्याये चित्यारोहणादिमन्त्रा उक्ता इदानीमष्टादशेऽध्याये वसोर्धारादिमन्त्रा उच्यन्ते ।

(२) का० वसोर्धारां जुहोत्यौदुम्बर्या पञ्चगृहीतं० सन्ततं यजमानोऽरण्ये नूचं ऽग्निप्राप्ते वाजश्च मइत्यष्टानुवाकेन वस्याथं । ततो यजमान आज्यं अरत्निमात्रपरिमाणया महत्यौदुम्बर्या स्रुचा महता स्रुवेण पञ्चवारं गृहीतमाज्यमरण्ये नूचं पुरोडाशे तदुपरि सन्ततमविच्छिन्नधारं यथा तथा वसोर्धारासंज्ञामाहुतिं जुहोति । इतोऽग्निप्राप्ते सति वाजयेता-दिहोममन्त्रारम्भ कार्योऽष्टाभिरनुवाकैर्वाजयेतादिवेट्स्वाहान्तैरेकोनत्रिंशत्कण्डिकात्मकैः ।

---

* वाज सप्तमूर्धञ्चतुष्काश्च्या त्रिस्त्रिकावर्ठ०शु पचैकाचतस्रोवाजायहे वाजस्यन्वष्टा इतापट्त्रयो दशाग्नियुनज्मीससयदाक् ताद्यार्व इतरायदशकौत्रयोदशससशति ।

साधुशब्दःस्वरः श्लोकःगद्यपद्यबन्धः । श्रवश्चमेश्रुतिश्चमे श्रवोवेदोमंत्राः । श्रुतिर्ब्राह्मणम् । ज्योतिश्चमेस्वश्चमे । ज्योतिरादित्यादिः स्वर्द्युलोकादि । द्वौद्वौकामौसंयुनक्ति अव्यवच्छेदाय यथा व्योकसौसंयुज्यादेवमितिश्रुतिः । द्वौद्वौकामावभिरूपौ संयुनक्ति । चकारेणसमुच्चिनोति अव्यवच्छेदाय अनुपक्षयाय । यथा कश्चिद्द्विजोतिर्व्योकसौसंयुज्यात् । ओकइतिनिवासनाम ।

मेक्रतुश्चमेस्वरश्चमेश्लोकश्चमेश्रवश्चमेश्रुतिश्चमेज्योति श्चमेस्वश्चमेयज्ञेनकल्पन्ताम् ॥ १ ॥ प्राणश्चमे ॥ मेपानश्चमे

विगत ओकोगृहं ययोःकुमारीकुमारयोःतौव्योकसौ नानागृहनिवासिनौ संयुज्यात् तयोर्विवाहंकुर्यात् । एवं चकारेण समुच्चिनोति । यज्ञेनकल्पन्ताम् वाजप्रभृतीनिचकार समुच्चितानि मम यज्ञेनकल्पन्तां समर्थाभवन्तु । यज्ञोग्निंतर्पयन्तु अभिषिञ्चन्तुवा । अनेनचत्वामोणाव्यनेनच अनेनचत्वाअभिषिञ्चाम्यनेनचेत्यस्याः श्रुतेरभिप्रायेणव्याख्यातम् । अथोद्द्वन्द्वमे देहोदंचम इत्यस्याःश्रुते रभिप्रायेण व्याख्यास्यामः । वाजप्रभृतीनि चशब्दसमुच्चितानि मम यज्ञो-

नानेनक्लृप्तानि भवन्तु यज्ञोसम्यमेतेषां दाताभवत्वित्यर्थः । एवमस्माभि र्दिङ्मात्रप्रदर्शनं

व्यानश्चमेऽसुश्चमेचित्तञ्चमऽआधीतञ्चमेव्वाक्चमेमनश्चमेचक्षुश्च मेश्श्रोत्रञ्चमेदक्षश्चमेबलञ्चमेयज्ञेनकल्पन्ताम् ॥ २ ॥ ओजश्च मेसहश्चमऽआत्माचमेतनूश्चमेशर्म्मचमेव्वर्म्मचमेङ्गानिचमेस्थीनि चमेपरूᳬषिचमेशरीराणिचमऽआयुश्चमेजराचमेयज्ञेनकल्पन्ता म् ॥ ३ ॥ ज्यैष्ठ्यञ्च मऽआधिपत्यञ्चमेमन्युश्चमेभामश्चमेमश्च मेम्भश्चमेजेमाचमेमहिमाचमेव्वरिमाचमेप्प्रथिमाचमेव्वर्षिमाचमेद्रा

हतंमंत्रव्याख्यायाः ॥ ११ (१) २।२ ॥

(१) प्राणः ऊर्ध्वसञ्चारी शरीरवायुः । अपानः अधोवृत्तिर्वायुः । व्यानः सर्वशरीरचरः । असुः प्रवृत्तिमात्रवायुः । चित्तं मानसः सङ्कल्पः । आधीतं बाह्यविषयज्ञानम् । वाक् वागिन्द्रियम् । मनः प्रसिद्धम् । चक्षुरिन्द्रियम् । श्रोत्रं श्रवणेन्द्रियम् । दक्षः ज्ञानेन्द्रियकौशलम् । बलं कर्मेन्द्रियकौशलम् । एतानि यज्ञेन मे कल्पन्ताम् ।

घिमा च मेवृद्धञ्च मेवृद्धिश्च मेयज्ञेन कल्पन्ताम् ॥ ४ ॥ सत्यञ्च ॥
मेश्रद्धा च मेजगच्च मेधनञ्च मेविश्वञ्च मे महश्च मेक्रीडा च मेमोद
श्च मेजातञ्च मेजनिष्यमाणञ्च मेसूक्तञ्च मेसुकृतञ्च मेयज्ञेन
कल्पन्ताम् ॥५॥ ऋतञ्च ॥ मेऽमृतञ्च मेऽयक्ष्मञ्च मेऽनामयच्च मेजीवा

सुगमव्याख्यानम् । (१) ४ । (२) ५ ।

(१) ज्येष्ठस्य भावो ज्यैष्ठ्यं प्रशस्तत्वम् । अधिपतेर्भाव आधिपत्यम् स्वामित्वम् । मन्यु मानस कोप । भामोऽधिक्षेपादि लिङ्गको बाह्य कोप । न मीयत इत्यम अपरिमेयत्वमन्यैरियत्तया परिच्छेत्तुमशक्यत्वम् । अम्भ शीतमधुर जलम् । जेमा जयस्य भावो जयसामर्थ्यम् । महतो भावो महिमा महत्त्व सम्पत्त्यादिना । उरोर्भावो वरिमा प्रजादिविशालता । पृथोर्भाव प्रथिमा स्वदेशादिविस्तार । वृद्धस्य भावो वर्षिमा दीर्घजीवित्वम् । दीर्घस्य भावो द्राघिमा अविच्छिन्नवंशत्वम् । [illegible] प्रभूतमन्नधनादि । वृद्धि । विद्यादिगुणैरुत्कर्ष । एते मे कल्पन्ताम् ।

(२) सत्य यथार्थभाषित्वम् । श्रद्धा परलोकविश्वास । जगत् जङ्गम गवादि । धन कनकादि विश्व स्थावरम् । मह दीप्ति । क्रीडा अक्षद्यूतादि । मोद क्रीडादर्शनजो हर्ष । जात पुत्रोत्पन्नमपत्यम् । जनिष्यमाण भविष्यदपत्यम् । सूक्तमृक्समूह । सुकृतमृक्पाठजन्य शुभादृष्टम् । एते कल्पन्ताम् ।

तुंश्च्चमेदीर्घायुत्त्वञ्चंमेनमित्त्रञ्च मेभंयञ्चमेसुखञ्च मेशयंनञ्च
मेसूषाश्च्चंमेसुदिनञ्चमेयुज्ञेनंकल्पन्ताम् ॥ ६ ॥ यन्ताचं ॥ मेध
र्ताचमे क्षेमेश्च्चमे धृतिंश्चमे व्विश्श्वंञ्चमे महंश्च्चमेसंव्विच्चांमे ज्ञा
त्रंञ्चमे सूश्च्च मेप्रसूश्च्चांमे सीरंञ्चमे लयंश्च्चमेयुज्ञे नंकल्प
न्ताम् ॥ ७॥ ष्ठंचमे मयंश्च्चमे प्प्रियञ्चंमेनुकामश्च्चंमे कामंश्च्च

सुगमव्याख्यानम् । (१) ६ । (२) ७ ।

(१) ऋतं यज्ञादिकर्म। अमृतं यत्फलभूतं स्वर्गादि। यक्ष्मणोऽभावोऽयक्ष्मं धातुक्षयादिरोगाभावः । आमयति पीडयतीत्यामयत् न आमयत् अनामयत् सामान्यव्याध्यादिराहितम जीवयतीति जीवातुः व्याधिनाशकमौषधम्। दीर्घायुषो भावो दीर्घायुत्वं बहुकालमायुः पृषोदरादित्वात्सलोपः आयुरदन्तो वा । अमित्राणामभावोऽनमित्रं शत्रुराहितम्। भयाभावोऽभयं भीतिराहितम्। सुखमानन्दः शयनं संस्कृता शय्या । सुषाः शोभन उषाः स्नानसन्ध्यादियुक्तः प्रातःकाल । सुदिनं यज्ञदानाध्ययनादियुक्तं सर्वं दिनम्। एते मे यज्ञेन सिध्यन्तु ।
(२) यन्ता अश्वादेर्नियन्ता। धर्ता पोषकः पित्रादि । क्षेम विद्यमानधनस्य रक्षणशक्तिः। धृतिः धैर्य्यमापत्स्वपि स्थिरचि-

मेसौमनसश्च मे भगश्चमे द्रविणञ्चमेभद्रञ्च मे श्रेयश्चमे वसी यश्चमे यशश्चमे यज्ञेनकल्पन्ताम्॥८॥[७] ऊर्क्चमे सूनृताचमे पयश्चमेरसश्चमेघृतञ्चमेमधुचमेसग्धिश्चमेसपीतिश्चमेकृषिश्च मेवृष्टिश्चमेजैत्रञ्चमऔद्भिद्यञ्चमेयज्ञेनकल्पन्ताम् ॥ ९ ॥ रयि श्च मे रायश्चमेपुष्टञ्चमेपुष्टिश्चमेविभुचमेप्रभुचमेपूर्णञ्चमेपूर्णत

सुगमव्याख्यानम् । (१) ८ । ९ ॥

त्वरम । विश्व सर्वानुकूल्यम् । मह पूजा । सविद दयालादिज्ञानम । ब्रातुर्भावो ब्रातम विज्ञानसामर्थ्य म । सू पुत्रादि मे रणसामर्थ्यम् । प्रसू पुत्रोत्पत्तादिसामर्थ्य म । सीर हलादि कृषिजातधान्यनिष्पत्ति । लय कृषिप्रतिबन्धनिवृत्ति ।

(१) शमैहिक सुखम । मय आमुष्मिक सुखम । प्रिय प्रीत्युत्पादक वस्तु । अनुकाम्यत इत्यनुकाम अनुकूलयत्नसाध्य पदार्थ । काम विषयभोगजनित सुखम । सुमनसो भाव सौमनस मन स्वास्थ्यकरो बन्धुवर्ग । भग सौभाग्यम द्रविण धनम भद्रमैहिक कल्याणम । श्रेय पारलौकिकम् । वसतीति वस्तृ अतिशयेन वस्तृ वसीय तुरिष्ठेमेय स्विति तृचो लोप निवासयोग्यो वसुमान गृहादि । यश कीर्त्ति । ऐते कल्पन्ताम ।

रश्चमेक्रतुयंवञ्चमेच्चितं मेन्नञ्चमेक्षुच्चमेयज्ञेनकल्पन्ताम् ॥१०॥ वि
तं ॥ मेव्वेद्यं मेभूतं मेभविष्यच्चमेसुगं मेसुपत्थ्यं म ऽऋद्धं म ऽऋद्धि
श्चमेक्लृप्तं मेक्लृप्तिश्चमेमतिश्चमेसुमतिश्चमेयज्ञेनकल्पन्ताम्॥११॥
व्रीहयश्च ॥ मेयवाश्चमेमाषाश्चमेतिलाश्चमेमुद्गाश्चमेखल्वाश्चमेप्रियङ्ग
वश्चमेणवश्चमेश्यामाकाश्चमेनीवाराश्चमेगोधूमाश्चमेमसूराश्चमेयज्ञेन
कल्पन्ताम् ॥ १२ ॥ [ ४ ] अश्माच ॥ मेमृत्तिकाचमेगिरयश्चमेपर्व्व
ताश्चमेसिकताश्चमेव्वनस्पतयश्चमेहिरण्यञ्चमेयश्चमेश्यामञ्चमेलोहं
चमेसीसञ्चमेत्रपुञ्चमेयज्ञेनकल्पन्ताम् ॥ १३ ॥ अग्निश्च ॥ म ऽआ

सुगमव्याख्यानम् । १० । ११ । १२ । १३ ॥

पंश्चमे वीरुधंश्चम ऽओषंधयश्चमे कृष्टपच्याश्चमेकृष्टपच्याश्चमेग्राम्याश्चमे पशवंऽआरण्याश्चमे वित्तञ्चमे वित्तिश्चमे भूतञ्चमे भूतिश्चमे युज्ञेनंकल्पन्ताम् ॥ १४ ॥ व्वसुंच ॥ मेव्वसतिश्चमे कर्म्मंच मे शक्तिश्चुमेर्थंश्चम ऽएमंश्चम ऽ इत्याचंमेगतिश्चमे युज्ञेनंकल्पन्ताम् ॥ १५ ॥ [ ३ ] अग्निश्चं ॥ म ऽइन्द्रंश्चमे सोमंश्चम ऽइन्द्रंश्च

सुगमव्याख्यानम् । (१) १४ । (२) १५ ॥

(१) अग्नि पृथिवीस्थो वह्नि । आपोऽन्तरिक्षस्थानि जलानि । वीरुध गुल्मा । ओषधय फलपाकान्ता कृष्टपच्या कृष्टे पच्यन्त इति कृष्टपच्या राजसूयसूयत्यादिना क्यबन्तो निपात भूमिकर्षणबीजवापादिकर्म निष्पाद्या ओषधय । तद्विपरीता अकृष्टपच्या स्वयमेवोत्पद्यमाना नीवारगवेधुकादय । ग्राम्या ग्रामे भवा पशव गोऽश्वमहिषाजाविगर्दभोष्ट्रादय । आरण्या अरण्ये भवा पशव हस्तिसिंहशरभमृगगवयमर्कटादय । वित्त पूर्वलब्धम् । वित्ति भाविलाभ । भूत जातपुत्रादिकम् । भूतिरैश्वर्यं स्वार्जितम् । एतानि यज्ञेन मम सम्पद्यन्ताम् ।

(२) वसु धन गवादिकम् । वसतिर्वासस्थान गृहम् । कर्माग्निहोत्रादि । शक्तिस्तदनुष्ठानसामर्थ्यम् । अर्थोऽभिलषित पदार्थ एम इयत ज्ञातो म एतेम प्रताय प्राप्तव्योऽर्थ । इत्या भावे क्यप अयनमिष्टप्राप्त्युपाय गतिरिष्टप्राप्ति । एते कल्पन्ताम् ।

मेसविताचंमुऽइन्द्रंश्चमेसरंस्वतीचमु ऽ इन्द्रंश्चमेपूषाचंमुऽइन्द्रंश्च
मेबृहुस्पतिंश्चमुऽइन्द्रंश्चमंयुज्ञेनकल्पन्ताम् ॥१६॥ मित्रश्चं ॥
मुऽइन्द्रंश्चमेवरुणश्चमुऽइन्द्रंश्चमेधाताचंमुऽइन्द्रंश्चमेत्वष्टाचमुऽ
इन्द्रंश्चमेमरुतंश्चमु ऽ इन्द्रंश्चमेविश्वेंचमेदेवाऽइन्द्रंश्चमेयुज्ञेनं
कल्पन्ताम् ॥ १७ ॥ पृथिवीचं ॥ मुऽइन्द्रंश्चमेन्तरिक्षञ्चमुऽइन्द्र
श्चमेद्यौश्चंमुऽइन्द्रंश्चमेसमांश्चमुऽइन्द्रंश्चमेनक्षंत्राणिचमुऽइन्द्रं

अथार्द्धेन्द्राणि जुहोति । अर्द्ध इन्द्रः अर्द्धे अन्येदेवाः । अग्निश्चमइन्द्रश्चम इति ॥ (१) १६ । (२) १७ ।

(१) अथार्धेन्द्राणि जुहोति अर्धस्ये न्द्रदेवतात्वादर्धस्य नानादेवतात्वात्। अग्निसोमसवितृसरस्वतीपूषबृहस्पतय प्रसिद्धा ते समानभागत्वादिन्द्र एकै कया सह पठ्यते। यास्कोक्ता इन्द्रशब्दस्य नानार्था कार्या एवमर्थेऽपि कण्डिकाद्वये एतेकल्पन्ताम्।
(२) मित्रवरुणधातृत्वष्टृ मरुद्विश्वेदेवा प्रसिद्धा प्रतीकमिन्द्र । एते कल्पन्ताम्।

श्चमेदिशश्चमऽइन्द्रश्चमेयज्ञेनकल्पन्ताम् ॥ १८ ॥ [२] अꣳशुश्चमे

रश्मिश्चमेदाभ्यश्चमेधिपतिश्चमऽउपाꣳशुश्चमेन्तर्यामश्चमऽऐन्द्रवायवश्चमेमैत्रावरुणश्चमऽआश्विनश्चमेप्रतिप्रस्थानश्चमेशुक्रश्चमेमन्थीचमेयज्ञेनकल्पन्ताम् ॥ १९ ॥ आग्रयणश्चमेवैश्वदेवश्चमेध्रुवश्चमेवैश्वानरश्चमऽऐन्द्राग्न

अथग्रहान् जुहोति । अꣳशुश्चमइति । (१) १८ । (२) १९ ॥

(१) पृथिव्यन्तरिक्षदिवस्त्रैलोक्यम् समावर्षाधिष्ठात्री देवता । नक्षत्राणि अश्विन्यादीनि । दिश प्रागाद्या । एते कल्पन्ताम् ।

(२) अथ ग्रहान् जुहोति अंश्वादये ग्रहहोममन्त्रा । अंश्वादय सोमग्रहविशेषा सोमप्रकरणे प्रसिद्धा अदाभ्यसोऽव ग्रह-श्मापल्वदयायां पृथक्‌कृतस्य ग्रहणे रश्मिशब्दे निर्देश रश्मीनां तद्‌ग्रहणे साधनत्वात अङ्गो रूपे सूर्य्यस्य रश्मिषु इति मन्त्रलिङ्गात् । अधिपतिशब्देन निग्राह्यो विवचित तस्य ज्येष्ठत्वादाधिपताम ज्येष्ठो वा एष ग्रहाणामिति श्रुते । प्रतिप्रस्थानशब्देन निग्राह्यो विवचित द्विदेवता: सह पाठात् । अन्ये प्रसिद्धा ।

ग्रश्चं मे महावैश्वदेवश्चमे मरुत्वतीयाश्चमे निष्केवल्यश्चमे सा-
वित्रश्चमे सारस्वतश्चमे पात्नीवतश्चमे हारियोजनश्च मे युज्ञेन
कल्पन्ताम् ॥ २० ॥ स्रुचश्च ॥ मेचमसाश्च मे वायुव्यानि च मे द्रोणकलु
शश्च मे ग्रावाणश्च मेऽधिषवणे च मे पूतभृच्च मऽआधवनीयश्च मे वेदिश्च मे ब
र्हिश्च मेऽवभृथश्च मे स्वगाकारश्च मे युज्ञेन कल्पन्ताम् ॥ २१॥ अग्निश्च ॥

सुगमव्याख्यानम् । (१) २० । (२) १२ ॥

(१) ग्राग्रो वैश्वदेव. प्रात.सवनगत. महावैश्वदेवस्तु तृतीयसवनगतः । ध्रुवाव्यसौ व मङ्गा श्रवणदयायां वैश्वानरमूलाय ठात्तद्गापापवो ध्रुवो वैश्वानरशब्देनोच्यते । मरुत्वतीया इति बहुवचनं त्रित्वात् मरुत्वतीयो म्हामरुत्वतीय कुण्डमरु-त्वतीयश्चेति । अभिषेचनीये सारस्वतीनामपां ग्रहणमेव सारस्वतो ग्रहः सारस्वतं ग्रहं गृह्णातीति तत्राम्नानात् ।

(२) स्रुचो जुह्वादयः चमसानि ग्रहपात्राणि । वायव्यानि पात्रविशेषाः । अधिषवणे काष्ठफलके । पूतभृदाधवनीयौ सोमपात्रवि-शेषौ । स्वगाकारः शम्युवाकः तेन यथास्व देवतानां हविरङ्गीकारात् । प्रसिद्धमन्यत् । एते मम यज्ञेन निमित्तेन क-ल्पन्ताम् ।

मेघर्म्मश्चमेर्क्कश्चमेसूर्य्यश्चमेप्राणश्चमेश्वमेधश्चमेपृथिवीचमेदितिश्च मेदितिश्चमेद्यौश्चमेङ्गुलयःशक्वरयोदिशश्चमेयज्ञेनकल्पन्ताम् ॥२२॥ व्रतञ्च ॥ मऽऋतवश्चमेतपश्चमेसंवत्सरश्चमेहोरात्रेऽऊर्व्वष्ठीवेबृह द्रथन्तरेचमेयज्ञेनकल्पन्ताम् ॥ २३ ॥ [५] एकाच ॥ मेतिस्रश्च

(१) २२। (२)।२३॥ अथैतान् यज्ञक्रतून् जुहोति। (३) एकाचमे

(१) कण्डिकाद्वयेन यज्ञक्रतुहोमः। अथैतान् यज्ञक्रतून् जुहोताग्निय म इति श्रुतेः अग्निः चीयमानो वह्निरग्निष्टोमो वा घर्मः प्रवर्ग्यः। इन्द्रायार्कवते पुरोडाशमिति विहितो यागोऽर्कः। सौर्यं चरुमिति विहितः सूर्यः। प्राणो गवामयनम्। अश्वमेधः प्रसिद्ध। पृथिव्यदितिदितिदिवो देवताविशेषाः। अङ्गुलयः विराटपुरुषावयवाः। शक्वरयः शक्तयः। दिशः प्राच्याद्याः यज्ञेन कल्पन्ताम्।

(२) व्रतं नियमः। ऋतवो वसन्तादयः। तपः कृच्छ्रं चान्द्रायणादि। संवत्सरः प्रभवादि। अहश्च रात्रिश्चाहोरात्रे दिननिशे। ऊरू चाष्ठीवन्तौ जानुनी च ऊर्वष्ठीवे अवयवविशेषौ अचतुरेति निपातः। बृहद्रथन्तरे एतन्नामके सामनी। एतानि कल्पन्ताम्।

(३) अयुग्मस्तोमहोमार्था मन्त्राः। अथायुजस्तोमान् जुहोतीति श्रुतेः। एकामादाय द्वितीयां विहाय तृतीयामादा

तिस्रश्चम इति ॥ २४ ॥ अथयुग्मतोजुहोति। (१) चतस्रश्चमेऽष्टौचमइति। पूर्वंपूर्वमुत्तरेण सं-

मेतिस्रश्चमेपञ्चचमेपञ्चचमेसप्तचमेसप्तचमेनवचमेनवचमऽएका
दशचमऽएकादशचमेत्रयोदशचमेत्रयोदशचमेपञ्चदशचमेपञ्चदशच
मेसप्तदशचमेसप्तदशचमेनवदशचमेनवदशचमऽएकविꣳशतिश्चम
ऽएकविꣳशतिश्चमेत्रयोविꣳशतिश्चमेत्रयोविꣳशतिश्चमेपञ्चविꣳ
शतिश्चमेपञ्चविꣳशतिश्चमेसप्तविꣳशतिश्चमेसप्तविꣳशतिश्च
मेनवविꣳशतिश्चमेनवविꣳशतिश्चमऽएकत्रिꣳशच्चमऽएकत्रिꣳशच्च
मेत्रयस्त्रिꣳशच्चमेयज्ञेनकल्पन्ताम् ॥२४॥ चतस्रश्च॥ मेऽष्टौचमेऽष्टौच

यचतुर्थं विहाय परित्यक्तसमसंख्याकेनातिविषमसंख्याकेन मन्त्रेणायुग्मान् स्तोमान् जुहुयादित्यर्थः। आदरातिशयद्योतनार्थं सर्वत्र पुनरुक्तिः। अयुग्मस्तोमहोमे सर्वकामावाप्तिः। तथाच श्रुतिः एतद्वै देवाः सर्वान् कामानायुग्भिः स्तोमैः स्वर्गं लोकमायन् तथैवैतद्यजमानः सर्वान् कामानायुग्भिः स्तोमैः स्वर्गं लोकमेतीत्यादि।

वभाति । यथाहच्चरोह न्नुत्तरामुत्तरांशाखां समालंभंरोहेत्ताद्दक् । विषक्ताः प्रयोजन मां-

मेद्वादशश्चमेद्वादशश्चमेषोडशश्चमेषोडशश्चमेव्विꣳशतिश्चमेव्विꣳशतिश्चमे
चतुर्व्विꣳशतिश्चमेचतुर्व्विꣳशतिश्चमेष्टाविꣳशतिश्चमेष्टाव्विꣳशति
श्चमेद्वात्रिꣳशच्चमेद्वात्रिꣳशच्चमेषट्त्रिꣳशच्चमेषट्त्रिꣳशच्चमेचत्वारिꣳ
शच्चमेचत्वारिꣳशच्चमेचतुश्चत्वारिꣳशच्चमेचतुश्चत्वारिꣳशच्चमे
ष्टाचत्वारिꣳशच्चमेयज्ञेनकल्पन्ताम् ॥२५॥ त्र्यविश्च ॥ मेत्र्यवीचमे
दित्यवाट्चमेदित्यौहीचमेपञ्चाविश्चमेपञ्चावीचमेत्रिवत्सश्चमेत्रि

(१) एकादिकया युग्मस्तोमान् जुहोति । अथ युग्मतो जुहोति चतस्रश्च म इति प्रथम चतस्र इत्येता सख्यामारभ्य चतुरुत्तरत्वेन स्थितान् युग्मान् स्तोमानष्टाचत्वारिंशत्पर्यन्तान् जुहुयादित्यर्थः । तत्फल स्वर्गप्राप्ति एतद्वै छन्दाꣳस्ययुजन्यातयामा वा अयुज स्तोमायुग्मभिर्वयꣳस्तोमैः स्वर्गं लोकमायेति तथैतद्यजमानो युग्मभि स्तोमै स्वर्गं लोकमेतीति श्रुते । पूर्वं पूर्वमुत्तरेण सम्बध्नाति वृक्षारोहणवत् । तथाच श्रुति पूर्वं पूर्वमुत्तरेणोत्तरेण सयुनक्ति यथा वृक्षराहन्नुत्तरामुत्तराꣳ शाखाꣳ समालभमानꣳ रोहेत्तादृगिति । प्रयोता सख्या सख्यर्यनिष्ठा । एते यज्ञेन कल्पन्ताम् ।

वृत्साचंमेतुर्य्यवाट्चंमेतुर्य्यौहीचंमेयुज्ञेनंकल्पन्ताम् ॥ २६ ॥ पृष्ठवा
ट्चं ॥ मेपष्ठौहीचंमऽउक्षाचंमेव्वशाचंम ऽऋषभश्चंमेव्वेहच्चंमेनुड्वाँ
श्चंमेधेनुश्चंमेयुज्ञेनंकल्पन्ताम् ॥ २७ ॥ [ ४ ] व्वाजांयुस्वाहां ॥
प्प्रसुवायुस्वाहांपिजायुस्वाहाक्रतवेस्वाहाव्वसंवेस्वाहांहुप्पतंयेस्वाहा
ह्नेमुग्धायुस्वाहांमुग्धायंव्वैन ६ शिनायुस्वाहांव्विन ६ शिनं ऽ आ
न्त्यायुनायुस्वाहान्त्यांयभौवुनायुस्वाहाभुवंनस्युपतंयेस्वाहाधिंपतये
स्वाहांप्प्रजापतयेस्वाहां ॥ इयन्तेराण्णमित्रायंयुन्तासियमंनऽऊर्ज्जे
त्वाव्वृष्ट्यैत्वाप्प्रजानान्त्वाधिंपत्याय ॥ २८ ॥ आयुर्य्युज्ञेनंकल्पता

इत्युतिः ॥ २५ ॥ अथक्रमांसित्ज्होति । (२) अविश्चमद्ति ॥ २६ । (१) २७ ॥ अथनामग्रहं जु-

होति । वाजायस्वाहा इति ॥ २८ ॥ अथकल्पान् जुहोति । आयुर्यज्ञेन कल्पतामिति । आयुरादीनि ममयज्ञक्लृप्तानि भवन्तु । यज्ञश्च ममयज्ञेनैवक्लृप्तो भवतु नाहंयज्ञक्लृप्तो

आयुर्यज्ञेनकल्पताम्प्राणोयज्ञेनकल्पताञ्चक्षुर्यज्ञेनकल्पताᳬश्रोत्रंयज्ञेनकल्पताँवाग्यज्ञेनकल्पताम्मनोयज्ञेनकल्पतामात्मायज्ञेनकल्पताम्ब्रह्मायज्ञेनकल्पताञ्ज्योतिर्यज्ञेनकल्पताᳬस्वर्यज्ञेनकल्पताम्पृष्ठंयज्ञेनकल्पतांयज्ञोयज्ञेनकल्पताम् ॥ स्तोमश्चयजुश्चऋक्चसामचबृहच्चरथन्तरञ्च ॥ स्वर्देवाऽअगन्मामृताऽअभूमप्रजापतेःप्रजाऽअभूमवेट्स्वाहा ॥ २९ ॥ [ २ ] व्वाजस्यनु ॥ प्प्रसवेमा·

ममर्थ: । स्तोमश्चयजुश्च ऋक्चसामचबृहच्चरथन्तरञ्च यज्ञेन क्लृप्तानिभवन्त्वित्यनुषङ्गः । स्वर्देवाअगन्म हेदेवा: स्वर्गलोकंवयमगन्म । अमृताश्चभूता: प्रजापतेश्च प्रजाअभूमेति फलवचनम् ।

वेदम्वाहेति (१) होममन्त्व ॥२९॥ वाजप्रसवीयं जुहोति सप्तभिर्ऋग्भिः। वाजस्यनु व्याख्यातम्। ३०॥ विश्वेअद्य। वैश्वदेवी त्रिष्टुप् व्यवहितपदप्रायः। विश्वेअद्यमरुतः अद्यअग्निमन्याविऽ आगमन्त्वित्यनुषङ्गः। विश्वजती। विश्वइति सर्वनाम सामान्यदेवता गणप्रतिपत्तिजनक मतस्तन्निराकांची करणायविशिष्टो देवतागणा इहाध्याक्रियते। विश्वेच देवगणावसवो रुद्राआदित्या अद्य-

तरम्महीमदितिन्नामवचसाकरामहे ॥ यस्यामिदंव्विश्वम्भुवनमाविवेशतस्यान्नोदेवःसवितधर्मसाविषत् ॥ ३० ॥ व्विश्वेअद्य ॥ मरुतोव्विश्वऽऊतीव्विश्वेभवन्त्वग्नयःसमिद्धाः ॥ व्विश्वेनोदेवा

जतीजया अवनेनतर्पणेन निमित्तभूतेन आगमन्तु। तदागमनेनच विश्वेभवन्तु अग्नयः गार्हपत्यप्रभृतयः समिद्धाः सम्यग्दीप्ताः। विश्वेदेवाश्च नोऽस्माकम अवसान्नेन हविर्लक्षणेन निमित्तभूतेन आगमन्तु आगच्छन्तु तेषांच तुष्ट्याविश्वं सर्ववसुद्रविणम्भूमि हिरण्यादि धनं वाजप्रधानञ्च अस्मे अस्माकमस्तु॥ यद्वान्यथा सम्बन्धः। विश्वेमरुतः अद्यआगच्छन्तु। विश्वेच

(१) व तीर्थाराहोममन्त्रा समाप्ता

देवगणाः ऊत्यानिमित्तभूतया आगमन्तु। विश्वेचदेवा अवसानिमित्तभूतेन आगमन्तु तदा गमनेनच विश्वेभवन्तु अग्नयः समिद्धाः। होमार्थंहि अग्नयः प्रज्वाल्यन्ते। ततोयागोत्तरकालम्। विश्वमस्तुद्रविणं वाजोअस्मे॥ ३१॥ वाजोनः। अनुष्टुप् वाजदेवती। वाजेनं नोस्माकं सप्तप्रदिशः चतस्रोदिशः प्रकृष्टाश्च त्रयोलोकाः सप्तप्रदिशः उक्ताः। चतस्रो वा

ऽअवआगमन्तुविश्वेमस्तुद्रविणंवाजोऽअस्मे॥ ३१॥ वाजोनः॥ सप्तप्रदिशश्चतस्रोवापरावतः॥ वाजोनोविश्वैर्देवैर्धनसाताविहावतु॥ ३२॥ वाजोनः॥ वाजोनोऽअद्यप्रसुवातिदानंवाजोदे

परावतः। वाशब्दः समुच्चयार्थीयः। चतस्रश्च परावतः। परावच्छब्दो दूरवचनः। महः जनः तपः सत्यमित्येतेलोका उच्यन्ते। तेहितान् लोकानतीत्यवर्तन्ते। आपूरयत्वितिशेषः। किञ्च। वाज नः अस्मान् विश्वैर्देवैः सह धनसातौधनसम्भजनकाले प्राप्तेइहयज्ञे इहवालोके अव पालयतु॥ ३२॥ वाजोनः। द्वे अनुष्टुभौवाजदेवत्ये। वाज. नः अस्माकम् अद्यप्रसुवाति

अभ्यनुजानातुदानम् वाजश्चदेवान् ऋतुभिः कालैः सह कल्पयतु यथास्थानम्। वाजोहिमा- सर्वंवीरञ्जजान। हिशब्दः समुच्चयार्थीयः। वाजश्चमांसर्ववीरं जनयतु। ततोविश्वाः आशाः वाजपतिः सन् जयेयमित्याशीः॥ ३३॥ वाज. पुरस्तात्। वाजः अन्नं पुरस्तात् अस्त्विति-

वार२॥ ऽऋतुभिं÷कल्पयाति॥ व्वाजोहिमासर्व्वंवीरञ्जजानव्विश्श्वा ऽआशाव्वाजंपतिर्ज्जयेयम्॥ ३३॥ व्वाजं÷पुरस्तात्॥ व्वाजं÷पुरस्तादु तमंध्यतोनोव्वाजोदेवान्हविषांव्वर्द्धयाति॥ व्वाजोहिमासर्व्वंवीरञ्च कारसर्व्वाऽआशाव्वाजंपतिर्भवेयम्॥ ३४॥ सम्मा॥ सृजामिपयंसा

वाक्यशेषः। उतमध्यतोनःअस्माक मस्तुवाजः। वाजश्च देवान्हविषावर्द्धयतु अस्माकम् वाज- श्चमांसर्ववीरञ्च करोतु। ततः सर्वा आशादिशः वाजपतिः सन् भवेयम् दिग्रूपतांप्रार्थयते॥ ३४॥ सम्मा। विराजौ आग्नेय्यौवासोहं वाजमिति तच्छब्दयोगात् यदोध्याहारः। मंमासृजामि। मामाम् आत्मानं पयसारसेनपृथिव्याः सम्बन्धिना संसृजामि। संसृजामिचसामाम्। आत्मा

नम । अग्नि.ओषधीभिश्च । स,हंसंस्रष्टपय:प्रस्रुतिशरीर: । वाजं सनेयम् संभजेयम् । हेअग्ने त्वत्प्रसादात् । यद्वा अग्निरेवोच्यते । अस्य शादेशस्यमाशब्दस्यत्वाशब्द कृत्वायुक्ततरमेतत्व्याख्या-नम् । योहं हेअग्नेसंसृज मित्त्वापयसाष्टथिव्या: संसृजामिचत्वामद्भिरोषधीभिश्च । होमाभि-प्राय ससर्ग । सोहंवाजं सनेयमिति ॥ ३५ ॥ पय.पृथिव्याम् । विराट् अग्निरुच्यते ।

पृथिव्याऽ सम्मासृजाम्यद्भिरोषधीभि ऽ ॥ सोहंव्वाजंᳪ सनेयम ग्ग्ने ॥ ३५ ॥ पयं÷पृथिव्याम् ॥ पयं÷पृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाऽ ॥ पयंस्वतीऽप्प्रदिशंः सन्तुमह्यम् ॥ ३६ ॥ देव

हविर्वापय: पृथिव्यांधा:निधेहि । पयश्चओषधीषुधा पयोदिविधा: । अन्तरिक्षेपयोधा: आहुतिपरिणामाभिप्रायमेतत् । किंच पयस्वती: पय:संयुक्ता: प्रदिश:दिशोविदिशश्च सन्तुभ-वन्तु मह्यम ॥ ३६ ॥ (१) अभिषिञ्चतियजमानम् । देवस्यत्वेतिव्याख्यातम् सरस्वत्यैवाचोयन्तु

(१) का० सुत्र भाष्य परिश्रितस्थक कृष्णाजिनमास्तीर्य पुच्छादुत्तरए ग्रीवेऽप्य कृत्वाभिषेकसामर्थ्यात् चीरोदके वा वाजपेयिकानोति श्रुतेस्तत्राभिषिच्यते ब्रह्मवर्चसकामयितारन्वारब्धो देवस्य त्वेति ।

र्यंत्रेण यमनेन अग्नेश्चसाम्राज्येन अभिषिञ्चामि ॥ ३७ ॥ (१) राष्ट्रभृतोजुहोति । द्वादशयजूंषि मनोभुवनस्यपत इत्येतस्याःप्राक् ऋताषाडित्यादीनि । अग्निरुच्यते ऋताषाट् । ऋतंसत्यंस-हतीतिऋताषाड् । ऋतंसत्यंधामस्थानं यस्यसतथोक्तः । अग्निर्गन्धर्वः तस्यचाग्नेर्गन्धर्वस्य ओष-

धयो॥ सवितुश्प्रसवे ऽश्विनोर्ब्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ सरं स्वत्यैव्वाचोयन्तुर्य्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥ ३७ ॥ [८] ऋताषाडृतधामा ॥ ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौष धयोप्सरसोमुदोनाम ॥ सनऽइदम्ब्रह्मक्षत्रम्पातुतस्मैस्वाहा व्वाट्ताभ्युःस्वाहा ॥ ३८ ॥ सꣳहितोव्विश्वसामा ॥ सूर्य्योगन्ध

योऽप्सरसः तासांचमुदःनाम । ओषधीभिर्हीदंसर्वंमोदत इतिमुदः । सोग्निर्गन्धर्वः नःअस्माकम् इदंब्रह्म इदंचक्षत्रं पातु । तस्मैस्वाहावाट् । ताभ्यश्चओषधीभ्यःस्वाहा ॥ ३८ ॥ सꣳहितो-

(१) का० द्वादशगृहीतं विग्राहं जुहोतीऋताषाडिति प्रतिस्वाहाकारं राष्ट्रभृतो वाट्कारान्तः पूर्वं पूर्वो मन्त्रः ।

विश्वसामा। यःसूर्यःसंहितः एषह्यहोरात्रे संदधातीतिसंहितःसूर्यः। विश्वसामाएषह्येवसर्व-साम तस्यमरीचयोप्सरसः। मरीचयस्तसरेणवः। आयुवोनाम आयुवद्भवन्तिमरीचयः प्लव-न्तइत्यायुवः मिश्रयन्तइत्यर्थः। तुल्यव्याख्यानमन्यत् ॥ ३९ ॥ सुषुम्णःसूर्यरश्मिः। यःसुषुम्णःसु-

र्वस्तस्यमरीचयोऽप्सरसऽआयुवोनाम ॥ सनऽइदम्ब्रह्मक्षत्रम्पातु तस्मैस्वाहावाट्ताभ्यःस्वाहा ॥ ३९ ॥ सुषुम्णःसूर्यरश्मिः ॥ सुषुम्णःसूर्यरश्मिश्चन्द्रमागन्धर्वस्तस्यनक्षत्राण्यप्सरसोभेकुरयोनाम ॥ सनऽइदम्ब्रह्मक्षत्रम्पातुतस्मैस्वाहावाट्ताभ्यःस्वाहा ॥ ४० ॥ इषिरोविश्वव्यचाः ॥ इषिरोविश्वव्यचावातोग

यस्मिन्यः। सूर्यस्येत्रश्चिचन्द्रमसोरश्मयः। चन्द्रमागन्धर्वः तस्यनक्षत्राणि अप्सरसः। भेकुरयोनाम भाःदिनक्षत्राणि कुर्वन्तीतिभेकुरयो नक्षत्राणि। तुल्यमन्यत् ॥ ४० ॥ इषिरोविश्वव्यचाः। यइषिरः

क्षिप्रः । द्रुतगतीत्यर्थः विश्वव्यचाः सर्वतोगमनः । वातोगन्धर्वः तस्यापोऽप्सरस ऊर्जो- नाम । आपोवाऊर्जः अद्भ्योह्यग्निर्जायते । तुल्यव्याख्यानमन्यत् ॥ ४१ ॥ भुज्यु सुपर्णः । यज्ञोवैभुज्यु यज्ञोहिसर्वाणिभूतानि भुनक्तिपालयति । सुपर्णःशोभनपतनः यज्ञोगन्धर्वस्तस्यद-

न्धर्व्वस्तस्यापोऽअप्प्सुरसुऽऊर्ज्जोनाम ॥ सनंऽइदम्ब्रह्मंक्षुत्रम्पातु तस्मैस्वाहाव्वाट्टताब्भ्युःस्वाहा ॥ ४१ ॥ भुज्युःसुपर्णः ॥ भुज्युः सुपर्णोयुज्ञोगन्धर्व्वस्तस्यदक्षिणाऽअप्प्सुरसंस्तावानाम ॥ सनंऽइदम्ब्रह्मंक्षुत्रम्पातु तस्मैस्वाहाव्वाट्टताब्भ्युःस्वाहा ॥ ४२ ॥ प्रजापतिर्व्विश्वकर्म्मा ॥ मनोगन्धर्व्वस्तस्यऽऋक्सामान्यप्सुरसुऽएष्टयो

क्षिणाप्सरसस्तावानाम दक्षिणावैतावा दक्षिणाभिर्हियज्ञःस्तूयते । यथागोवै कश्चनदक्षिणांददाति स्तूयतएवसः । तुल्यमन्यत् ॥ ४२ ॥ प्रजापतिर्विश्वकर्मा । प्रजापतिर्विश्वकर्मा सहीदंसर्वमकरोत् मनोगन्धर्वस्तस्य ऋक्सामानि अप्सरसःएष्टयोनाम । ऋक्सामानिवा एष्टयः । ऋक्सामैर्ह्याशासते-

इति नः अस्तु इत्यर्थं नः अस्त्विति । तुल्यमन्यत् ॥४३॥ (१) रथशिरसि जुहोति । सनो भुवनस्य प्राजापत्या-प्रस्तारपंक्तिः । हे भुवनस्य पते प्रजापते यस्य ते तव उपरि अमुष्मिन्लोके गृहा यस्य वा इह अस्मिन्लोके ।

नाम ॥ सनेऽइदम्ब्रह्मंक्षत्रम्पातुतस्मैस्वाहाब्भ्यःस्वाहा ॥ ४३ ॥ सनः ॥ सनोभुवनस्यपतेप्रजापतेयस्यतऽउपरिगृहायस्यंवेह ॥ अस्मैब्रह्मणेस्मैक्षत्रायमहिशर्मयच्छस्वाहा ॥४४॥ समुद्रोसि ॥ समुद्रोसिनभस्वानार्द्रदानुःशम्भूर्मयोभूरभिमाव्वाहि

सत्वं नः अस्माकम् व्यवहितोऽर्थसंबन्धः । अस्मै ब्रह्मणे अस्मै क्षत्राय महिमहत् शर्म शरणम् यच्छ देहि स्वाहा ॥४४॥ (२) वातहोमाञ्जुहोति । समुद्रोसीति त्रीणि यजूंषि त्रिलोकस्थानं वायुं लोकद्वारेण स्तुवन्ति ।

(१) का॰ पश्वग्रहोर्तं च रथशिरस्युध्याहवनीये ध्रियमाणे पञ्च क्लृप्ताः स नो भुवनस्येति राष्ट्रभृद्धोमानन्तरं पूर्वसंस्कृतादेवाज्यात्पञ्च गृहीत्वाहवनीयोपरि प्रतिप्रस्थात्रादिना धार्यमाणे रथशिरसि तदाज्यं पञ्चधाविभज्य पञ्च कृत्वो जुहोति पञ्चवारं मन्त्र इति सूत्रार्थः ।

(२) का॰ वातहोमान् जुहोताञ्जलिना हुतर बहिर्वेदेरधो दक्षिणतो धुर्युत्तरत उत्तरस्यां दक्षिणतो दक्षिणाप्रष्टे: समुद्रोऽसीति

नितरांभान्तितैः यस्त्वंहेमायोघसद्रोसि समुन्दनोसि । नभस्वांश्च नभसद्दृतिनचत्राण्युच्यन्ते तन्निहि
संयुक्तोनभस्वान् । आर्द्रं दानुश्च एषआर्द्रं ददातिदृष्ट्यवश्यायादि । तत्वांप्रार्थये शंभूःमयोभूश्चशंभाव-
यतोशंभूः मय.सुखंभावयतिमयोभूः । अभिमांवाहि अभिमावाहिस्वाहा । मारुतोसि यत्त्वंमारु-
तोसि मरुतांपुरोवातप्रभृतीनांवातानां प्रकृतिभूतोसि । मरुतांगणःवातिः प्रभृतीनांगणोसि तंत्वां

स्वाहा ॥ मारुतोसिमरुतांङ्गणःशम्भूर्म्मयोभूरभिमांवाहिस्वाहा ॥
वस्यूरसिदुवस्वाञ्छम्भूर्म्मयोभूरभिमांवाहिस्वाहा ॥४५॥ यास्ते ॥

ब्रवीमिशंभूश्च मयोभूश्च भूत्वाअभिमांवाहिस्वाहा । अवस्यूरसि । यस्त्वमवस्यूरसि । अवनन्त-
र्पणंरक्षणंवा तत्सौम्यतीत्यवस्यूः । पिबुतन्तुसंताने इत्यस्य । च्छोः शूडनुनासिकेचेतिक्विपि ऊते-
संप्रसारणेचअवस्यूः । दुवस्वांश्च दुवश्चरुविलंचणमन्नसचाते कविलं चयो नान्ने नयुक्तश्च आर्द्र-

प्रतिमन्त्रम् । रथहोमानन्तरं तं रथमग्ने वसरत वेदौ प्रत्युखमवस्थाप्य तस्य स्थानत्रये त्रीन् वायुहोमान् जुहोति प्रतिमन्त्रं मन्त्रत्रयेण । रथयुगदक्षिणधुरोऽधो प्रथमम् उत्तरधुरोऽधो द्वितीयम् युगमध्याधस्तृतीयम् । किं कृत्वा अञ्जिर्वेदेरञ्जलिना वा तमानीयेति सूत्रार्थः ।

दानुश्च। तंत्वायाचे। शंभ्रमंशोभूरित्यादि ॥ ४५ ॥ रुक्मतीर्जुहोति। यास्ते। इ व्याख्याते ॥ ४६ ॥ (१) ४७ ॥ रुचन्नः। अनुष्टुवाग्नेयी। रुचिर्दीप्तिम् नः अस्माकं देवाः ब्राह्मणाः तेषु-

ऽअग्ग्नेसूर्य्ये रुचोदिवंमातन्न्वन्तिरश्मिभिः ॥ ताभिर्न्नोऽअद्यसर्व्वाभीरुचेजनायनस्कृधि ॥ ४६ ॥ यावः ॥ योदेवाःसूर्य्येरुचोगोष्ष्वश्वेषुयारुचः ॥ इन्द्राग्ग्नीताभिःसर्व्वाभीरुचन्नोधत्तबृहस्प्पते॥४७॥ रुचन्नः ॥ रुचन्नोधेहिब्राह्मणेषुरुचᳬराजसुनस्कृधि ॥ रुचंवि

धेहि। रुचं चराजसु नः संबन्धेषुक्षत्रियेषु अधिकुरु। रुचं विश्येषु वैश्येषु शूद्रेषु च नः संबन्धिषु अधिकुरु। मयि च धेहि रुचा दीप्त्या असहदीप्तिम्। अनुत्सन्नधर्माणो यथा वयं दीप्ता भवेम तथा कुर्वित्याशयः। यद्वा। ब्रह्मप्रभृतिषु यारुक् तामस्माकं धेहि सर्वथा किंबहुना तेन मय्येव धेहि-

(१) का० नव जुहोति यास्त इति प्रतिमन्त्रम्। प्रसरायः। पूर्वसंस्कृताज्यात्सकृत्सकृदादाय नवाहुतीर्जुहोति यास्ते अग्ने या वो देवाः रुचं नः तत् त्वा यामि एतावतस्य स्वर्षेति कण्डिकायां पञ्चयजुर्भिः पञ्चेति नव।

शु० य० मं० ४१४ उ० भा०



सचासन्नतंसचम् ॥ ४८ ॥ वारुण्या त्रिष्टुभा जुहोति । तत्वा । तदाशास्तद्दवि तद्‌यवणादिह यद्‌प्रयोगः । यत्प्रयोजनं त्वांयामि याचामि ब्रह्मणावयोलक्षणेन वन्दमानःस्तुवन् । तदोयं यजमानआशीस्ते हविर्भिरभ्युद्यतैः । अतःअहेडमनः अक्रुध्यन् हेवरुण इहकर्मणिवर्तमान । अस्माकंप्रयोजनं यज्ञसमाप्तिलक्षणम् बोधिबुध्यस्व । बुद्ध्वाच हेउरुशंसहेबहुसंस्तव्यमान ।

श्रेषुशूद्रेषुमयिंधेहिरुचारुचंम् ॥ ४८ ॥ तत्वां ॥ यामिब्रह्मणा
व्वन्दंमानस्तदाशांस्तेयजंमानोहुविर्भिंः ॥ अहेडमानोव्वरुणेहवो
ध्युरुंशृंसमानऽआयुःप्रमोंषीः ॥ ४९ ॥ स्वर्ण ॥ स्वर्णघुर्म्मःस्वाहा
स्वर्णार्कःस्वाहास्वर्णशुक्रःस्वाहास्वर्णज्ज्योतिःस्वाहास्वर्णसूर्य्यःस्वा

आयुःमाप्रमोषीः मास्माकमायुःखण्डय ॥ ४९ ॥ मथाकोश्वमेधयोः सन्ततीर्जुहोति । पञ्च-भिर्यजुर्भिः । स्वर्णयेजुः मूर्धाहृदैवचनः स्वःशब्दः । स्वरिवायामर्म आदित्यस्तग्नौ जुहो-मिस्थापयामि स्वर्हा कारणस्वरिवयोर्मस्तमादित्ये स्थापयामि । स्वर्णस्वरिवयः शुक्रस्तमादित्य

एवञ्जुहोमि । स्वरिवज्योतिरग्निस्तमग्नावेवजुहोमि । स्वर्णं । स्वरिवयःसूर्यस्तमुतमंकरोमि ॥५०॥ (१)अग्निंयुनज्मि तिसृभिराग्नेयीभिः द्वाभ्यांत्रिष्टुब्भ्यां तृतीययापंक्त्या । यमग्निंयुनज्मि शवसाव-लेन घृतेनच । दिव्यंदिविभवम् सुपर्णंसुपतनम् वयसाबृहन्तम् वयसाधूमेन बृहन्तमहान्तम् । धूमेनहिमहानग्निर्भवति अग्नेर्वैधूमोजायते धूमादभ्रमभ्राद्वृष्टिरितिश्रुतिः । तेनाग्निना युक्ता-

हो ॥ ५० ॥ [ १३ ] अग्निंयुनज्मि ॥ अग्निंयुनज्मिशवसाघृतेनंदिव्यꣳसुपर्णंवयसाबृहन्तम् ॥ तेनंवयङ्गमेमब्रध्नस्यंविष्टपꣳस्वोरुहाणाऽअधिनाकंमुत्तमम् ॥ ५१ ॥ शतम् १००० ॥ इमौतें ॥ प

नवयङ्गमेमगच्छेम । ब्रध्नस्यादित्यस्यविष्टपं विगतसन्तापम् सर्वद्वन्द्वोपलक्षणस्तापः । ततोध्य-धिस्वर्गलोकंरुहाणाः । आरोहन्तः नाकमुत्तमंच गमेमेत्यनुवर्तते । यत्रगता नञकमसुखंप्रा-प्नुवन्ति सनाकोलोकः ॥ ५१ ॥ इमौते । याविमौतेतवपक्षौ अजरौजरारहितौ । पतत्रि-

(१) का० अग्नियोजन प्रातरनुवाकमुपाकरिष्यन परिधीनालभ्य यथापूर्वमग्निं युनज्मीति प्रत्यृचम् अस्यार्थं । प्रातर नुवाकोपाकरणात्प्राक् यथापूर्वमित्युपधानक्रमेण स्तकत्रयेण प्रत्येकं परिधीन् स्पृष्ट्वाग्नियोजनं करोतीति ।

यानुत्पतनयोलौ । ताभ्यां चरक्षांसिअपहंमि हेअग्ने । ताभ्यांपक्षाभ्यांपतेम उत्पतेम । सु-कृतांसोकेसुकृतिनामेवस्थानम् यत्रान्येपि ऋषय:जग्मु: गता:प्रथमजा: पुराणा: ॥ ५२ ॥ इन्दु-दक्ष:यस्त्वमिन्दु: । इदिपरमैश्वर्यें । परमेश्वर: इन्दनोवा । दक्ष:उत्साहवान् श्येन:शंसनीयगति:

यावुजरौपतत्रिणौयाभ्याᳪंरक्षाᳪंस्यपहᳪंस्यग्ने ॥ ताभ्याम्पतेम सुकृतामुलोकंयत्रऽऋषयोजग्मुःप्रथमजाःपुराणाः ॥ ५२ ॥ इन्दु र्दक्षः ॥ श्येनऽऋतावाहिरण्यपक्षःशकुनोभुरण्युः ॥ महान्त्सध स्थेध्रुवऽआनिषत्तोनमस्तेऽअस्तुमामाहिᳪंसीः ॥ ५३ ॥ दिवोमूर्द्धा ॥

ऋतावायज्ञवान् । उदकवान्वाहिरण्यपक्ष: शकुन: । भाकृत्या भुरण्यु:भर्ता महान्प्रभावत: । सधस्थेयज्ञगृहे अविभक्तस्थाने । ध्रुवआनिषत्त: स्थिरआनिषण्ण: । तस्मैनम: तेतुभ्यमस्तु-मांमाहिंसौ: ॥ ५३ ॥ (१) अश्वनामादियुक्तान् विमुञ्चतिद्वाभ्यामाग्नेयीभ्यां पुरोष्णिग्जगती-

(१) का॰ आग्निमारुतस्तोत्रस्य पुरस्ताद्विमोचन परिधिसन्ध्योर्दिवो मूर्धेति प्रत्यृचम् । यज्ञायज्ञियस्तोत्रप्रकरणात् प्राक् दिवो मूर्धेति ऋग्द्वयेन दक्षिणोत्तरयो: परिधिसन्ध्योरुपस्थाग्निविमोचन करोतीति सूत्रार्थ: ।

ध्यान। ६ दिवोमूर्द्धासि । द्युलोकोत्तमाङ्गमसि । पृथिव्याः नाभिर्नहनम् ऊर्क् रसः सारः अपामोषधीनांच । विश्वायुः सर्वप्राणिना मायुर्जीवनम् सप्रथाः सर्वतः पृथुः तिर्यगूर्द्ध मधश्चानवच्छिन्नविभवः । तस्मैतेनमः । पथेः अग्निप्रमुखोहि देवयानः पन्थाः ॥ ५४ ॥ विश्वस्यमूर्द्धन् यस्त्वंविश्वस्य सर्वप्राणिजातस्य मूर्द्धन् मूर्द्धि अधिउपरितिष्ठसि । श्रितः

सिपृथिव्यानाभिरूर्गपामोषधीनाम् ॥ विश्वायुःशर्म्मसप्रथानमस्पथे ॥ ५४ ॥ विश्वस्यमूर्द्धन्नधितिष्ठसिश्रितःसमुद्रेतेहृदयमप्स्वायुरपोदत्तोदधिम्भिन्त ॥ दिवस्पर्ज्जन्यादन्तरिक्षात्पृथिव्यास्ततोनोवृष्ट्याव ॥ ५५ ॥ इषेत्वोर्ज्जे ॥ इष्टोयज्ञोभृगुभिराशीर्द्दाव

अश्रितः वृद्धीन्द्रियाणिसुपुम्नांवानाडीम् । यस्यचसमुद्रे समुन्दने अन्तरिक्षेतेतव हृदयम् अप्सुच आयुर्जीवनम् । तंत्वांयाचे । अपोदत्तअपोदेहीतिवचनव्यत्ययः । एकोग्निरिहदेवताक यमितिचेत् । उदधिंभिन्त । उदकं यत्तद्दत्युदधि । उदकस्यउदादेशः । मेघउच्यते अलापिभिधी

तिमास्मेभिन्दते विंद्रणार्थस्य वङ्कवचनञ्छान्दसम् । एवंदिवोस्पर्जन्यात् अन्तरिक्षात्पृथिव्याः अन्यत्रापियतोयतो दृष्टिरुपलभ्यते ततस्तत उपादायनोस्मान् दृष्ट्वा अवपाजयहेअग्ने ॥ ५५ ॥ (१) दृष्टोयज्ञः । द्वेसमिष्टयजुषी यज्ञाग्निदेवत्ये उष्णिग्गायत्र्यौ । अध्वर्युर्यजमानविषयामाशिषंकरोति यस्यास्यसुवर्णदानस्ययजमानस्य दृष्टःसम्पादितयज्ञः । भृगुभिःभृगुगोत्रैर्ब्राह्मणैः आशीर्दाआशिषांच-

सुभिः ॥ तस्यंनऽइष्टस्यंप्रीतस्यद्रविणेहागंमेः ॥ ५६ ॥ इष्टोऽअ्

दाता । वसुप्रभृतिभिर्देवताविशेषैःकृतः । तस्यास्ययजमानस्य नःइष्टस्य अस्माकमभिप्रेतस्य । प्रीतस्यचअस्मान्प्रति । प्रीतःस्निग्धउच्यते याज्ययाजकयोः स्नेहख्यापनपरंवाक्यमिदमुक्त्वा अथेदानीं द्रविणमाह । त्वमपिहेद्रविण इहयजमाने आगमेःआगमनंकुर्याः । स्थानमिदंधनानामित्यभि-प्रायः । यद्वा । इष्टोयज्ञोभृगुभिः आर्षेयैर्ब्राह्मणैः । आशीर्दावसुभिश्च विभक्तिव्यत्ययप्रायः परोक्षंचः । सोस्माकमिष्टः प्रीतश्चद्रविणमिहआगमयत्विति ॥ ५६ ॥ इष्टोअग्निः । इष्टःकृतयागःअग्निः आहु-

(१) का० षध्वरसमिष्टयजुरन्त इष्टो यज्ञ इति प्रतृचमपरे । समिन्द्र ण इत्यादिनवानामध्वरसमिष्टयजुषां होमान्ते इष्टो अग्निरिति द्वाभ्या मपरे आग्निके द्वे समिष्टयजुषी जुहोतीति सूत्रार्थः ।

तःअभिहुतः । पिपर्तुपूरयतु नःअस्मान् । इष्टंहविः कृतयागस्यहविः अस्मान्पूरयतु । स्वगेदं-देवेभ्योनमः।स्वयंगामिच । इदंसमिष्टयजुर्लक्षणं देवेभ्योनमः हविर्भवतु॥५७॥(१)यदाकूतात्। अष्टौवै-श्वकर्मणानिजुहोति । विश्वकर्माग्निर्देवता तृतीयादैवीवा । आद्याजगती तिस्रस्त्रिष्टुभ स्वत

ग्निः॥ इष्टोऽअग्निराहुतः पिपर्त्तुनऽइष्टᳪहविः॥ स्वगेदन्देवेभ्यो नमः॥ ५७॥ [७] यदाकूतात्॥ यदाकूतात्समसुस्रोद्धृदोवामनं सोवासम्भृतञ्चक्षुषोवा॥ तदनुप्प्रेतसुकृतामुलोकंयत्रऽऋषयोजु

स्रोनुष्टुभः । यदाकूतात् । यत्कर्मआकूतात् आकूतोनाम प्राङ्मनसः प्रवृत्तेरात्मनोधर्मो मनः प्रवृत्तिहेतुः । समसुस्रोत् समस्रवत् । हृदोवा बुद्धेर्मनसोवा मनसश्च । समसुस्रोदित्यनुवर्तते संभृतंचक्षुषोवा संभारैःसंभृतंसत् यच्चक्षुरादिभ्य इन्द्रियेभ्यःसमसुस्रो व्यजायते । तदनुप्रेत ।

(१) का० हृदयशूलान्ते स्रुवाहुतीर्जुहोति यदाकूतादिति प्रत्यृचमष्टौ । साग्निचित्ये मैत्रावरुण्यनुबन्ध्यावश्यमेका भवति तेन तस्या हृदयशूलसम्बन्धिसमिधानान्ते कृते यदाकूतादिति प्रत्यृचमष्टौ स्रुवाहुतीर्जुहोतीति सूत्रार्थः ।

तत्प्रजापतिनाकृतं कर्मंअनुगच्छत । सुकृता मुलोकम् सुकृतामेवलोकंस्थानम् यत्रऋषयोजग्मुः यत्रान्येपि ऋषयोगताः प्रथमजाःपुराणाः ॥ ५८ ॥ एतठं० सधस्थ एतंयजमानंसधस्थं समानस्थानं । देवानांस्वर्गंपरितेददामि परिददामितव । दानंचरक्षणार्थम् । यंचआवहात्आनयेत् शेवधिंसुखनिधिमाहुतिपरिणामभूतम् । शेवइति सुखनाम । जातवेदाअग्निः तस्वपरिददामि ।

ग्मुऽप्प्रथमजाऽपुराणाऽ ॥ ५८ ॥ एतꣳसंधस्थपरिंतेददामियमावहा च्छेवधिञ्जातवेंदाऽ ॥ अन्वागन्तायज्ञपंतिर्वोऽअत्रतꣳस्मंजानी तपरमेव्व्योंमन् ॥ ५९ ॥ एतञ्जांनाथ ॥ परमेव्व्योमन्देवाःसधस्था व्विदरूपमंस्य ॥ यदागच्छांत्पथिभिर्देवयानैरिष्टापूर्ते कृणवाथाविरं

एवंच स्वर्गाख्यं स्थानमुक्त्वा अथेदानींस्थानिनोदेवानाह । अन्वागन्ता कर्मसमाप्त्यनुपदमेवआगन्ता । यज्ञपतिः वः युष्माकमत्रस्थितानाम् तंसंजानीत । परमेव्योम्नि स्थानेअवस्थितंसन्तम् ॥ ५९ ॥ एतंजानाथ । देवदेवत्या एतंयजमानं जानीथ । परमेव्योमन् परमेस्थानेवस्थितं

सत्नम् । हेदेवाः सधस्थाःसमानस्थानाः । किञ्च । विदरूपमस्य जानीतरूपमस्य यजमानस्य । प्रत्यभिज्ञानाय ततोविदितरूपः । यदागच्छेत् आगच्छत्पथिभिः देवयानैः । पूजार्थंबहुवचन मुपभोगस्थानभेदाद्वा । अथइष्टापूर्ते कृणवाथकुरुथ आविःप्रकाशफलेअस्मै ॥ ५० ॥ उद्बुध्यस्वाग्ने

स्म्मै ॥ ६० ॥ उद्बुध्यस्वाग्नेप्रतिंजागृहित्त्वमिंष्टापूर्तेसᳪसृंजेथामयञ्चं ॥ अस्मिन्त्सधस्थेऽअध्युत्तंरस्मिन्विश्वेदेवायजंमानश्चसीदत ॥ ६१ ॥ येनुव्वहंसि ॥ सुहस्रंयेनाग्नेसर्व्ववेदसम् ॥ तेनेमंय्युज्ञन्नोंनयस्वर्देवेषुगन्तंवे ॥ ६२ ॥ प्रस्तरेणंपरिधिना ॥ स्रुचावेद्यांचबर्हिषां ॥ ऋचेमंय्युज्ञन्नोंनयस्वर्देवेषुगन्तंवे ॥ ६३ ॥ यद्दुत्तम् ॥ य

येनव्वहसीतिव्याख्यातौ ॥ ६१ । ६२ ॥ प्रस्तरेणपरिधिना । स्रुचाच वेद्याचबर्हिषाच ऋचाच ऋगादिभिर्मन्त्रैश्च । इमंयज्ञं नःअस्माकं संबन्धिनंनय । हेअग्नेस्वर्गंलोकम्देवेषुगन्तवे । देवान्प्रतिगमनाययज्ञेहि गतेयजमानोगतएव । सहितस्य शरीरमित्यभिप्रायः ॥ ६४ ॥ यदत्तम् ।

भार्याजामातृपुत्रप्रभृतिभ्यः । यच्चपरादानम् दीनान्धकृपणेभ्योदयया । यच्चपूर्तम् स्मृतिविहि-
तंब्राह्मणभोजनादि । याश्चदक्षिणाः यज्ञान्तर्गताः तत्सर्वम् अग्निः वैश्वकर्मणः विश्वकर्मैववै-
श्वकर्मणः स्वार्थेतद्धितः । स्वर्गेलोके देवेषुमध्ये नःअस्मदर्थमस्माकंवा । दधत्दधात फलोप-
भोगार्थम् ॥ ६४ ॥ यत्रधाराः । यत्रयस्मिन्देशे धाराःअनपेता अनुपक्षीणाः उपभुज्यमानाअपि

इष्टंयत्परादानंयत्पूर्त्तंयाश्चदक्षिणाः ॥ तदग्निर्वैश्वकर्मणः
स्वर्देवेषुनोदधत् ॥ ६४ ॥ यत्रधाराः ॥ यत्रधाराऽअनपेतामधो
र्घृतस्यचयाः ॥ तदग्निर्वैश्वकर्म्मणःस्वर्देवेषुनोदधत् ॥ ६५ ॥
अग्निरस्मि ॥ अग्निरस्मिजन्मनाजातवेदाघृतम्मेचक्षुरमृतम्मऽ

यंनयन्ति मधोः मधुनःघृतस्यच । याश्चान्याःसोमादीनाम् । तत्तत्रअग्निः वैश्वकर्मणः स्वःस्वर्गेलो-
केदेवेषु मध्ये नअस्मान्दधातु ॥ ६५ ॥ अविनियुक्तत्वा दग्निप्रकरणाच्च यजमानदर्शनमेतत् । अग्नि-
रस्मि त्रिष्टुवाग्नेयी अग्निरहमस्मि जन्मनाउत्पत्त्यैव जातवेदाः । अथहवैरेतः सिक्तंप्राणोन्ववरोहति ।

तद्विन्दते तद्यज्ञातंजातं विन्दतेतस्माज्जातवेदाः इत्येतदभिप्रायम् यतश्चाहमग्निरस्मि अतो-घृतं मेममचक्षुः । घृतहोमिनमहंपश्यामी त्येतदभिप्रायम् । अमृतंचममआसन् आस्येमुखे । योहिममुखे हविर्जुहोति तमहममृतं करोमीति । किञ्च अर्कः अर्चनीयः यज्ञः अस्मि नाम्नात्रि-धातुः ऋग्यजुःसामभिः । रजसोविमानः उदकस्यनिर्माता किञ्च अजस्रः अनुपक्षीणः । घर्मः दीप्तः

आसन् ॥ अर्कस्त्रिधातूरजसोविमानोजस्रोघर्मोहविरस्मिना मं ॥ ६६ ॥ ऋचोनाम ॥ ऋचोनामास्मियजूंषिनामास्मिसामानिनामास्मि ॥ येऽअग्नयःपाञ्चजन्न्याऽअस्याम्पृथिव्यामधि ॥ त

उदकरक्षणोवाआदित्यः । अहमस्मिनाम्ना किञ्चहविरप्यह मस्मिनाम्ना । नामशब्दस्यकृतविभक्ति-व्यत्ययस्य अस्मिशब्दस्यच सर्वत्रसंबन्धः एवमग्न्यद्वैतंमन्त्रार्थः ॥६६॥ ऋचोनामास्मि । अनेनात्मनिवे-दत्रयात्मकत्वंसम्पादयति । ऋग्वेदनामास्मि यजुर्वेदनामास्मि सामवेदनामास्मि । चित्यमग्निमुप-तिष्ठते येअग्नयः । आग्नेय्यनुष्टुप् । येअग्नयःपाञ्चजन्याः पञ्चचितिकाइतिश्रुतिः । अस्यांपृथिव्याम्

अधिउपरिस्थाः। तेषामग्नीनामुद्गततमोसि यतःअतः प्रार्थ्यसेस्माभिस्त्वम्। प्रनोजीवातवेसुव। प्रसुव अस्माकंजीवतेचिरञ्जीवनाय ॥६७॥ चित्यमग्निमुपतिष्ठते। (१) वार्त्रहत्याय इन्द्रएतमृचमपश्यदिति-श्रुतिः। प्रथमेगायत्रीत्रिष्टुभौ। इन्द्रोग्निर्वादेवतावार्त्रहत्याय वृत्रोयेनशवसावलेनहन्यते तत्वार्त्रहत्यं

पांमसिृत्वसुत्तमः प्रनोंजीवातवेसुव ॥ ६७ ॥ [ १० ] व्वार्त्रहत्याय शवसेपृतनाषाह्यायच ॥ इन्द्रत्वावर्त्तयामसि ॥ ६८ ॥ सुहदानुम्पुरुहूत ॥ क्षियन्तमहुस्तमिन्द्रसम्पिणक्कुणारुम् ॥ अभिवृत्रंव्वर्द्धमानु

शवस्तस्मै वार्त्रहत्यायशवसे। पृतनाषाह्यायच पृतनाःसंग्रामाः येनशवसा अभिभूयन्तेतत्पृतना सहं-वलं तस्मैपृतनासहाय। सहतिरभिभवार्थः। इन्द्रत्वाम् आवर्तयामसि आवर्तयामः ॥६८॥ सहदा-नुम्। सहेतिवलनाम। वलस्यदातारम् युधाम्वानेन सहत्वंसंपूर्णंवलः अयंचतुष्कवलद्रत्यैवं यःशत्रु-

(१) का० चितिम् पुरोपवतोसुपतिष्ठते वार्त्रहत्यायेति सप्तभिरष्टभिरेकै दशभिर्वा। सप्तपूरणामेता चितिमुपतिष्ठनन्तर सप्तभिरष्टभिरेकैषा सती दशभि र्वेति सूत्रार्थः।

मुपस्ताभयते ससहदानुः तंसहदानुम् । यद्वासहएकीभूययोदुर्मन्त्वान्ददाति ससहदानुः तंसहदानुं गवुम् । द्वेपुरुहूतवहुभिराहुत । चियन्तंनिवसन्तम् इहैवग्रहस्तंकृत्वा युद्धेननि र्जित्यसंपिणक् संपिण्डीकुरु । तंकुणारुम् क्वणन्तम् दुर्वचोभिधायिनम् । एवंताव देनंकुरु । अथपुनर्योयमपरोहन्तम् अभिभूय हन्त्वं वर्द्धमानम् । पियारुम् पियतिहिंसाकर्मा । देवानांहिंसितारम् ॥ अपादंकृत्वा

म्पियारुमपादमिन्द्रतवसाजघन्थ ॥ ६९ ॥ विनः ॥ विनइन्द्रमृधो जहिनीचायच्छपृतन्यतः ॥ योअस्माँ२ ॥ अभिदासत्यधरङ्गमयातमः ॥ ७० ॥ मृगोन ॥ भीमःकुचरोगिरिष्ठाःपरावतआजगन्थापरस्याः ॥ सृकंसंशायपविमिन्द्रतिग्मंविशत्रून्ताढि विमृधो

गमनासमर्थं कृत्वा तवसाबालेनजघन्थ । जहि ॥ ६९ ॥ विनइन्द्र । मृगोनभीमइतिवैमृधो द्वे नुग्रष्टुप्त्रिष्टुभौ पूर्वाव्याख्याता ॥ ७० ॥ मृगोनमृगइव । मृगोव्याघ्रोवासिंहोवा । भीमोभीषणः कुचरःकुत्सितचारी हिंसःप्राणिवधजीवनः । गिरिष्ठाःपर्वताश्रयः सयथाकांश्चिद्दैत्यप्राणिविशेषा

न्घ्नन्ति तैरनभिभूयमानः एवंत्वंपरावतः दूरप्रदेशादाह्वयमानान् आजगन्थआगच्छ । आगत्यच शृणु । यत्प्रार्थ्यसेस्माभिः । सृकंशरणंवज्रं शंशाय । शीतनूकरणे तीक्ष्णीकृत्य । पविम्शत्रुकायेपुगन्तारम् इन्द्र । तिग्मम् तेजनम् उत्साहवन्तम् । ततोविशत्रून्ताढि वितादि । ताडयतेर्हिंसाकर्मणएतद्रूपम् । विमृधोनुदस्व प्रेरयस्व मृधःसंग्रामात्पुनरागमनाय ॥ ७१ ॥ वैश्वानरोनः । वैश्वानरदेवत्ये

नुदस्व ॥ ७१ ॥ वैश्वानरोनः ॥ वैश्वानरोनऽऊतयऽआप्रयातुपरावतः ॥ अग्निर्नःसुष्टुतीरुप ॥७२॥ पृष्ठोदिवि ॥ पृष्ठोऽअग्निःपृथिव्यांपृष्ठोविश्वाऽओषधीराविवेश ॥ वैश्वानरःसहसापृष्ठो

गायत्रीत्रिष्टुभौ । वैश्वानरोग्निः नःअस्माकम् । ऊतयेअवनायतर्पणाय आप्रयातुआगच्छतु परावतः । किञ्च । सुष्टुतीरुप । अस्माकंचशोभनाः स्तुतीः उपश्रोतुम् आप्रयातु ॥ ७२ ॥ पृष्ठोदिवि । योग्निर्वैश्वानरः पृष्टः कोयमिति । दिविआदित्यात्मना व्यवस्थितेसुमुक्षुभिः । तत्तद्रूपंश्रूयते । यमेतमादित्ये पुरुषंवेदयन्ते । सइन्द्रः सप्रजापतिः सब्रह्मेति । यश्चवैश्वा-

नरोग्नि र्विद्युदात्मना प्राप्टपिरिथतः। पृथिव्याम् अन्तरिक्षेलोके पृथिवीत्यन्तरिक्षनामसु पठितम्। उदकार्थिभिः कोयंनामद्विपदचतुष्पद जीवनहेतुः। यश्चाग्निर्वैश्वानरोस्मिन् लोकेव्यवस्थितः पृष्टोग्निश्चोटभिर्होटपर्यन्तैः कोयंतापपाकप्रकाशैरुपकृत्य विश्वाओषधीभिराविवेश आविष्टः। यश्चवैश्वानरोग्निः सहसाबलेनमथ्यमनोध्वर्युणा कोयं निर्मनन्यइतिपृष्टोदिदृक्षुभिः।

ऽअग्नि॑सनोदिवासरि॒षस्पातुनक्तम्॥ ७३॥ अश्यामतम्॥ अश्यामतङ्कामंसग्नेतवोतीऽअश्यामंरयिᳪंरयिवᳪंसुवीरम्॥ अश्यामवाजमभिवाजयंन्तोश्यामंद्युम्नमजराजरन्ते॥ ७४॥ वयन्ते॥ ऽअ

सन सोस्मान्दिवाअहनिपातुरक्षतु। सचनक्तंरात्रौपातु रिषः विनाशात्। रिषतिर्हिंसाकर्मा। दिवानक्तमितिमन्तत्व्यर्थंवचनम॥ ७३॥ अश्यामतम् द्वेआग्नेय्यौ त्रिष्टुभौकामवत्यौ। अश्याम प्राप्नुवाम तंनामयत्कामाएतत्कुर्मः। हेअग्ने तवऊती उत्या अवनेनतर्पणेनच। अश्याचरयिं धनम् हेरयिन् धनवत् सुवीरं कल्याणपुत्रम्। अश्याच वाजमन्नम् अभिवाजयन्तः। वाजतिरर्चति-

कर्मा। अभिपूजयन्तोग्निम् अन्यानपिपूजयितव्यान्। अस्यामद्युम्नं यशः हेअजरजरारहि-
ताग्ने। अजरं द्युम्नविशेषणमेतत् अनुचितिधर्मम् तेतवप्रसादात् ॥ ७४ ॥ वयन्ते। हिशब्दो
यस्मादर्थे। हिसाहयंतेतुभ्यम् अद्यररिम। रादाने। दद्मिकामंपुरस्कृत्य हविः काममा-
त्यंशाहविः कामशब्देनोच्यते। उत्तानहस्ताः त्यक्तकृपणभावाः। अबद्धमुष्टिकाः असंहताङ्ग-

द्यरंरिमाहिकामंमुत्तानहंस्तानमंसोपसद्यं ॥ यजिंष्ठेनमनंसायक्षि
देवानस्रेधतामन्मंनाविप्रोऽअग्ने ॥ ७५ ॥ धामच्छदग्निः ॥ धा
मुच्छदग्निरिन्द्रोब्रह्मादेवोबृहस्पतिः ॥ सचेतसोविश्वेदेवाय

ल्यइतियावत् नमसानमस्कारेण प्रणिपातेन। उपनिपद्य उपसंगम्य निषदनं कृत्वा।
अतः यजिष्ठेनयष्टतमेन मनसायक्षिदज देवान्। अस्रेधता अनन्यगतेनदेवताया याथात्म्य-
चिन्तनसंतानैकरसेन। मन्मना: मननेन विप्रः सन् मेधावीसन। हेअग्ने ॥ ७५ ॥ धाम-
च्छत्। वैश्वदेव्यनुष्टुप्। धामच्छत्। धामशब्दः स्थानवचनः स्थानानिन्यूनानिपूरयति अतिरि-

क्तानि समीकरोति यःसधामकृत् एवंधामच्छब्दः देवशब्दस्य सर्वत्रसंबध्यते । योग्निर्देवोधामकृत् यश्चेन्द्रः । यश्चब्रह्मा यश्चबृहस्पतिः । एतेमवें सचेतसः समानचेतसः चेतश्शब्दो प्रकारवचनः यज्ञंप्रावन्तु अन्यूनातिरिक्तंकुर्वन्तु । नःअस्माकम् शुभेस्थिष्टेच ॥ ७६ ॥ त्वंयविष्ट ।

ऊर्ज्जम्प्रावन्तुनःशुभे ॥ ७६ ॥ त्वंयविष्ठ ॥ दाशुषोनॄःपाहिशृणुधी गिरः ॥ रक्षातोकमुतत्मना ॥ ७७ ॥ [ १० ]

## इतिसंहितापाठेअष्टादशोऽध्यायः १८ ॥

इतिव्याख्यातम् ॥ ७७ ॥ नह्येषुप्रत्यक्षमस्ति अन्टषेरतपसोवेत्युपक्रम्य भूयोविद्यःप्रशस्ये भवतीति चाविधायाह तस्मादृदेवकिञ्चानूचानोभवत्यार्षं तद्भवतीति अतोयमार्षेयोग्रन्थ इति विद्वद्भिरादरणीयः ॥ ७८ ॥

इति उव्वटकृतौ मन्त्रभाष्ये ऽष्टादशोध्यायः ॥ १८ ॥

(१) अथसौत्रामणीं त्रिभिरध्यायैः प्रक्रियते अग्न्यङ्गत्वात् सौत्रामण्या अनन्तरमुपक्रमः। तत्र- प्रजापति यंज्ञमसृजतेत्युपक्रम्य सएतंयज्ञक्रतुमपश्य त्सौत्रामणी मितिसौत्रामण्याः प्रजापति-

॥ शिवंःॐ॥ * स्वाद्वीन्त्वां ॥ स्वादुनांतीव्रान्तीव्रेणामृतांममृतेंन मधुंमतीम्मधुंमतासृजामिसᳬसोमेंन ॥ सोमोंस्यश्विभ्यांम्पच्यस्व

ऋषिः। अथापरम् इन्द्रभैषज्यार्थंमश्विनौ सरस्वतीच सौत्रामणीदृष्टः। सुरामंधीयते। स्वाद्वीन्त्वा। सुरादेवत्यानुष्टुप्। (२) स्वाद्वीन्त्वा। स्वादुशब्दोमिष्टवचनः। स्वादुरसां त्वाम्।

(१) प्रथं सौत्रामणीमन्त्रास्त्रिभिरध्याये. ऋद्धिकामस्याग्निचितो सुखेतरच्छिद्रसोमवामिनो सुखेन सोमवामिनो राज्यच्युत- नृपस्य पशुकामस्य च सौत्रामणीयागः।

(२) का० ओदनौ पूर्णमासवे सठं०सृज्य स्वाद्वीं त्वाठं०शुनेति विरावं निदधाति। एवमाचामयोर्द्र्णसमर्गं मासरत्वनिष्पा- दनानन्तरमोदनौ व्रीहिश्यामचरू चतुर्भिर्यूर्णैःसस्सृज्य स्वाद्वीं त्वेति मन्त्रेण शुनेति विंशध्यायसप्तविंशयाऋचा चैकस्मिन् पात्रे चूर्णसृष्टावोदनौ मासराभ्यां सस्सृज्य विरावं शलानैर्ऋतकोणे गर्तं कृत्वा तत्र स्थापयेत्।

---

* स्वाद्वी त्वैकादशदेवापत्र वि शति.सुरावत ठं० सप्तदशोदीरतांवयोदशाप्याजानुदंश सोमोराजाष्टोसी सेनतत् ठं० षोड- शसप्त चनवतिः।

स्वादुनाम्हृष्टेनतीव्राम्। तीव्रशब्दः पटुवचनः। मद्वीम्शीघ्रमदजनकाम्। तीव्रेणपटुरसेनऋ-
मृताम्। अमृतेनमधुमतीम् मधुरस्वादोपेताम् मधुना। चतुर्णांवाक्यानां शेष उच्यते। सृजा-
मिसठं॰सोमेन। तेप्राग्धातोः छन्दसिपरेपीति उपसर्गसंगात् संसृजामिस्वाद्वीं त्वांसुरांस्वादु-

सरस्वत्यैपच्यस्वेन्द्रायसुत्राम्णेपच्यस्व ॥ १ ॥ परीत॰ ॥ परीतोषिं
चतासुतꣳसोमोयऽउत्तमꣳहविः ॥ दधन्वायोनर्य्योऽअप्स्वन्तरासु

नासोमेनेति एवमुत्तरत्रापियोज्यम्। यजूंष्युत्तराणि। सोमोसि। यस्त्वं मन्त्रेणोक्त सोमसं-
सर्गात् तंत्वांब्रवीमि। अश्विभ्यांमथीयपच्यस्व। पाकोविपरिणामः। सरस्वत्यैपच्यस्वइन्द्राय-
सुत्राम्णेपच्यस्व ॥ १ ॥ एकस्याः पयसाकृतेनाश्विनेन परिपिंचति। परीतः। सौमीबृहती।

(१) का॰ एकस्या पयस्याया कृतेनाश्विनेन परिपिञ्चति परीतो पिञ्चतीति शष्पचूर्णानि चावपति सारस्वतेन द्वयोः प्रतस्तोक्म-चूर्णानि चैन्द्रे गोत्तमे तिसृणा लाजचूर्णानि च। सायद्दोमान्तेऽश्विभ्यामपाकरोमीति करेण गां स्पृष्ट्वा एका ता दुग्ध्वा तत्पयमाध्वर्यु सुरामिश्र चति परीत इति मन्त्रेण। रचित शष्पचूर्णाना तृतीयांश सुराभाण्डे क्षिपेत् द्वितीयेऽह्नि निशान्ते सरस्वत्या अपाकरोमीति गावो स्पृष्ट्वा दोहितेन तयोर्दुग्धेन तेनैव मन्त्रेण सुरा सिञ्चति तोक्मचूर्णं तृतीयांशक्षेपश्च। ततीयेऽह्नि गावो इन्द्राय सुत्राम्णेऽपाकरोमीतिस्रो गा. स्पृष्ट्वा ता दुग्ध्वा कोकृततत्पयसा सुरा सिञ्चति तेनैव मन्त्रेण तत्र लाजचूर्णं तृतीयांशक्षेपणेति सूत्रार्थं।

द्वितीयपादप्रभृतिव्याख्यायते यच्छन्दयोगात्। यः सोमः उत्तमंहविः सर्वेषांहविषाम्। यम-दधन्वान् धारयितवान् यजमानम्। यश्चनर्य्योन्तर्ध्योऽहितः। यश्च अध्वर्युः अप्सु अन्तर्व-स्थितंसन्तम् आसुषाव अभिष्टुतवान् सोमम् अद्रिभिः ग्रावभिः तम्परिषिञ्चत अभिष्टुत-

पावसोमुमद्रिंभिः ॥ २ ॥ व्वायोःपूतः ॥ पुवित्त्रेणप्प्रत्यङ्क्सोमोऽ अतिंद्रुतः ॥ इन्द्रंस्युयुज्युःसखां ॥ व्वायोःपूतःपुवित्त्रेणप्प्राङ्क्सोमो

सोमम् इतः गोसधमउपादायपरिस्रुतम ॥ २ ॥ (१) तिसृभिर्गोयवोभिः परिस्रुतम्पुनाति। वायोः पूतः। योयंवायोःपवित्रेणउदरान्तरवर्तिनापूतःसन् प्रत्यङ्अधोमुखः सोमः अतिद्रुतः सःइ-न्द्रस्ययुज्यः। इन्द्रेणसहयोगमर्हति सखासहायः सुक्रीडनकःअगह्यः। सोमवामिनः पुनाति

(१) का० सते पुनाति गोऽश्ववालवालेन पुनाति ते परिस्रुतमिति वायोः पूत इति सोमातिपूतमा प्राङिति तद्वामिनः। वयो पूत इति कण्डिकाया द्वे ऋचौ पुनातित इति तृतीया तासां व्युत्क्रमेण विनियोगमाह पूता सुरामादाय गोऽश्वके-शनिर्मितेन वालेन पवित्रेण सते पलाशपात्रे पुनाति पुनाति त इति मन्त्रेण मत वारणमिति केचित सुखेतरच्छिद्रसोम-वामिनो यजमानस्य सौत्रामण्या वायो पूत पवित्रेण प्रतङ्ङिति मन्त्रेण सते सुरा पुनाति सुखेन सोमवामिनस्तु-वायो पूत पवित्रेण प्राङिति मन्त्रेण सते सुरां पुनातीत्यर्थः।

वायोःपवित्रेण हृदयान्तर्वर्तिना पूतःप्राङ्प्रागच्छन् सुखतःसोमः अतिद्रुतः यःसइन्द्रस्ययुज्यः योगार्हःसखा ॥ ३ ॥ सम्रड्विकामस्यपुनाति । पुनातिते यजमानस्याचष्टेऽध्वर्युः । पुनाति तव-परिस्रुतं सुरांसोमञ्च सूर्यस्यदुहिता । यद्वालुप्तोपमानमेतत् पुनातितेपरिस्रुतंसोममेवेति ।

**ऽअतिद्रुतः ॥ इन्द्रस्ययुज्यःसखा ॥ ३ ॥ पुनातिते ॥ परिस्रुतꣳ सोमꣳ सूर्यस्यदुहिता ॥ वारेणशश्वतातना ॥ ४ ॥ ब्रह्मक्षत्रम् ॥ ब्रह्मक्षत्रम्पवतेतेजऽइन्द्रियꣳसुरयासोमःसुतऽआसुतोमदा**

यद्वा पुनातितवपरिस्रुत सोमरूपापन्ना सूर्यस्यदुहिता । श्रद्धावैसूर्यस्यदुहिता वारेण गोबलवा-लजालेन । शश्वता शाश्वतिकेन । तना । तनेतिधननाम धनोत्पत्तिनिमित्तभूतेन ॥ ४ ॥ अज-विलोमपवित्रेण । पयःपुनाति ब्रह्मक्षत्रम् । व्यवहितपदप्रायः प्रथमोर्द्धर्चः । यस्मात्कारणात्

(१) का॰ उत्तरस्यां पयो वैतसेऽजाविलोमपवित्रेण ब्रह्म क्षत्रमिति । अजमेपलोमतपवित्रेण वैतसपात्रे उत्तपदिशि पयः पुनाति ब्रह्म क्षत्रमिति मन्त्रेणेत्यर्थः ।

मोमःसुत.सोमिपुतः ब्रह्म नवंपवते । तेजइन्द्रियंच पवतिर्जननार्थः । ब्रह्मजनयतिज्ञत्वत्तेजश्च इन्द्रियंच । यस्मात्त्वं सुरयासुतः सुरयातीव्रःक्षतः मदात्मत्तसिमदजनकोभवसि अतःकारणा- तृयक्रेण याचिमताटीप्तिमता रूपेणमन्जनितेन । हेदेवदेवताः पिष्टग्धिप्रीणीहि । रसेनचा-

य ॥ शुक्रेणंदेवदेवताःपिपृग्धिरसेनान्नंयजमानायधेहि ॥ ५ ॥

कुविदङ्ग ॥ यवमन्तोयवंचिद्यथादान्त्यनुपूर्वंवियूय ॥ इहेहैषाङ्कृ

णुहिभोजनानियेबर्हिषोनमउक्तिंयजन्ति ॥ उपयामगृहीतोस्य

श्विभ्यान्त्वासरस्वत्यैत्वेन्द्रायत्वासुत्राम्ण ऽएषतेयोनिस्तेजसेत्वा

वीर्य्यायत्त्वाबलायत्वा ॥ ६ ॥ नानाहि ॥ वान्देवहितं सदस्कृ

न्नंयजमानाय धेहिदेहि ॥ ५ ॥ पयोग्राहान्गृह्णाति । कुविदङ्गेति व्याख्यातम् । उपयाम- गृहीतासि अश्विभ्यांत्वासरस्वत्यैत्वा इन्द्रायत्वासुत्राम्णे । शोभनंत्राणमस्याश्विभ्यां सरस्वत्यैच- क्षतमितिसुत्रामासादयति । एपतेयोनिः तेजसेत्वां सादयामि वीर्यायत्वाबलायत्वा ॥ ६ ॥

सुराग्रहान् गृह्णाति । नानांहि हिशब्दोयस्मादर्थे । यस्मा ज्ञानापृथक्पृथक् वांयुवयोः सुरा-
सोमयोः । देवहितं देवनांपथ्यं देवैर्वाहितं धारितंस्थापितम् सदस्थाग्नेक्तम् । द्वेहिवेदीभवतः
सुरापयसोनानाभूते श्रतोब्रवीमि । मासंसृत्नाथाम् माससर्गंकुरुतम् । परमेव्योमन् स्थाने-
श्राहवनीयाख्ये । दक्षिणेह्यग्नौसुराहूयते । किञ्च यतश्च सुरात्वमसि शुष्मिणीवलवती अशान्ता ।

तस्मास᳚सृंत्नाथाम्परमेव्योमन् ॥ सुरात्त्वमसिंशुष्मिणीसोमंऽएष मामांहि᳚सीऽस्वांयोनिंमाविशन्ती ॥ ७॥ उपयामगृहीतोसि ॥ उपयामगृहीतोस्याश्विनन्तेजः सारस्वतंव्वीर्य्यमैन्द्रम्बलम् ॥ एषते योनिर्म्मोदायत्वानन्दायत्वामहसेत्त्वा ॥ ८॥ तेजोसि ॥ तेजोसिते

तस्मात्सुरांपीत्वारौद्रमनाइति सोमश्चएषप्रख्यातगुणःशान्तः । अतोब्रवीमि । सर्वथामामाहिंसीः
सोमस्वयोनिस्थानमाविशतीसती । माशब्दोनुदात्तोनर्थकः ॥ ७ ॥ उपयामगृहीतोसि । आश्वि-
नन्तेजः साक्षात्वमितिशेषः । एवं सर्वंच । सारस्वतंवीर्यम् ऐन्द्रंवलम् । सादयति । )एषतेयोनिः

मोदायत्वा त्वां सादयामि । आनन्दयत्वा । महसेत्वा महस्वाय महपूजायाम् ॥ ८ ॥ (१) पयोग्रहान् श्रीणाति । तेजोसि । तेजोसियतः अतस्त्वां ब्रवीमि । तेजोमयिधेहि । योहिमदात्मकः सतन्नियोगमर्हति । वीर्यमसि वीर्यंमयिधेहि बलमसि बलंमयिधेहि । तुल्यव्याख्यानानि ।

जोमयिंधेहिव्वीर्य्यमसिव्वीर्य्यम्मयिंधेहिबलमसिबलम्मयिंधेह्यो जो स्योजोमयिंधेहिमन्न्युरंनिमन्न्युम्मयिंधेहिसहोसिसहोमयिंधेहि॥९॥ याव्याग्घ्रंव्विषूचिकोभौव्वृकञ्चरक्षति ॥ श्येनम्पंतत्त्रिणꣳसिꣳहꣳ

सुराग्रहान् श्रीणाति । ओजोसि ओजोमयिधेहि मन्युरसि मन्युम्मयिधेहि सहोसि सहोमयिधेहि । तेजः प्राकोलनमात्मनः मन्युः कोपः सहोबलम् ॥ ९ ॥ (१) श्येनपक्षाभ्याम् पावयतीयजमानम् ।

(१) का० गोधूमकुवलचूर्णानि चावपति तेजोऽसोति । आश्विनग्रहग्रहणानन्तरं सादनात्प्राक् हे दर्भ तृणे प्राग्रे पात्रोपरि धृत्वा गोधूमकुवलयोश्चूर्णानि सहैव पयसि क्षिपति कुवलं स्थूलं बदरीफलमित्यर्थः ।

(१) का० दीक्षावत्पावयतोऽन्तःपात्रे श्येनपक्षाभ्यां या व्याघ्रमिति । अध्वर्युप्रस्थातारौ सहैवान्तः पात्रेऽवस्थितं प्राङ्मुखं

यात्याघ्रम्। अनुष्टुप्। विषूचिकास्तुतिः। विषुनिपातो नानावचनः अञ्चतिर्गत्यर्थः। अन्तर्व्यामत्ति नानात्मना विषूचिकेत्युच्यते व्याधिविशेषः। याविषूचिकाव्याघ्रं वृकं चोभावपिरक्षति। नक्षितयो रपरिणामजनिता व्यापत्तिः। किमेतावेवयो रक्षतिनेत्याह। श्येनपतत्रिणाम्। पतनशीलम्। सक्षिवधजीवनः प्राणिनोग्रहीतुमवश्यपतति। सिंहस्य। साइमं यजमानं पातु अंहसः

सेमम्पात्त्वᳬहंसः ॥१०॥ यदापिपेष ॥ मातरम्पुत्त्रः प्प्रमुदितोधयन्॥ एतत्तदग्ग्नेऽअनृणोभवाम्म्यहंतौपितरौमया ॥ सम्पृचस्त्थसम्मा

पापात् पापसमूहव्यापत्तेः। व्याधीनामधिष्ठात्र्योदेवता.सन्ति ताःप्रार्थ्यन्ते॥ १० ॥ अग्निप्रेक्षयति। यदापिपेष। आग्नेयीबृहती। पिपेषेति लिटउत्तमपुरुषैकवचनम्। यदहम् आःपिपेषआपिष्टवान् पद्भ्याम। मातरंपुत्रः प्रमुदितःप्रहृष्टःसन्। धारयन्पिबन्स्तनम्। तदेतत् तवसमक्षम् हेअग्ने अनृणःऋणत्रयरहितः। कृतकृत्य.भवामि यतएवमतोब्रवीमि उत्क्षिप्यभुजम। अहतौअहिंसितौ

यजमान मे नपिच्छाभ्यां पावयतः दोषावदितीकेन नाभेरूर्ध्वं प्रदक्षिणे द्वितीयेन सकृदवाङ् यद्योभाभ्यां नाभेरूर्ध्वम-धय द्विरिति सूत्रार्थः।

पितरौ पितामाचेत्येकशेषः । मया योऽहिंप्रत्युपकर्तुमसमर्थः । तेनैव मातापितरौहिंसितौ- भवत इत्यभिप्रायः । पयोग्रहान्संस्पृशति । संपृचस्थ पृचीसम्पर्के । संपृचन्तीति संपृचः स्थस्व- वाक्रियया व्यपदिश्यन्ते येदासन्ते संपृस्थतानहंब्रवीमि । संमाभद्रेणपृंक्त संसृजत मांभद्रे- णभन्दनीयेनकल्याणेन । सुराग्रहान् संस्पृशति । विपृचस्थ येयूयं विपृचः वियोगकारिणः स्थ- तानहंब्रवीमि । पाप्मनाविपृंक्त विगतसंसर्गं पाप्मनामांकुरुत ॥ ११ ॥ देवायज्ञम । विंशति-

भद्रेणपृङ्क्विपृचस्थविमांपाप्मनापृङ्क ॥ ११ ॥ [११] देवायज्ञम ॥ देवायज्ञमतन्वतभेषजम्भिषजाश्विना ॥ वाचासरस्वतीभिषगिं

रनष्टुभः सौत्रामण्यांसोमसंपदर्शनार्थः । निदानवतां मंत्राणांपूर्वंनिदानं वक्तव्यमर्थस्यसुखबोधाय इन्द्रस्यकिलानुपहितसोमपाना द्विसस्तस्यनसुचिरसुरोपिव । समस्तंवीर्यं तत्रदेवेन्द्रस्य भेषजंकृतम् । तत्राश्विनौभिषजौसरस्वतीच औषधंसौत्रामणी । यद्देवायज्ञमतन्वत विस्तारितवन्तः । भिष- जम भेषजस्यकर्तारं सौत्रामण्याख्यम् अयतदाभेषजाभिषजौवैद्यौ अश्विना अश्विनौ । इहचतुर्थः पादः संबध्यतेद्विवचनत्वात् । इन्द्रायइन्द्रियाणिवीर्याणिदधतः । वाचाच तयोलक्षणया सरस्वती-

तद्दाभिपरूस्यात् ॥ १२ ॥ दीक्षायैरूपम्। शष्पाणि नवप्ररूढानिव्रीहय.। प्रायणीयस्य तोक्मानि नवप्ररूढाय वा:तोक्मानि। क्रयस्य रूपंसोमस्य सोमक्रयस्येति समासप्राप्ते पदयोर्व्यत्ययो रूपश्व्देनव्यवधानञ्च छान्दसम्। सोमक्रयरूपंलाजा: सोमांशवश्चलाजाएवमधुरस्वादा: ॥ १२ ॥

न्द्रायेन्द्रियाणिदधतऽ ॥ १२ ॥ दीक्षायैरूपम् ॥ दीक्षायैरूपꣳशष्पाणिप्रायणीयस्यतोक्मानि ॥ क्रयस्यरूपꣳसोमस्यलाजाऽसोमाꣳशवोमधु ॥ १३ ॥ आतिथ्यरूपम्मासरम् ॥ आतिथ्यरूपम्मासरम्महावीरस्यनग्नहुः ॥ रूपमुपसदामेतत्तिस्रोरात्रीऽसुरासुता ॥ १४ ॥

आतिथ्यरूपंमासरम। व्रीहिश्यामाकौदनाचामचूर्णसंसर्गोमासरम्। महावीरस्यनग्नहु किण्वो-नग्नहु: सौरिकाणाप्रसिद्ध:। रूपमुपसदामेतत्क्रियते यस्मिंस्तिस्रोरात्री: सुरा अभिपुतातिष्ठति ॥ १४ ॥ सोमस्यरूपम्। सोमस्य क्रीतस्यैतद्रूपं यत्परिस्रुत् परिषिच्यते पयसा। केन-

पयसा यत् अश्विभ्यां दुग्धं भेषजं चइन्द्राय यच्च अश्विभ्यान्दुग्धं मिन्द्रायैवभेषजम् यच्चसरस्वत्यादुग्धं पयः इन्द्रायभेषजम् ॥ १५ ॥ आसन्दीरूपम् । यजमाना भिषेका संदीरूपम्। राजासन्द्यै सोमासन्द्याः वेद्योःकुम्भीसुराधानौ। सोमिक्यां वेदेः रूपम् वेद्योः अन्तरः मध्यम् उत्तरवेद्यारूपम् कारोत्तरः

सोमस्यरूपम् ॥ सोमंस्यरूपङ्क्रीतस्यपरिस्रुत्परिंषिच्यते ॥ अश्विभ्यान्दुग्धम्भेषजमिन्द्रायैन्द्रᳪसरस्वत्या ॥ १५ ॥ आसन्दीरूपम् ॥ आसन्दीरूपᳪराजासन्द्यैव्वेद्यैकुम्भीसुराधानौ ॥ अन्तरऽउत्तरवेद्यारूपङ्कारोतरोभिषक् ॥१६॥ व्वेद्याव्वेदिः ॥ व्वेद्याव्वेदिᳪसमाप्यतेबर्हिषाबर्हिरिन्द्रियम्॥ यूपेनयूपऽआप्यतेप्रणीतोऽअग्निरग्निना ॥१७॥

सुरापवनम् भिषगिन्द्रस्ययजमानस्यच ॥ १६ ॥ वेद्यावेदिः । अनयावेद्यावेदिः सौमिकीसमाप्यतेबर्हिषाच बर्हिःसमाप्यतेइन्द्रियं वीर्यम् यूपेन इध्मेनच यूपआप्यतेप्रणीतश्चाग्निः अग्निना-

प्यते ॥ १७ ॥ हविर्द्धानंयदश्विना । यदश्विनदैवतं तेनहविर्द्धानमाप्यते यत्सरस्वतीदैवतं तेना-
ग्नीध्रमाप्यते । यदिन्द्रायहविःतेन इन्द्रसदःक्षतमाप्यते पत्नीशालंच गार्हपत्यस्यचाप्यते ॥ १८ ॥
प्रैषेभिः प्रेषान् । प्रैषैः प्रैषानाप्नोतिश्चाप्रीभिः श्चाप्रीः यज्ञस्यसोमयज्ञस्यप्रियाः प्रयाजयाज्याः ।

हविर्द्धानंयत् ॥ हविर्द्धानंयदश्विनाग्नीध्रंयत्सरस्वती ॥ इन्द्राये॒न्द्रꣳसदस्कृतम्पत्नीशालङ्गार्हपत्यꣳ ॥ १८ ॥ प्रैषेभिꣳप्प्रैषान् ॥ प्रैषेभिःप्प्रैषानाप्नोत्याप्रीभिराप्रीर्य॒ज्ञस्य ॥ प्रयाजेभिरनुयाजान्वषट्कारेभिराहुतीꣳ ॥ १९ ॥ पशुभिःपशून् ॥ पशुभिष्पशूनाप्नोतिपुरोडाशैर्हवीꣳष्या ॥ छन्दोभिꣳसामिधेनीर्याज्याभिर्वषट्कारा

प्रयाजेभिरनुयाजान् प्रयाजैः प्रयाजानाप्नोतिश्चनुयाजैरनुयाजानाप्नोति । वषटकारेभिराहुतीः ।
वषट्कारैर्वषट्कारानाप्नोति । प्रयाजेभिरित्यादि चतुर्णांवाक्यानामर्द्ध लोपः ॥ १९ ॥ पशुभि.पशून्
पशुभि.पशूनाप्नोति । पुरोडाशैः हवींषिचाप्नोति । छन्दोभिः छन्दांसि सामिधेनीभिः सामि-

धेनीः याज्याभिर्याज्यान् । वषट्कारैर्वषट्कारानाप्नोति ॥ २० ॥ धानाः करंभ । उदक-
मन्थः करम्भः । सक्तवः परीवापः हविष्पङ्क्तिदधिपयः । दधि । सोमस्यरूपम् हविष-
श्चारूपम् आमिक्षापयसा । वाजिनम्मधु । मधुशब्दोवाजिनस्यविशेषणम् आनन्तर्यात् सोम-

न् ॥ २० ॥ धानाऽकरुम्भऽसक्तवऽपरीवापऽपयोदधिं ॥ सोमस्यरूप
छंहुविषंऽआमिक्षाव्वाजिनम्मधुं ॥२१॥ धानानांᳬरूपम् ॥ धानानांᳬ
रूपङ्कुवलम्परीवापस्यगोधूमाऽ ॥ सक्तूनांᳬरूपम्बदरमुपवाकाऽ
करम्भस्य ॥ २२ ॥ पयसोरूपम् ॥ पयसोरूपंय्यद्यवाऽदध्नोरूपङ्कर्कन्धू

संस्त्रवश्च ॥ २१ ॥ धानानांरूपम् । अधस्तनमन्त्रोक्तानां । सामहविषां सोमस्यचसंपत्तिं सौत्रा-
मणीद्रव्यैर्व्याह । धानानांरूपंकुवलं कोमलबदरम् । परीवापस्यगोधूमाः । सक्तूनांरूपंबदरम्
उपवाकाः करम्भस्य रूपम् उपवाकाः यवकाः ॥ २२ ॥ पयसोरूपम् । पयसो रूपंयत्यवाः ।
दध्नः रूपं कर्कन्धूनि । कर्कन्धुर्बदरविशेषः । सोमस्यरूपंवाजिनम् सौमस्यचरूपमामिक्षाप-

यस्या ॥ २३ ॥ आयावय । इदानींशस्त्रसम्पत्तिः क्रियते । आयाश्वय इतिशब्दप्रदर्शनार्थं । स्तोत्रियाः । प्रत्याश्रावः । अस्तुश्रौषट् । अनुरूप । यजइति । धाय्यारूपम् निष्केवल्येस्तोत्रियानुरूपयोरनन्तरम् धाय्यासस्युक्ते । प्रगाथायेयजामहाः । येयजामहे इतिप्रगाथाः ॥२४॥

नि ॥ सोमस्यरूपंवाजिनꣳसौम्यस्यरूपमामिक्षा ॥ २३ ॥ आश्रा वय ॥ आश्रावयेतिस्तोत्रियाꣳप्रत्याश्रावोऽअनुरूपः ॥ यजेतिधा य्यारूपम्प्रगाथायेयजामहाः ॥२४॥ अर्द्धऽऋचैरुक्थानाम् ॥ अर्द्धऽऋचैरुक्थानाꣳरूपम्पदैराप्नोतिनिविदः ॥ प्रणवैः शस्त्राणाꣳरूप म्पयसासोमऽआप्यते ॥ २५ ॥ अश्विभ्याम्प्रातःसवनम् ॥ अश्विभ्या

अर्द्धर्चैः उक्थानां रूपमाप्नोतिपदैः आप्नोतिनिविदः । न्यूह्याउच्यन्ते । प्रणवैः ओंकारैः शस्त्राणांरूपंपयसा सोमआप्यते ॥ २५ ॥ अश्विभ्याम्प्रातः सवनमाप्तम् इन्द्रेणऐन्द्रं माध्यन्दि-

नंसवनमाप्तम् । वैश्वदेवं तृतीयंसवनं सरस्वत्याआप्तम् ॥ २६ ॥ वायव्यैः । सर्वेषांसोमपात्राणां
वायव्यानीतिसंज्ञा । वायव्यैः पात्रैः वायव्यानिपात्राण्याप्नोति । सतेनद्रोणकलशम् । वैतसपात्रं
सतइत्युच्यते । कुंभीभ्यां सुराधानीभ्यां शतछिद्राभ्याम् अम्भृणौ । अम्भृणौपूतभृदाधवनीयावु-

भ्यांप्रातःसवनमिन्द्रेणैन्द्रम्माध्यन्दिनम् ॥ वैश्वदेवꣳसरस्वत्यातृ
तीयमाप्तꣳसवनम् ॥ २६ ॥ वायव्यैर्वायव्यानि ॥ वायव्यैर्वा
यव्यान्याप्नोतिसतेनद्रोणकलशम् ॥ कुम्भीभ्यामम्भृणौसुतेस्था
लीभिस्थालीराप्नोति ॥ २७ ॥ यजुर्भिराप्यन्ते ॥ यजुर्भिराप्यन्ते
ग्रहाग्रहैस्तोमाश्चविष्टुतीः ॥ छन्दोभिरुक्थाशस्त्राणिसाम्ना

चेते । सुतेअभिषुतेसोमेयौभवतः तौआप्नोति । स्थालीभिः स्थालीआप्नोति । उभयत्रहि-
स्थाल्योभवन्तो ॥ २७ ॥ यजुर्भिराप्यन्ते । यजुर्भिः यजूंषि आप्यन्ते ग्रहाग्रहैराप्यन्ते ।

स्तोमाश्चविष्टुतीश्च छन्दोभिः उक्थशस्त्राणि सोमावभृथश्चाप्यते। साम्नामाम-श्चाप्यते अवभृ-थेनावभृथः ॥ २८ ॥ इडाभिर्भक्षान्। इडाभिः इडामाप्नोति। भक्षैर्भक्षानाप्नोति। सूक्त-वाकेनसूक्तवाकम् आशीभिराशिषः शंयुनाशंयुमाप्नोति। पत्नीसंयाजैः पत्नीसंयाजानाप्नोति।

वभृथऽआप्यते ॥ २८ ॥ इडाभिर्भक्षानाप्नोतिसूक्तवाकेनाशि षः ॥ शंयुनापत्नीसंयाजान्त्समिष्टयजुषासꣳस्थाम् ॥ २९ ॥ व्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम् ॥ दक्षिणाश्रद्धामाप्नोति श्रद्धयासत्यमाप्यते ॥ ३० ॥ एतावद्रूपम् ॥ एतावद्रूपंयज्ञ

समिष्टयजुषा समिष्टयजुराप्नोति। संस्थयासंस्थामाप्नोति ॥ २९ ॥ व्रतेन। कृतोच्छिष्टभक्षस्य दूराविमग्निहोत्रं जुहोति। अनेनव्रतेनदीक्षामाप्नोति दीक्षया। दक्षिणामाप्नोति। दक्षिणा। दक्षिणयेतिविभक्तिव्यत्ययः। श्रद्धामाप्नोति। श्रदितिसत्यनामसुपठितम्। तदस्यांधीयतेआ-स्तिक्येन एवमेतदितिसाश्रद्धापुण्यकृतां मनोविशेषः। श्रद्धयासत्यमाप्यते। सत्यम् सौत्रामण्या

ज्ञानमनन्तंब्रह्म। वयोत्तचयंवो ॥ ३० ॥ एतावत्। यत्परिमाणंरूपं सोमयज्ञस्य। यद्दे-
वैश्च ब्रह्मणाचप्रजापतिनाकृतम् दृष्टम्। दर्शनकरणयोः कोविशेष इतिचेत्। स्वप्नप्रतिबुद्धन्या-
येन दर्शनम् करणतुबुद्धिपूर्वकम्। तदेतत्स आप्नोतियज्ञेसौत्रामणी। पूर्वसवर्णदीर्घआदेशश्छान्दसः।

सुयद्देवैर्ब्रह्मणाकृतम् ॥ तदेतत्सर्वमाप्नोतियज्ञेसौत्रामणीसु
ते ॥ ३१ ॥ [ २० ] सुरावन्तम्बर्हिषदम् ॥ सुरावन्तम्बर्हिषदꣳसुवीरँ
यज्ञꣳहिन्वन्तिमहिषानमोभिः ॥ दधानाःसोमन्दिविदेवतासुम
देमेन्द्रंयजमानाःस्वर्काः ॥ ३२ ॥ यस्ते ॥ यस्तेरसःसम्भृतऽओषधी

ष्वे। सुते। सुरासोमाभिषुते ॥ ३१ ॥ (१) पयोग्रहान्जुहोति। सुरावन्तम्। त्रिष्टुबश्विसर-
स्वतीदेवत्या। यत् सुरावन्तं बर्हिषम् सुरावान्वाएष बर्हिषद्यज्ञो यःसौत्रामणी। सुवीरं कल्याण-
वीरम्। यज्ञं हिन्वन्तिवर्द्धयन्ति प्रापयन्तिवा। महिषाऋत्विजः। नमोभिः नमस्कारैः अन्नैर्वा।

(१) का० सुरावन्तमिति जुहोति। अध्वर्युस्त्रीनपि पयोग्रहान् जुहोतीतार्थः।

दधान धारयन्तः। सोमन्दिविदेवतासु। तलमद्देमवयम इन्द्रं यजमानाः स्वर्काः शोभनार्चनाः कल्याणमनावा ॥ ३२ ॥ (१) सुराग्रहाञ्जुहोति। यस्तेरसः उक्तादेवताछन्दश्चाधस्तनया। हेसुरेयस्तवरसः सम्भृतःएकीकृतः श्वोषधीषुवर्तमानः। सोमस्यचयःशुष्मः यद्दलम्। सुरयासह

प्रुसोमस्यशुष्मःसुरयासुतस्य ॥ तेनजिन्वयजमानम्मदेनसरस्वतीमश्विनाविन्द्रमग्निम् ॥ ३३ ॥ यमश्विना ॥नमुचेरासुरादधिसरस्वत्यसुनोदिन्द्रियाय ॥ इमन्तंशुक्रम्मधुमन्तमिन्दुंसोमंराजान

अभिषुतस्य। तेनोभयेन रसेनबलेनच जिन्वप्रीणीहि यजमानम्। मदेनसुरोत्थेन सरस्वतींच। अश्विनौच इन्द्रंचअग्निञ्च ॥ ३३ ॥ पयोग्रहान्भक्षयन्तिद्वाभ्यांत्रिष्टुभ्यांमृत्विग्यजमानाः। (२) यमश्विना। नमुचिरसुरइन्द्रस्यइन्द्रियंवीर्यमपिवत् तस्यशिरसिच्छिन्ने लोहितमिश्रः। सोमोत्तिष्ठत्

(१) का० पालाशैः सौराव मृण्मयमाहुतिमानश्च इति श्रुतेयेस्ते इति। १८। २। ८। प्रतिप्रस्थाता पालाशोलूखलैः सुराग्रहान्दक्षिणेऽग्नौयजतिमृण्मयपात्रमाहुति नव्याप्नोतीतार्थः।

(२) का० अध्वर्युः प्रतिप्रस्थाताग्नीध्रमश्विनेताश्विन भक्षयन्ति हिर्हिरावर्त्तं ठं; होत्रब्रह्ममैत्रावरुणाः सारस्वतमाश्विनवदैन्द्रं

तदुत्पूयपिवन्तः तदभिवादिनीएपाऽस्त्क् । यत्अश्विनाअश्विनौ । नमुचेरासुरात् असुरपुत्रात् अधिसकाशादादृत्य । सरस्वतीचअसुनोत् अभ्यपुणोत् । इन्द्रियायवीर्याय इन्द्रभैषज्यायवा । इमंतंशुक्रम् शुक्रम् असंसृष्टलोहितम् मधुमन्तम्रसवन्तम् । इन्दुम् । इदिपरमैश्वर्ये परमेश्वरम् ।

सिहभंक्षयामि ॥ ३४ ॥ यदत्रं ॥ यदत्रंरिप्तःरुसिनंःसुतस्ययदि न्द्रोऽअपिंबच्छचीभिः ॥ अहन्तदंस्यमनंसाशिवेनुसोमःराजांनमि

सोमंराजानम् इहभक्षयामि ॥ ३४ ॥ (१) यदत्र । यत्अत्रअस्यांसुरायाम् रिप्तंलिप्तंलग्नम् रसिनः रसवतः सुतस्यअभिपुतस्यसोमस्य । यच्चइन्द्रः अपिवत्पीतवान् इन्द्रदेवत्योहिसोमः । शचीभिःकर्मभिः । अहंतत् यच्चदितिसुविज्ञाते नपुंसकलिङ्गता । अस्यमनसाशिवेन सोमंराजान-

यजमानः । तत्र आहृतमाश्विनं पयोग्रहं क्रमेण द्विर्द्विर्भक्षयन्ति सहस्वन्तः होत्रादयः सारस्वतं पयोग्रहमदन्ति यजमान ऐन्द्रं पयोग्रहमत्तीति सूत्रार्थः ।

(१) का० यदत्रेति सौरान् भक्षयन्ति यथाभक्षितं प्राचीवीतिनो दक्षिणतः । अध्वर्य्वादय आश्विनं होत्रादयः सारस्वतं यजमान ऐन्द्रं सुराग्रह यदत्रेति मन्त्रेण विहारदक्षिणे स्थिता प्राचीनावीतिनो भक्षयन्ति आघ्राणमन्त्रेन मूल्येन भक्षणमितार्थः ।

मितिपष्ठाविपरिणामः । सोमस्यराज्ञः इहभक्षयामि ॥ ३५ ॥ (१) अंगारेषुवर्हिष्परिधिषु सुरां-जुहोति । पितृभ्यः पैत्राणियजूंष्यस्यां कण्डिकायाम् । पितृभ्यःस्वधायिभ्यः स्वधांप्रतिगमनशीलाःस्वधायिनः । सुप्यजातौणिनिस्ताच्छील्ये । स्वधानमः अन्नमस्तु । बहुवचनंपितृव्यसव्यपिक्षम्

हभंक्षयामि ॥ ३५ ॥ पितृभ्यः॑स्वधा॒यिभ्यः॑ ॥ स्व॒धानमः॑पितामुहे भ्यः॑स्वधा॒यिभ्यः॑स्व॒धानमः॒प्रपि॑तामहेभ्यः॒स्वधा॒यिभ्यः॑स्व॒धानमः॑ ॥ अक्ष॑न्पितरोमी॑मदन्तपितरोती॑तृपन्तपितरः॒पित॑रः॒शुन्ध॑ध्वम्॥३६॥

पूजार्थंवा । पितामहेभ्यः । उक्तोदर्कम् । प्रचालननोपसिञ्चति अक्षन् अत्तवन्तः भक्षितवन्तःपितरः । अमीमदन्तमादिताः पितरःतीतृपन्त तर्पिताःपितरः । जपति । पितरःपितरः शुंधध्वम् पाणि-

(१) का० मन्नारेषु वा वर्हिष्परिधि] दक्षिणतो जुहोत्याश्विनमुत्तरे मध्यमे सारस्वतमैन्द्रं दक्षिणे पितृभ्य इति प्रतिमन्त्रं सुराग्रहाणां भक्षणम् मन्येन मूर्ध्येन भूपालपानमिति पक्षत्रयमुक्तम् चतुर्थमाह यद्वाहवतीयस्याङ्गारेषु परिधेर्बहिर्दक्षिणदिकस्थेषु सोमग्रेपान् सुराग्रहान्पितृभ्य इति प्रतिमन्त्रं जुहोति तदेवाह उत्तरेऽङ्गारे आश्विनम् मध्यमे सारस्वतम् दक्षिणे ऐन्द्रं सुराग्रह जुहोतीति सूत्रार्थः ।

प्रक्षालनंकुरुध्वम् ॥ ३६ ॥ (१) नवर्चंवाचयति-पावमानम् । पुनन्तुमा । द्वेपिल्यावनुष्टुभौ पुनन्तुमां पितरः सोम्यासःसोमसम्पादिनः । पुनन्तुमांपितामहाः पुनन्तुप्रपितामहाः । पावनंचपापापनोदःशुद्धिः फलग्रहणयोग्यता । केनपुनन्तु । पवित्रेण । कथंभूतेन शतायुषा । येनपूतःशता-

पुनन्तुंमापितरं÷ सोम्यासं÷ पुनन्तुंमापितामहाऽपुनन्तुप्रपितामहाः पवित्रेणशतायुषा ॥ पुनन्तुंमापितामहाः पुनन्तुप्रपितामहाः ॥ पवित्रेणशतायुषाविश्वमायुर्व्यश्नवै ॥ ३७ ॥ अग्नऽआ

तायुर्भवति तत्पपवित्रं तत्साधनत्वाच्छतायुरेव । पुनन्तुमांपितामहाः पुनन्तुप्रपितामहाः पवित्रेण शतायुषा । आम्रेडितार्थोऽभ्यासः विशेषार्थोवा । तथा मांपितृपितामहाः प्रपितामहाः पुनन्तु यथा विश्वं सर्वमायुः अहं व्यश्नवै व्यश्नुयं प्राप्नुयाम् ॥ ३७ ॥ अग्न आयूंषि ।

(१) का० कुम्भीमासज्य कुम्भच्छतविच्छां वालपवितृहिरण्यानन्तर्धायनवर्चं वाचयतिपुन न्तुमेति ११।३।२०। दक्षिणाहवनीयपार्श्वयोः स्तम्भद्वयोपरि दक्षिणाग्र वंशंनिधाय तत्रस्थे शिक्ये शतच्छिद्रां कुम्भीं निधाय कुम्भीतले वालादीनि निधाय

आग्नेयीगायत्री हेअग्ने यतस्त्वम् आयूंषिपवसे आयुःप्रापकाणिकर्माणि चेष्टयसेस्वभाव-
तएवअतस्त्वांप्रार्थये । आसुवअभ्यनुजानीहि । ऊर्जंदधिउपसेचनम् इषमन्नंव्रीह्यादि नःअ-
स्माकम् एतद्विजीवनहेत्वित्यभिप्रायः । किञ्च । आरेदूरेएवा वस्थितंसन्तंबाधस्व तैस्तैरुपायैः
दुच्छुनाम्दुष्टश्वानम् शुनाचात्रदुर्जनप्रभृतयोलक्ष्यन्ते । तैःरहितोहि पुरुषःपरमायुःप्राप्नोति ॥ ३८॥

यूंꣳषि ॥ पवसऽआसुवोर्ज्जमिषंञ्चनः ॥ आरेबाधस्वदुच्छुनाम् ॥ ३८॥
पुनन्तुमा ॥ देवजनाःपुनन्तुमनसाधियः ॥ पुनन्तुव्विश्वाभूतानि
जातवेदःपुनीहिमा ॥ ३९ ॥ पवित्त्रेणपुनीहि ॥ माशुक्क्रेणदेव
दीद्यत् ॥ अग्नेक्क्रत्वाक्क्रतूँ१ऽरनु ॥ ४० ॥ यत्तेपवित्त्रमर्चिष्यग्ग्ने

पुनन्तुमा । लिङ्गोक्तदेवतानुष्टुप् पुनन्तुमादेवजनाः देवानुगामिनः । पुनन्तुमनसासंयुक्ताः ।
धियःबुद्धयःकर्माणिवा । पुनन्तुविश्वानिभूतानि त्वमपि हेजातवेदःपुनीहिमाम् ॥ ३९ ॥ पवि-
त्रेण । आग्नेयीगायत्री पवित्रेणपुनीहिमाम् । शुक्रेणशोचिष्मता शुक्लेनअथवलेन । हेदेवदीद्यत्

दीप्यमानः । हेअग्ने क्रत्वाकर्माणिचक्रिययाचक्रतून् तान् तान्चक्रतून्अनु ॥ ४० ॥ यते । आग्नेयीब्राह्मस्तृतीयःपादःगायत्री । यत्तेतवपवित्रम् अर्चिंषिहेअग्ने विततंप्रसारितम् । अन्तरा-मध्येन ब्रह्मसत्यंज्ञानमनन्तम् वयोलक्षणपरंवा । तेनपवित्रेण अभ्यनुज्ञातेन पुनातुमामाम् ॥४१॥ पवमानः । सामदेवत्यागायत्रीत्ततीयःपादोवायव्यः । सःपवमानःसोमः । अद्यअस्मिन्दिवि नःअ-

व्वितंतमन्तुरा ॥ ब्रह्मतेनंपुनातुमा ॥ ४१ ॥ पवंमानुःसः ॥ पवं मानःसोऽअद्यनंःपुवित्रैणविचंर्षणिः ॥ यःपोतासपुंनातुमा ॥४२॥ उभाभ्यांन्देव ॥ सवितःपुवित्रैणसुवेनंच ॥ मांपुंनीहिव्विश्वव तंः ॥ ४३ ॥ व्वैश्वदेवीपुंनती ॥ देव्यागाद्यस्यांमिमाबह्व्यस्तन्न्वो

स्मान्पवित्रेण विचर्षणिः । द्रष्टाकृताकृत सर्वेक्षकःपुनातु । यश्चस्वभावतःपोतासपुनातुमां वायुः ॥४२॥ उभाभ्याम् । सावित्रीगायत्री । हेदेवसवितः उभाभ्याम् पवित्रेणच । सवेनाभ्यनुज्ञयाच । मांपुनीहिविश्वतः सर्वतः ॥ ४३ ॥ वैश्वदेवी । त्रिष्टुप् अनिर्ज्ञाताभिधेया प्रवल्हिकेव-

तन्नकाञ्चिद्देवतामङ्गीकृत्य व्याचक्ष्महे । शतातृण्णाकुम्भीदक्षिणस्या ग्नेरुपरिष्टा त्क्षरति । साचा-
भिधेया सौत्रामणीवा वाग्वा उखावेत्यादि । विश्वेभ्योदेवेभ्यः आगताहितावा वैश्वदेवीसुरा-
कुम्भी । पुनतीपावनंकुर्वाणा अगात्आगता । यस्याम इमाः वह्वाःधारा तन्वः पुरः वीतपृष्ठाः
कामितशरीराः । काम्यन्ते हिसुराधाराः । तयामदन्तः तयाहृष्टमोदमानाः । सधमादेषु सध-

व्वीतपृष्ठाः ॥ तयामदन्तः सधमादेषुव्वयꣳस्यामपतयोरयीणाम् ॥
४४ ॥ येसमानाः समनसः पितरोयमराज्ज्ये ॥ तेषाँल्लोकः स्वधान
मोअस्तुदेवेषुकल्पताम् ॥ ४५ ॥ येसमानाः ॥ येसमानाः समन

मादयो.च्छन्दसीतिसहस्य सधादेशः । सहमदनेषु वयंस्यामपतयः रयीणांधनानाम् ॥ ४४ ॥
दक्षिणाग्नौजुहोति । येसमानाः अनुष्टुप्पैत्री । येसमानाः जात्यादिभिः । समनसः समा-
नमनस्काः पितरः य मराज्ये लोकेत्यस्यहि स्वेलोकेराज्यम् । तेषांपितॄणांलोकः आयतनम्
स्वधाशब्दोपलक्षितमन्नमस्तु । यद्वा तेषांपितॄणांलोकआयतनं स्वधाकारोपलक्षित मन्नमस्तु ।

नंमस्कारोपलक्षिताच स्तुतिर्भवतु । यज्ञस्तु देवेषु कल्पतां समर्थोभवतु ॥ ४५ ॥ उत्तरेणा- याज्याहुतिंजुहोति । येसमानाः अनुष्टुप् यजमानाः । येसमानाः समनसःजीवाः जीवनवन्तः । जीवेषु जीवनवत्सु मधेमामकाः मदीयाः । तेषांसंबन्धिनीश्रीः मयिकल्पतांक्लृप्ताभवतु । तानूपरित्यज्यमामाश्रयत्वित्यर्थः । पापात्मानोहि गोत्रिणोभवन्ति । कुत्रकियन्तञ्चकालमित्यत-

सोजीवाजीवेषुमामकाः ॥ तेषाᳬश्रीर्मयिकल्पतामस्मिँल्लोकेशत ᳬसमाः ॥४६॥ द्वेसृती ॥ ऽअशृणवम्पितॄणामहन्देवानामुतमर्त्यानाम् ॥ ताभ्यामिदंविश्वमेजत्समेतियदन्तरापितरम्मातरञ्च ॥४७॥ इदᳬ

माह । अस्मिन्लोकेशतंसमाः । समाशब्दः संवत्सरवचनः ॥ ४६ ॥ पयःश्रमन्वारभ्येजुहोति । द्वेसृती त्रिष्टुप् । पन्थानोव्रवीति । येएते शुक्लकृष्णोसृतीयावेतौदेवयानपितृयाणौ पन्थानौ । अहमशृणवं पितॄणांश्रुतिवाक्येभ्यः । सएषदेवयानोवापितृयाणोवापन्थाइति । देवानांदेवयानगा- मिनाम् उतअपिच मर्त्यानांमरणधर्मिणां पितृयानगामिनाम् । ताभ्यामिदंविश्वमेजत्समेति ।

तदःस्थानेयदोहत्तिः । याभ्यांपथिभ्याम् इदंसर्वम एजत्क्रियावत् समेतिसंगच्छति यत्अन्तरा-
पितरं मातरञ्च । द्यौःपितापृथिवीमाता सुहृतंताभ्यांस्तीभ्यामस्तु ॥ ४७ ॥ (१) शेषंयजमानो
भक्षयति । इदंहविः व्यवसानाअष्टि यंजमानाशीः । इदंपयोलक्षणंहविः प्रजननम्उत्पादकम् ।
मेममअस्तु दशवीरम् । प्राणावैदशवीराः सर्वंगणम् । अङ्गावैसर्वेगणाः स्वस्तयेअविनाशाय ।

हविः ॥ इदꣳहविःप्रजननम्मेऽअस्तुदशवीरꣳ सर्वगणꣳस्वस्तये ॥
आत्मसनिंप्रजासनिंपशुसनिंलोकसन्यंभयसनिं ॥ अग्निःप्रजाम्बं
हुलाम्मेंकरोत्त्वन्नम्पयोरेतोऽअस्मासुधत्त ॥४८॥ [१७] उदीरताम्॥

पुनरपि हविर्विशेष्यते । आत्मसनि आत्मानंयद्धविः सनोतिसंभजतेतदात्मसनि । एवंप्रजासनि
पशुसनि लोकसनि अभयसनि । अभयमपुनरावृत्तिः । अग्निःप्रजांवहुलाम् अतिवृद्धांममक-
रोतु । यूयंच हेऋत्विजः । अन्नंचपयश्चरेतश्च । अस्मासुधत्त ॥ ४८ ॥ (२) उदीरताम् । त्रयोद

(१) का० शेषं यजमानो भक्षयतीदꣳ हविरिति उक्ताम्वित शेष पयो यजमानो भक्षयतीत्यर्थः ।

(२) का० सोमवता वर्हिषदामग्निष्वात्तानाञ्च । उदीरतामित्यादित्रयोदशर्चोऽनुवाक तत्रउदीरताम् अङ्गिरस ये न इति

गपैत्यस्त्रिष्टुभःजगत्येकादशी । यजमानवाचनम् । उदीरताम् ईरगतौउदउपसर्गात्पर: । ऊर्द्धक्रमताम् । ऊर्द्धंगच्छन्तु । अवरे येस्मिन्लोकेवस्थिता: पितर: । उत्परास: । परएवपरास:येचपरस्मिन्लोकेवस्थितास्तेपि उदीरताम् तस्मादपिस्थानाद्विशिष्टतरं स्थानंगच्छन्तु । उन्म-

उदीरतामवरुऽउत्परासुऽउन्मध्यमाःपितरःसोम्यासः ॥ असुंय ऽईयुरवृकाऽऋतज्ञास्तेनोवन्तुपितरोहवेषु ॥४९॥ अङ्गिरसोनः ॥

ध्यमा: । मध्ये भवामध्यमा: । येपिमध्यमास्तेपिततोविशिष्टतरं स्थानमुद्गच्छन्तु । पितर:सोम्याम: सोमसम्पादिन: । असुंयेईयु: येपिअसुं प्राणम् ईयु: समन्वियु: वातात्मान: अष्टकाअनन्मिता: मध्यसत्वमास्थिता: । ऋतज्ञा: सत्यज्ञावा यज्ञज्ञावा स्वाध्यायनिष्ठावा । तेपिततोविशिष्टतरं स्थानमुच्छन्तु । एवंच स्वकीयेनकर्मणा असदीयेनचयेउन्नतिं प्राप्ता । तेन:असान् अवन्तु-

ऋतयस्याग्निष्वात्तानित्यन्तायाश्च विनियोग: कल्पकृतोक्त त्वं सोमेति द्वच सोमवताम् बर्हिषद इति द्वचं बर्हिषदाम् मायन्तु न इति द्वचमग्निष्वात्तानाम् पुनन्तु मेति नवर्चं वाचनान्तर इदं सोमेत्यादि तन्व कस्ययातीतमन्तं नवर्चं मतृाच-मध्वर्यु यजमानेन वाचयतीत्यर्थ: ।

प्राजयन्तु पितरः हवेष्वाह्वानेषु ॥ ४९ ॥ अङ्गिरसोनः । अङ्गिराऋषिस्तस्यापत्यानिबहूनि अङ्गिरसः नः अस्माकं पितरः नवग्वाः नवगतयः पुनः पुनरपुनरुक्त्या गच्छन्ति । नवनीयास्तोतव्या वा गतिर्येषां ते त थोक्ताः । येचअथर्वाणः बहून्यपत्यानि । अथर्वापुनः थर्वतिश्चरतिकर्मातत्प्रतिषेधः । येचभृगवः भृगोर्बहून्यपत्यानि । सोम्यासः सोमसंपादिनः । तेषां-

पितरोनवंग्वाऽअर्थर्व्वाणोभृगंवःसोम्म्यासंः ॥ तेषांव्वयꣳसुमतौयज्ञियांनामपिंभद्रेसौंमनसेस्यांम ॥ ५० ॥ येनंः ॥ येनःपूर्व्वेपितरंः सोम्म्यासोंनूहिरेसोंमपीथंव्वसिंष्ठाः ॥ तेभिंर्य्यमःसꣳरराणोहवींꣳषि

पितॄणांवयंसुमतौस्याम । यज्ञियानां यज्ञसंपादिनाम् । अपिचभद्रे भन्दनीये सौमनसेकल्याणमनसे स्यामभवेम ॥ ५० ॥ येनः पूर्वे । येनःअस्माकंपूर्वेपितरः सोम्यासः सोमसंपादिनः तेषांपितॄणाम् अनुजह्निरे । वहमापणे । देवाननुप्रापितवन्तः सोमपीथंसोमपानम् । वसिष्ठाः वसिष्ठस्य बहून्यपत्यानि । वसिष्ठः पुनर्वसुतमः छतासदोवसति । तेभिः तैर्व-

सिद्धैः यमः संरराणः संप्रीयमाणः। ह्वयामि। कथंभूतोयमः उशन्। वशकान्तौ। असं-
कृतसंप्रसारणस्यैतद्रूपम् कामयमानः। कथंभूतैर्वसिष्ठैः उशद्भिः। कथमत्तु। प्रतिकामम्
यथाकामं भक्षयतु॥५१॥ त्वंसोम। हेसोम प्रचिकितः चिकित्वान् चेतनावान् प्रकर्षेण-
चेतनावान् विशिष्टचैतन्ययुक्तः त्वम्मनीषा। मनसईषामनीषामनस इच्छाविशिष्टतराभवतिय-

ष्युशन्नुशद्भिः प्रतिकाममत्तु॥५१॥ त्वꣳसोम॥ त्वꣳसोमप्रचिकि
तोमनीषात्वꣳरजिष्ठमनुनेषिपन्थाम्॥ तवप्रणीतीपितरोनऽइन्दो
देवेषुरत्नमभजन्तधीराः॥५२॥ त्वयाहि॥ त्वयाहिनःपितरःसो

स्त्वनाम्। यद्वा। हेसोम त्वं प्रचिकितः। कितज्ञाने प्रकर्षेणज्ञातासि। यावत् ज्ञात-
व्यम् मनीषामनीषयात्वया प्रज्ञया। त्वं रजिष्ठम् ऋजुतरं देवयानाख्यम् अनुनेषि अनुन-
यसि। पन्थां पन्थानम्। किंच। तवप्रणीती प्रणयनेन तवाभ्यनुज्ञानेन। पितरः नः अस्मा-
कम् हेइन्दोदेवेषु मध्येरत्नं रमणीयं यज्ञफलम् अभजन्तधीराः धीमन्तः॥५२॥ त्वया-

हिन: । यस्मात्त्वया आश्रयभूतेन न: अस्माकं पितर: हेसोमपूर्वेपूर्वजा: कर्माणिचक्रु. ।
कृतवन्त: हेपवमान। धीरा: धीमन्त:। अवअत: प्रार्थयेच त्वाम् वत्वान् संभजमान: तानि-
तानिकर्माण्यस्मदीयानि । अवात: वाताद्युपद्रवरहित: एकचित्त: । परिधीन् सर्वतोनिहि-
तान् यज्ञोपद्रवकारिण: अपोर्णु। ऊर्णुञ् आच्छादने। अपगमय। वीरेभि: वरैश्वाश्वैस्स-

सुपूर्वे कर्म्माणिचक्रुःपवमानधीराः ॥ वुन्वन्नवातःपरिधीँ२ऽरपोर्णु
वीरेभिरश्वैर्म्मघवाभवानः ॥ ५३ ॥ त्वꣳसोम ॥ पितृभिःसंविदानोनुद्यावापृथिवीऽआततन्थ ॥ तस्मैतऽइन्दोहविषाविधेमव्वयꣳस्यामपतयोरयीणाम् ॥ ५४ ॥ बर्हिषदःपितरः ॥ बर्हिषदःपित

हित: । मघवाधनवान् भवान:अस्माकम् । योयस्मद्दाति सतस्यधनवानितिमति: ॥ ५२ ॥
त्वंसोम। यस्त्वंहेसोमपितृभि: संविदान: संवादं कुर्वाण:। अनुद्यावापृथिवीआततन्थ। तनु-
विस्तारे अन्वातनोषि द्यावापृथिव्यौ दृढीकरोषिद्यावापृथिव्यौ । तस्मैतवहे इन्दोहविषावि-

घेम। हविरिदंमइतिवाक्यार्थः। वयंच हविः प्रदानानन्तरम्भवेमपतयो धनानांसोमवताम् पितॄणांपङ्कचम् ॥ ५४ ॥ वर्हिषदः। तिसृऋचो वर्हिषदाहविर्यज्ञयाजिनो। वर्हिषदःवर्हिषि सीदन्तीति वर्हिषदः पितरः। ऊतीऊत्या अर्वाक्अर्वाञ्चआगच्छत। कोहेतुरागमनइति चेत्। इमाइमानि वः युष्माकं हव्याहवींषि। चक्रम। तानिजुषध्वम् सेवध्वम्। येष्मयु-ष्माभि रधस्तनानि हवींष्यासेवितानि। तेयूयं पुनरप्याहूयमानाः आगताः अवसा अन्ने-

रऽउत्यर्वागिमावोहव्याचकृमाजुषद्ध्वम्॥ तऽआगतावसाशन्तमेनाथानुःशंय्योररपोदधात॥५५॥ आहम्॥ आहम्पितॄन्त्सुविदत्राँ२॥

नहविर्लक्षणेन। शन्तमेन। शमितिसुखनाम। सुखयितृतमेनहेतुभूतेन। अथपरितुष्टाः यज्ञसमाप्त्युत्तरकालम् नोस्माकम शंयोः पदद्वयमेतत्। शमनञ्च रोगाणांदधात। यावनञ्च भयानांदधात। अन्यदपियत्किञ्चित् अपरः अपापंतदस्माकंदधात ॥ ५५ ॥ आहम्। आत्र-वितिष आभिमुख्येनवेद्मिविदितत्वात्। अहंपितॄन् सुविदत्रान्। सुविदत्रः। कल्याणदानः। कल्याणदानान्। नपातंचविक्रमणंचविष्णोः। व्यासुयज्ञस्य। नविद्यतेयत्रोपगतानांपातः सन-

पातः देवयानःपन्थाः । विविधंक्रमणंयत्रगतानांसविक्रमणाः । पितृयाणःपन्थाः । तत्रहि अरघट्टघटीवत् उत्तराधरम् प्राणिनोगच्छन्ति । देवयानपितृयाणौपंथानौ यज्ञसंबन्धिनावहंवेद्मि । तद्गतांश्चपितॄन् । यत एवमतोब्रवीमि । वर्हिषदो येपितरः स्वधयाअन्नेन सहसवनीयलक्षणेन । सुतस्यअभिपुतस्य सोमस्यभजन्ते सेवन्ते । पित्वःपानं सोमपानम् तेइह अस्मिन्कर्मणि

ऽअवित्सिनपांतञ्चत्रिवक्रमंणाऽत्रुविष्णोंः ॥ वर्हिषदोयेसुधयासुतस्य भजंन्तपित्वस्तऽइहागंमिष्ठाः ॥५६॥ उपंहूताःपितरंः ॥ सोम्यासो वर्हिष्येषुनिधिषुप्रियेषुं ॥ तऽआगंमन्तुतऽइहश्रुंवन्त्वधिंब्रुवन्तु

आगमिष्ठाः आगच्छन्त्वित्याख्यातसन्ततिः ॥ ५६ ॥ उपहूताः पितरः सोम्यासः सोमसंपादिनः । वर्हिष्येषुनिधिषुप्रियेषु । हविर्विशेषणान्येतानि । वर्हिषिभवेषु वर्हिष्येषु वर्हिषिसादितेषु हविष्षु निधिभूतेषु पितॄणांप्रियेषु अभिरुचितेषु तेपितर एतत्ज्ञात्वा आगमन्तुआगच्छन्तु आगत्य च । ते इहश्रुवन्तु शृण्वन्तु अस्मदीयानिवचांसि । श्रुत्वाच अधिब्रुवन्तु यद्वक्तव्यं पितृभिः पुत्रा-

णाम् तेच अवन्तु रक्षन्तु सर्वतः अस्मान् ॥५७॥ आयन्तुनः। चतस्रोग्निष्वात्तेभ्यः। आयन्तु आगच्छन्तु नः अस्माकंपितरः। सोम्यासः सोमसंपादिनः। अग्निष्वाताः पुनः यान् अग्निरेवस्वदयति। नष्टितेयौतस्मात्तंकर्मकारिणः। पथिभिर्देवयानैः। देवसहगमनैः। देवसहयायिनस्तेपितरो येपामेतत्कर्मक्रियते पुत्रपौत्रप्रपौत्रैः। उक्तञ्च। पुत्रेणालोकंजयति पौत्रेणान-

तु वन्त्वस्मान् ॥५७॥ आयन्तु॥ नः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः॥ अस्मिन्यज्ञेस्वधयामदन्तोधिब्रुवन्तुते वन्त्वस्मान् ॥५८॥ अग्निष्वात्ताः पितरऽएहगच्छतसदः सदः सदतसुप्रणीतयः॥ अत्ताहवींषिप्रयतानिबर्हिष्यथारयिꣳसर्ववीरन्द

न्तमश्नुते। अथपुत्रस्यपौत्रेण ब्रध्नस्याप्नोति विष्टपमिति। आगत्यच। अस्मिन्यज्ञे स्वधयाअन्नेन मदन्तः तृप्यन्तः। परिपुष्टाअधिब्रुवन्तु। तेवन्त्वस्मानितिव्याख्यातम् ॥५८॥ अग्निष्वात्ताः पितरः आइहगच्छत। आगच्छतइह। एत्यच। सदः सदः गृहंगृहं प्रतिसदत

उपनिषत। हेसुप्रणीतयः माधुप्रणयन.। ततः सुखोपविष्टाः अत्तभत्तयत। हवींषिप्रयतानि व्यपगतरागद्वेषमोहैरभिसंस्कृतानिशुचीनि। वर्हिषिअन्नानि। अथत्वम्राः सन्तः रयिंःन सर्ववीरंदधात। न। नकारउपमन. ॥ ५९ ॥ येअग्निष्वात्ताः। येपितरः अग्निष्वात्ता अग्निनाआस्वादिताः। येच अनग्निष्वाताः श्मशानकर्मोप्राप्ता.। मध्येदिवः द्युलोकस्यस्वध-

धातन ॥ ५९ ॥ येऽअग्निष्वात्तायेऽअनग्निष्वात्तामध्येदिवःस्वधयामादयन्ते ॥ तेब्भ्यःस्वराडसुनीतिमेतांयथावशन्तन्वङ्कल्पयाति ॥ ६० ॥ अग्निष्वात्तानृतुमतः॥ अग्निष्वात्तानृतुमतोहवाम

थात्त्रकर्मफलोपभोगेन मादयन्तेसुखंसंसेवन्ते। तेभ्य.। तेषामितिविभक्तिव्यत्ययः। स्वराट् स्वयमेवराजनइतिस्वराट्। अकृतकैश्वर्योयः सस्वराडुच्यते। असुनीतिम् एताम् आत्मनोद्वितीयं सहायंकृत्वा। अमून्प्राणान्नयतीत्यसुनीतिः। एताम् एतमितिलिङ्गव्यत्ययः। यथाकामंयथारुचितन्वंशरीरं कल्पयातिकल्पयतु ॥ ६० ॥ अग्निष्वातान्। अग्निष्वातान् पितॄन् ऋतुमतः

मत्तुसंयुक्तान् श्यामहेत्राह्वयामः। नाराशंसेचमसे। सोमपीथंसोमपानम् येआशः प्रापुः। नाराशंसेचमसे पितॄणांभक्षः श्रूयते। अथर्यादिनाराशंसेषु सन्नइत्युपक्रम्य। पितृभ्योनाराशंसेभ्यइति। तेचाह्वयमानाः विप्रासः मेधाविनः सुहवाः स्वाह्वाना भवन्तु। एवंकृतेवयंस्याम पतयोरयीणाम् ॥ ६१ ॥ आच्याजानु। दशर्चोनुवाकः। तत्र नवपित्राद्यस्यैन्द्री-

हेनाराशुᳬसेसोमपीथंयऽआशुः ॥ तेनोविप्रासःसुहवाभवन्तुवयᳬस्यामपतयोरयीणाम् ॥ ६१ ॥ [ १३ ] आच्याजानु ॥ दक्षिणतोनिषद्येमंयज्ञमभिगृणीतविश्वे ॥ माहिᳬसिष्टपितरःकेनचिन्नो

गायत्री। द्वितीयाष्टतीयेनवमीचानुष्टुभः। त्रिष्टुभइतराः। पितरउच्यन्ते। आच्याजानु सव्यंजानुपातयित्वा। दक्षिणतोनिपद्य दक्षिणतोवस्थानंकृत्वा। रूपतोयं निर्देशः। एवं स्वभावोच्यते। अथेन पितरः प्राचीनावीतिनः सव्यंजान्वाच्योपासीदितिश्रुतिः। इममस्मदीयं यज्ञम् अभिगृणीत अभिष्टुवतदक्षिणामन्त्रकालकर्तृहविर्यजमानोत्कर्षैः साध्वयं यज्ञइति।

विश्वेमवेंसोमवन्तः वर्हिषदः अग्निष्वात्ताश्च। माचहिं सिष्ट। माचहिं सांकुरुत। हेपितरः। केनचिदपि नः अस्मान् यत्यद्यापि वः युष्माकम् आगः अपराधः आगः शब्दः सान्तोनपुंसकलिंगोपराधवचनः। पुरुषता। विभक्तिलोपः। पुरुषत्वेनचलचित्ततया। करामकर्मः ॥ ६२ ॥ आसीनासः। येयूयमासीनाः अरुणीनाम् अरुणवर्णानाम् अरुणवर्णाहिता ऊर्णाभवति याभिः

यद्वऽआगःपुरुषताकराम ॥ ६२ ॥ आसीनासोऽअरुणीनाम् ॥ आसीनासोऽअरुणीनामुपस्थेरयिन्धत्तदाशुषेमर्त्याय ॥ पुत्रेभ्यःपितरुस्तस्यवस्वःप्रयच्छततऽइहोर्जन्दधात ॥ ६३ ॥ यमग्ने ॥ कव्यवाहन

कृतपाः क्रियन्ते। कुतपमियाश्चपितरः। कुतपञ्चासनेदद्यादितिस्मृतिः। यद्वा अरुणवर्णानाम् रश्मीनाम् उपस्थेउत्संगेआसीना आदित्यलोकजितः पितरउच्यन्ते। रयिन्धनम् धत्त-दत्त। दाशुषेहवींपि दत्तवतेयजमानाय मर्त्यायमनुष्याय। पुत्रेभ्यश्चहेपितरः। यजमानार्थं पुत्रवचनम्। सर्वेहिपितॄणां पुत्रायजमानाः। तस्ययजमानस्य वस्वः प्रयच्छतदत्त। यदभि-

प्रेतंवसुनोधनस्यच दूहत्यसदीयेयत्ते ऊर्जं दधातस्थापयत ॥ ६३ ॥ यमग्ने काव्यवाहन। स्विष्टकृदग्निरुच्यते। चतसृभिऋग्भि। हे अग्ने कव्यवाहन। कव्यं वोढव्यमेत्ययमभिकारोयस्य सएवंसंबोध्यते। यंरयिंहविर्लक्षणं धनम् त्वंचित् त्वमपिमन्यसे अवगच्छसि। साधुश्रयते तेनयेय: माप्तुमिति। तंहविर्लक्षणं रयिंधनम् न: अस्माकं स्वभूतम् गीर्भि: वाग्भि: पुरो-

त्वंचिन्मन्यसेरयिम् ॥ तन्नोगीर्भिःश्रवाय्यंन्देवत्रापनयायुजम्॥ ६४ ॥ योऽअग्निः ॥ कव्यवाहनःपितॄन्यक्षदृतावृधः ॥ प्रेदुहव्यानिवोचतिदेवेभ्यश्चपितृभ्यऽआ ॥ ६५ ॥ त्वमग्ने ॥ त्वमग्नऽई

नुवाक्यायाज्यानपट्कारलक्षणाभि:। श्रवाय्यम् हविर्विशेषणमेतत् श्रवणीयम् देवत्रादेवेभ्य: पनयदेहि। पनतिर्दानकर्मा। युजंयथायोगम् ॥ ६४ ॥ योअग्नि: काव्यवाहन: कव्यं पितॄणांहविरुच्यते.। यक्षहवि: पितॄन् यक्षत् इष्टवान् ऋतावृध: सत्यवृधोवा यज्ञवृधोवा। द्वितीयाबहुवचनमेतत् सइदानीम प्रेदुहव्यानिवोचति। प्रवोचतिप्रब्रवीतु हव्यानिहवींषि। देवेभ्यश्चपितृभ्यश्च। समुच्चयार्थीयश्चाकार:। देवेभ्यश्चपितृभ्यश्च। इमानिदेवेभ्य इमानिपितृ-

भरइति ॥ ६५ ॥ त्वमग्ने । यस्त्वं हे अग्ने ईडितः अधेषितः सन् कव्यवाहनअवाट् वह- मापये । अस्यैतद्रूपम् । ऊढवानसि । हव्यानिहवींषि । सुरभीनिसुगन्धीनि । कृत्वीकृत्वा । कृत्वाहवींषि । प्रादाः प्रदत्तवानसिपितृभ्यःस्वधयापितृमंत्रेण । तेचपितरः । अक्षन् अत्तवन्तोभक्षितवन्तः । अद्धिभक्षय त्वं हे देव । प्रयताप्रयतानिशुचीनि । हवींषि ॥ ६६ ॥

ईडितःकव्यवाहनावाड्ढव्यानिसुरभीणिकृत्वी ॥ प्रादाःपितृभ्यःस्वधयातेअक्षन्नद्धित्वन्देवप्रयताहवींषि ॥ ६६ ॥ येचेह ॥ येचेहपितरोयेचनेहयाँश्चविद्मयाँ२ ॥ उचनप्रविद्म ॥ त्वंवेत्थयतितेजातवेदःस्वधाभिर्यज्ञसुकृतञ्जुषस्व ॥ ६७ ॥ इदम्पितृभ्योनमोऽ

येचेह । येपितरइहास्मिन्समीपे इहवालोके आसते । येचनेह । यान्चपितॄन् विद्मः अव- गच्छामः यान् उइतिनिपातः पादपूरणः । चनप्रविद्मः नप्रजानीमः । त्वंवेत्थ यतितेजात- वेदः । तेषञ्छ्ः आदौक्रियतेद्वितीयान्तोवाक्यस्यवशीयस्त्वात् । तान्तुवेत्थवेत्सिजानासि । यति ।

अविभक्तिकोनिर्देशः। यतीन् शुचीन् नित्यनैमित्तिककर्मकरणान्निर्दग्धकल्मषान्। हे जातवेदः। अतएवशुच्यसे। स्वधाभिः पितृसंवद्धैः त्रिभिः यज्ञपितृयज्ञम् सुकृतंसाधुकृतम् जुषस्वसेवस्व॥६७॥

इदंपितृभ्यः। इदमितिप्रत्यक्षतोनिर्देशः। पितृभ्योनमः अन्नंहविर्लक्षणम् अस्तु। अ द्यअद्यतनम् येपितरः पूर्वासःपूर्वमीयुःस्वर्गम् येच उपरासःउपरतव्यापाराः कृतकृत्याः परंब्रह्मईयुर्याताः।

अस्वद्यपूर्वासोयऽउपरासऽईयुः॥ येपार्थिवेरजस्यानिषत्तायेवानून॑संवृजनासुविक्षु॥६८॥ अथायथा॥ नऽपितरऽपरासऽप्रत्नासोऽअग्नऽऋतमाशुषाणाः॥ शुचीदयन्दीधितिमुक्थशासऽक्षामाभिन्द

येच पार्थिवेरजसि। पृथिव्यांभवंपार्थिवं रजःज्योतिरग्निःतत्र आनिषत्ताः आभिमुख्येननिषण्णाः। अग्निलोकंप्राप्ता इत्यर्थः। येवायेच नूनंनिश्चयेन सुवृजनासु। साधुवृत्तासुविक्षु यजमानेषुनिषण्णाः। तेभ्यइदंपितृभ्योनमो अस्त्वद्येतिसंबन्धः॥६८॥ अथायथा। अथैवंसतियथायेन प्रकारेण नःअस्माकंपितरः परासःपराएवपरासःउत्कृष्टाः प्रत्नासः। प्रत्नशब्दःपुराणवचनः।

पुराणाः हेअग्नेत्वतंयज्ञम् आशुपाणाः अश्मुर्मीनाःव्यापुवन्तः । शुचिअविभक्तिकोनिर्देशः । शुचिन्दीप्तंभास्वरम् । इच्छब्दएवार्थे । अयन्आगताःप्राप्ता. । दीधितिम् आदित्यरश्मिम् ततआदित्यमण्डलम् एषहिदेवयानःपन्थाः । उक्थशासःउक्थानियेशंसन्तियज्ञेषु तेउक्थशासः पितॄणांविशेषणमेतत् एवंवयमपि हेअग्नेत्वत्प्रसादात् द्यामाभिन्दन्तः । द्यामाअविभक्तिकोनिर्देशः । द्यामांपृथिवींभिन्दन्तः वेदिचात्वालयूपावटादिखननैः । यद्वा पृथिव्याअयाणियज्ञेव्रीहिपशुयूपादीनि-

न्तोऽअरुणीरपव्रन् ॥ ६९ ॥ उशन्तंस्त्वा ॥ उशन्तंस्त्वानिधीमह्युश
न्तुःसमिंधीमहि ॥ उशन्नुशतऽआवंहपितृन्हविषेऽअत्तंवे ॥७०॥

भिन्दन्तः । यज्ञंसर्वोपकारणमनुतिष्ठन्तइत्यर्थः । अरुणीः आरोचनाः । रश्मिन्अपव्रन् अपवृणुमः अप्रवृत्यच रश्मीन् देवपन्यानमनुतिष्ठामइत्यर्थः ॥ ६९ ॥ उशन्तस्त्वा । वशकान्तौ अस्यक्तसंप्रसारणस्यैतद्रूपम् । हेअग्ने यतोवयमुशन्तः कामयमानाः त्वांनिधीमहिस्थापयामहे । यतश्च उशन्तः कामयमाना एवसमिधीमहिसंदीपयामः । यतस्त्वमपि उशन्कामयमानएव । उशतः कामयमानानेवआवह पितृन् । किमर्थमितिचेत् । हविषेअत्तवे हविषःअदनाय ॥ ७० ॥ अथैन्द्रोमन्त्रः

सोमोराजीत्स्यनिदानभूतः पठ्यते । अपांफेनेन । तृतीयपादप्रभृतिव्याख्यानं यच्छन्दयोगात् । विश्वा:स्पर्धा: यत् । यदा अजय:स्पृधः । संग्रामान् । अथतदाअपांफेनेन फेनपुञ्जेननमुचेः असुरस्यशिरः हेइन्द्र त्वमुदवर्तयः । उद्वर्तितवानसि । उत्पूर्वोवृत्तिःछेदनेवर्तते ॥ ७१ ॥ इदा-

अपाम्फेनेन ॥ अपाम्फेनेनुनमुचेःशिरऽइन्द्रोदवर्तयः ॥ विश्वायद जयुस्पृधः ॥ ७१ ॥ [ १० ] सोमोराजा ॥ सोमोराजामृतᳪसुतऽऋजीषेणाजहान्मृत्युम् ॥ ऋतेनसत्त्यमिन्द्रियम्विपानᳪशुक्रमन्धसऽइ

नीमेतच्च मन्त्रंवक्ष्यमाणंचानुवाकंश्रुतिसंवध्नाति । तस्यशीर्षेछिन्नेलोहितमिश्रः (१) सोमोतिष्ठत्तस्मा तदबीभत्सते एतदन्धसोविपानमपश्यत्सोमोराजामृतंसुतइति तेनैनंस्वदयित्वात्मन्नदधतेति । सोमोराजा । अष्टौग्रहोपस्थानमश्विसरस्वतीन्द्रा अपश्यन् । आद्यास्तिस्रो महाबृहत्यः पंक्ति-

(१) का० सोमो राजेत्यनुवाकेन ग्रहानुपतिष्ठते युगपत्। अष्टर्चेनानुवाकेन समानकालमेव पयोग्रहान् सुराग्रहांश्चाध्वर्युरुपतिष्ठतेयद्वा चतुर्भिः पयोग्रहांश्चतुर्भिः सुराग्रहान् ग्रहणानन्तरमेवोपस्थानम् मन्त्रपाठक्रमादवालेखीतार्थः।

चतुर्थीअन्ते अतिजगत्यौ शेषेअतिशक्वर्यौ। यथाएककारणानि वसूनिविविच्यमानानिदृश्यन्ते । यथापृथग्भूतानि संसृज्यानि पुनर्विवेच्यमानानिदृश्यन्ते । एवमयमपि लोहितमिश्र.सोमः सोम-एवेत्यनुवाकार्थः । सोमोराजा । सोम.राजासुतःअभिषुतः अमृतंसंपद्यते रसीभावात् स्थूलहि-सूक्ष्मताममृतीभावः। ऋजीषरूपेण चाजहात् त्यजति मृत्युमूर्तत्वाद्दजीषभावस्यसर्व्यमेतत् अनेनच

न्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥७२॥ अद्भ्यः क्षीरम् ॥ अद्भ्यः क्षी रंव्यपिबत्क्रुङ्ङाङ्गिरसोधिया ॥ ऋतेनंसत्यमिन्द्रियंविपानंशुक्रम न्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ७३ ॥ सोमंमद्भ्यः ॥ सो मंमद्भ्योव्यपिबच्छन्दसाहुंसः शुचिषत् ॥ ऋतेनंसत्यमिन्द्रिय

ऋतेनसत्येनसत्यमेतत्सञ्जातम् इन्द्रियंवीर्यं विपानंविविक्तं लोहितात्सोमपानं पानयोग्यंवाविपानम् शुक्रंरजोहितम् अन्धसःअन्नात्संभूतम्भूयात्। अथ इन्द्रस्यइदमिन्द्रयं पयःअमृतंमधुभवतु ॥ ७२ ॥ अद्भ्यःक्षीरम् । क्षीरोदकयोःसंसृष्टयोः अद्भ्यःसकाशात् क्षीरंवियुत्यअपिबत्पीतवान् । क्रुङ हंसः

ईसजातिमाम्याय आङ्गिरसःप्राणः । सद्माङ्गानांरसः । धियाप्रज्ञया इत्थंभूताहितस्यप्रज्ञा तस्यां-
वात्यामेवस्थितस्यभवति । सत्यमेतत् । अनेनऋतेन सत्यमिन्द्रियंविपानं शुक्रम्अन्धसः संभूतंभूयात्
अथइन्द्रस्यइन्द्रियं विपानममृतं मधुभूयात् ॥ ७३ ॥ सोममङ्गाः । सोमोदकयोःसंसृष्टयोः सोमंवि-
युत्यापिवत् अङ्गाःसकाशात् । छन्दसाछन्दोनिवद्धेनवेदेन । हंसआदित्यः शुचिषत् । एतत्सत्यम्

मिन्द्रपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ७४ ॥११००
कंरिड ॥०॥ अन्नात्परिस्रुतः ॥ अन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपि
बत्क्षत्रम्पयꣳसोमम्प्रजापतिः ॥ ऋतेनसत्यमिन्द्रियम्विपानꣳशुक्रम
न्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ७५ ॥ रेतोमूत्रम् ॥ रेतो

ऋतेनेत्यादिसमानम् ॥७४॥ अन्नात्परिस्रुतः । अन्नाद्यविलक्षणात् संपरिस्रुतस्य रसंब्रह्मणात्रयीलक्षणेन
व्यपिवत् । क्षत्रंव्यपिवत् क्षत्रस्यपानंवशीकरणम् पयःसोमम् प्रजापतिःप्रथमशरीरी । सत्य-
मेतत् ऋतेनसतामितिसमानम् ॥ ७५ ॥ रेतोमूत्रम् । व्यवहितपदप्रायः । रेतःविजहातित्यजति ।

योनिंस्त्रीप्रजननम् प्रविशत्इन्द्रियंशिश्नम् । योनिप्रवेशादन्यत्र मूत्रंविजहाति । तुल्यद्वारयोरपिमूत्ररेतसो मूत्रस्थानंहित्वान्यत्रावतिष्ठते रेतः। सत्यमेतत् ततः। गर्भोजरायुणाआवृतःवेष्टितः। जरायुंचउल्वंचविजहातित्यजति । जन्मनाप्रसवेन सत्यमेतत् । नानास्थानानामेकद्वाराणां प्रथमसुदाहरणम् एकस्थानानामनेकद्वाराणांद्वितीयम् । ऋतेनेतिव्याख्यातम् ॥ ७६ ॥ दृष्ट्वारूपे ।

मूत्रञ्जहातियोनिम्प्रविशदिन्द्रियम् ॥ गर्ब्भौजरायुणावृतऽउल्वञ्जहातिजन्मना ॥ ऋतेनसत्यमिन्द्रियंविपानᳬंशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ७६ ॥ दृष्ट्वारूपे ॥ व्याकरोत्सत्यानृतेप्रजापतिः ॥ अश्रद्धामनृतेदधाच्छ्रद्धाᳬंसत्येप्रजापतिः ॥ ऋते

दृष्ट्वाउपलभ्यरूपेसत्यानृतयोः। इदंसत्यमेवंरूपमिदमनृतमेवंरूपमितिव्याकरोत् । व्याकरणंपृथक्कार्यावस्थानम्। कथंव्याकरोत् । अश्रद्धाम् अनृतेअदधात् अनृतनिमित्तत्वात् अश्रद्धायाः । श्रद्धामास्तिक्यम् सत्ये । कःअदधात्। प्रजापतिः। सत्यमेतत्ऋतेनेतिव्याख्यातम् ॥ ७७ ॥ वेदेनरूपे ।

वेदेनपरिज्ञानेनव्याबाविद्यया। रूपेसुतासुतयोः व्यपिवत्। सुतःसोमउच्यते पयश्चासुतः। परिस्रु प्रजापतिः। सत्यमेतत् अनेनऋतेनेतिव्याख्यातम्॥ ७८॥ दृष्ट्वापरिस्रुतः। रसंशुक्रंशाश्रमलेन-

नंसत्यमिन्द्रियंव्विपानंꣳशुक्क्रमन्धंसऽइन्द्रंस्येन्द्रियमिदम्पयोमृतम्म धु॥ ७७॥ व्वेदेनरूपे॥ व्यंपिबत्सुतासुतौप्रजापतिः॥ ऋतेनंस त्यमिन्द्रियंव्विपानंꣳशुक्क्रमन्धंसऽइन्द्रंस्येन्द्रियमिदम्पयोमृतम्मधु॥ ७८॥ दृष्ट्वापरिस्रुतः॥ दृष्ट्वापरिस्रुतोरसंꣳशुक्क्रेणंशुक्क्रव्व्यंपिबत्प यःसोमंम्प्रजापतिः॥ ऋतेनंसत्यमिन्द्रियव्विपानंꣳशुक्क्रमन्धंसऽइ न्द्रंस्येन्द्रियमिदम्पयोमृतम्मधु॥ ७९॥ [८] सीसेनतन्त्रंम्॥ सी

शुक्रममलम्। वियुत्यअपिवत् पयश्चसोमंचद्वेप्रजापतिः। सत्यमेतत्। ऋतेनेतिव्याख्यातम्॥ ७९॥

(१) खुरैर्वसायग्रहान्द्वात्रिंशतं जुहोति । सीसेनेति प्रत्यृचम् । षोडशजगत्यः । यथेन्द्रस्यभैषज्यं क्रियते तथात्राभिरुच्यते । यज्ञः पटेनरूप्यते प्रथमायामृचि । सीसेन ऊर्णासूत्रेणाच तन्त्र मिवपूर्वा-परैः सूत्रैर्द्वित्रिगोत्तरैश्च वयन्तियज्ञम् कवयन्ति । मनीषिणः मेधाविनः । कवयः क्रान्तद-

सीसेनतन्त्रम्मनसामनीषिणऽऊर्णासूत्रेणकवयोव्वयन्ति ॥ अश्विनायज्ञꣳसवितासरस्वतीन्द्रस्यरूपव्वरुणोभिषज्यन् ॥ ८० ॥ तदस्य ॥ रूपममृतꣳशचीभिस्तिस्रोदधुर्देवताꣳसꣳरराणाः ॥ लोमानिशष्पै

र्शनाः । मनसापर्यालोच्या । गुणतउक्ता यथेदानीं नामतआह । अश्विनौ सविता सर-स्वतीवरुणश्च मिमथं पुरस्कृत्ययज्ञं वयति इन्द्रस्य रूपंभिषज्यन् ॥ ८० ॥ तदस्य । तत् अस्ये-न्द्रसारूपम् अमृतममरणधर्मि । शचीभिः कर्मभिः । तिस्रोदेवताः सन्दधुः । संरराणाः ।

(१) का० खुरैर्वसाग्रहान्द्वात्रिंशतं जुहोति सीसेनेति प्रत्यृचम् । पञ्चपलो गृह इतिपरिशिष्टोक्तैः ऋषभखुराणां महत्त्वाद्वृषभैः खुरैः पशूनां वसां गृहीत्वा सीसेनेति प्रतिमन्त्रं द्वात्रिंशत्संख्या सुराग्रहान् जुहोति एकेन मन्त्रेण द्वयहोम इत्यर्थः ।

अश्विनौसरस्वतीच। कथं सन्दधुः। लोमानितावत् शष्पैः सन्दधुः। बहुधानतोक्मभिस्त्व-
गस्य नकारः समुच्चये आश्वध्यायसमाप्तेः। त्वचमितिविभक्तिव्यत्ययः बहुधानतोक्मभिस्त्वच
मस्येन्द्रस्य सन्दधुः। मांसम् अभवल्लाजाः ॥ ८१॥ तदश्विना तत् पेशः रूपम् इन्द्रस्य।
अश्विनौभिषजौ। रुद्रवर्त्तनी। रुद्रस्येववर्त्तनिर्मार्गोययोस्तौ रुद्रवर्तनीरुग्णवर्त्तनीवा। रोरूयमाणौ

व॑हुधानतोक्क्मभि॒स्त्वग॑स्यमा॒ᳪसमभव॒न्नला॒जाः ॥ ८१ ॥ तद॒श्वि
ना॑ ॥ भि॒षजा॑रु॒द्रव॑र्तनी॒सर॑स्वतीव्वयति॒पेशो॒ऽअन्त॑रम् ॥ अ॒स्थिम॒
ज्जान॒म्मास॑रैःकारोत्त॒रेण॒दध॑तो॒गवा॒न्त्वचि ॥ ८२ ॥ सर॑स्वती॒मन॑सा ॥
पेश॒लम्व्वसु॒नास॑त्याभ्यां॒व्वयति॒दर्श॒तंव्वपुः॑ ॥ रसं॒म्परि॒स्रुता॒नरो॒हि॑

वर्त्तेतेइति वा। सरस्वतीच। वयतिवयन्ती। बहुवचनमेकवचनस्य। संवध्नन्ति अन्तरमभ्यन्त-
रम्। किं वयन्ति। अस्थिचमज्जानंचतावत् मासरैश्च कारोतरेणाच यथाक्रमंवयन्ति। किं
कुर्वाणाः। दधतः स्थापयन्तः। गवांत्वचिचर्मणि सुराम् ॥ ८२ ॥ सरस्वती मनसा। सरस्वतीमनसा

पर्य्यालोच्य । पेशलम् पेशइति हिरण्यनामरूपनामच । हिरण्यवद्दारूपवद्वा । वसुनासत्याभ्यांच सहितावयतिपटमिवस्वजति । दर्शतंवपुः दर्शनीयंवपुःशरीरम् इन्द्रस्य । रसम्परिस्रुतानरोहितम् । सरंचपरिस्रुतासरस्वतीनासत्याभ्यामश्विभ्यां सहितावयति । वपुषोरञ्जनार्थम् । अतोरोहितम रोहितइन्द्रोवेदेपुपठ्यते । अथतदानग्नहुः किञ्च धीरःधीमान् । तसरंनवेम तसरंचवेमचसम्पद्यते ।

तन्नुग्नहुर्धीरस्तसरन्नवेम ॥ ८३ ॥ पयसाशुक्रम् ॥ पयसाशुक्रम् मृतञ्जनित्वꣳ सुरयामूत्रांज्जनयन्तुरेतः ॥ अपामतिन्दुर्मतिम्बाध मानाऽऊवध्यम्वातꣳसब्वन्तदारात् ॥ ८४ ॥ इन्द्रःसुत्रामाहृदयेन

नग्नहो.कर्तृत्वमात्रम्विवक्षितम् विवक्षातःकारकाणिभवन्ति । तसरंवेमचकुविन्दानांप्रसिद्धम् तसरम्वयनसाधनं ॥ ८३ ॥ पयसाशुक्रम् । पयसादुग्धेन कारणभूतेन शुक्रञ्चअमृतंच । जनित्वम् आजन्मजनयन्तः अश्विनौसरस्वतीचप्रकृतत्वात् । इन्द्रस्तुभैषज्यः सुरयाच । मूत्रात्मूत्रमितिसाधु। सूत्रञ्चरेतश्चजनयन्त । किञ्च । अपातिन्दुर्मतिम् वाधमानाः । अपवाधमानाः अमतिममननंवध्यभाव-

न्दुर्मतिश्च । जवज्ञाम् । आमाशयगतमन्नंवातम् तत्सहचरितं सन्मपक्वाशयगतमशुचिः । तदारात् तदेतत् सुरयाजनयन्त । आरात् सुरासन्निकर्षात् । संनिकर्षोंत्त्विगन्धादिभिः ॥ ८४ ॥ इन्द्रःसुत्रामा । पुरोडाशदेवता इन्द्रंभिषज्यन्ति । इन्द्रःसुत्रामाहृदयेन । हृदयमितिविभक्तिव्यत्ययः इन्द्रस्यजज्ञानजनयति । सत्यम् इन्द्रस्यपुरोडाशेनसविताजनयति । यक्तान्नक्लोमानञ्चजनयति वरुणः

स॒त्यम्पु॑रो॒डाशे॑नसवि॒ताज॑जान ॥ य॒कृत्क्लो॒मान॒व्वरु॑णोभि॒षज्य॒न्म॑तं॒स्नेव्वा॑यु॒व्व्यै॑र्न्नमि॑नातिपि॒त्तम् ॥ ८५ ॥ आ॒न्त्रा॒णि॑स्था॒लीः ॥ आ॒न्त्रा॒णि॑स्था॒लीर्म्म॒धुपिन्व॑माना॒गुदाः॒पात्रा॑णि॒सु॒दुघा॒नधे॒नुः ॥ श्ये

इन्द्रस्याभिषज्यमतस्नेच पित्तञ्चवायव्यैः ऊर्द्धपात्रैः ऊर्द्धपात्राणांसौमिकानां वायव्यानीतिउक्तम् । नमिनातिनिर्मिमीतेसृजति ॥ ८५ ॥ आंत्राणिस्थालीः । स्थाल्यःआंत्राणिअभवन् । किंकुर्वाणाः मधुपिन्वमानाः । पिन्वतिःसेचनार्थः । गुदाःपात्राणिअभवन् । सुदुघाचधेनुः दक्षिणाचआदित्यस्येष्टेः गुदाएवअभवन् । श्येनस्यच पत्रंप्लीहाअभवत् । शचीभिः कर्मभिः । आस-

न्दीनाभिः इन्द्रस्य उदरश्चमसाताच । आसन्दीस्रोभिपिच्यते अतस्ततोजायते ॥ ८६ ॥ कुम्भो-
वनिष्ठुः । सुरासन्धानकुम्भोवनिष्ठुर्जनिताचजनकश्च । शचीभिः स्वकीयैरेवकर्मभिः ।

नस्युपञ्चन्नस्रोहाशचीभिरासन्दीनाभिरुदरन्नमाता ॥ ८६ ॥ कुम्भो
व्वनिष्ठुः ॥ कुम्भोव्वनिष्ठुर्ज्जनिताशचीभिर्य्यस्मिन्नग्ग्रेयोन्याङ्ग
र्भोऽअन्तः ॥ प्लाशिर्व्यक्तःशतधारऽउत्सोदुहेनकुम्भीस्वधाम्पित्
भ्यः ॥ ८७ ॥ मुखꣳसत् ॥ मुखꣳसदस्यशिरऽइत्सतेनजिह्वापवि
त्रमश्विनासन्त्सरस्वती ॥ चप्पन्नपायुर्भिषगस्यवालोवस्तिर्न्न

यस्मिन्कुम्भे अग्रेप्रथमंयोन्याङ्गर्भः । अन्तर्मध्येसुरालक्षणः उषितः । किञ्च । (१) प्लाशिर्व्यक्तः ।
स्पष्टः शतधार उत्सः कूपः वहुस्रोतत्वात्कूपउक्तः । दुहेनकुम्भीस्वधांपितृभ्यः ॥ ८७ ॥ मुखं-
सत् । यत्रेन्द्रस्य मुखंसत् । एकदेशलोपः सन्तमितिप्राप्ते । तथाच श्रुतिः । मुखंसन्त-

(१) प्लाशिःशिश्नोभवत् ।

मस्रजिह्वापवित्रं चप्यंनपायुर्वस्तिर्वालइति। शिरइत्सतेनजिह्वापवित्रम् अश्विनी आसन् आसेर-
सरस्वतीच। चप्यंचपायुः भिषगस्यवालः वस्तिश्चशेपोहरसातरस्वी। वालस्यविधापरिणामः
वेदग्यश्चशेपश्च। यदिनामशेपः हरसावीर्येणतरस्वीवेगवान् ॥ ८८ ॥ अश्विभ्यांचक्षुः।
अश्विभ्यामिन्द्रस्यचक्षुःसंस्क्रियते। तदेवामृतम्। ग्रहाभ्या मश्विदेवत्याभ्याम् छागेन तेजः

शेपोहरसातरस्वी ॥ ८८ ॥ अश्विभ्याञ्चक्षुः ॥ अश्विभ्याञ्चक्षुरमृ
तङ्ग्रहाभ्याञ्छागेनतेजोहविषाशृतेन ॥ पक्ष्माणिगोधूमैःकुवलैरुता
निपेशोनशुक्रमसितंवसाते ॥ ८९ ॥ अविर्न ॥ मेषोनसिर्वीर्याय

चक्षुषः क्रियते। कथंभूतेनछागेन हविषाशृतेन। हविर्भूतेनपक्वेन। अपरम् पक्ष्माणि-
चक्षुषः लोमानिगोधूमैः संस्क्रियते। कुवलैर्बदरविशेषैः उतानिनिविष्टानि पक्ष्मसुरोमाणिसं-
स्क्रियते। पेशोनशुक्रमसितंवसाते। पेशोमरूपंचचक्षुषः शुक्रं शुक्लम् असितंकृष्णञ्चवसाते। आच्छा-
दयेते प्रकृतत्वादश्विनी ॥ ८९ ॥ अविर्न। अविश्चमेषः सारस्वतः। नसिनासिकायाम् वीर्याय-

अवस्थितः। प्राणस्यच पन्थामार्गः अमृत. ग्रहाभ्यां सारस्वताभ्यांक्रियते। सरस्वतीच उप-वाकैः व्यानञ्जनानजनयति। नस्यानिनासिकाप्रभवानिच बर्हिः वदरैः जनयति॥ ९० ॥ इन्द्रस्य रूपम्। इन्द्रस्यरूपं संस्करोति ऋषभः बलायावतिष्ठते। कर्णाभ्यांश्रोत्रम् अतीतानागतवर्त्तमानशब्दग्राहि। अमृतम् ग्रहाभ्यामैन्द्राभ्यांस्थापितम्। यवाश्चबर्हिश्च। भ्रुविकेस-

प्राणस्यपन्थाऽअमृतोग्रहाभ्याम्॥ सरस्वत्युपवाकैर्व्यानन्नस्यानि बर्हिर्वदरैर्जजान॥ ९०॥ इन्द्रस्यरूपम्॥ इन्द्रस्यरूपमृषभोबलाय कर्णाभ्याᳬंश्रोत्रममृतङ्ग्रहाभ्याम्॥ यवानबर्हिर्भ्रुविकेसराणि कर्कन्धुयज्ञेमधुसारघम्मुखात्॥ ९१॥ आत्मन्नुपस्थे॥ आत्मन्

राणि। भ्रुवोः लोमान्यभवन्। कर्कन्धुचयज्ञे मधुसारघम् मुखात्। कर्कन्धुवदरम् यज्ञे-स्वयमेवयज्ञे इन्द्रस्यमुखात्। मधु। लालाश्लेष्मादिमधुशब्देनोच्यते सादृश्यात्। सारघम्। सरघाः भ्रमराः। यथासारघम् मधु द्रुतश्चेतस्माद्धृतंभवति। एवं लालादिसर्वस्मादङ्गाङ्ग-

यति ॥ ९१ ॥ आत्मन्नुपस्थे। आत्मनिउपस्थेच यानिलोमानि तानिवृकसञ्ज्ञलोमानि। लोमेतिजातावेकवचनम्। मुखेश्मश्रूणिचयानितानिव्याघ्रसञ्ज्ञलोमानि। केशानशीर्षन्। येच-केशाः शिरसियशसेनिहिताः याचश्रियैशिखानिहिता याचत्विषिः दीप्तिः यानिचेन्द्रियाणि

न्नुपस्थेनवृकस्यलोममुखेश्मश्रूणिव्याघ्रलोम ॥ केशानशीर्षन्यशसेश्रियैशिखासिꣳहस्यलोमत्विषिरिन्द्रियाणि ॥ ९ ॥२ अङ्गान्यात्मन्भिषजातदश्विनात्मानमङ्गैꣳसमधात्सरस्वती ॥ इन्द्रस्यरूपꣳशतमानमायुश्चन्द्रेणज्योतिरमृतन्दधानाः ॥ ९३ ॥ सरस्वतीयोन्यांम् ॥ सरस्वतीयोन्याङ्गर्भमन्तरश्विभ्यांपत्नीसुकृत

तदेतत्सिंहस्यलोम ॥ ९२ ॥ अङ्गान्यात्मन्। अङ्गानियस्मिन्नात्मनि भिषजौवैद्यौ अश्विनी-समधाताम् तदात्मानम्। अङ्गैः समधात्सरस्वती। एवमिन्द्रस्यरूपं शतमानं बहुप्रतिमा-नम्। अश्विनौसरस्वतीच। चक्षुः चन्द्रेणहिरण्मयेनज्योतिः अमृतञ्चदधानाः ॥ ९३ ॥ सर-

स्नतीयोन्याम् । व्यवहितपदप्रायः । सरस्वतीयंयोन्याम् इन्द्रलक्षणाम गर्भम् अन्तर्मध्येऽश्वि-भ्विभ्यापत्नीभूत्वा सुकृतंशोभनीकृतं विभर्तिधारयति । तमेवेन्द्रं जनयन् श्रियैविभूतैप्रवरणास्व-श्च,राजा अपारसेनसाम्नाचविभर्ति ॥ ९४ ॥ तेजः पशूनाम । तेज.पशूनामुपादाय हविश्चइन्द्रिया-

स्विभर्त्ति ॥ अपाᳪंरसेनवरुणोनसाम्नेन्द्रᳪंश्रियैजनयन्नप्सुरा

जा ॥ ९४ ॥ तेजः॑पशूनाम् ॥ तेजः॑पशूनाᳪंहविरिन्द्रियावत्परिस्त्रु

तापयंसासारघम्मधु ॥ अश्विभ्यान्दुग्धम्भिषजासरस्वत्यासुता

भ्यामुमृतᳪंसोमइन्दुः ॥ ९५ ॥ [ १६ ]

## इतिश्रीसंहितापाठएकोनविंशतितमोऽध्यायः १९ ॥

वत् वीर्यवत् उपादाय । परिस्रु,ताश्चविभूतया । पसयाकविभूतेन सारघमित्रमधु । अश्विभ्यांदुग्धम् । सारघाः भ्रमराः तेयथाअन्नाश्रोपधीभ्यश्च रसमादायदुहन्ति । एवमेतेभ्योद्रव्येभ्यः अश्विभ्यां-

दुग्धंसौत्रामणीलचणम् । कथं भूताभ्याम् भिषजाभिषग्भ्याम् सरस्वत्याच । किञ्च सुता-
सुताभ्यां परिस्रुत्पयोभ्यांसकाशात् अमृतः सोमः इन्दुः दुग्धे । एवं यैः सौत्रामणीष्ट-
ष्टातेभ्यः ऋषिभ्योनमोश्विभ्यांच सरस्वत्यैच । एवमियस्तृषिस्तुतिः ॥ ९५ ॥

इतिउव्वटकृतौ मन्त्रभाष्ये एकोनविंशतितमोध्यायः १९ ॥

* चत्त्रस्ययोनिः ॥ चत्त्रस्ययोनिरसिचत्त्रस्यनाभिरसि ॥ मा

(१) चत्त्रस्ययोनिरसि । गायत्री । आसन्दीवेद्यामुपदधाति अर्द्धर्चेन । चत्त्रस्यत्वं योनिरुत्प-
तिस्थानमसि । आसन्द्यामभिषिक्तोहिगुणधर्मानर्हतिराजेत्येतदभिप्रायंयोनित्वम् । चत्त्रस्यना-

(१) का॰ सोमासन्दीवदासन्दीं जानुमात्रपदीं वेद्योनिंदधाति चत्त्रस्य योनिरिति। जानुप्रमाणपादामासन्दीं वेद्योर्मध्ये निदधाति सोमासन्दीवदिति मुञ्जरज्जुव्युताम् आसन्द्या द्वौ पादौ दक्षिणवेदौ द्वावुत्तरवेदौ यथा तथेति सूत्रार्थः।

* चत्त्रस्ययोनिस्त्रयोदशयद्वादशाभ्यादधाम्यष्टौयोभूतानांचतस्रः ससिद्ध इन्द्रएकादशाया त्वष्टौसमिद्धो अग्निर्द्वादशाश्विनाह्व विस्त्रयोदशाप्रियनाभिजस्रैकादशनवनवतिः।

मिथुनहनन्त्वमसि । कृष्णाजिनमस्रामास्तृणाति। मात्वाहिंसीत्। कृष्णाजिनमुच्यते। मात्वामिय मासन्दीहिंसीत्। मात्वं मांहिंसीः। यज्ञाधारासोवकृष्णाजिनस्र। यज्ञोवै- कृष्णाजिनं यज्ञसरचैवात्मनसरहिंसाया इतिश्रुतिः ॥१॥ (१) आसंद्यामुपविशति। निषसादेतिव्या-

त्त्वांहिꣳसीन्मामांहिꣳसीः ॥ १ ॥ निषसाद ॥ धृतव्व्रतोव्वरुणःपु स्त्यास्वा ॥ साम्म्राज्ज्यायसुक्क्रतुः ॥ मृत्त्योःपाहिव्विद्योत्पाहि ॥२॥ देवस्यंत्त्वा॥ सवितुःप्प्रसवे ऽश्श्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥ अ

ख्यातम्। पादयोरुक्ममुपन्यस्यति। (२) मृत्योः पाहि गोपाय। मृत्युशब्देनात्राशनिरुच्यते। विद्यो- त्पाहि विद्युतः पाहि ॥ २ ॥ (३) अभिषिञ्चति। देवस्यत्त्वेतिव्याख्यातम्। अश्विनोर्भैषज्येन।

(१) का० तस्मिन्नास्ते यजमानो निषसादेति। यजमान. कृष्णाजिने उपविशेत्। व्याख्याता।

(२) का० पादयो रुक्मा उपास्यति राजतए सव्ये मृत्योरिति सौवर्णं शिरस्यं के विद्योदिति। आसन्द्युपस्थयजमानस्य पादयोरधो रुक्मौ मण्डलाकारौ भूषणविशेषौ न्यस्यति राजत सव्ये मृत्योरिति मन्त्रेण सौवर्णं दक्षे विद्योदिति सौवर्णं रुक्म शिर- सीत्येके जचुरिति सूत्रार्थः।

(३) का० सर्वमसुरभ्युक्षमृदितं शेषैरभिषिञ्चत्या मुखादवस्रावयन् प्रतिदिशठं० सर्वत्र सावित्रमश्विनो. सरस्वत्या इन्द्रस्येति प्रतिमन्त्रम्।

भिषजः कर्मभैषज्यम्। भिषग्वैद्यः। तेनभैषज्येनाभिषिंचामीतिसम्बन्धः। किमर्थमित्यत-
आह। तेजसेब्रह्मवर्चसायच। सरस्वत्यैभैषज्येन वीर्यायअन्नाद्याय अभिषिञ्चामि। सरस्व-
त्यैइति षष्ठ्यर्थेचतुर्थी। इन्द्रस्यइन्द्रियेणवीर्येण। बलायश्रियै यशसेचसर्वाथायाभिषि-
ञ्चामि॥ ३॥ यजमानमालभते। कोसि। गायत्री। कः प्रजापतिरसि। कतमः प्रजा-

ष्टिव॒नो॒र्भैष॑ज्ज्येन॒तेज॑से॒ब्रह्मवर्च॒सायाभिषिं॑ञ्चामि॒सर॑स्वत्यै॒भैष॑ज्ज्ये
न॒वी॒र्या॒यान्ना॒द्यायाभिषिं॑ञ्चा॒मीन्द्र॑स्ये॒न्द्रि॒येण॒ब॒लाय॒श्रि॒यै॒यश॑से॒भि
षिं॑ञ्चामि॒॥ ३॥ कोसि॥ कतमोसिकस्मै॑त्वा॒काय॑त्वा॥ सुश्लो॑क
मङ्ग॑ल॒सत्त्य॑राजन्॥ ४॥ शिरो॑मे॥ शिरो॑मे॒श्रीर्य॒शो॒मुख॒न्त्वि॒षिः

पतितमः असि। अतिशयार्थंतमउपादानम्। बहवोहिप्रजापतयः। कस्मैप्रजापतिंपदप्राप्त-
येत्वासमभिषिक्तवा नहंयतः कायत्वा। प्रजापतिभवायत्वामहमभिषिक्तवानस्मियतः। सुश्लोकि-
त्यलभोद्भयति। . हेकल्याणमङ्गल हेसत्यराजन् सत्यः अनश्वरः राजाअस्य॥ ४॥ अङ्गानि-

चालते यथाविन्नम् शिरोमेपञ्चभिः । तृतीयागायत्री अन्त्यामहापंक्तिस्त्र्यवसाना अनुष्टुभोन्याः । इन्द्रोभिपन्नआत्मानंराष्ट्रेभूतम्पश्यन्नाह । शिरोमेश्रीर्वर्त्तते यशोमुखंवर्त्तते । त्विषिर्दीप्तिः केशाश्चश्मश्रूणिचवर्त्तन्ते । राजामेप्राणः सेऽमृतंवर्त्तते । सम्राट्राज्यं सार्वभौमत्वम् चक्षुर्वर्त्तते । विराट्श्रोत्रं वर्त्तते । विराट्प्रधानशरीरो ॥ ५ ॥ जिह्वामे । जिह्वामेभद्रं वर्त्तते । वाङ्महः

केशाश्चश्मश्रूणि ॥ राजामेप्राणोऽअमृतंसम्राट्चक्षुर्विराट्श्रोत्रम् ॥ ५ ॥ जिह्वामे ॥ भद्रंवाङ्महोमनोमन्युःस्वराड्भामः ॥ मोदाःप्रमोदाऽअङ्गुलीरङ्गानिमित्रम्मेसहः ॥ ६ ॥ बाहूमे ॥ बाहू

वर्त्तते पूजाकारिणी वर्त्तते । मन.मन्युर्वर्त्तते मनःक्रोधफलदायि वर्त्तते । भाम.क्रोधः स्वराज्यक्षमो वर्त्तते । उक्तञ्च । शक्तिरहितोपिकुप्यति मानंचोद्वहति सेवकजनोपि । अर्थरहितोपि कामोजानाति विधिविडम्बयितुम् मोदाःप्रमोदाअंगुलयः अङ्गानिचसमवर्त्तन्ते । मित्रंमेसहः मित्रबलंमेसहःशत्रूणामभिभवितृवर्त्तते ॥ ६ ॥ बाहूमे । बाहूमेबलमिन्द्रियञ्च वर्त्तते हस्तौमेकर्मचवीर्यंवर्त्तते ।

आत्माअन्तरात्मा चवर्तते उरश्चमम ॥ ७ ॥ पृष्ठीमें । पृष्ठदेशोमेराष्ट्रंवर्तते । उदरंचअं-सौग्रीवाचयोणीच । ऊरूचअरत्नीचजानुनीचविशोमेवर्तते । अन्यान्यप्यङ्गानियानिसर्वतः ॥ ८ ॥ नाभिमें । नाभिमेंचित्तं विज्ञानञ्चवर्तते । चित्तविज्ञानयोः कोविशेषइतिचेत् । विज्ञानंविज्ञप्तिः

मेबलमिन्द्रियꣳहस्तौमेकर्म्मवीर्य्यम् ॥ आत्माक्षत्रमुरोमम ॥७॥ पृष्ठीर्म्मे ॥ राष्ट्रमुदरमꣳसौग्रीवाश्चश्रोणी ॥ ऊरूऽअरत्नीजानुनी विशोमेङ्गानिसर्व्वतः ॥८॥ नाभिर्म्मे ॥ चित्तँविज्ञानम्पायुर्म्मेपचितिर्भसत् ॥ आनन्दनन्दावाण्डौमेभगःसौभाग्ग्यम्पसः ॥ जङ्घाभ्या म्पद्भ्यान्धर्म्मोस्मिविशिराजाप्प्रतिष्ठितः ॥ ९ ॥ प्प्रतिक्षत्रे ॥ प्प्रति

तत्त्वःसंस्कारश्चित्तम । पायुर्मेअपचितिर्भसच्चवर्तते । पायुर्गुदप्रदेशः अपचितिःपूजा । भसत्शब्दे-नस्त्रीप्रजननंगौडाद्याङ्गः । नच यजमानस्यैतद्भवति । अतःपत्नीविषयमेतत् । आनन्दनन्दौआण्डौ-मेवर्तते । भगःसौभाग्यंपसोमेवर्तते । भगःमहदैश्वर्यम् । पसःपसतेः स्पृशतिकर्मणःशिश्नमु-

चयते । जंघाभ्यामृपद्भ्यान्त्वधर्मोस्मि । धर्मंप्रतिह्विराजाभवतिविधिप्रतिष्ठितोस्मि ॥ ९ ॥ (१) कृष्णा-
जिने वरोहति प्रतिचत्रमितियजुषा । प्रतितिष्ठामि चत्रे प्रतितिष्ठामिराष्ट्रे प्रतितिष्ठामिच

तिष्ठामिराष्ट्रेप्रत्यश्वेषुप्प्रतितिष्ठामिगोषु ॥ प्रत्यङ्गेषुप्प्रतितिष्ठा
म्म्यात्मन्न्प्रतिप्प्राणेषुप्प्रतितिष्ठामिपुष्टेप्प्रतिद्यावापृथिव्व्यो ऽ प्प्रति
तिष्ठामियज्ञे ॥ १० ॥ त्रयादेवाऽ ॥ त्रयादेवाऽएकादशत्त्रयस्त्रिᳬ
शाऽसुराधसऽ ॥ बृहस्प्पतिपुरोहितादेवस्यसवितुऽसवे ॥ देवादेवैर

अश्वेषुप्रतितिष्ठामिगोषुप्रतितिष्ठामिच अङ्गेषुप्रतितिष्ठामिचआत्मनिप्रतितिष्ठामिच । प्राणेषु
प्रतितिष्ठामिचपुष्टे प्रतितिष्ठामिचद्यावापृथिव्योः प्रतितिष्ठामिचयज्ञे ॥ १० ॥ (२) त्रयोदेवाइतित्र-

(१) का० कृष्णाजिनेऽवरोहति प्रति चत्र इति आसन्दीतो यजमान कृष्णाजिनेऽवतरति १४।४।२३। विश्वदेवदैवत्य यजु ।
(२) का० त्रया देवा इति शस्त्रान्ते जुहोति १८।४।२५। शस्त्रसमाप्तौ वषट्कृते त्रया इति कण्डिकाद्वयात्मकेन मन्त्रेण
त्रयस्त्रिंश वशाग्रह जुहोति ।

मान्तेजुहोति । पंक्त्याच्यवसानयादेव्या । परेणयजुषा स्वाहाकारान्तेनच । व्यवहितपदप्रायः येएकादेशदेवाः त्रयःत्रिप्रकाराः येचएकीकृताः त्रयस्त्रिंशाःत्रयस्त्रिंशत्संपद्यन्ते । सुराधसः शोभनध-नाःराधइतिधननाम । राध्नुवन्त्यनेन । येचबृहस्पतिपुरोहिताः । तेदेवस्यसवितुः सवेप्रसवेवर्तमानाः । देशादेवैर्वक्ष्यमाणैःसह अवन्तुपालयन्तु माम् ॥ ११ ॥ कथमवन्तु । प्रथमादेवाः द्वितीयैःसहिताःअ-

वन्तुमा ॥ ११ ॥ प्रथमाद्वितीयैः ॥ प्रथमाद्वितीयैर्द्वितीयास्तृतीयैस्तृतीयाः सत्येनसत्यंयज्ञेनयज्ञोयजुर्भिर्यजूꣳषिसामभिः सामान्यृग्भिर्ऋचः पुरोनुवाक्याभिः पुरोनुवाक्यायाज्याभिर्याज्यावषट्कारैर्वषट्कारा आहुतिभिराहुतयोमेकामान्त्समर्धयन्तुभूः स्वा

यन्तु । द्वितीयाःतृतीयैः । तृतीयाःसत्येन । सत्यंयज्ञेन यज्ञोयजुर्भिः यजूंषिसामभिः । सामा-निऋग्भिःऋचःपुरोनुवाक्याभिःपुरोनुवाक्यायाज्याभिःयाज्यावषट्कारैःवषट्काराआहुतिभिः । एवं-मेकादृशसंख्यैः त्रिप्रकारैर्देवैरुत्तरोत्तरपालिता आहुतयः मेकामान्समर्धयन्तु । संवर्धयन्तु ।

भूयःसुकृतमस्तु ॥ १२ ॥ (१) यजमानोग्रहानुभक्षयति । लोमानिप्रयतिः । अनुष्टुप् ममया-
निलोमानि तानिप्रयतिर्वर्तंते । प्रयतिःप्रयत्नः । त्वक्मेआनतिर्वर्तते आनयनमानतिः ।
त्वगेवसर्वाणिभूतानि ममआनतानीत्यभिप्रायः । आगतिश्चद्रव्यादि मांसंमेउपनतिर्वर्तते ।

ह्वा ॥१२॥ लोमानिप्प्रयंतिं॥लोमानिप्प्रयंतिर्म्मत्वङ्म्मऽआनतिराग
तिः ॥ माᳪंसम्मऽउपनतिर्व्वस्वस्थिमज्जामऽआनतिः ॥ १३ ॥ [१३]
यद्देवाः ॥ यद्देवादेवहेडनन्देवासश्चकृमाव्वयम् ॥ अग्निम्मातस्मा

उपनमन्तेहि ममभूतानि । वसुधनानिअस्थिममवर्तंते । मज्जामे आनतिः ॥ १३ ॥
इतउत्तरमवभृथः संमासरकुम्भंसावयति । यद्देवाः तिस्रोनुष्टुभोग्निदेवत्याः । देवा.देवासः ह्रेआ-
मंत्रिते विद्वानानपिदेवान् बोधयति । यत्किञ्चित् हेदेवाःहेदेवासः । देवहेडनं चकृम ।

(१) का० प्रतात्त्वभवं यजमानो लोमानि प्रयतिरिति । यजमानो ग्रहशेष प्रतयक्षमुपहवपूर्वकं भक्षयति १९ । ४ । २५ । लोम-
त्वगादिदेवतानुष्टुप् ।

कृतवन्तोवयम् । अग्निर्मा तस्मात् एनसःपापात् विश्वात्सर्वस्मात्मुञ्चतु । अंहसश्चपापात् ॥ १४ ॥
यदिदिवा । यदिदिवा अथनियरात्रौएनांसि पापानिचकृम कृतवन्तोवयम् । वायुःमां तस्मात्-
एनसः विश्वात्मुञ्चतु । अंहसः ॥ १५ ॥ यदिजाग्रत् । यदिजाग्रदवस्थायाम् यदिस्वप्नावस्था-

देनंसोविश्श्वान्मुञ्चत्त्वꣳहंसः ॥ १४ ॥ यदिदिवा ॥ यदिदिवायदि
नक्तमेनांꣳसिचकृमाव्वयम् ॥ व्वायुर्म्मातस्मादेनंसोविश्श्वान्मु
ञ्चत्त्वꣳहंसः ॥ १५ ॥ यदिजाग्रत् ॥ यदिजाग्ग्रद्यदिस्वप्नऽएनांꣳ
सिचकृमाव्वयम् ॥ सूर्य्योमातस्मादेनंसोविश्श्वान्मुञ्चत्त्वꣳहंसः ॥
१६ ॥ यद्ग्रामेयदरण्येयत्सभायांय्यदिन्द्रिये ॥ यच्छूद्द्रेयदर्य्येयदे

याम् एनांसीतिसमानव्याख्यानम् सूर्यइतिविशेषः । श्रुतिस्तुलक्षणयाव्याचष्टे । मनुष्यावैजागरितं
पितरःसुप्तं मनुष्यकिल्बिषाच्चैवैनं पितृकिल्बिषाच्चमुञ्चत्विति ॥ १६ ॥ यद्ग्रामे । यदरण्येय-
त्सभायांयत्इन्द्रियेइन्द्रियविषये । देवविषयइतिश्रुतिः । यत्शूद्रे यत्अर्ये । अर्यःस्वामिवैश्ययोः

यच्चएतद्व्यतिरिक्तमेनः चकृमवयम् । यच्चं एकस्यआवयोः पत्नीयजमानयोः अधिधर्मणि एनः तस्यएनसः अवयजनमसि । अत्रपूर्वोयजतिर्नाशनेवर्तते । नाशनमसि ॥ १७ ॥ यदापः । व्याख्यातः

नंयच्चकृमावयंयदेकस्याधिधर्मणितस्यावयजनमसि ॥ १७ ॥ यदापं ॥ यदापोऽअघ्न्याऽइतिवरुणेतिशपामहेततोवरुणनोमुञ्च ॥ अवभृथनिचुम्पुणनिचेरुरसिनिचुम्पुणः ॥ अवदेवैर्देवकृतमेनोयक्ष्यवमर्त्यैर्मर्त्यकृतम्पुरुराव्णोदेवरिषस्पाहि ॥ १८ ॥ समुद्रेते ॥ समुद्रेतेहृदयमप्स्वन्तःसन्त्वाविशन्त्वोषधीरुतापः ॥ सुमित्रियानऽआपऽओषधयः सन्तुदुर्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चवयं

अवभृथनिचुम्पुणव्याख्यातः इयांस्तुविशेषः । अयक्षीतियजतेरिहरूपम् पूर्ववच्चक्रतुयागे अयाजिषमिति ॥ १८ ॥ समुद्रेते । द्विपदाविराट् । सुमित्रियानइत्यपोञ्जलिनाआदाय दुर्मित्रिया-

इतिद्वेयं प्रतिसिञ्चति ॥ १९ ॥ द्रुपदादिव । अनुष्टुप् अब्देवत्यावा सोपप्लवनीया । द्रुमनयःपदः द्रुपदः पादुकाउच्यन्ते । तथाचयास्कः । कनीनके विद्रवेन वेद्रुपदइति । सुमुचानः यथाद्रु-समया त्यादात् मुच्यमानः पुरुषःतज्जैर्दोषैः असंबध्यमानःपृथग्भवेत् । यथाच स्विन्नःप्रस्विन्नः पुरुषःस्नातःमला त्पृथग्भवेत् । प्रस्विन्नश्शुचिकृत्स्नो मलउपैति । यथाच पूतंपवित्रेण कम्ब-

न्धुम्मः ॥ १९ ॥ द्रुपदादिवमुमुचानः स्विन्नः स्नातोमलादिव ॥ पूतम्पवित्रेणेवाज्ज्यमापः शुन्धन्तुमैनसः ॥ २० ॥ उद्वयम् ॥ उद्वयन्तमसस्परिस्वः पश्यन्तउत्तरम् ॥ देवन्देवत्रासूर्य्यमगन्मज्योति

लमयेन आज्यंघृतंपृथग्भवेत् कौटिकातः । एवमापः शुन्धन्तुपृथक्कुर्वन्तु मामेनसः पापात्सका-शात् ॥२०॥ उत्तरति । उद्वयम् अनुष्टुप्सौरी । उदः अगन्मआख्यातेनसंबन्धः । उद्गन्म उद्गताः स्मवयन् तमसस्परि । तमसोधि तमोबहुलादस्माल्लोकात् । स्वः स्वर्गंलोकम्पश्यन्तः । उत्तरम् उ-द्गततरमस्माल्लोकात् । ततोपि देवं सूर्यं देवत्रा देवेषु उद्गन्मज्योतिः । उत्तमं सर्वेभ्योज्यो

तिर्थ्यः ॥२१॥ (१) आहवनीयमुपतिष्ठते । अपो अद्य पङ्क्तिराग्नेयी । योहम् अपःअद्यास्मिन्नहनि अनुचारिषम् । अनुचरितवानस्मि अनेनावभृथकर्मणा । यश्चाहम् अजेनरसेनसमसृक्ष्महि । संसृ-

क्तमम् ॥ २१ ॥ अपोऽअद्य ॥ अपोऽअद्यान्न्वंचारिषᳫं रसेनसमंसृक्ष्महि ॥ पयंस्वानग्नऽआगंमन्तम्मासᳫंसृजवर्च्चंसाप्प्रजयाचधनेंन च ॥ २२ ॥ एधोंसि ॥ एधोंस्येधिषीमहिंसुमिदंसितेजोंसितेजोमयिं धेहि ॥ सुमावंवर्त्तिंपृथिवीसमुषाःसमुसूर्य्यः ॥ समुव्विश्श्वंमिदञ्जगं

द्दवानस्मि । यश्चाहम् पयस्वानुदकवानस्मि । हेअग्ने आअगमम् आगतवानस्मि । तंमामागतवन्तंसन्तम् संसृजवर्चसाप्रजयाचधनेनच ॥२२॥ (२) समिधमादत्ते एधोसि एधःसमिन्धनसत्याग्नेः ।

(१) का० आहवनीयमुपतिष्ठतेपो अद्येति । यजमान आहवनीयमुपतिष्ठते ।

(२) का० एधोऽसीति समिधमादायाहवनीयेऽभ्यादधाति समिदसीति यजमान एधोऽसीति मन्त्रेण समिध मृहीत्वा समिदसीति मन्त्रेणाग्नौ दधाति ।

एवंचेत् अतस्त्वां समिन्धनमुपादाय एधिषीमहि । आदधाति समिदसि । यतश्च समिन्धनमस्याग्नेः तेजश्चासिअग्ने: । दाक्ष्यसंयोगेना ग्निर्व्रतीत्ये तदभिप्रायम् । अतस्त्वांब्रवीमि । तेजोमयिधेहि जुहोति । समाववर्ति । गायत्री यस्मात्समावर्ततेनक्षत्रत्वादियंपृथिवी । यस्माच्च समावर्ततेऽपाः । यस्माच्च समावर्ततेएवंसूर्यः । यस्माच्चसमावर्तते एवंविश्वम् इदंजगत् जङ्गमादि । अतोवैश्वा-

त् ॥ वैश्वानरज्ज्योतिर्भूयासंविभून्कामान्व्यश्नवैभूःस्वाहा ॥ २३ ॥ [ १० ] अभ्यादधामि ॥ समिधमग्नेव्रतपतेत्वयि ॥ व्रत

नरस्यज्योतिः भूयासम् । वैश्वानरः परंब्रह्मेत्याहुरौपनिषदिकाः । विभून् कामान्व्यश्नवैव्य-श्नुयाम । भूःभुवनमात्राभिसंबन्धेन सुहुतमस्तु ॥ २३ ॥ (१) सौत्रामण्यारंभे यजमानआहवनीये तिस्रःसमिधोऽभ्यादधाति । तिसृभिरनुष्टुभिः राग्नेयीभिः । प्रथमाप्रतग्रहणीया । यामेताम् अभ्यादधामि समिधम् हेअग्ने व्रतपतेत्वयि । अनया व्रतञ्चश्रद्धाञ्च उपगच्छामि । ततःइ-

(१) का० पश्चाद्गार्हपत्य चाहवनीये तिस्रः समिधोऽभ्यादधाति । सौत्रामण्यादावादितेरिष्टिं समाप्य त्रिपञ्चमा-दयनीयदक्षिणाग्नी विहृताग्न्यन्वाधान ब्रह्मवरणं च कृत्वाहवनीये यजमानस्तिस्रः समिधः प्रत्यृचमादधाति ।

न्वेत्वाम् अहन्दीक्षितःसन् ॥ २४ ॥ यत्रब्रह्म । यत्रब्रह्मतत्प्रतिमत् चलञ्च । सम्यञ्चौ समीचौ इतिप्राप्तेलिङ्गव्यत्ययः । चरतःसहअवियोगेन तंलोकं पुण्यप्रज्ञेषं प्रज्ञानंवा प्राप्ताभवतीत्यतः तंल्लोकगमनंप्रार्थ्यते । यत्रदेवाःसहाग्निनाचरन्ति ॥ २५ ॥ यत्रेन्द्रः । यत्रइन्द्रश्च वायुश्च सम्यं-

श्चंम्यग्नाश्चोपैमीन्वेत्वांदीक्षितोऽअहम् ॥ २४ ॥ यत्रब्रह्मं ॥ चक्षत्र ञ्चंसम्यञ्चौचरंतः सह ॥ तँल्लोकम्पुण्यम्प्रज्ञेषंयत्रदेवाः सहाग्निना ॥ २५ ॥ यत्रेन्द्रं ॥ यत्रेन्द्रश्चवायुश्चसम्यञ्चौचरंतःसह ॥ तँल्लोकम्पुण्यम्प्रज्ञेषंयत्रसेदिर्न्नविद्यते ॥ २६ ॥ अंशुनाते ॥ अंशुःपृच्यताम्परुषापरुः ॥ गन्धस्तेसोममवतुमदायरसोऽअ

चोसंगतौचरतःसहअवियुक्तौ । तंलोकम्पुण्यं प्राप्नुयाम् । यत्रसेदिर्नविद्यते । अन्नलाभनिमित्तं सदनं । कातर्यांसेदिः ॥ २६ ॥ अंशुनाते । द्वितीयासुरासम्बानेनुष्टुप् । सोमस्यांशुनातेतवहे-

सुरे अंशुः पृच्यतांसंपृच्यतांसंमृज्यताम् परुषाचपरुः। पर्वणाचपर्वसंपृच्यताम्। एवं चक्रत्वा गन्धस्तवसोममवतु संपृणक्तुसमालिङ्गताम्। मदायचरसः अच्युतः अनश्वरः आलिङ्गताम्॥ २७॥ पुतामादत्ते। सिञ्चन्तिपरि। अनुष्टुप्सौमीऐन्द्रीवा। सिचन्तियाम् आचामभावमुपगताम्। आचामोभक्तमण्डः। परिषिञ्चन्ति पयः प्रभृतिभिः। उत्सिञ्चन्तिचग्रहैः। पुनन्तिचयाङ्गोवाल

ञ्चयुंत॑ ॥२७॥ सिञ्चन्ति * परि॥षिञ्चन्त्युत्सिञ्चन्तिपुनन्तिंच ॥ सुरायैबभ्रवैमदेकिन्त्वोवंदतिकिन्त्वः॑ ॥ २८ ॥ धानावंन्तङ्करम्भिणाम् ॥ धानावंन्तङ्करम्भिणांमपूपवंन्तमुक्थिनंम्॥ इन्द्रंप्रातर्ज्जुषस्वनः॑ ॥२९॥

पवित्रहिरण्यादिभिः। तस्यैसुरायैबभ्रैभुवर्णायै। षष्ठ्यर्थेचतुर्थ्यौ। मदेवस्थितः इन्द्रः। किन्त्वोवदतिकिन्त्वः। किन्त्वमितिवदति किन्त्वंकस्यत्वंब्रूहीतिवदति॥ २८॥ धानावन्तंकरंभिणाम्। ऐन्द्रीगायत्री। प्रातः सवनेपुरोडाशानांपुरोनुवाक्या। धानावन्तं धानाभिः संयुक्तं करंभिणांकरम्भेणसंयुक्ताम्। अपूपवन्तम् अपूपेनसंयुक्ताम्। उक्थिनंवचनदन्तं स्तुतिमन्तंभागम्

* परेर्षसिञ्चते परिरूपसर्गात्परं सिञ्चते सकारस्यषकारमापद्यते। इतानेनसूत्रेणपरिषिञ्चती तत्रसकारस्यषकारादेशोविधीयते प्रा० अ० ३ सू६४।

हेइन्द्र । प्रातः सवनेऽजुपस्वसीवखनःअस्माकम् ॥ २९ ॥ (१) बृहदिन्द्राय । ऐन्द्रांबृहत्यागायत्रीति-सामद्वयंयोनिः बृहत्सामइन्द्रायगायत । उपशब्दयतहेमरुतः । ऋत्विजोवामरुतः । वृत्रहन्तमम् वृत्रंप्रति अतिशयेनहन्तिगच्छतीतिवृत्रहन्तमः । एवमेवव्याख्येयम् येनैव पदकारःपदंचक्रे । वृत्रहन्तममितिमकारान्तावयवग्रहणम् । अथकोर्थः पाप्मानंप्रतिअतिशयेनहन्तारं सामगायतीति ।

बृहदिन्द्राय ॥ गायतमरुतोव्वृत्रहन्तंमम् ॥ येनज्ज्योतिरजनयन्नृता वृधोदेवन्देवायजागृवि ॥३०॥ अद्ध्वर्य्योऽअद्रिभिः ॥ सुतꣳसोमं

येनसाम्नाज्योतिः अजनयन् । ऋतावृधः । सत्यवृधोवायज्ञवृधोवा । इन्द्रस्य । यद्वा । ऋतावृधोदेवाः । कथंभूतं ज्योतिरजनयन् । देवंदातृ । देवायइन्द्रायदातुः । जागृविजागरणशीलम् स्वाधिकारावहितचित्तम् ॥ ३० ॥ ब्रह्मानुमन्त्रणम् अध्वर्य्योअद्रिभिः । ऐन्द्रीगायत्री । हेअध्वर्य्यो अद्रिभिः ग्रावभिः सुतमभिषुतंसोमम् पवित्रेआनयआसिञ्च । ततः पुनाहिपुनीहि

(१) का० ऐन्द्रां बृहतीं गायति । अध्वर्युप्रेषितो ब्रह्मा इन्द्रदेवतायां बृहत्यां साम गायति इन्द्रदेवता बृहती नृमेधपुरुषमेधदृष्टा ।

इन्द्रायइन्द्रस्य । पातवेपानार्थम् ॥ ३१ ॥ (१) त्रयस्त्रिंशंवसायहंयत्क्षाति । योभूतानाम् । पंक्तिः । सोमप्रवादः । योभूतानांचतुः प्रकाराणाम् अधिपतिः । यस्मिंश्चलोकाअधिउपरिश्रिताः । स्थिताः ।

मधुवित्तऽआनंय ॥ पुनाहीन्द्रायपातवे ॥३१॥ [ ८ ] योभूतानाम् ॥ योभूतानामधिपतिर्यस्मिँल्लोकाऽअधिश्रिताः ॥ यऽईशेमहतोमहाँस्तेनंगृह्णामित्वामहम्मयिंगृह्णामित्वामहम् ॥ ३२ ॥ उपयामगृहीतोस्यश्विभ्यान्त्वासरस्वत्यैत्वेन्द्रायत्वासुत्राम्णं ऽ एषतेयोनिरश्विभ्यान्त्वासरस्वत्यैत्वेन्द्रायत्वासुत्राम्णे ॥ ३३ ॥ प्राणपाम ॥

यश्च ईशेमहतः विकारजातस्य । स्वयंचमहान् । तेनगृह्णामित्वाम् अहम् ॥ ३२ ॥ उपयामगृहीतोसीतिव्याख्यातम् ॥ ३३ ॥ ऋत्विजः प्राणभक्षंभक्षयन्ति । प्राणपाइति द्वाभ्या-

(१) का० त्रयस्त्रिंशं वसाग्रहं गृह्णाति यो भूतानामिति। प्रागभिषेकात् सोमेन तन्त्रमित्ति भोऽग्निर्माइति ग्रहसामन्तः

मनुष्टुवुपरिष्टाद्बृहतीभ्याम् । पाणादिपरिचयाय । यस्त्वंप्राणपाः ममश्रसि अपानपाश्चक्षुष्पाश्च श्रोत्रपाश्चमे । वाचश्चमेविश्वभेषजः । सर्वभेषजकारी । मनसश्चासिविलायकः । लीङश्लेषणे सर्वकरणेषु संश्लेषकः ॥ ३४ ॥ किञ्च । अग्निवनक्षतस्यते । नकारउपजनः करोतिदर्शनार्थः ।

ऽअपानपाश्चक्षुष्पाश्श्रोत्रपाश्चमे ॥ व्वाचोमेव्विश्वभेषजोमनसो सिव्विलायकः ॥ ३४ ॥ अग्निश्वनक्षतस्यते ॥ अग्निश्वनक्षतस्यतेसर स्वतिक्षतस्येन्द्रेणसुत्राम्णाक्षतस्य ॥ उपहूतऽउपहूतस्यभक्षया मि ॥ ३५ ॥ [ ४ ] समिद्धऽइन्द्रः ॥ समिद्धऽइन्द्रऽउषसामनीकेपुरो

अङ्क्षतस्यते । सरस्वतिक्षतस्यते इन्द्रेणसुत्राम्णा क्षतस्यते । उपहूतस्याभ्यनुज्ञात एताभि र्देव- ताभिः उपहूतस्यचसोमस्य ऋत्विग्भिःभक्षयामि ॥३५॥ समिद्धइन्द्रः । इतउत्तरं होत्रमैत्रावरुणांच ।

तेषां समृद्धैर्यजमानाभिषेक कृतः ततोऽध्वर्यु र्यो भूतानामिति सार्धकण्डिकात्मकेन मन्त्रेण त्रयस्त्रिंशवसापक्षमार्णभखुरेण गृह्णाति धामवादिनो यहदेवता कौषिन्द्रहेष्टं पङ्क्तिः ।

सौत्रामण्याः आश्वमेधात् । तवेन्द्रस्यपशोरेकादशयाजाः तत्रै ताआयोज्या ऐन्द्र्यस्त्रिष्टुभः । यास्त्वाप्रीदैवताङ्ग्यः तनूनपात् नराशंसः । इडः । बर्हिः । द्वारः । उषासानक्ता दैव्याहोतारा तिस्रोदेवीः त्वष्टावनस्पतिः स्वाहाकृतयइति । तायथायोगं विशेषणत्वेनव्याख्यायन्ते । द्विस्थानइन्द्रोवस्तूयते । यःसमिद्धः संदीप्तः आदित्यानांत्वमिन्द्रः उपसामनीकेमुखेउपसांहियनमुखं तत्वभगवानादित्योवतिष्ठते । पुरोरुचा अग्रतोगामिन्यादीप्त्या । वाक्यधानइतिसंबन्धः । पूर्व-

रुचापूर्व्वकृद्वावृधानः ॥ त्रि भिर्द्देवैसवितृ शताव्वज्रबाहुर्ज्जघानंव्वृत्रं व्विदुरोव्ववार ॥ ३६ ॥ नराशᳫंसुंप्रति ॥ नराशᳫंसुंप्रतिशूरोमि

कृच्च । पूर्वांदिशंकरोति । तदुदयोपलक्षिताहि पूर्वादिक्संभवति । सएवमध्यस्थानःसन् त्रिभिर्देवैःसहितः वज्रबाहुः वज्रपाणिः जघानहत्वं मेघम् विदुरोववार । हत्वाचहत्वं विविधान्विवृतान्अकारीत् । विदुरः द्वाराणियोतांसि तस्यैवमेघस्य । द्वारशब्दस्यदुरइतिछान्दसंसंप्रसारणम् ॥३६॥ नराशंसः । एकस्यामेव ऋचिनराशंसः तनूनपान्नाप्रीणामनुवाके । व्यवहितपदप्रायोयंमन्त्रः । यःशूरः इंद्रःसन् नराशंसः । यश्यज्ञोभवति नराअस्मिन्नासीनाशंसन्तीति । प्रति । प्रति-

मिमानोमिमीतेमिमानःप्रतिगणयन् यज्ञस्यधामस्थानम्गोप्रभृतिपशुसंबन्धिनीभिः वपाभिःवपावान् हिरण्यैरंपापूर्णैः यथाधानभूतैःचन्द्री । चन्द्रमितिहिरण्यनाम यश्चशूरइन्द्रः तनूपात्व्रतंभवति । मधुनामधुस्वादेन घृतेनसमञ्जन् हवींषि । गौश्चतनूरुच्यते । ततोस्याम्भोगास्तस्याः पयोजायते पयः-सवाज्यञ्जायतइति । तंशूरमिन्द्रंयजमानोयजति प्रचेताःप्रकृष्टज्ञानः ॥३७॥ ईडितोदेवैः । ईडित

मानस्तनूनपात्प्रतियज्ञस्यधाम ॥ गोभिर्वपावान्मधुनासमञ्जन्हिरण्यैश्चन्द्रीयजतिप्रचेताः ॥ ३७ ॥ ईडितोदेवैः ॥ ईडितोदेवैर्हरिवाँ अभिष्टिराजुह्वानोहविषाशर्धमानः ॥ पुरन्दरोगोत्रभिद्वज्रबाहुरायातुयज्ञमुपनोजुषाणः ॥ ३८ ॥ जुषाणोबर्हिः ॥ जुषा

पूजितोदेवैः हरिवान् । हरीइन्द्रस्याश्वौतदभिप्रायोमन्त्रः । वर्णाभिप्रायोवा । अभिष्टिः । अभिगमनवान् अभ्येषणवान्वा । आजुह्वानःआह्वयमानः हविषा नैमित्तभूतेन । शर्धमानःअभिबलायमानः शर्धइतिबलनाम । पुरन्दरइतिपुरांदारयिता । गोत्रभित् मेघान्भिनत्तिवृष्ट्यर्थम् । वज्रबाहुःयःस

आयातु यज्ञमुपनोजुषाणः । यज्ञंनःसंवभ्निनमुपसेवमानः ॥ ३८ ॥ जुषाणोवर्हिः । जुषाणःसेवमानः वर्हिः । हरिवान्हरीअश्वौताभ्यांसंयुक्तः नःअस्माकम् इंद्रःप्राचीनंप्रागग्रनम् सीदत्सीदतु-आस्ताम् प्रदिशाःउपदेशेन । पृथिव्याःदेवयजनत्वेन उरुप्रथाः । उरुविस्तीर्णंप्रथनमस्येत्युरुप्रथाः । इंद्रविशेषणमेतत् । वर्हिर्विशेषणान्युत्तराणि । प्रथमानं स्योनंसुखरूपम् आदित्यैःअक्तांवसुभिश्च ।

णोबर्हिर्हरिवान्नऽइन्द्रः प्राचीनꣳसीदत्प्रदिशापृथिव्याः ॥ उरुप्रथाऽप्रथमानꣳस्योनमादित्यैरक्तँव्वसुभिःसजोषाः ॥ ३९ ॥ इन्दुन्दुरः ॥ कवष्योधावमानावृषाणमयन्तुजनयःसुपत्नीः ॥ द्वारोदे

वर्हिषांजनमन्ते आदित्यावसवश्चसन्ति तदभिप्रायमेतत् । संवर्हिरक्ताहविषाघृतेनसमादित्यैर्वसुभिरित्ययंमन्त्रः । सजोषाः सहप्रीयमाणः । इंद्रविशेषणमेतत् ॥ ३९ ॥ इंद्रन्दुरः । संप्रसारणंछान्दसम । यज्ञगृहद्वारः कवष्यः । कुषनिष्कर्षे कुषिताःससुषिराः । धावमाना आदरवत्यः वृषाणम्वर्षितारम्यन्तु । जनयःसुपत्नीः लुप्तोपमानमेतत् । जायाइवशोभनपत्न्यः । अथेन्द्रसंगति

प्राप्य यज्ञगृहद्वारं । देवीं । अभित.इतश्चेतश्च । विश्रयन्तांविश्रियन्ताम् सुवीराऋत्विग्भिः वीरमिन्द्रप्रतिप्रथमाना. पृथ्व्योभवन्त्यः । महोत्सवैः ॥ ४० ॥ उषासानक्ता । उषाआदित्यप्रभा- नक्तारात्रि. । उषाश्चरात्रिश्च बृहतीमहत्यो । बृहतंमहान्तम् पयस्वतीउदकवत्यौ अवश्यायवत्यौ । सुदुघेसाधुदोहनेशूरमिन्द्रम् । तन्तुन्ततम् लुप्तोपमानमेतत् । तन्तुमेवततंपदार्थंसूत्रंप्रसारितमिव

वीरभितोव्विश्रयन्ताᳫंसुवीराव्वीरम्प्रथमानामहोभिः ॥४०॥ * उषासानक्ता ॥ बृहतीबृहन्तम्पयस्वतीसुदुघेशूरमिन्द्रम् ॥ तन्तुन्ततम्पेशसासंव्वयन्तीदेवानान्देवंयजतःसुरुक्मे ॥ ४१ ॥ दैव्यामिमाना ॥

पेशसा विचित्ररूपेणसूत्रेण । संवयन्तीसंग्रथयन्त्यौ । देवानांदेवमिन्द्रम्यजतःसंगतंकुरुतः पुनर्घट्टयतइत्यर्थः । सुरुक्मेसुरोचने ॥ ४१ ॥ दैव्यामिमाना । व्यवहितपदप्रायोमंत्रः । दैव्यौहोतारौ

---

* उपमहोभिर्नत्रमोकारो कार नकारस्य ११९। उषद्दतायक्रस्वोदीर्घं भाषयवे महोभिरित्यादि पुपरेपु प्रा० अ० २। सु० इत्यनेन उषासानक्तेत्यत्रदीर्घं ।

अयंचाग्निः असौचवायुर्मध्यम. । दैव्यौहोतारौ मिमानौनिर्मिमाणौयज्ञे । मनुषइतितद्धितलोपः
वीप्सायायमनुष्यस्ययजमानस्य । पुरुचावहुप्रकारम् । प्रथमौमानुषाद्धोतुः । सुवाचासाधुवाचौ ।
मूर्द्धनिप्रधानाङ्गेयज्ञस्य । इन्द्रंमधुना अन्नसहितं दधानास्थापयन्तौ । प्राचीनम् आहवनीया-
ख्यंज्योतिः । हविषाद्दधातः वर्द्धयतः ॥ ४२ ॥ तिस्रोदेवीः। यास्तिस्रोदेव्योहविषाआज्येन वर्द्धमानाः

मनुंपऽपुरुत्राहोतारा॒विन्द्रंम्प्रथमासुवाचा ॥ मूर्द्धन्यज्ञस्यमधुनाद
धानाप्प्राचीनञ्ज्योतिर्हविषांव्वृधातऽ ॥ ४२ ॥ तिस्रोदेवीऽ ॥ तिस्रो
देवीर्हविषावर्द्धमानाऽइन्द्रञ्जुषाणाजनयोनपत्नीऽ ॥ अच्छिन्नन्त
न्तुम्पयसासरस्वतीडादेवीभारतीव्विश्वतूर्त्तिऽ ॥४३॥ त्वष्टादधत् ॥

इन्द्रंजुषाणाः सेवमानाः । जनयोनपत्नीः जायाइवपत्न्यः आसते । ताअच्छिन्नन्तन्तुम् अवि-
च्छिन्नयज्ञम् पयसाहविषाकुर्वन्तु । कतमास्तास्तिस्रोदेव्य इत्यतआह । सरस्वतीचइडाच देवी-
दानादिगुणयुक्ता भारतीआदित्यप्रभा । विश्वतूर्त्तिः सर्वतः तूर्णयायिनी । आख्यातमन्त्रना-

स्यतोध्याहृतम् ॥ ४३ ॥ त्वष्टादधत् त्वष्टातचतेः करोत्यर्थस्य । यस्त्वष्टादधत् धारयत्शुष्मं वलम् इन्द्रायइन्द्रार्थम् । वृषोसेक्ते । कथंभूतस्त्वष्टाअपाकः । पाकइतिप्रशस्यनाम । नविद्यतेय-स्मात्वष्टुरन्यःपाकःप्रशस्यसःअपाकः । नञोस्त्यर्थानांवहुव्रीहि र्वाक्योत्तरपदलोपश्चेतिसमासः । अचिष्टुः अचितस्यानशरीरः अञ्चनशीलोवा । यशसेच इन्द्राय । पुरुणिवहूनिभेषजानिश्र-

त्वष्टादधच्छुष्ममिन्द्राय्वृष्णोपाकोचिंष्टुर्य्यशसेपुरूणि ॥ वृषायज न्वृषणम्भूरिरेतामूर्द्धन्न्यज्ञस्यसमंनक्तुदेवान् ॥ ४४ ॥ वनस्पति रवंसृष्टुइ ॥ वनस्पतिरवंसृष्टोनपाशैस्त्मन्न्यासमञ्जञ्छमितानदे

करोतीतिशेषः । वृषासेक्ता यष्टायजन् वृषणंसेक्तारमिन्द्रम भूरिरेताः सर्वजनकः त्वष्टा । समूर्द्धनियज्ञस्यआहवनीयेसम् अनक्तु भचयतु हविः सहितेनाज्येनदेवान् अनक्तिर्भोजनार्थ । आहवनीयात्मनावस्थितान् भोजयतुदेवानित्यर्थः ॥ ४४ ॥ वनस्पतिरवसृष्टः वनस्पतिर्यूपः अव-सृष्टोनअभ्यनुज्ञातइव पाशैर्वंद्धमध्वर्युणापशुम् आत्मन्याआत्मना समञ्जन् सङ्गमयतुसम्बध्नातु ।

कथमिव । शमितानदेवः । यथाशमितादेवः अपापः पशुवद्गमात्मनासंगमयेत् एवम् । किञ्च । इंद्रस्यजठरमुदरम् हव्यैःपृणानःपूरयन् । स्वदातियज्ञं समनक्तुयागम् मधुनाचरसेनघृतेनच ॥ ४५ ॥ स्तोकानामिन्दुम् । वपास्तोकानां संबन्धिनमिन्द्रम् प्रतिसोमम्प्रतिपशोः

वः ॥ इन्द्रंस्यंहुव्यैर्जुठरम्पृणानःस्वदातियुज्ञम्मधुनाघृतेन ॥४५॥

स्तोकानामिन्दुम्॥ स्तोकानामिन्दुम्प्रतिशूरऽइन्द्रो*वृषायमाणोवृषभस्तुराषाट्॥ घृतप्रुषामनसामोदमानाःस्वाहादेवाऽअमृतामादय

सोमसंस्तवस्तदभिप्रायमेतत् । गमनायशूरःविक्रान्तः । इन्द्रोवृषायमाणः वृषइवआचरन् । वृषभःसर्वलोकत्रासहृत् । तुराषाट् तूर्णंसहतेअभिभवतीतितुराषाट् । सइंद्रःस्वाहा कृतिभिर्मदिताम् तृप्यन्तुइत्यनुषङ्गः । घृतप्रुषाच घृतावयवेनच । मनसामोदमानाः हृष्यन्तः । स्वाहा-

* यथोदारिय मीच पनय सादयजुंहय मलुसलच्चाधारात तभयत यकारे । यथेतादिकृस्वायकारे परेदोर्घमापद्यते घपाय मार्गे तावदोर्घोभवति प्रा० अ० ३ । सू । ११३ ।

अविभक्तिकोनिर्देशः । स्वाहाकृतिर्देवाः अमृताः अमरणधर्माणः मादयन्तामृत्प्यन्तु ॥ ४६ ॥ आयातु । षट्विष्टुभः । ऐन्द्रस्यपयोर्वेपापुरोडाशपशूनांयाज्यानुवाक्याः । आयातुआगच्छतु इन्द्रः अवसे अवनायतर्पणाय रक्षणायवा । उपनःसमीपेस्माकम् आगच्छतु । ततश्च इहास्माभिः स्तुतः सधमात् सहमदनः सहभोजनः अस्तु । शूरोविक्रान्तः । वावृधानः वर्द्धमानः स्ववलोः ।

न्ताम् ॥ ४६ ॥ [ ११ ] आयातु ॥ आयात्विन्द्रोवसऽउपनऽइहस्तुतःसंधमादस्तुशूरः ॥ वावृधानस्तविषीर्य्यस्यपूर्वीर्द्यौर्न्नक्षत्रमभिभूतिपुष्यात् ॥४७॥ आनः ॥ आनऽइन्द्रोदूरादानऽआसादभिष्टि

तविषीर्यस्यपूर्वीर्द्यौर्न । तविषीतिवलनाम । तवतेर्द्विकर्मणः । यस्येन्द्रस्यवलानिपूर्वाणि वृत्रवधादीनिवलानिद्यौरिवोच्चैः कथ्यन्ते । यथास्मदीयंक्षत्रम् । अभिभूति अभिभवितृअभिभवनशीलम पिपुष्यात् । पुष्यातिसआयात्विति सम्बन्धः ॥ ४७ ॥ आनइन्द्रः । आउपसर्गोयासदित्ययंसंबध्यते । आयासत् आयातु नः अस्माकम् इन्द्रः दूरात् द्युलोकादेः । आनआसात् । आयासच्च अस्मा-

कम् आसादित्यन्तिकनाम । आगच्छतुदास्माकंसमीपात् । यद्यपिदूरेयद्यप्यन्तिकइत्यर्थः । अभिष्टिकृत् अभिलषितपदार्थकारी । अवसे अवनायअन्नायवा । उग्रः अतिविषमः । एत्यच । ओजिष्ठेभिः । अजस्वितमैः बलैरुपेतः । नृपतिः वज्रबाहुः सङ्गेसंग्रामे । समत्सुएतदपिसंग्रामनाम । एकस्मिन्सङ्ग्रामे बहुषुच युगपदुपस्थितेषु । तुर्वणिः तूर्णवनिः तूर्णसम्भक्ता ।

आदवंसेयासदुग्रः ॥ ओजिष्ठेभिर्नृपतिर्वज्रबाहुःसङ्गेसमत्सुतुर्वणिःपृतन्यून् ॥ ४८ ॥ आनः ॥ आनऽइन्द्रोहरिभिर्यात्वच्छार्वाचीनोवसेराधसेच ॥ तिष्ठातिवज्रीमघवाविरप्शीमंयज्ञमनुनोवाजसातौ ॥ ४९ ॥ त्रातारमिन्द्रम् ॥ त्रातारमिन्द्रमवितारमिन्द्रꣳह

पृतन्यून्संग्रामयतः शत्रून् ॥ ४८ ॥ आनइन्द्रः । आयातु नः अस्मान् अभिइन्द्रः । हरिभिःहरितवर्णैः अश्वैः । अच्छाभिरथेंसचास्मानभ्येत्य । अर्वाचीनः । अर्वागञ्चनः अवसेअन्नायराधसेधनायच दानार्थम् । एत्यच । तिष्ठातितिष्ठतुः । वज्रीमघवान् धनवान् । विरप्शी

विरमणशील: । इमंयज्ञम् अनुमति । न: अस्माकम् वाजसातौ अन्नसंभजने निमित्तभूते ॥ ४९ ॥
त्रातारमिन्द्रम् । त्रातारम् रक्षितारम् इन्द्रं यत: कथयन्ति । अवितारं चयत: इन्द्रं कथयन्ति । हवेहवेसुहवम् । आह्वाने आह्वाने शोभनाह्वानमिन्द्रं यत: कथयन्ति । शूरं-विक्रान्तमिन्द्रं यत: कथयन्तिजना: । अत: ह्वयामि शक्रं शक्तम् इन्द्रंतमहम् । पुरुहूतं-

वेंहवेसुहवᳫंशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रᳫंस्वस्ति नोमघवाधात्विन्द्रः ॥ ५० ॥ इन्द्रः सुत्रामा ॥ इन्द्रःसुत्रामास्व वाँर ॥ ऽअवोभिःसुमृडीकोभवतुव्विश्ववेदाः ॥ बाधतान्द्वेषोऽअ भंयङ्कृणोतुसुवीर्य्यस्यपतयःस्याम ॥ ५१ ॥ तस्यंव्वयम् ॥ तस्यंव्वय

बहुभिराहूतम् । सचाहूत: सन् । स्वस्तिन: अविनाशमस्माकम् मघवाधनवान् धात्दधा-तुइन्द्र: ॥ ५० ॥ इन्द्र: सुत्रामा । इन्द्र: साधुत्राण: स्ववान् धनवान् । अवोभि: अन्नै: सुमृडीक: शोभनसुखकारी भवतु । विश्ववेदा: सर्वधन: । किञ्च बाधताम् अपाकरोतु द्वेष: दौर्भा-

म्यम् अभयं कृणोतु करोतु। तत्प्रसादाच्च सुवीर्य्यस्य धनस्य पतयः स्याम ॥५१॥ तस्य वयम्। तमेरन्द्र सासुत्राम्णः वयं सुमतौ कल्याणमतौ स्याम। यज्ञियस्य यज्ञसंपादिनः। अपि किञ्च। भद्रे भन्दनीये सौमनसे कल्याणमनसि स्याम वयम्। ततोनुग्राह्यबुद्धौ वर्त्तमानानामस्माकम्। ससुत्रामा शोभनत्राणः। स्ववान्धनवान् इन्द्रः अस्मे अस्मत्तः आराच्चित् दूरादपि द्वेषः दौर्भा

६ सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥ ससुत्रामा स्ववाँ२ ॥ इन्द्रोऽअस्मेऽआराच्चिद्द्वेषः सनुतर्युयोतु ॥५२॥ आमन्द्रैः ॥ आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ॥ मा त्वा केचिन्नियमन्निवन्न पा

ग्यम् तनवर्तमानम् सनुतरिति। निर्गीतान्तर्हितनाम अन्तर्हितं कृत्वा युयोतु। यद्वा दूरेवर्तमानं प्रकटं कृत्वा युयोतु पृथक् करोतु ॥५२॥ आमन्द्रैः। बृहत्यैन्द्री। आयाहि मंद्रैः मन्दनीयैः हे इन्द्र हरिभिः हरिद्वर्णैः अश्वैः मयूररोमभिः। बभ्रवो ह्यश्वाः। किञ्च मा त्वा के-चिन्नियमन्न्विन्न पाशिनः। मा च त्वामागच्छन्तं केचिन्निवध्नन्तु। कथमिव। विरिति शकुनिनाम

शकुनिमिवपाशप्रतिबन्धकाआखेटकिनः । अथकेचित्परिपन्थिनोभवेयुः । अतिधन्वेवतान् इहि । अतित्यतान् एहिआगच्छ । कथमिव धन्वइव । यथाधन्वनिरुदकदेशं परित्यज्य अन्यतममागच्छेयुः एवमागच्छेति ॥ ५३ ॥ एवेत् । ऐन्द्रीत्रिष्टुप् यमेवमनेनप्रकारेण । इत्-

शिनोतिधन्वेंवताँ२ ॥ ऽइहि ॥ ५३ ॥ एवेत् ॥ एवेदिन्द्रँव्वृषणुम्व ज्ज्रंबाहुँव्वसिंष्ठासोऽअभ्यर्च्चन्त्यर्कैः ॥ सनस्तुतोव्वीरवंद्धातुगोमद्यू यम्पातस्वस्तिभिःसदानः ॥ ५४ ॥ [ ८ ] समिद्धोऽअग्निः ॥ समि

पादपूरणः । इन्द्रं वृषणं वर्षितारंवज्रबाहुं वसिष्ठासः वसिष्ठस्यापत्यानिबहूनि । यद्वा वस्तृत माऋषयः । अभ्यर्चन्ति अभिष्टुवन्ति अर्कैःमन्त्रैः । सनःसोस्माभ्यम् स्तुतःवीरवत् साधुपुत्रसंयुक्तम् धातुददातुधनम् । गोमद्गोसंयुक्तम् । एवंत्रिभिःपादैरिन्द्रमभिष्टुत्य । अथेदानींयेयाजयन्ति-तानाह यूयं पातपालयत स्वस्तिभिरविनाशैः सदाकालंनोस्मान् ॥ ५४ ॥ (१) इतउत्तरं त्रिपशुः

(१) का० भामियम समिद्धो अग्निरश्विनेति । समिद्ध इत्याद्या द्वादशानुष्टुभः चंकाराश्विपश्योः प्रजाजयाख्यः इति सूत्रार्थः ।

पापघ्नात् ऽगन्यादग्योनुष्टुभोश्विसरस्वतीन्द्रदेवत्या: । समिद्ध:सन्दीप्तोग्नि: हवि:तपगासमर्थ: । श्वेषग्निनौ । किञ्च तप्तोघर्म:प्रवर्ग्य: विराट्चसोमोभिषुत: । किञ्च दुहेप्रपूरयतिच धेनु:सरस्वती । सोमं शुक्रंशुक्रम् इह इंद्रियंवीर्यम् ॥ ५५ ॥ अश्विनावध्वर्यूतयोर्होताकथयति यज्ञ-

द्धोऽअग्निर्घ्रंश्विनातप्तोघर्मोविराट्सुतः ॥ दुहेधेनुःसरस्वतीसोमं शुक्रमिहेन्द्रियम् ॥ ५५ ॥ तनूपाभिषजा ॥ सुतेश्विनोभासरस्वती ॥ मद्ध्वारजां सीन्द्रियमिन्द्रायपथिभिर्वहान् ॥ ५६ ॥ इन्द्रायेन्दुम् ॥ इन्द्रायेन्दुं सरस्वतीनराशंसेननग्नहुम् ॥ अधाता

सम्यगिम् तनूपाभिषज्ञा । तनूनांपातारौभिषजौच सुतेसोमेअश्विनावुभौसरस्वतीच मध्वारसेन रजांसिपूरयन्त्विंद्रोपभोगाय । लोकारजांस्युच्यन्ते इतीहलोकवचनोरजश्शब्द: । इंद्रियंवीर्यम् ऐंद्राप्यावनार्थम् पथिभिमार्गैश्चान्वहन्तु ॥ ५६ ॥ इंद्रायेन्दुम । इंद्रार्थमिन्दुं सोमंसरस्वतीअभिषुणोदितियाक्यपरिपूर्तिः । नराशंसेनयज्ञेनसहिता नग्नहुम । किञ्चाग्रधातांसुरायाम्अश्विनौ-

मधुः । रसरूपम्भेषजरूपञ्च । भिषजौवैद्यौसुतेसोमेन्द्रायेत्यनुषङ्गोविभक्तिव्यत्ययेन ॥५७॥ आजुह्वाना । आह्वयन्तीसरस्वती इंद्रायेंद्रियाणि चक्षुःप्रभृतीनि वीर्यञ्चवीरकर्म । इडाभिभिर्यज्ञियाभिर्हेतुभूताभिः । अश्विनौचसहायभूतावुपादायसन्दधुः । इषञ्चान्नञ्चसन्दधुः ऊर्जञ्चतदुपसेचनञ्च दध्यादिसन्दधुः

मश्विनामधुभेषजम्भिषजासुते ॥ ५७ ॥ आजुह्वानासरस्वतीन्द्रा येन्द्रियाणिवीर्यम् ॥ इडाभिरश्विनाविषꣳ समूर्जꣳ सꣳरयिन्द धुः ॥५८॥ अश्विनानमुचेः ॥ सुतꣳसोमꣳशुक्रम्परिस्रुता ॥ सरस्व तीतमाभरद्बर्हिषेन्द्रायपातवे ॥५९॥ कवष्योन ॥ व्यचस्वतीरश्वि

संदधुश्चरयिन्धनम् ॥ ५८ ॥ अश्विनानमुचेः । यमश्विनौनमुचेराहृत्य सुतमभिषुतं सोमं शुक्रम्मलिनम परिस्रुतासहितंस्थापितवन्तौ । सरस्वतीतमेवाहरत् बर्हिषास्तरणार्थेनसहिता । इंद्रायपातवे इंद्रपानार्थम ॥ ५९ ॥ कवष्योन । यत्रागृहद्वारउच्यते । कवष्योन कुषनिष्कर्षे । समुच्चयार्थीयोनकारः । अस्यामृचि ससुषिराश्वव्यञ्जनवत्यश्च । अश्विभ्यान्न अश्विभ्याञ्चाध्वर्युभ्यांसहिताः दुरःद्वार-

दिशः। द्वाभिर्दिशोलक्ष्यन्त्व इतिअतएवमुक्तम्। इंद्रोन इंद्रश्चयासुआसु व्यवस्थितः। रोदसीद्यावा-
पृथिव्यौ उभेअपिदुहेदोग्धि। कामांश्चसरस्वतीदुहे। इन्द्रायायाताययज्ञगृहद्वार इन्द्रकुर्वन्नितिशेषः
॥ ६० ॥ उषासानक्तम्। उषाआदित्यप्रभा। नक्तंरात्रिः। हेअश्विनौ उषाश्चरात्रिश्च दिवाअह्निच

व्य्युन्नद्वरोदिशः॥ इन्द्रोनरो दंसीऽउभेदुहेकामान्त्सरस्वती ॥६०॥
उषासानक्तमश्विनादिवेन्द्रᳬसायमिन्द्रियैः॥ सञ्जानानेसुपेशसा
समञ्जातेसरस्वत्या ॥६१। पातन्नः॥ पातन्नोऽअश्विनादिवापाहि
नक्तᳬसरस्वती ॥ दैव्याहोताराभिषजापातमिन्द्रᳬ सचासुते ॥६२॥

इन्द्रम् इन्द्रियैर्वीर्यैः समंजाते संश्लक्ष्यतः सायंचइन्द्रियैः समंजाते। सात्याभिप्रायम्।
संजानानेएकमतीभूतेउषाश्चरात्रिश्च। सुपेशसासुरूपे शुक्लेनउषाः कृष्णेनरात्रिः। किमिन्द्रमुषा-
श्चरात्रिश्च केवलेएवमसञ्जाते नेत्याह। सरस्वत्याच सहसमञ्जाते ॥ ६१ ॥ पातन्नः।
पालयतं नोस्मान् हेअश्विनौ दिवाअह्नि। पाहिपालयचनक्तं हेसरस्वति। युवांच हेदैव्यौ

होतारौभिषजौपालयतम् इन्द्रम् सचासहेत्यर्थः। सुतेसोमे ॥ ६२ ॥ तिस्रस्त्रेधा। तिस्रो-देव्यः सरस्वतीचमध्यस्थाना। भारतीआदित्यप्रभाद्युस्थाना। इडापृथिवीस्थाना। एतास्त्रिषु-स्थानेषुस्थिताः। अश्विनौच। तीव्रपटुतमं परिस्रुतामच्छितंसोमम् इन्द्रायसुषुवुः अभिषुत-वन्तः मदन्तर्पणम् ॥ ६३ ॥ अश्विनाभेषजंमधु। एतदाख्यातन्तस्मादधुरितिपरिणामः। केअ-

तिस्रस्त्रेधा ॥ सरस्वत्यश्विनाभारतीडा ॥ तीव्रम्परिस्रुतासोममि न्द्रायसुषुवुर्म्मदम् ॥६३॥ अश्विनाभेषजम् ॥ अश्विनाभेषजम्मधुभे षजन्नःसरस्वती ॥ इन्द्रेत्त्वष्टायशःश्रियंरूपंरूपमधुःसुते ॥६४॥ ऋतुथेन्द्रः ॥ ऋतुथेन्द्रोव्वनस्पतिःशशमानःपरिस्रुता ॥ कीलाल

दधुः। अश्विनौसरस्वतीत्वष्टाच प्रयाजदेवताः। किमदधुः। अश्विनौतावद्भेषजं मधुरूपम्। भेषजं नः असमत्संबन्धिनौसरस्वती। त्वष्टाच यशः श्रियंरूपञ्च। कस्मिन्नदधुः। इन्द्रे। कस्मि-न्नवसरे। सुतेभिषुतेसोमे ॥ ६४ ॥ ऋतुथेन्द्रः। ऋतावृतौ कालेकाले इन्द्रायेतिविभ-

त्रिव्यत्ययः । वनस्पतिःशशमानः शशमानः संशयमानः स्नुवन् परिस्नुतासाधनभूतया । कौलालमन्नरसम् दुहेइत्यनुषंगः । अश्विभ्यांचसहिता । दुहे दोग्धि धेनुर्भूत्वासरस्वती ॥ ६५ ॥ गोभिर्न्न । गोप्रभृतिभिःपशुभिः सोमंसहितं मासरेणपरिस्नुताच । कथंभूतंसुतंमधु । अभि-

मुश्विवव्याम्मधुंदुहेधेनुःसरंस्वती ॥ ६५ ॥ गोभिर्न्नं॥ सोमंमश्विव
नामासरेणपरिस्नुतां ॥ समंधातुःसरंस्वत्यास्वाहेन्द्रंसुतम्मधुं॥६६॥
[ १२ ] अश्विनाहुविः॥ अश्विनाहुविरिन्द्रियन्नमुंचेर्धियासरंस्व

पुतंमधुस्वादंच । हेअश्विनौ युवांसमधातम् । कंस्मिन्समधातम् । इन्द्रे । किंकेवलावेवा-श्विनौ समधातंनेत्याह । सरस्वत्यासह । स्वाहास्वाहाकृतिभिःप्रयाजेनसार्द्धम् ॥ ६६ ॥ (१) अश्वि-नाहविः । तिस्रोवपानां याज्यानुवाक्याअनुष्टुभः । एकैकाश्विसरस्वतीन्द्रदेवत्या । आजघ्नि-

(१) का० अश्विना हविरिति तिस्रो वपानां याज्यानुवाक्या प्रथममनूच्य द्वितीया याज्या द्वितीयामनूच्य तृतीया याज्या तृतीयामनूच्य प्रथमा याज्या । अश्विनेत्याद्यास्तिस्रस्तिसृणां वपानां क्रमाद्याज्यापुरोऽनुवाक्या. तत्प्रकारमाह आश्विनवपा-

रेद्र्याख्यातपदेनसर्वाणिपदानिसम्बध्यन्ते । अश्विनौसरस्वतीच आजभ्रिरे । हविरिन्द्रियंवीर्यं शुक्रममलिनम् वसुधनं मघंमहनीयम् । कुतआजभ्रिरे । नमुचे.आसुरात् । कयाहेतुभूत-यात्राजभ्रिरे । धियाबुद्ध्या । कस्मैआजभ्रिरे इन्द्राय ॥ ६७ ॥ यमश्विना । यमिन्द्रमश्विनौ-

तौ ॥ आशुक्रमासुराद्वसुमघमिन्द्रायजभ्रिरे ॥ ६७ ॥ यमश्विना ॥ यमश्विनानमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियाय । यमश्विनासरस्वतीहविषेन्द्रमवर्द्धयन् ॥ सबिभेदवलम्मघन्नमुचावासुरेसचा ॥ ६८ ॥ तमिन्द्रम् ॥ तमिन्द्रम्पशवःसचाश्विनोभासरं

सरस्वतीच हविषावर्द्धयन् । सबिभेद । भिदिर्विदारणे विसारितवान् । वलम्बवम् । इयोतिर्वल: मघम्महनीयम । नमुचौआसुरे सचा । सचासहशब्दवचन: तद्योगाच्चविभक्तिव्यत्यय: । नमुचिना असुरेणसह वलम्बिभेदेति ॥ ६८ ॥ तमिन्द्रम् । तमुग्रगुणमिन्द्रम् पशव: कर्माङ्गभूता:

यागे अश्विनेति अनुवाक्या यमश्विनेति याज्या सारस्वतवपायागे यमश्विनेतिअनुवाक्या तमिन्द्रमिति याज्या ऐन्द्रवपायागे तमिन्द्रमिति अनुवाक्या अश्विनेति याज्येति सूत्रार्थं ।

गोमेपाञ्ञाः सचासहभूताः। अश्विनौउभौ सरस्वतीचदधानाः धारयन्तः। अभ्यनूपत। नूपतिर्द्यर्थः। अभिवर्धयन्ति। केन। हविषा। कस्मिन्। यज्ञे। इन्द्रियैर्वीर्यैः॥ ६९॥

(१) यइन्द्रे तिस्रोनुष्टुभः पशुपुरोडाशानां याज्यानुवाक्या इन्द्रसवितृवरुणदेवताः सर्वाः येइन्द्रेइन्द्रियं

स्वती॥ दधा॑नाऽअ॒भ्य॑नूषत ह॒विषा॑ य॒ज्ञऽइ॑न्द्रि॒यैः॥६९॥ यऽइन्द्रे॑॥ यऽइन्द्र॑ऽइन्द्रि॒यन्द॒धुः स॑वि॒ता वरु॑णो॒ भगः॑॥ स सु॒त्रामा॑ ह॒विष्प॑ति॒र्यज॑मानाय सश्चत॥ ७०॥ स॒वि॒ता वरु॑णः॥ स॒वि॒ता वरु॑णो॒ दधु॑

दधुः स्थापितवन्तः। सविताबरुणोभगः। भगशब्देनात्रेन्द्रोलक्ष्यते। तेयजमानेपि वीर्यंदधन्तीति-वाक्यपरिपूर्तिः। सत्त्रामा यज्ञमुत्तामा इन्द्रः हविष्पतिः हविषः स्वामी। यजमानमितिविभक्ति-व्यत्ययः। सश्चत। सचतामिति पुरुषवचनव्यत्ययः। एदमेतेविषमामन्त्रालक्षणयाव्याख्येयाः॥ ७०॥

(१) का० य इन्द्र इति पुरोडाशानां पूर्ववत् १९।६।१८। य इन्द्र इतितिसृणां पशुपुरोडाशानां याज्यानुवाक्याः पूर्ववत् य इन्द्रे सविता इतीन्द्रस्यानुवाक्या याज्ये सविता वरुण दधत् इति सावित्रस्य तेवरुणः दधत् य इन्द्रे इति वारुणस्येति सूत्रार्थः।

सविताबरुणः । द्वितीयोर्द्धर्चः प्रथमंव्याख्येयः । आदत्तजग्राह नमुचेः सकाशात् वसुधनंबलं चेन्द्रियंच । सुत्रामाइन्द्रः । तत् सवितृवरुणप्रभृतयः पशुपुरोडाशदेवताः दधत्दधातु यजमानायदाशुषेहवींषिदत्तवते ॥ ७१ ॥ वरुणःक्षत्रम् । वरुणःसविताचसुत्रामाच दधानाइन्द्रेयजमानेवा यज्ञं सौत्रामणीम् ।

यजमानायदाशुषे ॥ आदत्तनमुचेर्व्वसुसुत्रामाबलमिन्द्रियम् ॥७१॥ वरुणःक्षत्रम् ॥ वरुणःक्षत्रमिन्द्रियम्भगेनसविताश्रियम् ॥ सुत्रामायशसाबलन्दधानायज्ञमाशत ॥ ७२ ॥ अश्विनागोभिरिन्द्रिय

आसतव्याप्तवन्तः । किंकिंदधानाः । वरुणः क्षत्रमिन्द्रियञ्च । सविताभगेनधनेन सहितांश्रियम् । सुत्रामायशसाबलम् ॥ ७२ (१) अश्विनागोभिः । तिस्रोनुष्टुभः । हविषांयाज्यानुवाक्या अश्विसरस्वतीन्द्रदेवत्याः । अश्विनौसरस्वतीच गोभिः गोप्रभृतिभिः पशुभिः इन्द्रियम् । इन्द्रि-

(१) का० अश्विना गोभिरिति च हविषाम् । अश्विना गोभिरिति तिस्रो हविषां याज्यानुवाक्याः चात् पूर्ववत् अश्विना ता नासत्या इत्याश्विनपशुयागे पुरोऽनुवाक्यायाजेः नासत्या ता भिषजा इति सारस्वते ता भिषजा अश्विना इत्यैन्द्रे सूत्रार्थः ।

येणेतिविभक्तिव्यत्ययोवाक्यसम्बन्धात्। अश्वेभिः अश्वदक्षिणाभिः। वीर्यम्बलम् वीर्येणवलेन। हविषापुरोडाशेन। इन्द्रंयजमानञ्च अवर्द्धयन्॥७३॥ तानासत्या। तौनासत्यौनअसत्यौ-सत्यावेव। सुपेशसासुरूपौ। हरण्यवर्तनौहिरण्यदानोपलक्षितपन्थानौ। नरान्नगुणयुक्तौ। नराकारौना। सरस्वतीचहविष्मतीहविषासंयुक्ता। एतेत्रयः पादाः परोक्षकृताः। चतुर्थ-

मश्वेभिर्वीर्यम्बलम्॥ हविषेन्द्रᳬसरस्वतीयजमानमवर्द्धयन्॥७३॥

तानासत्या॥ सुपेशसाहिरण्यवर्त्तनीनरा॥ सरस्वतीहविष्मती

न्द्रकर्म्मसुनोवत॥७४॥ ताभिषजा॥ सुकर्म्मणासासुदुघासरस्व

स्तुपादः प्रत्यक्षकृतः अतोवाक्यभेदः। तौनासत्यावुक्तगुणौसरस्वतीचकर्मसुवर्त्तमान॰नोस्मानव-तअवन्त्वितिपुरुषव्यत्ययः। ततोद्वितीयंवाक्यम्। इन्द्रकर्मसुनोवत। हेइन्द्र त्वमपिकर्मसुवर्त-मानन्नः अस्मान् अवत। अवेतिवचनव्यत्ययः॥७४॥ तौभिषजौ। सुकर्मणाकल्याण-कर्माणौ। सासुदुघासुदोहना सरस्वतीच। सचहत्रहाशतक्रतुः बहुकर्मोइन्द्रायदधुः ददुः

इन्द्रियंवीर्यम् । ननुमहलच्छायतक्रतुरिन्द्रायदधुरिन्द्रियमिति इन्द्र इन्द्रायददातीत्येतन्नोपपद्यते । कल्पान्तरीयाइन्द्र एतत्कल्पप्रभवायददातीत्यदोषः । विभवो वादेवा अचिन्त्यशक्तयः । एकधा द्विधा बहुधा भवेयुः । एवमेवान्यत्रविरोधाः परिहर्तव्याः ॥ ७५ ॥ (१) ग्रहाणांयाज्यानुवाक्यौ ।

ती ॥ सर्व्वृत्वद्धाभुतक्रतुरिन्द्रायदधुरिन्द्रियम् ॥ ७५ ॥ युवꣳसुराम
म् ॥ युवꣳसुराममश्विनानमुचावासुरेसचा ॥ व्विपिपानाःसरस्व
तीन्द्रङ्कर्म्मंस्वावत ॥ ७६ ॥ पुत्तमिवपितरौ ॥ पुत्तमिवपितराव

युवंसुरामम् । पुत्रमिवपितरौ । अनुष्टुप् त्रिष्टुभावश्विसरस्वतीन्द्रदेवत्ये । युवंयूयमितिविभक्तिव्यत्ययः । सरस्वतीहितृतीया । युवंयूयम् हे अश्विसरस्वत्यः । सुरामंसुरामयम् । नमुचौआसुरे वर्तमानम् सचासह विपिपानाः विविधंपिबन्तः कर्मसुवर्तमानाः इन्द्रम् अवतपालयत ॥ ७६ ॥

(१) का० ग्रहाणां युव ꣳ०सुरामम् पुत्रमिवेति १९।६।१०। वयाख्या पयोग्रहाणां सुराग्रहाणां च युवमिति पुरोऽनुवाक्या पुत्रमिवेति याज्येति सूत्रार्थः ।

पुत्रमिवपितरौ । व्याख्यातम् ॥७७॥ (१) पशुम्निष्टक्रतौ । यस्मिन्नश्वासः । अग्हाव्यग्नइति । जगतोत्रिष्टुभावाग्नेय्यौ । यस्मिन्नग्नौ अश्वासः ऋषभासः * उक्षणः वशः मेषाः अवसृष्टासः अवदायाव-

भिभवनोभेन्द्रावथुःकाव्यैर्दꣳसनाभिः ॥ यत्सुरामंव्यपिबःशचीभिः सरस्वतीत्त्वामघवन्नभिष्णक् ॥७७॥ यस्मिन्नश्वासः ॥ यस्मिन्नश्वास ऽऋषभास ऽउक्षणोवशामेषा ऽअवसृष्टास ऽआहुताः ॥ कीलालपेसोमपृष्ठायवेधसेहृदामतिञ्जनयचारुमग्नये ॥७८॥ अ

दायचतुरावर्त्तं निं क्षिप्ताः । आदायादायाहुताः । तस्मै अग्नये । कीलालपे । कीलालमन्नरसंपिबतीतिकीलालपाः । सोमपृष्ठाय । सोमाहुतयो यस्य पृष्ठे हूयन्ते । वेधसे मेधाविने । हृदामतिञ्जनय ।

(१) का० पशुस्विष्टकृतो यस्मिन्नश्वासोऽग्हाव्यग्न इति । १८ । ६ । २१ । पशोः सम्बन्धिनि स्विष्टकृद्यागे यस्मि नश्वास इति पुरोनुवाक्या अग्हाव्यग्न इति याज्या द्वे अग्निदेवते जगतीत्रिष्टुभौ ।

* वापपूर्वस्यनिगमेऽपधादीर्घाभावः ।

हृद्यम्मतिपूर्वकन्नय । चारुम्अग्नये ।७८॥ अहाव्यग्ने। यस्तेतव आस्येमुखे हे अग्ने अहाविज्ञत म्मयाहविः । कथमिव । सुचीवघृतम् । यथास्रुचिनित्यावस्थितंघृतम् । चम्वीवसोमः । चम्वा-मिव । यथाच अभिषवणचर्मणिनित्यावस्थितःसोमः । एवम् । तन्त्वांब्रवीमि । वाजसनिम् ।

हांव्यग्ग्ने ॥ हुविरास्ये तेस्रुचीवघृतञ्चम्वीवसोमः ॥ व्वाजसनिंᳬ रयिमस्मेसुवीरम्प्रशस्तन्धेहियशसम्बृहन्तम् ॥ ७९ ॥ [ १३ ] शत म् १२०० अश्विव्वनातेजंसा ॥ चक्षुःप्प्राणेनसरस्वतीव्वीर्य्यम् ॥ व्वा

वाजमन्नं सम्भवतेवाजसनिं रयिधनम् । अस्मेअस्मासु । सुवीरंशोभनवीरम् प्रशस्तंधेहिस्थापय । यशसञ्च । यशोवैसोमोराजा । बृहन्तंमहान्तम् ॥ ७९ ॥ शतम् १२० । (१) अश्विनातेजसा । एका-दशर्चंशस्त्रम् । आद्यानुष्टुप् अश्विसरस्वतीन्द्रदेवत्याच । द्वितीयाद्यास्त्रयस्तृचो । गायत्र्याश्वि-

(१) का० प्रतिगरिष्यतुपविष्टेऽध्वर्यो शोंऽसावेतामाहूयाश्विना तेजसेत्यनुवाकंशं० शंऽसति । त्रयस्त्रिंशत शवसाग्रहसादना-नन्तरमध्वर्या. होतु 'पुरस्तात प्रतिगरार्थमुपवेशनमुक्तम् तदाह प्रतिगरिष्यताध्वर्यो पुर उपविष्टे सताध्वर्यो शोसावो मिताहूयाश्विना तेजसा चक्षुरित्येकादशर्चमनुवाकं शस्त्रं शसति प्रथमान्त्ये ऋचौ त्रिः शसनीये मध्यस्थानां त्रयाणां तृचानामादिष्वद्वाव कार्य्यं इति सूत्रार्थः ।

सरस्वतीन्द्रदेवत्यायथासंख्यम् अश्विनाअश्विनौ तेजसासह । चक्षुःप्राणेनप्राणेन सहवीर्यम् । सरस्वतीवाचासहबलेनचसह । एवमेतादेवताः प्रतिनियतचक्षुरादिद्वारेण इंद्रायदधुःददुः इंद्रियम् ॥ ८० ॥ गोमदूषु । हेनासत्यौ गोमद्धनंसंगृह्य । उसुपादपूरणौ अश्ववद्धनंसंगृह्य यातम् हेअश्विनौ वर्तिः वर्तिन्याप्रसिद्धेनमार्गेण । हेरुद्रा रुद्रौ शत्रूणांरोदयितारौ । नृपाय्यंप्रति सदेवानरः यस्मिन्य-

चेन्द्रोबलेनेन्द्रायदधुरिन्द्रियम् ॥८०॥ गोमदूषुणासत्या ॥ * गोमदू षुणासत्याश्वावद्यातमश्विना ॥ वर्ती रुद्रानृपाय्यम् ॥८१॥ नयत् ॥ नयत्परोनान्तरऽआदधर्षद्वृषण्वसू ॥ दुःशंसोमर्त्योरिपुः ॥८२॥

न्नेपिबन्ति सन्नृपाय्यः ॥ ८१ ॥ नयत्परः । यमेनंनपरः अन्तरेणअसम्बद्धः नचअन्तरः सम्बद्धःआ-दधर्षत् आधृष्णुयात् अभिभूयगृह्णीयात् । हेवृषण्वसू । वर्षणंवृष्टि र्वसुधनं ययोस्तौयथोक्तौ । यद्वा वृष्टिद्वारेणावासयितारौ । दुःशंसः दुष्टमसद्वृत्तं शंसतियःसतथोक्तः । मर्त्योमनुष्यः रिपुःशत्रुः ॥ ८२ ॥

* गोमदू षुणे तावउ स नेतावस्थायांअपृक्त.सो ॥ १११ ॥ अपृक्तस्य णे नेहउकारोगृह्यते अपृक्तउकारो दीर्घमापद्यतेसुप्रत्यये पा० अ०३ । सू० १११ ।

तानः । यौयुवामुत्तगुणौतौ नःअस्माकम् आवोढम् आवहतम् हेअश्विनौ । रयिम्धनम् पिश-ङ्गसंदृशम् अनेकरूपसंदर्शनम् । हे धिष्ण्या धिष्ण्याग्निरूपौदातारौवा वरिवोविदम् । धनं-विन्दतिवरिवोविदः वरिवोधननाम । यद्यद्वेस दन्यस्यधनलाभस्य हेतुभूतंभवति ॥ ८२ ॥ पावकानः । पावयित्रीसरस्वती वाजेभिःअन्नैः वाजिनीवतीअन्नवती । सा नःअस्माकम् यज्ञं-

तानः ॥ तानुऽआवोढमश्विनारयिम्पिशङ्गसन्दृशम् ॥ धिष्ण्यांव्व रिवोव्विदम् ॥ ८३ ॥ पावकानः ॥ पावकानःसरस्वतीव्वाजेभिर्व्वाजि नीवति ॥ यज्ञंव्वष्टुधियावसुः ॥८४॥ चोदयित्रीसूनृतानाम् ॥ चो दयित्रीसूनृतानाञ्चेतन्तीसुमतीनाम् ॥ यज्ञन्दधेसरस्वती ॥ ८५ ॥

वष्टुकामयताम् योहि यदिच्छति सतदागच्छतिधियावसुः धियावसुधनंयस्याःसाधियावसुः ॥ ८४ ॥ चोदयित्रीसूनृतानाम् । चोदयित्रीप्रेरयित्री । सूनृतानाम्शोभनानामृतांवचसाम् त्रयीलक्षण-स्यवाग्विभवस्यचोदयित्रीत्यर्थः । चेतन्तीचेतयमाना सुमतीनाम् शोभनमतीनाम् । यज्ञंदधेधा-रयतिसरस्वती ॥ ८५ ॥ महोअर्णः । यामहत्अर्णः महान्तमुदकमित्यर्थः । सरस्वतीप्रचेतयति

प्रज्ञापयति । केनहेतुना । केतुनाकर्मणा प्रज्ञयावा । मध्यस्थानानदीवा । धियोवुद्धीः विश्वाः- सर्वाः सर्वप्राणिष्ववस्थिताः । विराजति राजतिर्दीप्त्यर्थः । अन्तर्भावितण्यर्थस्सद्रष्टव्यः । विवि- धन्दीपयतिप्रकाशयति । तांवयंस्तुम इतिशेषः ॥ ८६ ॥ इन्द्रायाहि । हेइन्द्र आयाहिआगच्छ । हेचित्रभानोचित्रदीप्ते । किंकारणम् सुताअभिषुताः इमेसोमाः त्वायवः त्वांकामयमानाः सुप-

मुहोऽअर्णः ॥ मुहोऽअर्णःसरस्वतीप्रचेतयतिकेतुना ॥ धियोविश्वाविराजति ॥ ८६ ॥ इन्द्रायाहि ॥ चित्रभानोसुताऽइमेत्वायवः ॥ अण्वीभिस्तनापूतासः ॥ ८७ ॥ इन्द्रायाहि ॥ धियेषितोविप्रजूतः सुतावतः ॥ उपब्रह्माणिवाघतः ॥ ८८ ॥ इन्द्राया

त्तन:क्यच् क्याच्छन्दसीतिदीर्घः त्वायवतिसिद्धम् । नचाभिषुताएवकेवलम् । किंतर्हि । अण्वी- भिःतनापूतासः । अण्व्यइत्यङ्गुलिनाम । अङ्गुलीभिः तनाच धनदानेनचपूताःपवित्रीकृताः । यद्वा तनाशब्देन दशापवित्रमभिधायअङ्गुलीभि र्दशापवित्रेणचपूताइत्यर्थः ॥ ८७ ॥ इन्द्रायाहि । हेइन्द्र आगच्छ धियास्वकीयया वुद्ध्या इषितःप्रेषितः अनन्यप्रेषित इत्यभिप्रायः । विप्रजूतः जूतिर्गतिः प्रीतिर्वा । मेधाव्यनुगतः सुतावतः अभिषुतवतो यजमानस्ययज्ञम् । किमित्यागन्तव्यमिति-

चेत् । उपसमीपे ब्रह्माणिहवींषिवर्तन्ते । उपपुरोडाशान्दृत्विजोवर्तन्तइत्यर्थः । वाघतइति ऋत्विङ्नामसुपठितम् ॥ ८८ ॥ इन्द्रायाहि । हेइन्द्र आगच्छतूतुजान तूतुजानइतिक्षिप्रनाम क्षिप्रंत्वरमाणः । कुत्रागच्छइति । उपब्रह्माणिहवींषि हेहरिवः । हरीअश्वौतद्वत् इन्द्र । मतुवसोरुः संबुद्धावितिरुत्वम् । एत्यच सुतेअभिषुते सोमेदधिष्व उदारेणधारयस्व । नः अस्माकं स्वभू-

हि ॥ इन्द्रायाहितूतुंजानऽउपब्रह्माणिहरिवः ॥ सुतेदधिष्वनश्च नः ॥८९॥ अश्विनापिबताम् ॥ अश्विनापिबतामधुसरस्वत्यासजोषसा ॥ इन्द्रःसुत्रामावृत्रहाजुषन्ताꣳसोम्यम्मधु ॥ ९० ॥ [१]

## इतिवाजसनेयसंहितापाठेविंशोऽध्यायः २०

तम्च नः अन्नलक्षणम् ॥ ८९ ॥ अश्विनापिबताम् । अश्विनौ पिबेताम् मधु मधुरस्वादोपलक्षितं । सोमम्पिबतौ । सरस्वत्यत्याचसजोषसा समानसोमपानौ । इन्द्रश्चसुत्रामा वृत्रहापिबतुमधु । ततोभूयोभूयोश्विसरस्वतीन्द्राः जुषन्तांपिबन्ताम सोम्यम्मधुसोममयम्मधु ॥ २० ॥

इतिउव्वटकृतौ मन्त्रभाष्येविंशतितमोध्या ॥ २० ॥

आनन्दपुरवास्तव्य जैय्यटाख्यस्यसूनुना उव्वटेनकृतम्भाष्यं पदवाक्यैः सुनिश्चितैः ॥ १ ॥

शिरसा खेडि वास्तव्य प्रभुदत्तेन धीमता
श्रीघनश्याम पुत्रेण कृत शोधन टिप्पणे ॥१ ॥
चिडीग्राम निवासेन काशीनाथेन मुद्रिते
ग्रन्थेऽस्मिन्संहिताभाष्येपूर्व्वार्धमगमच्छुभम् ॥ २ ॥

॥ उव्वटभाष्यसँव्वलितोत्तरार्द्धमारभ्यते ॥

(१) इमम्मे। इमम्मेनानुवाकेनेष्टिकांहौत्रम्। प्रथमेवारुण्यौ गायत्रीत्रिष्टुभौ वारुणास्यहविषो याज्यानुवाक्ये। हेवरुण त्वंमेमम इमंहवमाह्वानं श्रुधिशृणुच अपरम् अद्यम्हडयसुखय

॥ श्रीगणेशायनमः ॥ ॐ भूर्भुवस्वः तत्सवितुर्वरेण्यम्भर्गोदेवस्य धीमहि धियोयोनः प्रचोदयात् ॥ * इमम्मेवरुणश्रुधीहवमद्याच मृडय ॥ त्वामवस्युराचके ॥ १ ॥ तत्त्वा ॥ यामिब्रह्मणावन्दमा नस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशंस

कालविलम्बनमाकुर्याः यतः अहम् अवस्युः आत्मनोवनंपालनमिच्छन् त्वाम् आचके। आचक- इतिकान्तिकर्मा। कामये ॥ १ ॥ तत्त्वायामि ॥ २ ॥ त्वन्नः। अग्निवारुण्यौत्रिष्टुभौ अग्नि-

(१) का० इममे तत्त्वेत्येककपालस्य। अवभृथेष्टौ वारुणस्यैककपाल पुरोडाशस्य च पुरोऽनुवाक्यायाज्ये इत्यर्थः।



* इमंमेसमिद्धो अग्निरेकादशकोढो वर्ततेनऋतुनापड् तायहरसमिधाग्निं षादशारिनो छागम्यसमदेयन हिंयतुहं गपडे- कपृष्ठि.।

वरुणयोः स्विष्टकृतोर्याज्यानुवाक्ये । (१) हे अग्ने त्वंनोऽस्मान्प्रति वरुणस्य देवस्य हेडः क्रोधम् अवयासिसीष्ठाः यमुउपनये । अस्यावपूर्वस्यण्यन्तस्य लिङिरूपम् अवगमय । यजिष्ठः यष्टृतमः । वन्हितमः वोढृतमो हविषाम् । शोशुचानः देदीप्यमानः । किञ्च अस्मत् अस्मत्तः विश्वाविमानुऽआयुऽप्प्रमोमुग्ध्यस्मत् ॥ २॥ त्वन्नः ॥ त्वन्नोऽअग्नेव्वरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्निंतमःशोशुचानोव्विश्वाद्वेषांᳬसिप्प्रमुमुग्ध्यस्मत् ॥ ३ ॥ सत्वम् ॥ सत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याऽउषसोव्युष्टौ ॥ अवयक्ष्वनोव्वरुणᳬरराणो

द्वानिसर्वाणिद्वेषांसिदौर्भाग्यानिप्रमुमुग्धिमुञ्च ॥ ३ ॥ सत्वन्नः । हे अग्ने सत्वम् जातीजत्या अवनेन नः अस्माकम् अवमः अवितृतमः पालयितृतमः भव । अस्याउषसः व्युष्टौ व्युष्टिकालेऽस्मिन्नेवाहनीतिभावः । नेदिष्ठः अन्तिकतमश्चभव । रराणः रममाणः रादाने । हविर्ददद्वा ।

(१) का० अग्नीवरुणयोस्त्व न स त्व न इति । अवभृथेष्टावेवाग्निवरुणयागे पुरोऽनुवाक्यायाज्ये ।

नोस्माकं वरुणम् अवयक्ष्व अवगत्ययज । अवपूर्वोयजतिर्नाशनार्थः इहतु धात्वन्तरयोगात्स्वा-
र्थमेववक्ति । ततः सुमृडीकं सुखकरंहविः वीहि भक्षय । नः अस्माकं सुहवः स्वाह्वानः एधि ॥ ४ ॥
(१) महीमूषु । आदित्यचरोर्याज्यानुवाक्येत्रिष्टुभौ मह्यीमहतीम् । ऊसूनिपातोपसर्गौ छन्दः परि-
पूर्तिफलौ । मातरंनिर्मात्रीं साधुव्रतानाम् । ऋतस्ययज्ञस्यपत्नीं जायांपालयित्रींवा । अवसे-

व्वीहिमृडीकᳪसुहवोनऽएधि ॥ ४ ॥ महीमूषु ॥ मातरᳪसुव्रतानाम् तस्यपत्नीमवसेहुवेम ॥ तुविक्षत्रामजरन्तीमुरूचीᳪसुशर्म्माणम दितिᳪसुप्रणीतिम् ॥ ५ ॥ सुत्रामाणम्पृथिवीम् ॥ सुत्रामाणम्पृथिवी

अवनायतर्पणायवा हुवेमआह्वयाम । तुविक्षत्राम् । बहुक्षत्रांवा बहुक्षतत्राणांवा । अज-
रन्तींजरारहिताम् उरूचींबहुव्यञ्चनां सुशर्माणंकल्याणाश्रयां साधुसखाम् अदितिमदीनाम् ।
सुप्रणीतिंसुप्रणेत्रीम् ॥ ५ ॥ सुत्रामाणम् । साधुपालयित्रीम् पृथिवीम् पृथिवीमिव लुप्तोपमान-

(१) का० आदित्यस्य सुत्रामाणम् महीमूषु मातरमिति । आदित्य चरुं यक्ष्यमाणो निर्वपत्यादित्यमोजान इत्यादावन्ते चादितास्ययरुश्चस्तसुत्रामाणमिति पुरोऽनुवाक्या महीमू ष्विति याज्या ।

मेतत्। यामनेहसम् यामिवक्राहयित्रीं जीवनहेतुभूताम् सुशर्मांणांसाधुशरणां शोभनाश्रयांवा। अदितिमदीनाम्। सुप्रणीतिंसुप्रणेत्रीम। दैवींयज्ञमयांनावं। स्वरित्रांसाधुकेन्दुवालाम् अरित्र-शब्दः केन्दुवालवचनः। अनागसमनपराधाम् अस्रवन्तीम्अपूर्यमाणामुदकेन। अनवच्छिन्नसा-

न्यामंनेहसं सुशर्म्माणमदितिं सुप्रणीतिम्॥ दैवीन्नावं स्वरित्रामनागसमस्रवन्तीमारुहेमा स्वस्तये॥ ६॥ सुनावमारुहेयम्॥ सुनावमारुहेयमस्रवन्तीमनागसम्॥ शतारित्रां स्वस्तये॥ ७॥ आनः॥ आनोमित्रावरुणाघृतैर्गव्यूतिमुक्षतम्॥ मद्ध्वारजांसि

धुकर्मदायिनीमित्यर्थः। आरुहेम। स्वस्तयेअविनाशाय॥ ६। सुनावम्। गायत्री। तद्वै सर्वए-वयज्ञोनौः स्वर्ग्येतिश्रुतेरुपकल्पना। कल्याणींनावम् आरुहेयम् अस्रवन्तीम् अच्छिद्राम् निर्दोषा-मित्यर्थः अनागसमपापाम् अभीप्सितार्थसाधनतत्परामित्यर्थः। शतारित्रांबहुकेन्दुवालाम् ऋग्यजुः सामाभिप्रायम् स्वस्तयेअविनाशाय। संसारसागरोत्तरणायवा॥ ७॥ (१) आनः। मैत्रावरुण्याः

(१) का॰ श्रा न प्र वाहवेति परस्यायाः। १८। ३। १६ अवभृथादुदेत्य मैत्रावरुण्या पयस्यया यजतीति या पयस्या तस्या आ नो मित्रावरुणेति पुरोऽनुवाक्या प्र वाहवेति याज्या। मित्रावरुणदेवतया गायत्री विश्वामित्रदृष्टा।

पयस्यायाज्यानुवाक्ये गायत्रीत्रिष्टुभौ। आउक्षतम् आसिञ्चतम् नः अस्माकम् हेमित्रावरुणौ। घृतै. अक्षारोदकैः गव्यूतिम् गविपृथिव्यामवनहेतुभूतक्षेत्रंगोप्रचारंवा। किञ्च मध्वारजांसि। मधुस्वादोदकेनरजांसि। लोकारजांस्युच्यन्ते। तान्आउक्षतम्। हेसुक्रतू। सुकर्माणौ॥ ८॥ प्रवाहवा। प्रसिक्षतम् अन्तर्भावितण्यर्थः। प्रसारयतम्। वाहजा वाहू। किमर्थमितिचेत्।

सिसुक्रतू॥ ८॥ प्रबाहवा॥ सिसृतञ्जीवसेनऽआनोगव्यूतिमुक्षत घृतेन॥ आमाजनेश्रवयतंयुवानाश्रुतम्मेमित्रावरुणाहवेमा॥ ९॥ शन्नः॥ शन्नोभवन्तुवाजिनोहवेषुदेवतातामितद्रवःस्वर्काः॥ जम्भ

जीवसेनः। जीवनायास्माकम। वाहुप्रसारणंजीवनहेतुप्रतिपक्षनिराकरणायेत्यर्थः। ततआउक्ष- तम् आभिमुख्येनसिञ्चतम् नः अस्माकम् गव्यूतिम्। गविपृथिव्यासूतिमवनम् जीवनहेतुभूतानि- क्षेत्राण्यत्राभिप्रेतानि। तदर्थंहि दृष्टिः प्रार्थ्यमाना दृष्टार्थाभवति। गोजातिविषयभूतांवा ऊतिम् अवनमार्गम् भक्षणमार्गा मिप्रायतो गोप्रचारमितियावत्। घृतेनाक्षारोदकेन। आमाजने-

श्रवयतं युवाना। एवमचारीदक्रेन सित्तधान्यनिष्पत्तिहेतुना यज्ञंकुर्वाणाम् मामाम् जनेजन-
पदे श्राश्रवयतं प्रकथयतम् इत्थमदादित्थमदाचीदिति। हेयुवानौउच्छिन्नजरसौ। श्रुतमश्रा-
शृणुतं मम हेमित्रावरुणौ। हवेमा हवान्आह्वानानिइमानि। श्रुत्वाचातिष्ठतमित्यभि-

युन्तोहिँवृकुरन्ताँसिसनेम्म्युस्म्मद्युंयवुन्नमीवाः ॥१०॥ व्वाजेवाजे
वत॥ व्वाजिनोनोधनेषुव्विप्प्राऽअमृताऽऋतज्ज्ञाः॥ अस्यमद्ध्वंःपि
वतमादयंद्ध्वन्तृप्प्ताघातपथिभिर्देवुयानैः ॥११॥ समिद्धोऽअग्निः॥
समिधासुसमिद्धोव्वरेण्यः ॥ गायत्रीच्छन्दऽइन्द्रियन्त्र्यविर्गौर्व्वयोद

प्रायः ॥ ८ ॥ मन्नः ॥ १० ॥ वाजेवाजेवत ॥ ११ ॥ वाजिनस्ययाज्यानुवाकाव्याख्याते ॥१०॥ ११॥
समिद्धोअग्निः। एकादशआप्रियः। अनराशंसा ऐन्द्रायावयोधसेनुष्टुभः। समिद्धः सन्दीप्तः

(१) का० वायोधस आप्रियः समिद्धो अग्निः समिधेति। १८।७।१८ वायोधसे पशौ समिद्धो अग्निरित्याद्या एकादश ऋच आप्रिय. प्रयाजानां याज्या इति सूत्रार्थः।

अग्निः समिधाप्रयाजदेवतया। सुसमिद्धः प्रयाजघृतेन। वरेण्यः वरणीय. संभजनीयः। गायत्रीछन्दः त्र्यविश्चगौः वयः अवयः अनुचरत्वेनयस्य सतथोक्तः। इन्द्रियंवीर्यंच। वयः सत्त्वमन्नंवा आयुर्वाइन्द्रेदधुः निदध्युः ॥ १२ ॥ तनूनपात्। तनूनामपान्नपान्नप्ताअग्निः। गौर्वातनूः तस्या-नप्ताघृतम्। शुचिव्रतः उज्वलकर्मा। तनूपाः सरस्वतीच। उष्णिहाविभक्तिव्यत्ययः उष्णिक्-

धुः ॥ १२ ॥ तनूनपाच्छुचिव्व्रतः ॥ तनूनपाश्च सरस्वती ॥ उष्णिहाच्छन्दऽइन्द्रियन्दित्यवाड्गौर्व्वयोदधुः ॥ १३ ॥ इडाभिरग्निः ॥ इडाभिरग्निरीड्यः सोमो देवोऽअमर्त्यः ॥ अनुष्टुप्छन्दऽइन्द्रियम्पञ्चाविर्गौर्व्वयोदधुः ॥ १४ ॥ सुबर्हिरग्निः ॥

छन्दः दित्यवाट गौःएतेचत्वारः इन्द्रियंवयश्च इन्द्रे दधुः ॥ १३ ॥ इडाभिरग्निः। इडाभिः प्रयाजदेवतया सहअग्निः ईडःस्तोतव्यः। सोमश्चदेवः अमर्त्यः अमरणधर्मा अनुष्टुप्छन्दः पञ्चाविश्च गौःइन्द्रियं वयश्चइन्द्रे दधुः ॥ १४ ॥ सुबर्हिरग्निः। शोभनबर्हिः प्रयाजदेवतयाग्निः।

पूषण्वानूषासंयुक्तः। स्तीर्णंबर्हिस्तीर्णंबर्हिर्यस्यासतथोक्तः। अमर्त्यः अमरणधर्मा। बृहती-च्छन्द त्रिवत्सश्च गौःएतदिन्द्रियंवयश्चइन्द्रे दधुः ॥ १५ ॥ दुरोदेवीः। दुरः द्वारः प्रयाजदेवताः छान्दसंसंप्रसारणम्। देवीः देव्यः दिशश्च। महीः महत्यः। ब्रह्माचदेवः बृहस्पतिश्च। पंक्ति-श्छन्दः। इहेत्यभिनयनिर्देशः। इहयज्ञावयवे इहइन्द्रशरीरावयवे। तुर्यवाट्गौश्चइन्द्रियंवय-

पूषण्वान्त्स्तीर्णंबर्हिरमर्त्यः॥ बृहतीच्छन्दऽइन्द्रियन्त्रिवत्सोगौर्व्वयो दधुः ॥१५॥ दुरोदेवीः ॥ दुरोदेवीर्द्दिशोमहीर्ब्रह्मादेवोबृहस्पतिः॥ पङ्क्तिश्छन्दऽइहेन्द्रियन्तुर्य्यवाड्गौर्व्वयोदधुः ॥ १६ ॥ उषेयह्वीसुपेशसाविश्वेदेवाऽअमर्त्याः ॥ त्रिष्टुप्छन्दऽइहेन्द्रियम्पष्ठवाड्गौर्व्वयो

श्चदधुः ॥ १६ ॥ उषेयह्वी। उषेइति द्विवचनसामर्थ्यात्सह चरितत्वाच्च द्वितीयारात्रिर्गृह्यते। उषाश्चरात्रिश्च। किंभूते यह्वीमहत्यौ। सुपेशसासाधुरूपे। विश्वेचदेवाः अमर्त्याः अमरण-धर्माणः। त्रिष्टुप्छन्दः। इहइन्द्रयज्ञयोः। पष्ठवाट्च गौःपष्ठंभारंवहतीतिपष्ठवाट्। इन्द्रि-

यंवयश्चदधुः ॥ १७ ॥ दैव्याहोतारा अयंचाग्निः असौचमध्यमः। भिषजौ इन्द्रेणसयुजौसंयुक्तौ समानकार्यौ। युजापरस्परेणयुक्तौ। जगतीच्छन्दः अनड्वाश्चगौःएते इंद्रेइंद्रियंवयश्चदधुः ॥ १८ ॥ तिस्रइडा। तिस्रोदेव्यः इडासरस्वती। भारती। मरुतश्चविशः इंद्रस्यप्रजाः। विराट्छन्दः

दधुः ॥ १७ ॥ दैव्याहोतारा ॥ भिषजेन्द्रेणसयुजायुजा ॥ जगती च्छन्दऽइन्द्रियमनड्वान्गौर्व्वयोदधुः ॥ १८ ॥ तिस्रऽइडा ॥ तिस्रऽइडासरस्वतीभारतीमरुतोव्विशः ॥ व्विराट्छन्दऽइहेन्द्रियन्धेनुर्गौ र्न्वयोदधुः ॥ १९ ॥ त्वष्टातुरीपः ॥ त्वष्टातुरीपोऽअद्भुतऽइन्द्रा ग्नीपुष्टिवर्द्धना ॥ द्विपदाच्छन्दऽइन्द्रियमुक्षागौर्न्नवयोदधुः ॥ २० ॥

धेनुर्दोग्ध्रीगौश्च। नकारश्चार्थे। एतेइंद्रियंवयश्चइंद्रे दधुः ॥ १९ ॥ त्वष्टातुरीपः तूर्णमापन्नः अद्भुतः अद्भुतइव महानित्यर्थः। इंद्राग्नीचपुष्टिवर्द्धनौ। द्विपदाचछन्दः। उक्षागौश्च। नकारश्चार्थे। उक्षासिक्ताचगौः। एतेइंद्रे इंद्रियंवयश्चदधुः ॥ २० ॥ शमितानः शमयिताइतिप्राप्ते

तेजस्वी पशुविशेषः संहितायां वृणिशब्दो दीर्घः वार्ध्रीनसो कण्ठे स्तनवानजः ते त्रयो मत्ये देव्यै। सृमरः गवयोऽरण्याय देवाय। रुरुः मृगः रौद्रः रुद्रदेवतः क्वयिः पक्षिविशेषः। अथ विंशे- ऽत्रकाणे। कुटरुः कुक्कुटः दात्यौहः कालकण्ठः ते त्रयो वाजिनां देवानाम्। पिकः कोकिलः कामाय ॥ ३९ ॥ खड्गो मृगविशेषो विश्वदेवदेवतः। एकः कृष्णः श्वासारमेयः द्वितीयः कर्णो

म्॥ पृ॒ष॒त्त्र आ॑दि॒त्याना॒मुष्ट्रो॒ घृणी॑वान्वार्ध्री॒न॒सस्ते म॒त्या॑ऽअर॑ण्याय सृम॒रो रुरू रौ॒द्रः क्वयिः॑ कु॒ट॒रुर्दा॑त्यौ॒हस्ते वा॒जिनां॒ कामा॑य पि॒कः ॥३९॥ ख॒ड्गो वै॑श्वदे॒वः श्वा कृ॒ष्णः क॒र्णो ग॑र्द॒भस्त॒रक्षु॒स्ते रक्ष॑सा॒मिन्द्रा॑य सू

लम्बकर्णो गर्दभः तृतीयस्तरक्षुः मृगादनः ते त्रयो रक्षसां पशवः। सूकरः इन्द्राय। सिंहो मारुतः मरुद्देवतः। कृकलासः सरटः पिप्पका पक्षिणी शकुनिः पक्षी ते त्रयः शरव्यायै। एकः पृषतः मृगविशेषो विश्वेषां देवानां पशुर्भवति विश्वेभ्यो देवेभ्यो जुष्टं नियुनज्मीति योज्यः। एवं षष्ठ्यधिकं शतद्वयमारण्याः पशव उक्ताः। अत्र द्वाविंशतिरेकादशिनः सप्तविं-

गत्यधिकानि त्रीणि शतानि अश्वादयः सौर्यान्ताः षष्ट्यधिकं शतद्वयं कपिञ्जलादयः पृषतान्ता आरण्याः पशवः सर्वे मिलित्वा षट् शतानि नवाधिकानि पशवो भवन्ति । श्लोकश्च । षट्

कुरꣳसिꣳ ह्योमांꣳ तꣳक्लांक्लासꣳपिप्पंकाशुकुनिस्तेशꣳतुव्याᳶयैव्विश्वेषा न्देवानाम्पृषुतꣳ ॥ ४० ॥ [ ४ ]

इतिश्रीवाजसनेयसंहितायांदीर्घपाठेचतुर्विꣳशोऽध्याय: २४ ॥

शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि । अश्वमेधस्य यज्ञस्य नवभिश्चाधिकानि चेति । तेष्वारण्याः सर्वे उत्स्रष्टव्या न तु हिंस्याः ॥ ४० ॥

इतिउव्वटकृतौ मन्त्रभाष्ये चतुर्विंशोध्याय: २४ ॥

(१) शादंदद्भिः। इयमपि श्रुतिर्देवताश्वाङ्गयो श्चोदनांविदधाति। शादोदेवताविशेषः दन्ताश्वाङ्गम्। शादंदद्भिः प्रीणाति। देवताभोक्त्री द्वितीययानिर्दिश्यते। अश्वाङ्गभोग्यं तृतीययाकर्णविभक्त्या

* ॐ ॥ शादंन्दद्भिः ॥ शादंन्दद्भिरवकान्दन्तमूलैर्म्मृदम्बस्वैस्ते गान्दध्ठंष्ट्राभ्याथ्ठंसरस्वत्याऽअग्रजिह्वञ्जिह्वायाऽउत्सादमवक्रन्देनतालुव्वाजꣳहनुभ्यामपऽआस्येन्वृषणमाण्डाभ्यामादित्याँ श्मश्रुभिः पन्थानम्भ्रूभ्यान्द्यावापृथिवीव्वर्तोभ्यांव्विद्युतङ्कनीनकाभ्याम्

निर्दिश्यते। एवंहिविभक्त्योः सामर्थ्यंभवति। युक्ताश्च होमकाले अङ्गाभिधानम् देवतायैहोमः। आश्वयश्रुतिः। आज्यमवदानीकृत्वा प्रत्याख्यायम् देवताभ्य आहुतिर्जुहोतीति। दद्भिःशादाय-

(१) का० स्विष्टकृद्वनस्पत्यन्तरे शूल्यप्रहुत्वादेवताश्वाङ्गेभ्यो जुहोत्यमुष्मै स्वाहेति प्रतिदेवतम् शादप्रभृतित्वागन्तेभ्यो विसृज्य परिभ्य इति। स्विष्टकृद्वनस्पत्योरन्तरे वनस्पतियागानन्तरं स्विष्टकृद्यागात्पूर्वं शूले श्रपितं मांसं प्राजापत्योऽश्व इति वचनत्

* शादंदद्भिर्नवैकंकाहिरण्यगर्भंयतस्यानोदशमानोमित्रोयदश्वस्याष्टकौयत्ते षडिमानुकंद पंचदशसप्तचत्वारिः ठं० गत्।

स्वाहा । दन्तमूलैरवकायस्वाहा इत्येवमप्रयोगा. । क्वचिच्चदेवता केवलाभवति । यथाशुक्लायस्वाहा कृष्णायस्वाहेति । क्वचिच्चान्ययाविभक्त्यानिर्देशो द्रव्यदेवतयोः । यथा अग्नेःपक्षति वांयोर्निपक्षतिरिति । एवंद्रव्यदेवतमप्रसिद्धम् यत्रपार्श्वाभ्यामिति वगन्तव्यमिति पृथिवीत्वचेति यावत् ॥ १ ॥ अश्वस्य प्राणवायुना वातं प्रीणामि । अपानवायुना नासिकासंज्ञे द्वे देवते प्रीणामि । अध-

व्वाथंशुक्लायस्वाहाकृष्णायस्वाहापार्श्यौ णिपक्ष्मांरयवार्स्याऽडुक्त वों वार्स्याणिपक्ष्मांणिपार्श्यां ऽडुक्तवं ॥ १ ॥ [१] व्वातंम्प्रा णेनं ॥ व्वातंम्प्राणेनापानेननासिके ऽउपयाममधरेणौष्ठेनसद्

रेणैन ओष्ठेन उपयामं देवं प्रीणामि । उपरितनेन ओष्ठेन सत्सं देवं प्रीणामि । प्रकाशेनोपरितनदेहकान्त्या अन्तरं देवं प्रीणामि । उपसर्गस्य घञमनुष्ये बहुलमिति अनोर्दीर्घः अनूकाशेनाधस्तनदेहकान्त्या वाह्यं देवं प्रीणामि । मूर्धा मस्तकेन निवेष्यन् देवं प्रीणामि । निश्चितं वध्यते निर्वाधः शिरोऽस्थिमध्यसंलग्नो मज्जाभागः तेन स्तनयित्नुं देवं प्रीणामि ।

---

प्रजापतये हुत्वा यमुपे स्वाहेति प्रतिदेवत शादादित्वगन्तेभ्योदेवताभ्याङ्गभागो देवताभागोऽश्वाङ्गभाव घृतं जुहुयात् अनादेशे एतत्प्रोक्तत्वात् । तत्र शादं दद्भिरित्यादिपुथिर्मो स्वचेरयन्त. संहिताभागो ब्राह्मण नमन्वाः ।

(१) शाददद्भिः। इयमपि श्रुतिर्देवताश्वाङ्गयो श्चोदनांविदधाति। शादोदेवताविशेष: दन्ताश्वाङ्गम्। शाददद्भिः प्रीणाति। देवताभोक्त्री द्वितीययानिर्दिश्यते। अश्वाङ्गभोग्यं तृतीययाकर्णविभक्त्या

* ॐ ॥ शादन्दद्भिः ॥ शादन्दद्भिरवकान्दन्तमूलैर्मृदम्बस्वैस्ते गान्दंष्ट्राभ्याᳫँसरस्वत्याऽअग्रजिह्वञ्जिह्वाया ऽउत्सादमवक्रन्देनतालुव्वाजᳫँ हनुभ्यामपऽआस्ये न्वृषणमाण्डाभ्यामादित्याँ श्मश्रुभिः पन्थानम्भ्रूभ्यान्द्यावापृथिवीव्वर्तोभ्याव्विद्युतङ्कनीनका

निर्दिश्यते। एवंहिविभक्त्योः सामर्थ्यंभवति। युक्तश्च होमकाले अङ्गाभिधानम् देवतायैहोमः। आहचश्रुतिः। आज्यमवदानीकृत्वा प्रत्याख्यायम् देवताभ्य आहुतिर्जुहोतीति। दद्भिःशादाय-

(१) का० स्विष्टकृद्वनस्पत्यन्तरे शुम्भदुहुलादेवताश्वाङ्गेभ्यो जुहोत्यमुष्मै स्वाहेति प्रतिदेवतं शादप्रभृतिलाग्नत्नेभ्यो विमुखाय परेभ्य इति। स्विष्टकृद्वनस्पत्योरन्तरे वनस्पतियागानन्तर स्विष्टकृद्यागात्पूर्वं शूले अपित मास प्राजापत्योऽश्व इति वचनत्

* शाददद्भिर्नवैकैकाद्विरण्यगर्भंयतसप्रानोदग्रमानोमित्रोयदश्वस्याष्टकौयत्ते पड्मिमानुवाके पञ्चदशसप्तचत्वारि ठं० गत्।

स्वाहा । दन्तमूलैरवकायस्वाहा इत्येवमप्रयोगा. । क्वचिच्चदेवता केवलाभवति । यथाशुक्लायस्वाहा कृष्णायस्वाहेति । क्वचिच्चान्यथाविभक्त्यानिर्देशो द्रव्यदेवतयोः । यथा अग्नेःपक्षति वायोर्निपक्षतिरिति । एवंद्रव्यदेवतमप्रसिद्धम् यज्ञपार्श्वादिभ्यो वगन्तव्यमिति पृथिवींत्वचेति यावत् ॥ १ ॥ अश्वस्य प्राणवायुना वातं प्रीणामि । अपानवायुना नासिकासंज्ञे द्वे देवते प्रीणामि । अध-

वाताम्प्राणेनापानेननासिंके ऽउपयाममधरेणौष्ठेनसद् ॥ १ ॥ [१] वातंप्राणेनं ॥ शुक्लायस्वाहाकृष्णायस्वाहापार्थ्यो णिपक्ष्माणयवार्घ्योऽइक्षवो वार्घ्याणिपक्ष्माणिपार्य्या ऽइक्षवः

स्तेन ओष्ठेन उपयामं देवं प्रीणामि । उपरितनेन ओष्ठेन सत्सं च देवं प्रीणामि । प्रकाशेनोपरितनदेहकान्त्या अन्तरं देवं प्रीणामि । उपसर्गस्य घञ्यमनुष्ये बहुलमिति अनोर्दीर्घः अनूकाशेनाधस्तनदेहकान्त्या वाह्यं देवं प्रीणामि । मूर्ध्ना मस्तकेन निबेष्मन् देवं प्रीणामि । निश्चितं बध्यते निर्बाधः शिरोऽस्थिमध्यसंलग्नो मज्जाभागः तेन स्तनयित्नुं देवं प्रीणामि ।

---

प्रजापतये हुत्वा षमुमे स्वाहेति प्रतिदेवत शादादित्वगन्तेभ्योदेवताश्वाङ्गेभ्यो देवताभ्योऽश्वाङ्गेभ्यश्च घृतं जुहुयात् अनादेशे घृतस्योक्तत्वात् । तत्र शाद दद्भिरित्यादिपृथिवी त्वचेत्यन्त संहिताभागो ब्राह्मण नमन्त्वा. ।

(१) शादंदद्भिः। इयमपि श्रुतिर्देवताश्वाङ्गयो श्चोदनांविदधाति। शादोदेवताविशेषः दन्ताश्वाङ्गम्। शादंदद्भिः प्रीणाति । देवताभोक्त्री द्वितीययानिर्दिश्यते । अश्वाङ्गभोग्यं तृतीययाकर्णविभक्त्या

* ॐ ॥ शादंन्दद्भिः॑ ॥ शादंन्दद्भिरवंकान्दन्तमूलैर्म्मृदुम्बर्स्वैस्तेगान्द्रंष्ट्राभ्याᳬसरस्वत्याऽअग्रजिह्वञ्जिह्वायाऽउत्सादमवक्रन्देनतालुवाजᳫं हनुभ्यामपऽआस्ये नवृषणमाण्डाभ्यामादित्याँश्मश्रुभिः पन्थानम्भ्रूभ्यान्द्यावापृथिवीवर्त्तोभ्यांविद्युतङ्कनीनका

निर्दिश्यते। एवंद्विविभक्त्योः सामर्थ्यंभवति। युतश्च होमकाले अङ्गाभिधानम् देवतायैहोमः। आह्वयश्रुतिः। आज्यमवदानीकृत्वा प्रत्याख्यायम् देवता[illegible] आहुतिर्जुहोतीति। दद्भिःशादाय-

(१) का० स्विष्टकृद्वनस्पत्यन्तरे शुम्ब्रध्रुवादेवताश्वाङ्गेभ्यो जुहोत्यमुष्मै स्वाहेति प्रतिदेवतं शादप्रभृतित्वागन्तेभ्यो विसुपाय परेभ्य इति। स्विष्टकृद्वनस्पत्योरन्तरे वनस्पतियागानन्तर स्विष्टकृद्यागात्पूर्वं शूले अर्पित मासं प्राजापत्योऽश्व इति वचनत्

* मादर्द्भिर्नवैकैकाहिरण्यगर्भसतस्थानोदशमानोर्मिवायदश्वस्याष्टकौयत्तो षडिमानुकदे पञ्चदशमन्तचत्वारि ठं० मत्।

शब्दं कुर्वन्ति तैरङ्गैः प्राणान् देवान् प्रीणामि । स्तूप उच्छ्राये स्तुपेन उच्छ्रितेन शिखाभूतेनाङ्गेन रक्षाणां देवं प्रीणाति ॥ २ ॥ केशैः स्कन्धस्थरोमभिः मशकान् देवान् प्रीणामि । वहः स्कन्धस्तेनेन्द्रं प्रीणामि । कीदृशेन वहेन स्वपसा अप इति कर्मनाम शोभनमपः कर्म पर्याणाधारणनरवहनादिकं यस्य सस्वपा, तेन। शकुनिः पक्षी तद्वत् सादो गमनम् प्लुत्य विशरणगत्यादौ यस् वेगवत् कूर्दनं

तिऽप्रीणामिनिर्हृतिम्विवर्जजर्जल्येनप्रीणामिसङ्क्रोशैःप्राणान्रेष्माणं

ऽस्तुपेन ॥ २ ॥ [ १ ] मशकान्केशैः ॥ मशकान्केशैरिन्द्रऽस्व

पसाव्वहेनबृहस्पतिंऽशकुनिसादेनकूर्म्मान्छफैराक्रमणऽस्थूराभ्या

मृक्षलाभिःकपिञ्जलाञ्जवञ्जङ्घाभ्यामध्वानम्बाहुभ्याञ्जाम्बीलेनारण्य

तेन बृहस्पतिं देवं प्रीणामि। शफं क्लीबे खुरः पुमान् खुरैः कूर्मान् देवान् प्रीणामि। रलयोरैक्यम् स्थूराभ्यां गुल्फाभ्यामाक्रमणं देवं प्रीणामि । गुल्फाधःस्था नाड्यः ऋक्षलास्ताभिः कपिञ्जलान् देवान् प्रीणामि । गुल्फजान्वोर्मध्यभागो जङ्घा ताभ्यां जवं देवं प्रीणामि । अग्रपादयोर्जानूर्ध्व-

मस्तके भवं मस्तिष्कं शिरोमध्यस्थो जर्जरो मांसभागः मस्तिष्कं गोर्दमित्यमरः मस्तकमि-
ष्यति गच्छति मस्तिष्कम् इष गतौ मस्तकमज्जेति चीरस्वामी तेन मस्तिष्केणाशनिं देवं
प्रीणामि । विद्युतं कनीनकाभ्यां प्रीणामीति पूर्ववत । कर्णाभ्यां श्रोत्रम् श्रवाश्रवाङ्गात्मिका एव
देवता कर्णाभ्यां कर्णशष्कुलीभ्या श्रोत्रं देवम् प्रीणामि । श्रोत्रेन्द्रियाभ्यां कर्णौ देवौ प्रीणामि ।
कण्ठाधोभागेन तेदनीं देवतां प्रीणामि । शुष्कश्चासौ कण्ठश्च शुष्ककण्ठम् कण्ठस्यय:शुष्को निर्मांसो

तरेणाप्रकाशेनान्तरमनूकाशेनबाह्यन्निवेष्यम्मूर्द्धास्तनयित्नुन्निर्बा
धेनाशनिम्मस्तिष्केणविद्युतङ्कनीनकाभ्याङ्कर्णाभ्याᳪश्रोत्रᳪश्रो
त्राभ्याङ्कर्णौतेदनीमधरकण्ठेनापःशुष्ककण्ठेनचित्तम्मन्याभिरदि

देश' तेनापो देवता. प्रीणामि । पश्चादग्रीवा शिरा मन्येति अमरः ग्रीवापश्चाद्भागे कृकाटिकायां
शिरा मन्या मन्यत इति मन्या संज्ञायांसमजनीतिक्यप् ग्रीवापश्चान्नाडीभिश्चित्तं प्रीणामि ।
शीर्ष्णां शिरसादितिं देवतां प्रीणामि शीर्षस्य शीर्षन्नादेशः शसादौ । नितरां जर्जरीभूतेन शिरोभागेन
निर्ऋतिं देवं प्रीणामि । सम्यक् क्रोशन्ति शब्दायन्ते तानि सङ्क्रोशानिगच्छतोऽश्वस्य यान्यङ्गानि

गर्त्तं कुर्वन्ति तैरङ्गैः प्राणान् देवान् प्रीणामि । स्तूप उच्छ्राये स्तुपेन उच्छ्रितेन शिखाभूतेनाङ्गेन रेष्माणं देवं प्रीणाति ॥ २ ॥ केशैः स्कन्धस्थरोमभिः मशकान् देवान् प्रीणामि । वहः स्कन्धस्तेनेन्द्रं प्रीणामि । कीदृशेन वहेन स्वपसा अप इति कर्मनाम शोभनमपः कर्म पर्याणधारणवहनादिकं यस्य स्वपाः तेन । शकुनिः पक्षी तद्वत् सादो गमनम् पदृ विशरणगत्यादौ यत्र वेगवत् कूर्दनं

तिꣳ शीर्ष्णा निर्ऋतिं निर्जर्जल्पेन शीर्ष्णा सङ्क्रोशैः प्राणान् रेष्माणꣳ स्तुपेन ॥ २ ॥ [ १ ] मशकान्केशैः ॥ मशकान्केशैरिन्द्रꣳ स्वपसा वहेन बृहस्पतिꣳ शकुनिसादेन कूर्मान्छफैराक्रमणꣳ स्थूराभ्यामृक्षलाभिः कपिञ्जलाञ्जवं जङ्घाभ्यामध्वानं बाहुभ्यां जाम्बीलेनारण्य

तेन बृहस्पतिं देवं प्रीणामि । शफं क्लीबे खुरः पुमान् खुरैः कूर्मान् देवान् प्रीणामि । रलयोरैक्यम् स्थूलाभ्यां गुल्फाभ्यामाक्रमणं देवं प्रीणामि । गुल्फाधःस्था नाड्यः ऋक्षलास्ताभिः कपिञ्जलान् देवान् प्रीणामि । गुल्फजान्वोर्मध्यभागो जङ्घा ताभ्यां जवं देवं प्रीणामि । अग्रपादयोर्जानूर्ध्व-

भागौ बाहू ताभ्यामश्विनं देव प्रीणामि। जाम्बीरं जम्बीरतरोः फलं रलयोरभेदः तदाकारो जानुमध्यभागो जाम्बीरस्तेनारण्यं देव प्रीणामि। अत्यन्तं रोचेते तौ अतिरुचौ जानुदेशौ ताभ्यामग्निं देव प्रीणामि। अगुपादयोर्जान्वधो दोषौ करौ ताभ्यां पूषणं देवं प्रीणामि। अंसौ स्कन्धौ ताभ्यामश्विनौ देवौ प्रीणामि। रोरावंसग्रन्थी ताभ्यां रुद्रं प्रीणामि॥ ३॥ अत्र पष्ठ्या

उ० मुग्निमंतिरुग्गभ्यांम्पूषणंन्दोभ्यांमुश्श्विनावꣳसाभ्याꣳरुद्रꣳरोरा

भा० भ्याम्॥ ३ ॥[१] अुग्नेःपंक्तुतिर्वायोर्न्निपंक्तुतिरिन्द्रंस्यतृतीया सोमंस्यचतुर्थ्यदित्यैपञ्चुमीन्द्राण्यैषुष्ठीमुरुतांꣳसप्तुमीबृहुस्पतेरष्टु

देवतोद्देशः प्रथमयाङ्गोद्देशः ततोऽस्त्वित्यध्याहारः। अग्ने देवस्य पक्षतिरस्तु। पक्षः साध्यविरोधयोः बले कालेपतत्रे च रुचौ पार्श्वे प्रकल्पिते इत्यभिधानोक्तेः पक्षः पार्श्ववाची पक्षस्य मूलं पक्षतिः पक्षात्तिरिति मूलार्थे तिप्रत्ययः ततः पक्षस्य पार्श्वस्य मूलभूतान्यस्थीनि वङ्क्रिशब्दवाच्यानि पक्षति शब्दे नोच्यन्ते तानि च प्रतिपार्श्वं त्रयोदश भवन्ति षड्विꣳशतिरश्वस्य वङ्क्रय

इति श्रुतेः। तेषां क्रमेण देवता सम्बन्धं वक्ति। तत्रादौ दक्षिणपार्श्वास्थ्नां देवता आह अग्नेः पक्षतिः प्रथमं दक्षिणपार्श्वास्थि अग्नेरस्तु विभक्तिव्यत्ययो वा पक्षत्याग्निनृ देवं प्रीणामि। वायोर्निपक्षतिः नीचा पक्षतिर्निपक्षतिः द्वितीयं दक्षिणपार्श्वास्थि वायोर्देवस्यास्तु। एवमग्रेऽपि व्याख्येयम्। तृतीया पक्षतिरिन्द्रस्यास्तु। चतुर्थी पक्षतिः समस्य। अदित्यै चतुर्थी षष्ठ्यर्थो पञ्चमी

स्सूर्य्यस्सणोनवमीधातुर्दशमीन्द्रस्यैकादशीव्वरुणस्यद्वादशीयमस्यत्र योदशी ॥ ४ ॥ [ १ ] इन्द्राग्न्योःपक्षतिःसरस्वत्यैनिपक्षतिर्म्मित्र स्यतृतीयापाञ्चतुर्थीनिर्ऋत्यैपञ्चम्यग्नीषोमयोःषष्ठीसर्पाणाᳬंस

पक्षतिः अदित्याः। षष्ठी पक्षतिः इन्द्राण्याः। सप्तमी पक्षतिः मरुताम्। अष्टमी पक्षतिः वृहस्पतेः। नवमी पक्षतिरर्य्यम्णो देवस्य। दशमी धातुर्देवस्य। एकादशी पक्षतिः इन्द्रस्य द्वादशी पक्षतिः वरुणस्य। त्रयोदशी पक्षतिः दक्षिणपार्श्वास्थि यमस्य देवस्यास्तु ॥ ४ ॥ अथ वामपार्श्वास्थ्नां देवानाह। प्रथममुपरिस्थं वामपार्श्वास्थि इन्द्राग्न्योर्देवयोरस्तु। सरस्वत्यै निपक्षतिः द्वितीया

पचतिः सरस्वत्याः । तृतीया पचतिर्मित्रस्य देवस्य । चतुर्थी अपां देवतानाम् । पञ्चमी निर्ऋत्यै निर्ऋतेः । षष्ठी अग्नीषोमयोः । सप्तमी सर्पाणां देवानाम । अष्टमी विष्णोर्देवस्य । नवमी पूष्णो देवस्य । दशमी त्वष्टुः । एकादशी इन्द्रस्य । द्वादशी वरुणस्य । यमस्येयं यमी त्रयोदशी पचतिः यमसम्बधिनी चतुर्थी प्रथमायां ॥ अथ समस्तयोः पार्श्वयोर्देवानाह दक्षिणं पार्श्वं द्यावापृथिव्योः

ष्टमीविष्णोरष्टमीपूष्णो नवमीत्वष्टुर्दशमीन्द्रस्यैकादशीवरुणस्यद्वादशीयम्यैत्रयोदशीद्यावापृथिव्योर्दक्षिणम्पार्श्वंविश्वेषान्देवानामुत्तरम् ॥ ५ ॥ [१] मरुताᳬस्कन्धाः ॥ मरुताᳬस्कन्धाविश्वेषान्देवानांप्रथमाकीकसारुद्राणान्द्वितीयादित्यानान्तृतीयावा

रस्तु उत्तरं वामं पार्श्वं विश्वेषां देवानामस्तु ॥ ५ ॥ अथाङ्गान्तराणां देवता आह विभक्तिव्यत्ययः स्कन्धप्रदेशे मरुतो देवान् प्रीणामि । अश्वपुच्छोपरि तिस्रोऽस्थिपङ्क्तयः सन्ति तासां देवता आह । कीकसं कुल्यमस्ति चेत्यमरः कीकसति शब्दं करोति कीकसमस्थि प्रथमा कीकसा प्रथमानि

कीकसानि पुच्छोपरिस्थास्थिपङ्क्तिर्निश्रेयां देवानां प्रथमकीकसैर्विश्वान् देवान् प्रीणामि। द्वितीयास्थिपङ्क्तिः रुद्राणां द्वितीयै रुद्रान् प्रीणामि। तृतीयानि कीकसानि आदित्यानां तृतीयैः कीकसैरादित्यान् प्रीणामि। वायोः पुच्छं पुच्छेन वायुं प्रीणामि। भासदौ भासेते तौ भासदौ नितम्बौ तावग्नीषोमयोः भासद्भ्यामग्नीषोमौ प्रीणामि। क्रुञ्चौ श्रोणिभ्यां पुनः पूर्ववदङ्गात् तृतीया कटिः श्रोणिः कुकुद्मतीत्यमरः श्रोणिभ्यां दक्षवामाभ्यां कटिप्रदेशाभ्यां क्रुञ्चौ देवौ

# यो ऽ पुच्छमग्नीषोमयोर्भासदौ क्रुञ्चौ श्रोणिभ्यामिन्द्राबृहस्पती ऽऊरुभ्यां मित्रावरुणावल्गाभ्यामाक्रमणं स्थूराभ्यां बलं कु

प्रीणामि। इन्द्राबृहस्पती ऊरुभ्याम् सक्थि क्लीबे पुमानूरुरित्यमरः ऊरुभ्यामिन्द्राबृहस्पती देवौ प्रीणामि। मित्रावरुणौ अल्गाभ्यान् अलमत्यर्थं गच्छतः ऊरुभ्यां संयोगं प्राप्नुतस्तौ अल्गौ वङ्क्षणौ ऊरुमध्यौ ताभ्यां मित्रावरुणौ प्रीणामि। स्थूरौ स्थूलौ स्फिचौ नितम्बाधोभागौ ताभ्यामाक्रमणं देवं प्रीणामि। कुष निष्कर्षे कुष्येते तौ कुष्ठौ नितम्बस्थौ कूपकौ आवर्तौ

ककुन्दरशब्दवाची ताभ्यां वलं देवं प्रीणामि ॥ ६ ॥ वनति सम्भजति वनिष्ठुः स्थूलान्त्रं तेन पूषणं देवं प्रीणामि। गुदं त्वपानं पायुर्नेत्यमरः स्त्रीत्वं छान्दसम् स्थूला चासौ गुदा च स्थूलगुदा तया गुदस्य स्थूलभागेन अन्धाहीन् प्रीणामि। अन्धाश्च ते अहयश्च सर्पास्तान्। सर्पान् गुदाभिः स्थूलगुदातिरिक्तैर्गुदभागैः सर्पान् प्रीणामि। विह्रुत आन्त्रैः अन्त्रं पुरीतदित्यमरः अमगतौ भजने शब्दे अमतिभजत्ययनेनान्नमित्यन्त्रम् अन्त्रे भवा आन्त्राः अन्त्रसम्बन्धिनो मांसभागाः तैर्विह्रु-

## तांभ्याम् ॥ ६ ॥ [१] पूषणंव्वनिष्ठुनान्धाहीन्त्स्थूलगुदयासर्प्पान्गुदाभिर्व्विह्रुतऽआन्त्रैरपोव्वस्तिनाव्वृषणमाण्डाभ्यांव्वाजिनꣳशेपेनप्र

तो देवान् प्रीणामि। अपो वस्तिना वस्तिर्नाभेरधो द्वयोरित्यमरः वसतिमूत्रं यस्मिन् स वस्तिः नाभेरधो वर्तमानं मूत्रपुटं तेनापो देवताः प्रीणामि। मुष्कोऽण्डो वृषणः कोशः अण्ड एवाण्डः ताभ्यां लिङ्गोभयपार्श्वस्थाभ्यां मांसपिण्डाभ्यां वृषणं देवं प्रीणामि। शेपो लिङ्गं तेन वाजिनं देवं प्रीणामि शिश्नं मेढ्रं मेहनशेपसी इति अमरः शि निशाने शिनोति भगमिति शेपः सान्तोऽदन्तश्च। प्रजा रेतसा शुक्रं तेजो रेतसी च बीजवीर्येन्द्रियाणि चेति अमरः रीङ् स्रवणे रियते

स्रवति रेतो वीर्यं तेन प्रजादेवतां प्रीणामि । मायुः पित्तं पतति स्रंसते पित्तंधातुविशेषस्तेन चापान् देवान् प्रीणामि । पाति मलोत्सर्गमिति पायुर्गुदमुक्तातिरिक्तं तेन गुदतृतीयभागेन प्रदरान् देवान् प्रीणामि। कूश्मान् शकपिण्डैः । शको देशे नृपे विशि। विशि विष्ठायां शकस्य विष्ठायाः पिण्डैः कूश्मान् देवान् प्रीणामि ॥ ७ ॥ पुनर्देवे षष्ठी अंगे प्रथमा । क्रुड घनत्वे क्रुडतीति क्रोडः घनो वक्षोमध्यभागः स इन्द्रस्यास्तु क्रोडेन वा इन्द्रं प्रीणामि एवमग्रेऽपि पाजसे

जाम्बुं रेतंसा चापान्पित्तेन प्रदुरान्पायुनां कूश्मान्छकपिण्डैः ॥ ७॥

[१] इन्द्रंस्य क्रोडः ॥ इन्द्रंस्य क्रोडोदित्यै पाजुस्यं दिशां जुत्रवोदि

बलाय हितं पाजस्यं बलकारमङ्गं तददित्याः देवतायाः। अंसकक्षयोः सन्धिर्जत्रु। जायत इति । पुंस्त्वमार्षम् तानि दिशां देवतानाम् । भसभर्त्सनदीप्त्योः बभस्ति दीप्यते भसत् लिंगार्थं तददित्याः अस्तु ॥ पुनर्देवे द्वितीया अंगे तृतीया। हृदये उपशेते हृदयौपशं हृदयस्थं मांसं तेन जीमूतान् प्रीणामि पूर्यते पुरीतत् हृदयाच्छादकमन्त्रं तेनान्तरिक्षं देवम्प्रीणामि। उदरे भवमुदर्यमुदरस्थं मांसं तेन नभो देवं प्रीणामि शरीरावयवादग्रत् । ग्रीवाधस्ताद्भागास्थित-

हृदयोभयपार्श्वस्थे अरिघनी मतस्ने ताभ्यां चक्रवाकौ देवौ प्रीणामि। वृक आदाने वृक्यते स्वादुतया गृह्यते वृक्का नान्तः पुंस्त्वयं स्त्रीत्वेके इति क्षीरस्वामी वृक्का मुख्यं मांसं तेन दिवं देवतां प्रीणामि वृक्कौ कुक्षिस्थौ मांसगोलकावाम्रफलाकृती इति याज्ञिकाः। प्रकर्षेणाश्नन्ति भुञ्जते-ऽन्नानीति प्लाशयः शिश्नमूलनाड्यः तन्नाडीद्वारैवान्नस्य देहे सञ्चारात् रलयोरभेदः ताभिर्गिरीन् देवान् प्रीणामि हृदयवामभागे शिथिलो मांसभागः पुप्पुससंज्ञः प्लिह गतौ प्लेहते प्लीहा

स्त्यैभ्र सञ्जीमूतान्हृदयौपशेनान्तरिक्षम्पुरीतता नभऽउदर्य्येण चक्रवाकौ मतस्नाभ्यान्दिवं वृक्काभ्यां गिरीन्प्लाशिभिरुपलान्प्लीह्ना वल्मीकान्क्लोमभिर्ग्लौभिर्गुल्मान्हिराभिः स्रवन्तीर्ह्रदान्कुक्षि

नान्तः तेनउपलान्देवान् प्रीणामि क्लोमति क्लोमा उदर्यो जलाधारः। हृदयस्य दक्षिणे यकृत् क्लोमा वामेप्लीहापुप्पुसमित्येतिवैद्या इति चरस्वामी क्लोमागलनाडीति कर्कः तैर्वल्मीकान् देवान् प्रीणामि ग्लायन्ति श्राम्यन्ति ग्लावो हृदयनाड्यः ताभिर्गुल्मान् देवान् प्रीणामि। हरन्त्यन्नरसमिति हिरा अन्नग्राहिण्यो नाड्यः ताभिः स्रवन्तीः देवताः प्रीणामि। जठरस्य दक्षवामभागौ कुक्षी

ताभ्यां क्रदान् देवान् प्रीणामि। उदरेण जठरेण समुद्रं प्रीणामि। भस्मनाङ्गेत्येन वैश्वानरं देवं प्रीणामि॥ ८॥ नाभ्या उदराधःस्थग्रन्थिना विधृतिं देवतां प्रीणामि। रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः शृङ्गारादिरसे वीर्ये देहधात्वम्बुपारदे इति विश्वः रसेन वीर्येण धातुविशेषेण वा घृतं देवं प्रीणामि। यूषः क्वथितो रसः पद्दन्नित्यादिना यूषन्नादेशः यूष्णा पक्वान्नरसेनापो देवताः प्रीणामि। विप्रुड्भिर्जलबिन्दुभिर्मरीचीर्देवाः प्रीणामि। ऊष्मणस्तु निदाघोष्मग्री-

ब्भ्यां० समुद्रमुदरेण वैश्वानरम्भस्मना॥ ८॥ [१] विधृतिन्नाब्भ्या॥ घृतꣳरसेनापो यूष्णा मरीचीर्विप्रुड्भिर्न्नीहारमूष्मणा शीनं

ष्माः गव्यसङ्घा अपीति विश्वः ऊष्मणा शरीरगतेनौष्ण्येन नीहारं देवं प्रीणामि। वस्ते मांसमिति वसा शुद्धमांसस्य यः स्नेहः सा वसेति वैद्या इति स्वामी वसया मांसस्नेहेन शीनं देवं प्रीणामि। दूषीकाभिर्नेत्रमलैर्ह्रादुनीर्देवताः प्रीणामि। असृज्यते सृज्यते इति वा असृक् रुधिरं पद्दन्न इत्यसन्नादेशः अस्ना रक्षांसि प्रीणामि। अङ्गैः पूर्वानुक्तावयवैः चित्राणि दैवतानि प्रीणामि। रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोरिति विश्वः रूपेण सौन्दर्येण नक्षत्राणि दैवतानि प्रीणामि।

त्वचा चर्मणा पृथिवीं देवीं प्रीणामि । स्वाहेति मन्त्रै राज्यं जुहोतीत्यर्थः । अत्र अग्निं हृदयेना-ग्निं हृदयाग्रेणेत्यादि द्यावापृथिवीभ्यां स्वाहेत्यन्ता अपि आहुतिर्जुहुयात् अश्वमेधिकत्वात् । अवभृथे अप्सु मग्नस्य पिङ्गलखलति विक्लिधशुक्लस्य मूर्द्धनिजुहोति । (१) जुम्बकायस्वाहाइति । वारु-

वर्वसंयुप्रष्छ्वाऽअस्मृभिर्हादुनीर्द्दुषीकाभिर्‌स्नारद्दांॅसिच्चिचित्रायु ञ्छैन्नर्च्वत्वाणिरूपेणपृथिवीन्त्वचाजुम्बकायस्वाहा ॥ ९ ॥ [ १ ] हिर्‌ण्युगर्भः सम् ॥ हिर्‌ण्युगर्भःसमवर्त्ततागुग्रेभूतस्यंजातःपतिरेकंऽ आसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायंहुविषाविधेम ॥ १० ॥

षोडिपदा शुष्डिभश्रौदन्यहष्टा । वरुणोवै जुम्बकइतिश्रुतिः एषा चान्तर्जले जप्ता पापनाशनी तदुक्तं हारीतेन जुम्बका नामगायत्री वेदे वाजसनेयके मन्तर्जले सकृज्जप्ता ब्रह्महत्यां व्यपोह-तीति ॥ ९ ॥ चतस्रः कदेवत्याः त्रिष्टुभः प्रजापतिसुतहिरण्यगर्भदृष्टाः प्राजापत्यपशूनामश्वा-

(१) का०अवभृथेष्टान्तेऽप्सु मग्नस्य पिङ्गलस्य खलतिविक्लिधशुक्लस्य मूर्धनि जुहोति जुम्बकाय स्वाहेति । अवभृथया गान्ते एवंविधस्य पुंसो मूर्धनि जुम्बकायेति मन्त्रेणाज्यं सकृद्गृहीत जुहुयात् कीदृशस्य पुंस जले मग्नस्य पिङ्गलाक्षस्य खलते खल्वाटस्य विक्लिधस्य दन्तुरस्य शुक्लस्यातिगौरस्येति सूत्रार्थः ॥

द्दौनां याज्यानुवाक्या: । द्वे व्याख्याते ॥ १० । ११ ॥ वयं कस्मै प्रजापतये देवाय हविषा विधेम हविर्दद्मः विभक्तिव्यत्ययः कशब्दस्य सर्वनामत्वसार्थम् । इमे हिमवन्तः बहुवचनादन्येऽपि हिमाचलप्रभृतय: पर्वता. प्रथमा द्वितीयार्थे सुपा सुपो भवन्तीति वचनात् इमान्हिमवत्प्रभृत्यद्रीन्यस्य प्रजापतेर्महित्वं महिमानमाहुर्बुधाः महित्वेति विभक्तेराकार: । रसा नदी रसते:

यऽप्प्राणतोनिंमिषुतोमहित्वैकुऽइद्राजाजगंतोबुभूव ॥ यऽईशेऽअस्य द्विपदश्चतुंष्प्पदुऽकस्मैदेवायंहुविषांव्विधेम ॥ ११ ॥ यस्येमे ॥ हिमवंन्तोमहित्वायस्यंसमुद्रंरसयासुहाहुः ॥ यस्येमाःप्प्रदिशोयस्यंबाहूकस्मैदेवायंहुविषांव्विधेम ॥ १२ ॥ यऽआत्मुदाः ॥ यऽआत्मु

शब्दकर्मण इतिनिरु० यास्कः । रसया नद्या सह समुद्रं यस्य महित्वमाहुः । इमा: प्रदिश. पूर्वाद्याः प्रकृष्टा आशा यस्य महित्वमाहुः यस्य बाहू भुजौ जगद्रक्षणाविति शेषः । सर्वं जगद्यस्य प्रजापतेर्विभूतिरित्यर्थः ॥ १२ ॥ कस्मै देवाय हविषा विधेमेति व्याख्यातम् । आत्मानं ददाति आत्मदा:

उपासकानां सायुज्यप्रदः बलं सामर्थ्यं ददाति बलदाः भुक्तिमुक्तिप्रद इत्यर्थः । विश्वे सर्वे मनुष्याः यस्य प्रशिषं शासनमुपासते देवाश्च यस्य प्रशिषमुपासते तदुक्तम् यस्य ज्ञेयावधि ज्ञानं शिक्षावधि च शासनम् कार्यावधि च कर्तृत्वं स स्वयम्भूः पुनातु व इति । किञ्च यस्य छाया आश्रयो ज्ञानपूर्वमुपासनम् अमृतं मुक्तिहेतुः यस्य अज्ञानमिति शेषः मृत्युः

दाबलदायस्यविश्वऽउपासतेप्रशिषंयस्यदेवाः॥* यस्यच्छायामृ तंयस्यमृत्युःकस्मैदेवायहविषाविधेम ॥ १३ ॥ [४] आनः॥ आनो भद्राःक्रतवोयन्तुविश्वतोदब्धासोऽअपरीतासऽउद्भिदः ॥ देवानोय

संसारहेतुः तदुक्तम् ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्तीति श्वेताश्वतरोपनिषः ॥ १३ ॥ आनोभद्राः । वैश्वदेवानांपशूनां याज्यानुवाक्यादश । पञ्चाद्याः सप्तमीचजगत्यः त्रिष्टुभोन्याः । आयन्तुआगच्छन्तु नःअस्माकम भद्राःभन्दनीयाः स्तुत्याः ।

* अतुतुक नभवति यस्यातिडायसङ्केतिन । एतेभ्य परस्य छसा तुकनभवति इति निषेधात् प्रा० अ० ४० सू० याज्ञवल्क्य तदुक्तशिक्षाया यसोति शब्दात्परत. महशब्दात्तथैवच । छेपरेत्वति छायावनतुकव्याजसनेयिके ॥

क्रतवःयज्ञाः संकल्पावा । विश्वतःसर्वतः अदब्धासः अनुपहिंसिताः । अपरीतासः अपरीतासः अपरिज्ञाताः केनचित् । उद्भिदः उद्भेतारोन्येषां यज्ञक्रतूनाम् कल्पानांवा । किञ्च देवाः नःअस्माकम् सदंसदा वृधऽइद्वर्धएवार्थं सदाकालएव । वृधे वर्द्धनाय असन् स्युःभूयासुः । कथंभूताः । अप्रायुवः अप्रमाद्यन्तः रक्षितारश्च दिवेदिवे अहन्यहनि तथाभूयादिति वाक्यशेषः ॥ १४ ॥ देवानाम्भद्रा ।

थासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥१४॥ देवानाम्भद्रा ॥
सुमतिर्ऋजूयतान्देवाना ँ रातिरभिनोनिवर्त्तताम् ॥ देवाना ँ स
ख्यमुपसेदिमाव्वयन्देवानऽआयुःप्रतिरन्तुजीवसे ॥ १५ ॥ तान्पू

देवानां भद्राभन्दनीया सुमतिः कल्याणीमतिः । अभिनोनिवर्ततामित्यनुषङ्गः । अस्मान्प्रत्यभिमुखीभवतु कथंभूतानां देवानाम् । ऋजूयताम ऋजुगामिनाम् । यद्वा ऋजुकामिनाम् । ऋजुंप्रगुणम् यजमानंकर्तुम् येकामयन्ते तेतथोक्ताः । किञ्च । देवानां रातिःदानम् अभिनःअस्मान्प्रतिनिवर्तताम् । ततोलब्धदानाःसन्तः । देवानांसख्यंसखिभावम् । यजमानाःसन्तः

उपसेदिम प्राप्नुयाम वयम्। तेदेवाः न.अस्माकं भक्तानामायुः प्रतिरन्तुप्रवर्द्धयन्तु। किम-
र्थम् जीवसेचिरञ्जीवनाय ॥ १५ ॥ तान्पूर्व्वया। तान्देवान् पूर्व्वयाअक्लिमया स्वयंभुवा। निवि-
दानि विच्छ्ब्दोवाग्वचनः। हूमहे आह्वयामोवयम्। तान्कानित्यतआह। भगंमित्रम् अदितिम्
दक्षम् अस्रिधम् अच्युतसङ्घाम् दक्षस्येतद्विशेषणम्। अर्य्यमणम् वरुणम्सोमम् अश्विनौच।

व्वँयान्निविदांहूमहेव्वयम्भगम्मित्रमदितिन्दक्षमस्रिधम् ॥ अर्य्यमणँ
व्वरुणँ सोमम्अश्विनासरस्वतीनःसुभगामयस्करत् ॥१६॥ तन्नः॥
तन्नोव्वातोमयोभुव्वातुभेषजन्तन्मातापृथिवीतत्पिताद्यौः ॥ तद्ग्रा

ये.सहितासरस्वतीसुभगा न.अस्माकम् मयःसुखङ्करत् करोत्विति॥ १६ ॥ तन्नः। तत्भेषजं मयोभु-
सुखस्य भावयितृ नःअस्माकम् वातःवातु। अनुगृह्णातु। तच्चभेषजं मातापृथिवी अनुगृह्णातु।
तत्पिताद्यौः अनुगृह्णातु। तच्चग्रावाणः सोमसुतः सोमाभिषवकारिणः मयोभुवः सुखस्यभा-
वयितारः अनुगृह्णन्तु। तच्च हेअश्विनौ धिष्ण्याधारयितारौयुवं युवामधिशृणुतम् श्रुत्वाच

अनुगृह्णीतम् ॥ १७ ॥ तमीशानम्। तम् इशानं रुद्रम्। कथंभूतम् जगतः जङ्गमस्य तस्थुषः स्थावरस्य पतिमिवपतिम् धियञ्जिन्वम्। धियाबुद्ध्या संकल्पमात्रेणजिन्वतिप्रीणाति इतिधियञ्जिन्वम् यद्वा धियाकर्मणा जिन्वतिप्रीणातीति धियञ्जिम् अवसेअवनायतर्प्पणाय। हूमहे आह्वयामः वयम्। किञ्च पूषा नःअस्माकम् वेदसाम्धनानाम् असत्भूयात् वृधेवर्द्धनाय। रक्षिताच

वांगाऽसोमसुतोमयोभुवस्तदंश्विनाशृणुतन्धिषण्यायुवम् ॥ १७ ॥

तमीशानम् ॥ तमीशानञ्जगतस्तस्थुषस्पतिंन्धियञ्जिन्वमवंसेहूमहेव्वयम् ॥ पूषानोयथाव्वेदंसामसंद्वृधेरंक्षितापायुरदंब्धःस्वस्तये ॥ १८ ॥ स्वस्तिनंः ॥ स्वस्तिनऽइन्द्रोव्वृद्धश्श्रवाःस्वस्तिनंःपूषा

वायुःपाताच। अदब्धः अनुपहिंसितश्चान्येन केनचित्। स्वस्तयेअविनाशाय। तथाहूमहेवय-मित्यनुषंगः ॥१८॥ स्वस्तिनः। स्वस्ति स्वस्त्ययनम् नःअस्माकम् इन्द्रःदधातु स्थापयतु। कथंभूतः। वृद्धश्रवाः प्रभूतधनः महाशब्दोमहाकीर्तिर्वा। स्वस्तिनोस्माकं पूषादधातु। कथंभूतः। विश्व

वेदाःसर्वज्ञोवा। स्वस्तिनः तार्क्ष्योदधातु। कथंभूतः अरिष्टनेमिः अनुपहिंसितासुः। स्वस्ति नःअस्माकं बृहस्पतिश्चदधातु ॥१९॥ पृषदश्वामरुतः। पृषन्तःशवला अश्वायेषां तेपृषदश्वाः। पृश्निमातरः। पृश्निर्द्यौमातायेषान्त एवमुच्यन्ते। शुभंयावानः शुभकृतंजना न्प्रतियेयान्ति तेशुभंयावानः। आतोमनिपक्वनिप् वनिपश्चेतिवनिप्। विदथेषु यज्ञेषु जग्मयःगमनशीलाः।

विप्रश्चवेदाः॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ १९ ॥ पृषदश्वामरुतः ॥ पृषदश्वामरुतःपृश्निमातरःशुभंयावानोविदथेषुजग्मयः ॥ अग्निजिह्वामनवःसूरचक्षसोविश्वेनोदेवाऽअवसागमन्निह ॥ २०॥ भद्रङ्कर्णेभिःशृणुयामदेवाभ

आह्वगमहनेतिकिः। यद्वत्वंभूतामरुतस्ते अवसाअन्नेन हविर्लक्षणेन आहूताः सन्तः आगमन्-त्यागच्छन्तु इहेत्यनुषगः। येच अग्निजिह्वा अग्निजिह्वा अग्निमुखाहुतादाइत्यर्थः। मनवः चतुर्दशतेच अवसागमन्निह। येच सूरचक्षसः आदित्यदर्शनाः विश्वदेवाः तेच नःअस्माकम् अवसागमन्निहयज्ञे ॥२०॥ भद्रकर्णेभिः। भद्रमनुकूलं कर्णेभिः कर्णाभ्यांशृणुयाम हेदेवाः।

भद्रम्पश्येम चक्षुभिः अक्षिभ्या हे यजत्राः यजनीयाः । किञ्च । स्थिरैरङ्गैः अशिथिलैः अङ्गैः । तुष्टुवांसः देवान्स्तुतवन्तः । तनूभिः भार्यापुत्रपौत्रादिकाभिस्तनूभिः सहिताः व्यसेमहि व्यश्नुवामहि । देवैर्हितं देवैर्यत् स्थापितं मनुष्याणामायुः तत् व्यश्नुवामहि ॥ २१ ॥ शतमित् । शतमपिशरद् अन्ति अन्तिके समीपे भवथ हे देवाः । आकल्पकालमित्यभिप्रायः । ऋषिभिरुदितमेतत्

द्रम्पश्येमाक्षभिर्य्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाᳫंसस्तनूभिर्व्यशेमहिदेवहितंयदायुः ॥ २१ ॥ शतमित् ॥ शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्राजरसन्तनूनाम् ॥ पुत्रासोयत्रपितरोभवन्तिमा

यत्रयस्मिन्शरदांशते न:अस्माकं यूयञ्चक्रकृतवन्तः जरसंजरान्तनूनाम जरानिमित्ताम् शक्तिमित्यभिप्राय. । किञ्च । पुत्रासोयत्रपितरोभवन्ति पुत्राअस्मयः यत्रशरदांशते । यजमानस्यपितरो जनितारोभवन्ति । तदुक्तम् तत्रवैप्रजापतिः प्रजाः सृजन्नित्युपक्रम्य । तस्माज्जनयित्वाविन्दतीति । यत्रपितरोभवन्ति एतदप्युक्तमेव । सयत्रस्रूयते पत्नैनमग्ना वभ्याद्धाति तदेषोऽग्नेर-

धिजायते सएषपुत्रव: सन्पिताभवति। अथवापुत्रा एवपितॄणामौर्द्ध्वदेहिकं कुर्वाणा: पितरोयत्रमं पद्यन्ते तदपिशरदांशतमन्तिक एवेति। यतएवमतोब्रूम: मानोमध्यारीरिपता युर्गन्तो:। मारीरिपत् माहिंसीष्ट नोस्माकं मध्यामध्ये अकालएवआयु:। गन्तो: गन्तृगमनशीलम्। उक्ताश्च सन्त्रित्य सन्त्रित्यतमुग्रदण्डं मृत्युमनुष्यस्त्रविचक्षणस्य। वर्षासुसिक्ताश्चर्मबन्धा: सर्वेप्रपता: शिलीभवन्तीति ॥२२॥

नोमध्यारीरिषतायुर्गन्तोः ॥ २२ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता सपिता सपुत्रः ॥ विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्जातमदितिर्जनित्वम् ॥ २३ ॥ [१०] मानः ॥ मानोमित्रोव्व

सर्वात्मक त्वेनादितिं मंत्रद्रष्टास्तौति अदितिश्च अन्तरिक्षम् अदितिश्चमाता साचपिता साचपुत्र: सद्गतिश्छान्दसोलिङ्गव्यत्यय: विश्वेचदेवा: पंचजना: मनुष्याश्चअदिति: किम्बहुनोक्तेन अदितिरेवजातंभूतम् अदितिरेवजनित्वजनिष्यमाणम् अथवानैवादितिरन्नेनोच्यते किम्पुन: एतान्येवद्यौ: प्रभृतीनिमदानानिमहाभाव्ययुक्तानीति २३ मान:। अश्वस्तोमीयंजुहोति। द्वाविंशत्यक्रग्भिस्त्रिष्टु-

ग्भिः। तृतीयाषष्ठ्यौजगत्यौ। दीर्घतमाऋषिः। अश्वस्स्तूयमानत्वात्या तेनोच्यते सादेवतेतिन्यायेन मश्वोदेवता। तृतीयःपादःप्रथमंव्याख्यायते यच्छब्दयोगात्। यत्वाजेनअश्वस्य। देवजातस्यदेवैर्जनितस्य। सूरादश्वंवसवोनिरतष्टइत्यं तदभिप्रायम्। सप्तेःसरणस्य। प्रवक्ष्यामः उच्चारयामः। विदथे यज्ञे वीर्याणि चरित्राणि तत्मापरिख्यन मागर्हन्तु नः अस्माकंदेवाःस्तुत्याः नत्वश्वप्रभृतयस्तिर्यञ्च-

रुणोऽअर्य्यमायुरिन्द्रऽऋभुक्षामरुतःपरिंख्यन्॥ यद्वाजिनोदेवजातस्यसप्तेः प्रवक्ष्यामोविदथेव्वीर्य्याणि॥ २४॥ यन्निर्णिजा॥ यन्निर्णिजारेक्णसाप्रावृतस्यरातिङ्गृभीतामुखतोनयन्ति॥ सुप्राङ्

इतिस्याहर्षी। मतोवृवोमिमापरिख्यन्निति। यद्यपिगर्हो चिताः तथापिअश्वादिरूपेणदेवानामेवस्तुतत्वादित्याशयः। केते देवाः मित्रःवरुणः अर्यमाअयुर्वायुः वकारलोपेन। इन्द्रश्च ऋभुक्षामरुतश्च॥ २४॥ यन्निर्णिजा। यदानिर्णिजा निर्णेजनेनोदकस्नानेन संस्कृतस्य आलम्भनकाले यत्स्नापनमश्वस्यतदेतदुक्तम्। तथारेक्णसा रेक्णइतिधननामधनेनमणिकाख्येन प्रावृतस्यके-

सरपुच्छेषुपचितस्य अश्वस्य। सुवर्णान्मणीन्केसरपुच्छेषु पत्न्यआनयन्ति तदभिप्रायमेतत् । रातिन्दानम् आजयसक्तुधानालाजालक्षणम् गृहीतांमुखतो नयन्ति । अश्वायरानिहुतशेषं प्रयच्छन्तीत्येतदभिप्रायम्। तत् तदा अश्वस्य सुप्राङ्सुष्ठु प्रगच्छनः अजःमेम्यत् मेम्यदिति-शकानुकरणम् । मेमेत्र्रतिशब्दंकुर्वाणः । विश्वरूपः नानावर्णः कृष्णग्रीवआग्नेयोरराटेपुरस्तादि-त्येतदभिप्रायमेतत् । किञ्च इन्द्रापूष्णोः इन्द्रस्यपूष्णश्चप्रियंपाथः अन्नंपशुलक्षणम् अप्येति अभ्या-

जोमेम्यद्विश्वरूपऽइन्द्रापूष्णोः प्प्रियमप्प्येतिपाथः ॥ २५॥ एष च्छागः ॥ पुरोऽअश्वेनव्वाजिनापूष्णोभागोनीयतेव्विश्वदेव्यः ॥

गच्छति । यदिह्वपठ्यते सौमापौष्णः श्यामोनाभ्याम् तदेवान्यस्यांश्रुतौपठ्यते इन्द्रापौष्णः श्या-मोनाभ्यामिति । तदयंमन्त्रोभिवदति । इन्द्रापूष्णोः प्रियमप्येतिपाथइति ॥ २५ ॥ एष-च्छागः । एषआग्नेयश्छागः पुरः अग्रतोस्थितः नीयते अश्वेनवाजिनाव्यापकेनसहितः । पू-ष्णश्च पोषकस्याग्नेश्चभागोभजनीयः नीयतेअश्वैःसह। सोपिपर्यग्न्यएव । विश्वदेव्यः विश्वेभ्यः सर्वेभ्योदेवेभ्यः हितः अग्नेःसर्वदेवात्मकत्वात्सर्वदेवप्रियत्वम् । कस्मात् अभि प्रियम् अभि-

मेतंयत् । यन्नपुरोडाशम् । पुरोडाशङ्कतम् भवंत । अश्वेनसहितम् । अश्वस्तस्मिन्कालेसंज्ञप्यते पशुपुरोडाशः क्रियते तदेतदुक्तम् । त्वष्टाच एनमजम् । तदासौश्रवसाय शोभनान्तकरणाय जिन्वतिप्रीणाति । सहितस्याधिकारइति । २६ ॥ यद्धविष्यम् । यदाहविष्यम् ऋतुशःऋ-तावृतौ स्वचारिणंदेवयानम् देवानाम् प्रापणीयम् देवयानमार्गगामिनम्वा आदित्यवदनिवारि-

अभिप्रियंयत्पुरोडाशमर्वतात्वष्टेदेनंसौश्रवसायजिन्वति।२६।

यद्धविष्यम् ॥ यद्धविष्यमृतुशोदेवयानन्त्रिर्मानुषाः पर्यश्वंनयन्ति ॥ अत्रापूष्णःप्रथमोभागएतियज्ञन्देवेभ्यःप्रतिवेदयं

तगतिंवा । त्रिःसंस्कृतम् । स्नापनंव्यंजनसुवर्णमणिकप्रवारैः मानुषःऋत्विग्यजमानाः परि-णयन्तिअश्वम् । अत्रतत्रेत्यर्थः । तस्मिन्कालेपूष्णः पोषकस्याग्नेः प्रथमोभागोजाख्यःएतियज्ञम् देवेभ्यःप्रतिवेदयन् अजः स्वकीयेनशब्देन । चरकाश्रुतौपूष्णो ललाटइतिपठ्यते तदभिप्राय

मेतत् ॥ २७ ॥ होताध्वर्युः। होतातत्रशंसिता सुविप्रइति संबन्ध.। यस्मिन्यज्ञे होताविशंसिता। शस्त्राणामपिसाधु मेधावी साधुब्राह्मणोवा अध्वर्युश्च यस्मिन्यज्ञे आवया: आभिमुख्येन वयतिकर्मणीत्यावया: अग्निमिन्ध: अग्निदीपक. ग्रावग्राभ:। ग्रावग्राह: सोमाभिषवायग्रावग्रहणशील. उतअपिशंस्ता। तेनयज्ञेन साध्वलङ्कतेन स्विष्टेन साधुइष्टेनच। वक्षणा:

न्नुजः॑ ॥ २७ ॥ होता॒ध्वर्यु॑ ॥ होता॒ध्वर्यु॒रावया॑ऽअग्निमि॒न्धो ग्रा॑वग्रा॒भऽउत॒शंस्ता॒सुवि॑प्र॒: ॥ तेन॑य॒ज्ञेन॒स्व॑रङ्कृतेन॒स्वि॑ष्टेन॒व॒क्षणा॒ऽआपृ॑णध्व॒म् ॥ २८ ॥ यू॒प॒व्र॒स्का॒ऽउ॒त ॥ येयू॒पवा॒हाश्च॒षाल॒ँ

नदी. देवानातुष्टिकरा:। पयोदधिपयसा पुरोडाशमासै:। आपृणध्वम् आपूरयध्वम् यज्ञपशून्दातव्यमित्यभिप्राय: ॥ २८ ॥ यूपव्रस्काउतयूपं येवृश्चन्ति तएवमुच्यते। उतअपिच येयूपवाहा. यूपयेवहन्ति। चषालंयेअश्वयूपायतक्षति येजना. अश्वबन्धनयूपायचषालं यूपाग्रभागन्तक्षति। तक्षन्तीति प्राप्तेछान्दसमेकवचनम् साधुसम्पादयन्ते। येचअर्वतेअश्वायपचनम्प-

च्यतेनेमेतिपचनकाष्टादिसम्भरन्ति । उतोअपिच तेषाञ्जनानां संबन्धिनी अभिगूर्तिः गुरीउ-
द्यमने । आगूरणमभिगूर्त्तिः स्वकालेसर्वं करणीयमितिबुद्धिः इन्वतुव्याप्नोतु ॥ २९ ॥ उपप्र ।
उपप्रागात् उपैतुसुमत् स्वयमित्यर्थइतियास्कः । मेममअधायिनिहितम यत् मत् मननम्
कितदितिचेत् । देवानामाशाः शंसनानि साधुसाध्वयं पशुरागच्छेदित्येवमादीने । उप-

त्येऽअंप्रश्नयूपायुतक्षंति॥येचार्व्वंतेपचंनॅसम्भरंन्त्युतोतेषांमुभिगूंर्त्ति
र्न्नऽइन्न्वतु ॥ २९ ॥ उपप्र ॥ उपप्रागात्सुमन्न्मेंधायिमन्न्मंदेवा
नामाशाऽउपंवीतपृंष्ठः ॥ अन्न्वेंनुंव्विप्राऽऋषंयोमदन्त्तिदेवानांम्पु
ष्टेचंकृमासुवन्धुंम् ॥ ३० ॥ यद्वाजिनः ॥ यद्वाजिनोदामंसुन्दानुम

पागतः वीतपृष्ठः साधुपोषणेन प्राप्तपश्चाद्भागः । कामितपृष्ठोवा । अश्वपृष्ठंहिसर्वंएवारोढुंका-
मयन्ति । यतएवमतोब्रवीमि । अन्वेनविप्राऋषयोमदन्ति । अनुमदन्तिअनुमोदन्ति एनमश्वं
विप्राऋषयश्च । स्वयञ्च देवाना पुष्टेपोषणाय । चकृमकृतवन्तः । सुबन्धुंशोभनवन्धनम् शोभनार्थं-
बाहना ॥ ३० ॥ यद्वाजिनः । वेजनवतः । दामग्रीवाबन्धनरज्जुः सन्दानंसम्यगवच्छेदकं पादब-

न्धनम् अर्वतः अश्वस्य। पड्वीशंण्या शिरसिबद्धानियोजनीया रज्जुः अस्याश्वस्य। यद्वाघः पादपूरणो। अस्याश्वस्य प्रभृतम्प्रहृतं निक्षिप्तम् आस्येमुखे तृणम् सर्वाणितानि तेतव हेयजमान। अपिदेवेषु अपिप्रजापतये अस्तु। सन्त्वितिप्राप्तेवचनव्यत्ययः॥ ३१॥ यदश्वस्य। यत् अश्वस्य क्रविषः अश्वाङ्गभूतस्यक्रव्यस्यमांसस्य क्रव्यंविक्रान्ताज्जायतइतिनैरुक्ताः। अङ्गम्।

र्व्वतोयाशीर्षण्यारशुनारज्जुरस्य॥ यद्वाघास्युप्रभृतमास्येतृणᳬसर्व्वाताते अपिदेवेष्वस्तु॥ ३१॥ [८] यदश्वस्य॥ क्रविषोमक्षिकाशयद्वास्वरौस्वधितौरिप्तमस्ति॥ यद्धस्तयोःशमितुर्यन्नखेषुसर्व्वाताते अपिदेवेष्वस्तु॥ ३२॥ यदूवध्यम्॥ यदूवध्यमुदरस्यापवातियं

मक्षिकाआश अशितवती। यद्वा। स्वरौस्वधितौरिप्तमस्ति। यच्च स्वरोपस्वञ्जनकाले स्वधितौशासिच्छेदनकालं लिप्तं लग्नमस्ति। यच्च हस्तयोःशमितुः रिप्तम् यच्चनखेषुरिप्तम्। सर्वाताते अपिदेवेष्वस्तुइतिव्याख्यातम्॥ ३२॥ यदूवध्यम् यत् ऊवध्यम् भक्षितमपरिणत मामाशयस्थम्

वध्यमुच्यते। उदरस्य अयुतंपृथग्भूतम् अपवातिगन्धायते। यथ आमस्यपक्वस्यक्रविषः मांस-
स्यगन्धः अस्तिविद्यते। सुकृतातच्छमितार.कृण्वन्तु। तत्सर्वंशमितारः विशसनकर्तारः सुकृ-
तानिसुसंस्कृतानिदोषरहितानि कुर्वन्तु। उतअपिच मेधंमेध्यं यज्ञार्हम्। शृतपाकं देवयोग्य-
पाकंपचतु अतिपक्वमीषत्पक्वञ्चमाकुर्वन्त्वित्यर्थः॥ ३२॥ यत्ते। शूलेसशेषश्रपणम् तदभिवदत्ययं

ऽआमस्यंक्रविषोगन्धोऽअस्ति॥ सुकृतातच्छमितारःकृण्वन्तूतमे
धंशृतपाकंम्पचन्तु॥ ३३॥ यत्ते॥ यत्तेगात्रादग्निनापच्यमाना
दभिशूलन्निहतस्यावधावति॥ मातद्भूम्यामाश्रिषन्मातृणेषुदेवे

मन्त्रः। यत्तेतवगात्रादवयवात् अग्निनापच्यमानात् ऊष्मरूपं रसोवा अवधावति गच्छ-
तितयानिहतस्य निशितेनाहतस्य यदङ्गरसरूपम् अभिशूलंशूलमभिलक्ष्यमांसादुत्कृष्टं धावति-
गच्छति। माश्रिषत्माश्रिषत् तदङ्गंभूम्याम् मातृणेषु। किंतु देवेभ्यः तत् उशद्भ्यः वशकान्तौ

कामयमानेभ्यः रातन्दानम् अस्तु ॥३४॥ येवाजिनम् । येजनाः वाजिनमश्वंपरिपश्यन्तिपक्वंसन्तम्।
येच एनमश्वम् आहुः । किमाहुः सुरभिरयमश्वः अतोनिर्हर किंचिदस्मभ्यं देहीति । इतिशब्दःप्र-
कारवचनः येच अर्वतोश्व स्यसंबधिनीं मांसभिक्षामुपासते कृतशिष्टमांसयाञ्चांकांक्षते।उतोतेषाम्
अपिच तेषांसंबन्धि नीया अभिगूर्त्तिः मा नः अस्मान् इन्वतु व्याप्नोतु । यद्वाटेयभरोयं मन्वो-

भ्यस्तदु॒शद्भ्यो॑रा॒तम॑स्तु ॥ ३४ ॥ येवा॒जिन॑म् ॥ ये वा॒जिनं॑ परि॒पश्य॑न्ति प॒क्वं य ई॑मा॒हुः सु॑र॒भिर्निर्ह॒रेति॑ ॥ ये चार्व॑तो मा॒ᳪसभि॑क्षामु॒पास॑त उ॒तो तेषा॑म॒भिगू॑र्त्तिर्न इन्वतु ॥ ३५ ॥ यन्नीक्षा॑णम् ॥ यन्नीक्षा॑ण

व्याख्येयः । येदेवाः वाजिनं परिपश्यन्ति पक्वम् कदाशोध्यतीति विलंबंदृष्ट्वा । येचसुरभि रयमश्वोत-
निर्हरनिःशेषेणास्मभ्यं देहीत्याहुः । येचार्वतो मांसभिक्षामुपासतेलिप्सते उतोतेषामभिगूर्त्तिन्नइ-
न्वतु । वयन्तुदेवानामन्यभूताइत्यभिप्रायः ॥३५॥ यन्नीक्षणम् । यत्नीक्षणम् नितरामीक्षाते गृताश्च
तव संबन्धिनोयां इतिवनदध्यादिना तत् नीक्षणम् । मांस्पचन्याः मांसस्यपचियुक्पजोरित्य

कारलोपः । उखायाः यानिचपात्राणि यूष्णः वसायाः यूषशब्दस्ययूषन्नादेशः षष्ठ्येकवचने उपधालोपश्च । आसेचनानिआसिच्यतेयैष्विति्वासेचनानि । ऊष्मण्याऊष्मशब्दस्यधारणार्थेयत्-प्रत्ययः । यानिचऊष्मण्यानि । पिधाना । पिधानानिच चरूणांस्थालीनाम् । येच अंकाः अंकोपलक्षकाः । शरीरवचनोङ्कशब्दः । याश्चसूनाः अश्वविशसनाधिकरणभूताः वेतसमय्यः

# मांस्पचंन्न्याऽउखायायापात्राणियूष्णाऽआसेचनानि ॥ ऊष्मण्यापिधानाचरूणामङ्काःसूनाःपरिभूषन्त्यश्वम् ॥ ३६ ॥ मात्वा ॥ मात्वाग्निर्ध्वनयीद्धूमगंन्धिर्मोखाभ्राजन्त्यभिविक्तजघ्रिः ॥ इष्टं

तानिसर्वाणि । परिभूषन्ति । भूषअलङ्कारे । अलंकुर्वन्ति । परिरक्षन्तिवा । अश्वम् ॥ ३६ ॥ मात्वाग्निः । मात्वा हेअश्व अग्निःध्वनयीत् । ध्वनिःशब्दकर्मा शब्दंकारयेत् कथंभूतः धूमगंधिः अल्पधूमावरणः मांसंहिपचन्नग्निर्दहन्नप्यल्पधूमावरणोभवति । तत्रदह्यमानंसमसिमाशब्दङ्करोत्यतएवमुच्यते । माच उखाभ्राजन्ती संदीपिता अत्यन्ताग्निसंयोगेन । अभिविक्त ओविजी-

भयचलनयाः अभिविनक्तु । अभिनष्टाविदीर्येतवा । उह्नावाद्धा मांसरसंतदिहोच्यते । जग्घ्रिः गन्ध-
ग्रहणशीलाउखा । नन्वचेतनोखा कथंगन्धञ्जिघ्रति । उच्यते । अधिष्ठात्रोत्र देवताः सन्तीति पुर-
स्तात्प्रतिपादितम् तत्त्वावपुनः स्माय्र्यते इष्टंयोगेनसङ्गतीकृतम् वीतंकामितम् अभिगूर्तम् अभ्गु-
द्यतम् वषट्कृतं चादानकाले । यद्वा इष्टंप्रयाजैः वीतमाप्रीभिः पर्यग्निकृतम् अभिगूर्त्तं येय-
जामह इत्यागूर्य्योतामृत्वषट्कृतं वषट्कारेणसंस्कृतम् । तन्ताद्दशम् देवाएवदेवासः प्रतिगृ-

व्वीतमुभिगूर्तंव्वषट्कृतन्तन्देवासऽप्प्रतिगृब्भ्णन्त्यश्श्वम् ॥ ३७ ॥
निक्रमणन्निषदनम् ॥ निक्रमणन्निषदनंव्विवर्तनंयच्चपड्वीशमर्व्वतऽ॥

भ्णन्तिप्रतिगृह्णन्ति अश्वम् ॥ ३७ ॥ निक्रमणंनिषदनम् । निक्रमणंगमनम् वसतिस्थानात् ।
निषदनं तत्रैवस्थितिः । विवर्तनंभ्रमणम् । यान्येतानि चेष्टितानि । यच्चपड्वीशम् । पादे-
प्रविशतीति पड्वीशम्पादवन्धनमुच्यते । अर्वतःअश्वस्य यच्च पपौ पीतवानुदकम् । यच्चघासिं
यवसंजघास । घस्लृअदने भक्षितवान् । सर्वाणितानि निक्रमणादीनि तेतव देअश्व अपि-

देवेषु अपिप्रजापतये अस्तुसन्तु तान्यपि निरर्थकानिमाभूवन्नित्याशयः ॥ ३८ ॥ यदश्वाय । यत् अश्वाय संक्रममानाय वासःउपस्तृणन्ति । सर्वतश्चाच्छादयन्ति । यच्च अधीवासम् उपर्याच्छादनयोग्यं वासउपस्तृणन्ति । यानिच हिरण्यानिउपस्तृणन्ति अस्मैअश्वाय । यच्च संदा-

यच्चंपपौयच्चंघासिञ्जघाससर्वातातेऽअपिंदेवेष्वंस्तु ॥ ३८ ॥ यदश्वांय॥यदश्वांयवासंऽउपस्तृणन्त्यंधीवासंयाहिरंण्यान्यस्मै॥ सन्दानमर्वन्तम्पड्‍वींशम्प्रियादेवेष्वायांमयन्ति ॥ ३९ ॥ [८] यत्ते॥ सादेमहंसाशूकृतस्य *पाष्ण्यांवाकशंयावातुतोद॥ सुचेवताहुविषो

नंसन्दीयतेनेनेतिसंदानं शिरोबंधनम् अर्वन्तम् अर्वतेइतिविभक्तिव्यत्ययः अश्वायेतिसमानाधिकरणत्वात् । यच्च पड्‍वीशम्पादवासः एतानिप्रियाणिदेवेषु आमयन्तिगमयन्ति ॥ ३९ ॥ यत्ते सादे । हेअश्व यत् तेतव सादे । सीदन्त्यश्ववारा अस्मिन्निति सादोऽश्वपृष्ठम् तस्मिन्सादे

* पाष्ण्यें त्यत परत्तुरफृ कारभ्यामिति सूत्रेण षकारस्य द्वित्वनभवति कुत. उष्मान्तस्थाभ्ययस्पर्श. ॥ एतेभ्य. पर स्पर्शो द्विर्भाषत् । तेनरेफषकाराद्वेणकारावेति सिद्धम् प्रा० अ० ४ । सू० १०२ ।

अवस्थितोऽश्ववरः। महसामहत्त्वेनान्वितःसन् कथंभूतस्वशूक्तस्य शब्दानुकरणमेतत् शूत्कारंकुर्वतः अनन्तरम् पाणाविाक्षयावातुतोद। तुदव्यथने। तुदतिव्यथयति स्रुचाइव तातानि यथास्रुचाहविषः हविरितिविभक्तिव्यत्ययः अध्वरेषु यज्ञेषु जुह्वति एवंसर्वाणि तेतव ब्रह्मणावयोलक्षणेनसूदयामिक्षारयामि आहुतित्वेनकल्पयामीत्यर्थः॥ ४०॥ चतुस्त्रिंशत्। चतुस्त्रिंशत् वङ्क्रयः। वाजिनः वेजनवतोश्वस्यदेवबन्धोः देवानांप्रियस्य। देवाबन्धवोस्यइतिवा भावीदेवव-

ऽअद्रुरेपुसर्व्वाताते॒ब्रह्मंणासूदयामि॥ ४०॥ चतुस्त्रि॑ᳪ᳭शद्वाजिनः॥ चतुस्त्रि॑ᳪ᳭शद्वाजिनो॑ देवबन्धोर्व्वङ्क्रीरश्वस्य॒स्वधि॑तिः॒ समे॑ति॥ अच्छि॑द्रागात्त्रा॑व्वयुना॑कृणोतपरुष्परुरनुघुष्या॒व्विश॑स्त॥ ४१॥ एकु

न्धुः। देवोह्यसौभविष्यति एवंभूतस्याश्वस्य वंक्रीःवंक्रयः उभयपार्श्वस्थास्थीनिस्वधितिः छेदनसाधनोसिः समेतिएकमसत्वासङ्गच्छति यतः अतोब्रवीमि। अच्छिद्रागात्रा अच्छिद्राणि अनवखण्डितानि गात्राण्यङ्गानि वयुनाप्रज्ञानेन कृणोताकुरुत हेशमितारः। किञ्च परुःपरुः पर्वपर्व हृदयाद्यंगम् अनुघुष्यइदमिदमितिसंगन्धाविशस्त विसनङ्कुरुत उत्तराङ्केस्यैवमन्त्ररूपसंबन्धः॥ ४१॥

एकस्त्वष्टुः । एकः । अश्वस्यत्रिशस्ताविशसितासंवत्सरः । तदुक्तम् संवत्सरस्यतेजसेति त्वष्टुः आदित्यादुत्पन्नस्याश्वस्य तदुक्तम् सूरादश्ववसवोनिरतष्टदिति । द्वायन्तारा । द्वौनियन्तारौ अहोरात्रौद्यावापृथिव्यौवाभवतः । तथऋतुः द्वितीयोमासानांनियन्तेतिशेषः । एवमश्वस्यविशसितॄन् उक्त्वा अथेदानींस्वकीयंकर्माध्वर्युराह । यातेयानि तव हेअश्व गात्राणामङ्गानाम् ऋतुथा

त्वष्टुः ॥ एकस्त्वष्टुरश्वस्याविशस्ताद्वायन्तारांभवतस्तथऽऋतुः ॥ यातेगात्राणामृतुथाकृणोमितातापिण्डानाम्प्रजुहोम्म्यग्नौ ॥ ४२ ॥ मात्वातपत्प्रियऽआत्मापियन्तम्मास्वधितिस्तन्वऽआतिष्ठिपत्ते ॥

ऋतावती कालेकालेवंधनानि कृणोमि करोमि । तातातानितानि पिण्डानांमांसपिण्डानां मध्येप्रजुहोमि प्रज्ञानानुरोधेनजुहोमि । अग्नौ ॥ ४२ ॥ मात्वातपत् । मात्वान्तपत् । त्वाशब्देनात्रविज्ञानात्मोच्यते सुखदुःखयोर्भोक्ता प्रियआत्माप्राणउक्तः । सहिश्रुतौ प्रियमित्येतदुपासीतेत्युक्तः । देवानाम् पियन्तम् देवलोकगमनप्रवृत्तं सन्तम् । माचस्वधितिः शस्त्रन्त्व.शरीरस्य

अतिष्ठिपत् अस्थापयत् एकादशमन्त्रदानभूतम् तेतव। माच तेतव गृध्नुः मांसग्रहणेगर्धालु लुब्धः। अविशस्ताविशसने अकुशलः। अतिहायअतिक्रम्य। छिद्राछिद्राणिगात्राणि असिना- मिथूकः मिथ्याअकार्षीत् ॥ ४३ ॥ नवै। नवाउएतदिति व्याख्यातम्। अन्यच्च हरीन्द्राश्वौ तेतव। युंजायोजनार्हौ वोढारौ प्रतिधुरौअभूताम् पृषतीच मरुतांसंबन्धिनावश्वौ प्रतिधुराव-

मातेगृध्नुरविशस्ता* ऽतिहायछिद्रागात्राण्यसिनामिथूकः ॥४३॥ नवै ॥ नवाऽउऽएतन्म्रियसेनरिष्यसिदेवाꣳ ॥ इदेषिपथिभिःसुगेभिः ॥ हरीतेयुञ्जापृषतीऽअभूतामुपास्थाद्वाजीधुरिरासभस्य ॥ ४४ ॥

भूताम्। तदुक्तम् अश्वरथयाने युंजन्त्यश्वकाश्याहरीइति। एभिर्दिव्यैस्त्वंसमानं लोकंसंज्ञात- इत्यभिप्रायः। एनमुपश्रुत्य स्वयमेव उपास्थात् उपस्थितः वाजीधुरिरासभस्य अश्विसंबन्धिनः। रासभानश्विन.रित्यादिष्टं प्रयोजनम ॥ ४४ ॥ इदानींयाचञा। सुगव्यन्नः। शोभनगव्यं नोस्माकं



* अतिहायेत्यत्रापितुम् न भवति यस्यातिहाये ल्यायुक्तत्वात्।

वाजीकृणोतुकरोतु। स्वश्व्यंशोभनाश्वञ्चकरोतु। पुंसःपुत्रान्करोतु। दुहितरः पुत्राद्यपुत्रशब्दे-
नोच्यन्ते इत्यतोविशेषणंपुंसइति। उतअपिच विश्वापुषम् सर्वस्यपोषकंरयिंधनङ्करोतु। किञ्च
अनागाः अनपराधम् त्वञ्च। नोस्माकम् अदितिर्देवमाताच करोतु। नैघंटुकोवाअदितिशब्दः।
अनागास्त्वंनः अदितिःअदीनोश्वःकरोतु। किञ्च। त्त्वंनोस्माकं वनताम्। करोत्यर्थेवनतिः।

सुगव्यंन्नः॥ सुगव्यंन्नोव्वाजीस्वश्व्यम्पुꣳसः पुत्त्राꣳ॥ उतव्विं
श्श्वापुषꣳरयिम्॥ अनागास्त्वन्नोऽअदितिꣳ कृणोतुक्षत्त्रन्नोऽअश्वो
व्वनताꣳहविष्मान्॥ ४५॥ [ ६ ] इमानु॥ कम्भुवनासीषधामेन्द्र
श्श्चुव्विश्श्वेचदेवाः॥ आदित्त्यैरिन्द्रꣳसगणोमरुद्भिरस्मभ्यम्भेषजा

करोतु। हविष्मान्। अश्वः। सर्वेअश्वावयवाः हवींषि॥ ४५॥ इमानु। षड्द्विपदाः विराजः
तिस्रोवैश्वदेव्यः। तिस्रआग्नेय्यः। द्विपदाउत्तमा जुहोतीतिश्रुतिः। नुकमितिनिपातौ वनर्थ-
कौ इमानिभुवनानि भूतजातानि। सीषधाम साधयाम वयम्। ततोनन्तरम् इन्द्रःऐश्वर्य-

वान् विश्वेच देवाः आदित्यैः सहितः इन्द्रःसगणः मरुद्भिश्च सहितः अस्मभ्यमस्माकं भेष-

कंरत् ॥ यज्ञञ्चनस्तन्वञ्चप्रजाञ्चादित्त्यैरिन्द्रःसहसीषधाति ॥४६॥

अग्नेत्त्व ॥ न्नोऽअन्तमऽउतत्त्राताशिवोभवावरूथ्यः ॥ वसुरग्निन

र्वसुंश्रवाऽअच्छानक्षिद्युमत्तमᳫंरयिन्दाः ॥ तन्त्वाशोचिष्ठदीदिवः

सुम्नायनूनमीमहेसखिभ्यः ॥ ४७ ॥ [ २ ]

इतिसंहितायामपञ्चविंशोऽध्यायः ॥ २५ ॥ [ १५ ]

जाभेपजानि करत्करोत् । किञ्च यज्ञञ्च नोस्माकं तन्वञ्च शरीरञ्च आदित्यैः सह इन्द्रः सीपधातिसाधयतु वश्यंकरोतु ॥ ४६ ॥ अग्नेत्वन्नइति व्याख्यातम् ॥ ४७ ॥

इति उव्वटकृतौ मन्त्रभाष्ये पञ्चविंशतितमोध्यायः ॥ २५ ॥

इषेत्वेतिप्रारभ्य दर्शपौर्णमासाग्निहोत्र पशु चातुर्मास्या ऽग्निष्टोम वाजपेय राजसूया ग्निसौत्रामण्य श्वमेध संबद्धामन्त्रा व्याख्याताः । नामाख्यातोपसर्गं निपातजनिता वाक्यार्थाश्च । अथेदानीं खिलान्यनुक्रमिष्यामः । अग्निष्टोमा ग्निसौत्रामण्य श्वमेध पुरुषमेध सर्व मेध पितृमेध प्रवर्ग्योपनिषत् संबद्धामन्त्राव्याख्येयाः तद्व्होच्यन्ते । अत्रच येऽत्र संबद्धाम-

* अग्निश्च ॥ पृथिवीचसन्नतेतेमेसन्नमतामदोवायुश्चान्तरिक्षञ्चसन्नतेतेमेसन्नमतामदऽआदित्यश्चद्यौश्चसन्नतेतेमेसन्न

न्त्रा स्तेषां तदेवार्षम्। असंबद्धानान्तु आदित्यएव। आदित्यानीमानि यजूंषीतिवाजाहुरितिश्रुतेः। याज्ञवल्क्योवा यज्ञवल्क्येनाख्यायन्त इतिश्रुतेः। अविनियुक्तानां मन्त्राणां लैङ्गिको विनियोगः तद्यथा अग्निश्च पृथिवीचेति सप्तसन्नतिमन्त्राः। लिङ्गंनाम प्रकाशन सामर्थ्यमुच्यते। योहि यमर्थंवदितुं समर्थः सतत्र श्रुत्याविनियुज्यते। अग्निश्च पृथिवीचसन्नते। सन्न-

(१) इषे त्वेत्यारभ्य दर्शपौर्णमासपितृयज्ञाग्निहोत्रोपस्थान पशुचातुर्मास्याग्निष्टोमवाजपेयराजसूयाग्निसौत्रामण्यश्वमेधसम्बद्धा मन्त्रा व्याख्याता। इदानीं खिलान्युच्यन्ते

* अग्निश्चपदयोर्ज्ञात एकादशह्रीपाङ्गुर्ठं॰प्रति ॥

मनंसन्नतिः प्रह्वीभावः। आनुकूल्येनप्रवृत्तिः । अग्निश्च पृथिवीच संभोगार्थमंनते यस्मादतो-
ब्रवीमि तेअग्निपृथ्व्यौ मेमम सन्नमताम । अत्र णिचोलोपश्छान्दसः । सन्नमयितां वशवर्त्ति-
नङ्कुरुतामित्यर्थ. । अद इति पुरुषादेर्विशेषनामोपलक्षणम् द्वितीयान्तं चोपलक्षयतिकर्मभावात्।
एवमुत्तरेष्वपियोजनम् । वायुश्चान्तरिक्षञ्च आदित्यश्च द्यौश्च आपश्चवरुणश्च । सप्तस ठं० सदः।
परमात्मोच्यते । यस्यतव सप्तसंसदः सप्तसंसदानि प्रकृतानीत्येवम् अग्निपृथिवीवायवन्तरि-

मतामुदऽआपश्चवरुणश्चसन्नंतेतेमेसन्नंमतामदः॥ सप्तसठं स
दोऽअष्टमीभूतसाधनी॥ सकामा२ँ॥ ऽअद्ध्वनस्कुरुसञ्ज्ञानमस्तु

चादित्यद्युलोकाम्बुवरुणा न्तानि । यस्यच तव अष्टमीवभूव भूतानांसाधनीपृथवी । नहि पृथि-
वीमन्तरेण भूतानामु त्पत्तिरस्ति । तत्त्वं प्रार्थ्यसे । सकामान् अद्धनाः कुरु सकामान्मा-
र्गान् अस्माकंकुरु । यदाहि तैर्लभ्यते तदा सकामामार्गाः स्युः। संज्ञानञ्च सङ्गतज्ञ्ज्ञानम्
अस्तु मेमम अमुना । विशेषनामाभिप्रायमेतत् । विज्ञानात्मावोच्यते । यस्य तव सप्तसं-
सदः । मनश्च बुद्धिश्च पञ्चबुद्धीन्द्रियाणिच । अष्टमीच वाक्भूतसाधनी भूतप्रसूतिकारी ।

तन्त्वांविवीमि । सकामान् अध्वन.कुरु अस्माकम् सन्तानंच। अस्तु। मेमम अमुना॥ १॥ यथेमाम् । यथा इमांवाचं कल्याणीम् अनुदेजिनीम् दीयतांभुज्यतामित्येव मादिकाम्। आवदानि। जनेभ्योर्थाय। केतेजना इत्यतआह। ब्रह्मराजन्याभ्याम् ब्राह्मणाय राजन्यायच शूद्रायच अर्य्यायच अर्योवैश्यः। स्वायचात्मीयायच। अरणः अपगतोदकःपरइत्यर्थः। आवदानीति

मेमुना ॥ १ ॥ यथेमाम्॥यथेमांवाचंकल्याणीमावदानिजनेभ्यः ॥ ब्रह्मराजन्याभ्यांशूद्रायचार्य्यायचस्वायचारणायच ॥ प्रियोदे वानान्दक्षिणायैदातुरिहभूयासमयम्मेकामः समृद्ध्यतामुपमादोनं

सर्वत्रसंवध्यते ॥ प्रियोदेवानाम्। अवसानरहितानुष्टुप्। यथेमांवाचमिति यथाशब्दयोगात्तथा-शब्दोत्राध्याहर्त्तव्य.। तथातेनप्रकारेणप्रियोदेवानां भूयासम्। दक्षिणायै दक्षिणायादातुश्च इहास्मिन्नेवकाले प्रियोभूयासम् अयमितिकामनामग्रहणम्। तद्यथाअयंग्रामलाभकामः अस्मे मेसमृध्यताम्। किंचउपमाअदः नमतु। अदइतियःकामइष्यतेसउच्यते। तद्यथाउपनमतु

मांप्रतिदेवदत्तः ॥ २ ॥ वृहस्पतेअति वृहस्पतिसवेऽनया त्रिष्टुभावृहस्पतिदेवतया ग्रहोगृह्यते गृत्समदस्यार्षम् वृहस्पतेर्वा। हे वृहस्पते। अतिशयेन यत्द्रविणंधनम्। अर्यं ईश्वरः अर्यश्च्दःस्वामिन्यन्तोदात्त वेश्येआद्युदात्तः। अर्हात्पूजयेत् । यच्चद्यु मद्विभाति । द्यु मत्द्यु तिमत् विभातिभासते। क्रतुमज्जनेषु । यच्च क्रतुमत्यज्ञवत् जनेषु विभातीत्यनुवर्त्तते यत्दीदयत्

मतु ॥ २ ॥ वृहस्पतेऽअति ॥ वृहस्पतेऽअतियदर्योऽअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणन्धेहिचित्रम् ॥ उपयामगृहीतोसिवृहस्पतयेत्त्वैषतेयोनिर्वृहस्प

शवसा यच्चदीप्यते शवसावलेन। रचितारोपि यस्यसन्तीत्यभिप्रायः। हेऋतप्रजात ऋतात्सत्यादग्निनाशिनः प्रजायतइतिऋतप्रजातः तत्संवुद्धौहेऋतप्रजात तत्द्रविणम् अस्मासु धेहिस्थापयचित्रं नानारूपम्। उपयामगृहीतोसिवृहस्पतयेत्वा । एषतेयोनिर्वृहस्पतयेत्वा। स्थापन-

मंत्रः ॥ ३ ॥ इन्द्रगोमन् । द्वाभ्यांगायत्रीभ्यामिन्द्राय गोमते ग्रहोगृह्यतेगोसवे । आदित्यस्यार्षं याज्ञवल्क्यस्यवा । हे इन्द्रगोमन् । गोभिःसंयुक्त । स्तुतिभिर्वा । इहयज्ञे आयाहिआगच्छ एत्य चपिबसोमम हे शतक्रतो बहुकर्मन् कथंभूतं सोमम विद्यद्भिर्ग्रावभिः सुतम् दीप्यवखण्डने । अस्यशतरिर्विद्यन्तः तैः विद्यद्भिः विशेषेणावखण्डयद्भिः ग्रावभिः सुतमभिषुतं सोमम् ॥ उप-

तंयेत्वा ॥ ३ ॥ इन्द्रगोमन् ॥ इन्द्रगोमन्निहायांहि * पिबासोमंशत क्रतो ॥ विद्यद्भिर्ग्रावभिःसुतम् ॥ उपयामगृहीतोसीन्द्रायत्वागो मंतऽएषतेयोनिरिन्द्रायत्वागोमते ॥ ४ ॥ इन्द्रायांहि ॥ इन्द्रायांहि

यामगृहीतोसीन्द्रायत्वागोमतेगृह्णामि । एषतेयोनिरिन्द्रायत्वा गोमतेसादयामि ॥ ४ ॥ इन्द्रा-याहि । हेइन्द्रआगच्छ हेहरिवन् । वचसाहंतः एत्यचसोमम्पिव हेशतक्रतो बहुकर्मन् । कथंभूतंसोमम् । गोमद्भिः स्तुतिमद्भिः । गव्याभिःसंयुतैर्वा अंशुवचनोवा गोशब्दः ॥ ग्रावभिः

* पिबासोमम्पि वामुतमस्यामयोभुवोनू रणयमोऽव्वैतिदण्डकमूवेषपिबासोममित्तायदीर्घनिपात्यते प्रा० अ० २ । सू० १२८ ।

सुतमभिषुतम् उपयामेतिव्याख्यातम् ॥ ५ ॥ ऋतावानम् । तिस्रोवैश्वानरीया पुरोरुच: गायत्रीत्रिष्टुप्गायत्र्यः । अधस्तनएवऋषि: । ऋतावानं सत्यंव्रतं यज्ञवन्तमुदकवन्तंवा वैश्वानरम् ऋतस्यवा । उदकस्ययज्ञस्यसत्यस्यवा ज्योतिषश्चपतिम् । अथवा ऋतस्यसर्वगतस्य-

वृत्रहन्निन्द्रपिबासोमंꣳशतक्रतो ॥ गोमंद्भिर्ग्रावंभिःसुतम् ॥ उपयामगृहीतोसीन्द्रायत्त्वागोमंतऽएषतेयोनिरिन्द्रायत्त्वागोमते ॥ ५ ॥ ऋतावांनंव्वैश्वानरम् ॥ * ऋतावांनंव्वैश्वानरमृतस्यज्ज्योतिषस्पतिम् ॥ अजंस्रङ्घर्मर्मीमहे ॥ उपयामगृहीतोसिव्वैश्वानरायंत्त्वैषतेयोनिर्व्वैश्वानरायंत्त्वा ॥ ६ ॥ व्वैश्वानरस्यंसुमतौ ॥ स्यामराजाहि

ज्योतिष: पतिमधिपतिम् । अजस्रमअनुपक्षीणांधर्मम् अजरंवांदीप्तंवाईमहेयाचामहे । आयज्ञसमाप्तिमितिशेष: सामर्थ्यात् । उपयामेतिव्याख्यातम् ॥ ६ ॥ वैश्वानरस्यसुमतौ ।

* ऋतावानमित्यत्रऋग्वर्ण मतिसुमत्तोत्ताादि मूर्द्धेष वकारेपरे ऋतेतरकार स्यदोर्घोवि धीयते प्रा० अ० सू० ९८ ॥

द्वितीयः पादः पूर्वं व्याख्यायते । यः वैश्वानरः राजादीप्तः हिकमिति निपातसमाहारेणार्थः । यश्चवैश्वानरः भुवनानांभूतजातानामभिश्रीः अभ्याश्रयणीयः सर्वोपकारसामर्थ्यात् । यश्च इतो जातः इतोऽरणितः कुतश्चिद्वा उत्पन्नः सन् विश्वमिदंसर्वमिदं विचष्टे अभिविपश्यति । यथाद्रष्टव्यं कर्मानुरूपेण । यश्चवैश्वानरः यततेस्पर्द्धते ।सूर्येणसहस्वकीयदीप्त्या तस्यवैश्वा-

कुम्भुवंनानामभिश्श्रीः । इतोजातोव्विश्श्वमिदंव्विचंष्टेव्वैश्श्वान रोयंततुसूर्य्येण ॥ उपयामगृहीतोसिव्वैश्श्वानरायंत्वैषतेयोनिंव्वै श्श्वानरायंत्वा ॥ ७ ॥ व्वैश्श्वानरोनः ॥ व्वैश्श्वानरोनऽऊतयऽआ

नरस्यसुमतौ कल्याणमतौ वयंस्यामेतिप्रार्थना । उपयामेतिसमंजसम् ॥ ७ ॥ वैश्वान-रोनः वैश्वानरोग्निः नोस्मान् ऊतये अवनायपालनाय आप्रयातु आगच्छतु परावतःदूरात् । योपिदूरादागच्छेत् । आगच्छेदप्यसौसमीपादित्यभिप्रायः । केनआप्रयातु । उक्थेनस्तोमेन । वाह-सावाहनभूतेन । अन्यत्रापिस्तोमोवाहनइत्युच्यते । वाहिष्ठोवाहनास्तोमइति । उपयामेतिसमान

म ॥ ८॥ अग्निर्ऋषिः । आग्नेयीगायत्रीपुरोरुक । ऋषिरुक्तः । यःअग्निः ऋषिः दृष्टामन्त्राणाम् पवमानः । इतश्चेतश्चगच्छन् । पाञ्चजन्यः पञ्चजनेभ्योहितः । चत्वारोवर्णानिषादपञ्चमाः पञ्चजनाः । तेषांश्चियज्ञेधिकारोस्ति । पुरोहितः । पुरएनन्दधाति यज्ञं कुर्वाणाः । तमृईमहेयाचामहे । महागयम्

प्प्रयातुपरावतः ॥ अग्निरुक्थेनवाहसा ॥ उपयामगृहीतोसिवै श्वानरायत्त्वैषतेयोनिर्वैश्वानरायत्त्वा ॥ ८ ॥ अग्निर्ऋषिः ॥ अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः ॥ तमीमहेमहाग यम् ॥ उपयामगृहीतोस्यग्नयेत्त्वाव्वर्चसऽएषतेयोनिरग्नयेत्त्वाव्व र्चसे ॥ ९ ॥ महा २ ॥ ऽइन्द्रः ॥ महा २ ॥ ऽइन्द्रोव्वज्रहस्तः षोड

महान्तंगृहम् । महत्त्वंच गृहस्यद्रव्यनिवन्धनम् उपयामगृहीतोस्यग्नयेत्त्वावर्चस इतिव्याख्यातम् ॥ ९ ॥ महांइन्द्रः । माहेन्द्रीपुरोरुक् गायत्री । उक्तमार्षम् । महानिन्द्रः वज्रहस्तः । षोडशी ।

पञ्चप्राणाः पञ्चबुद्धीन्द्रियाणिपञ्चकर्मेन्द्रियाणि मनःषोडशम् एतल्लिङ्गंयस्य सषोडशीन्द्रः। पञ्चदशोवावज्रोयेन्द्रश्चषोडशीवज्रस्य । शर्मशरणंयच्छतु ददातु । हन्तुच पाप्मानं ब्रह्महत्यादिकम् । यश्चास्मान् द्वेष्टि तञ्चहन्तु । यञ्चवयंद्विष्मः तञ्चहन्तु । उपयामेतिसमानम् ॥ १० ॥ तस्वः ऐन्द्रीबृहती । जपस्वाध्यायादिषुविनियोगः । आदित्यस्यार्षम् याज्ञवल्क्यस्यवा आम्न-

# य्योशर्म्मयच्छतु ॥ हन्तुंपाप्मानंय्योस्मान्द्वेष्टि ॥ उपयामगृहीतोसिमहेन्द्रायत्वैषतेयोनिर्म्महेन्द्रायत्वा ॥ १० ॥ तंव्वः ॥ तँव्वोदस्मम्तीषहंव्वसोर्म्मदानमन्धसः ॥ अभिवत्सन्नस्वसंरेषुधेनवऽइन्द्रंङ्गी

ध्यायपरिसमाप्तिः । हेऋत्विग्यजमानाः तमिन्द्रं गीर्भिर्वाग्भिः स्तुतिलक्षणाभिः । नवामहे । सुस्तुतौ अभिष्टुमः किमर्थम् । वःयुष्मभ्यं दास्यतीति । कथंभूतमिन्द्रम् दस्मम् । दर्शनीयम् प्रियवादिनंकार्यसाधनञ्च । ऋतीषहम् ऋतीगतिः गतिमात्रेण शत्रुं सहतइत्यृतीषाट् तमृतीषहम् । वसोर्मन्दानमन्धसः । वसोर्वासयितुः सोमस्यस्वकीयेनैकदेशेन मन्दानंमाद्यन्तम् अ-

न्मसः अधग्रायनीयस्यान्नस्य स्वकीयेनैवांशेनमाद्यन्तम् कथमिवनवामहे। वत्संनस्वसरेषुधेनवः। नकारउपमार्थीयः। वत्समिव। स्वसरेषु स्वयमेवसरन्ति येषुतानिस्वसराण्यहानितेषुस्वसरेषु अहस्सु। धेनवः। यथानवप्रसूताधेनवः दिनेषुअतिहार्द्रात् वत्संशब्दैराश्वासयेयुः एवंवयमप्यतिसौहार्द्रेणेन्द्रङ्गीर्भिर्नवामह इतिसमस्तार्थः॥ ११॥ यद्वाहिष्ठम्। आग्नेय्यनुष्टुप् हेउद्गातः यत् वाहिष्ठं वोढृतमं बृहत्साम तत् अग्नयेअर्थाय अर्चगाय। ततोद्रष्टाग्निंब्रूहि।

ीर्भिर्नवामहे॥ ११॥ यद्वाहिंष्ठम्॥ यद्वाहिंष्ठन्तदग्नयेबृहदर्चविभावसो॥ महिंषीवत्त्वद्रयिस्त्वद्वाजाऽउदीरते॥ १२॥ एहिं॥ एह्यूषु

हेविभावसो विभूतधनअग्ने। महिषीवत्त्वद्रयिः मेहिषीप्रथमवित्ता। यथाप्रथमपत्नीधर्मार्थकामात्मिकाउदीरते उत्तिष्टतिसुखात्मिकाभवति एवंत्वद्रयिः सुखात्मिकाभुदीरते उतिष्ठति॥ अथवा। महिषीयया सर्वान्भोगान् उदीरते उत्क्षिपति परोपकाराय। एवंत्वत्तोरयिः उदीरते त्वत्तश्च वाजाअन्नानि उदीरते उद्गच्छन्ति परोपकाराय॥ १२॥ एहि। आग्नेयीगायत्री। अधस्त-

नमंत्रस्तुतोग्नि रिहसंबोध्यते। एहिमागच्छ हेअग्ने। उकारोनर्थकः। कोहेतुरितिचेत्। सुब्रह्माणि साधुब्रवाणि तेतव हेभगवन्नग्ने। इत्येतराः इत्थंत्वदीये नीमबंधकर्मरूपे ग्रं-थिताः इतराः स्तुतिलक्षणाः गिरोवाचः। यद्वा इत्थमुद्गात्रस्तोत्रजनिताः इतराश्चन्यागि-रोयागीयन्ते। हे तुंन्यस्यति। एभिश्च दुन्दुभिः अध्वर्युणाभिषुतैः सोमैःत्वंवर्द्धसेवर्द्धस्व।

पुन्नवाणितेग्नऽइत्थेतराणिरः॥ एभिर्वर्द्धासऽइन्दुभिः ॥१३॥ ऋतवस्ते॥ ऋतवस्तेयज्ञंवितन्वन्तुमासारक्षन्तुतेहविः॥ संव्व त्सरस्तेयज्ञन्दधातुनःप्रजाञ्चपरिपातुनः॥१४॥ उपह्वरेगिरी

॥१३॥ ऋतवस्ते। यजमानेनाग्निरुच्यते अनयाहृक्त्या। ऋतवः तेतव यज्ञंवितन्वन्तु। मासाश्चतेहविः रक्षन्तु। संवत्सरश्च तवयज्ञंदधातुधारयतु नःइतिनिपातोनर्थकः। प्रजांच परिपातुनः इतियजमानआत्मानमाह। नोस्माकं प्रजांचपरिपातुसंवत्सरएव ॥१४॥ उपह्वरे-गिरीणाम्। चतसृगायत्र्यः सौम्यः। उपह्वरेगह्वरेगिरीणांपर्वतानाम् प्रसिद्धमेतत्। एका

हाहीनसवाणिक्रियन्तामित्यनया । धियावुद्ध्याविप्रःमेधावी सोमःअजायत । जगत्धारयितु-
मिच्छन् ॥ १५ ॥ उच्चाते । व्यवहितपदप्रायोमन्त्रः हे सोम तेतव अन्धसःअधानीयात् रसी
भूतात् । जातमुत्पन्नम् यज्ञपरिणामभूतम् उच्चाउच्चैः । दिविसत् । द्युलोकेविद्यमानम्
पश्चात्भूमिः आददे गृहीतवती । किंतत् द्युलोकप्राप्तंभूमिराददे । उग्रम्उद्गूर्णं महाचौरादि

णाम् ॥ उपह्वरेगिरीणाᳬसङ्गमेचनदीनाम् ॥ धियाविप्रोऽअजायत ॥ १५ ॥ [ १५ ] उच्चातेजातमन्धसोदिविसद्भूम्याददे ॥ उग्रᳬशर्ममहिश्रवः ॥ १६ ॥ सनः ॥ सनऽइन्द्राययं

भिरनाधृष्यम् शर्मशरणंगृहम् महिश्रवः महच्छ्रवणीयंधनम् । पञ्चाहुतिपरिणामोद्घाटनमात्र
मेतत्कृतम् यथा श्रुतिः प्रथमंदिविगच्छति ततोन्तरिक्षे जलरूपेण ततोभूमावन्नरूपेण
ततोनररेतोरूपेण ततोयोनौ पुरुषरूपेणेति पञ्चधाहुतिपरिणामः ॥ १६ ॥ सनः । यस्त्वंवरि-
वोवित् । वरिवोधनम् । तद्विंदतिवेत्तिवायोसौवरिवोवित् यस्त्वंधनस्यलब्धावेदितावा । सः

नः सोम्मार्क यज्ञम् इन्द्राय यज्यवेयष्टव्याय वरुणायच मरुद्भ्यश्चार्थाय । परिस्रवस्व अथवा । सत्वंनःयज्ञम् इन्द्राय यज्यवेवरुणाय मरुद्भ्यश्चवरिवोविदिति एते षांविशेषणं द्वतविभक्तिव्यत्ययं गृह्यतेसामानाधिकरण्यात् वरिवोविद्वः धनविद्वः परिस्रव । क्रियाविशेषणंवा । एतेभ्योदेवेभ्यः परिस्रव तयाचपरिस्रव यथावरिवोनिक्ष्रति ॥ १७ ॥ एनाविश्वानि । एनाएनानिविश्वानिसर्वाणिद्यु म्नानिधनानि । अयं ईश्वरः सोमः आश्वादाय अस्मभ्यंददात्वितिशेषः । तानिच सोमदत्तानि ।

उज्ज्यंवेव्वरुंणायमुरुद्भ्यः॑ ॥ वरिवोवित्परिंस्रव ॥ १७ ॥ एनाविश्वानि ॥ एनाविश्वांन्यर्य आद्युम्नानिमानुंषाणाम् ॥ सिषांसन्तोवनामहे ॥१८॥ अनुंवीरैः ॥ अनुंवीरैरनुंपुष्यास्मुगोभिर

सिपासन्तः । षणुदाने । अस्सन्यनुनासिकस्याकारः । दातुमिच्छन्तः दानाभिमुखीभूताः सन्तो- वयन्धनानिवनामहे सम्भुज्महे ॥ १८ ॥ किमर्थंधनमतो दातुमिच्छन्तो धनवन्तइत्याह । अनुवीरैः । थार्गीर्देवतात्रिष्टुप् । अनुपुष्यास्मवीरैः वयम् अनुपुष्यास्मच गोभिः वयम् । अन्वश्वैः अनुपुष्यास्मच वयमश्वैः । अनुसर्वेणपुष्टैः । अनुपुष्यास्मच वयंसर्वेणपुष्टेनेति वचनव्यत्ययः । अनुद्विपदा अनुपु-

ध्यास्मच वयंद्विपदाद्विपादेन अनुपुष्यास्मचचतुष्पादेन । किञ्च । देवा:नोस्माकं यज्ञम् ऋतुथाऋतौ ऋतौकालेकाले नयन्तु ॥ १९ ॥ अग्ने पत्नी: इतउत्तर पञ्चनेष्टुर्याज्या: । आद्यागायत्री । देवानांपत्न्य: त्वष्टाचदेवता । हेअग्ने देवानांपत्नी: इहास्मिन्यज्ञे उपावहआगमय कथंभूता: उशती:कामयमाना: अस्मान् । त्वष्टारञ्चउपावह । किमर्थम् । सोमपीतये सोमपानाय ॥ २० ॥

न्नवभ्यश्वैरनुसर्व्वैरपुष्टटैः ॥ अनुद्विपदानुचतुष्प्पदाव्वयन्देवानोयज्ञमृतुथानयन्तु ॥१९॥ अग्नेपत्नीः ॥ अग्नेपत्नीरिहावहदेवानामुशतीरुप ॥ त्वष्टारꣳसोमपीतये ॥ २० ॥ अभियज्ञम् ॥ अभियज्ञङ्गृणीहिनोग्नावोनेष्टःपिबऽऋतुना ॥ त्वꣳहिरत्नधाऽअ

अभियज्ञम् । द्वेगायत्र्यौ ऋतुग्रहाणां याज्ये । नेष्टास्वकीयामधिष्ठात्रीं देवताब्रवीति । अभिगृणीहिस्तुहि यज्ञंनोस्मत्संबन्धिनम् । हेग्नाव: । ग्ना:पत्न्य: ताविद्यन्तेस्यासग्नावान् तत्संबोधनं हेग्नाव: । मतुवसो:रु:संबुद्धौछन्दसीतिरुत्वम् । हेनेष्ट: पिबच ऋतुनाकालेनसह । कस्मात्त्व-

मेवमुच्यसे इतिचेत् । तत्राह । त्वंहिरत्नधाअसि । यस्मात्त्वमेवरमणीयानान्धनानां दातासि ॥२१॥
द्रविणोदाः । ऋत्विजउच्यन्ते । अयमग्निः । द्रविणोदाः । धनस्यबलस्य वादाता । पिपीष-
तिपातुमिच्छति पिबतेःसनीकारः । सोममितिशेषः । एवञ्चेदतोब्रवीमि । हेऋत्विजः । जुहोत-
प्रचतिष्ठत जुहुतच प्रतिष्ठतच कर्मसु । किञ्च । नेष्ट्रात् नेष्ट्रियात् धिष्ण्यात् ऋतुभिःकालैःसह

सिं २१ द्रविणोदाःपिपीषति । जुहोतप्रचतिष्ठत ॥ नेष्ट्रादृतुभिरि
ष्यत ॥ २२ ॥ तवायम् ॥ तवायꣳसोमस्त्वमेह्यर्वाङ्शश्वत्तमꣳ
सुमनाऽअस्यपाहि ॥ अस्मिन्यज्ञेबर्हिष्यानिषद्यादधिष्वेमञ्ज

सोममृष्यत पुनःपुनःपिबत ॥ २२ ॥ तवायम् । ऐन्द्रीत्रिष्टुप् माध्यन्दिनीया । हेइन्द्र यतः
तवायंमाध्यन्दिनीयः सोमः अतःअस्माभिः प्रार्थ्यमानः त्वम् आइहि आगच्छ । कथंभूतः ।
अर्वाङ् अर्वागञ्चनः अवरेणाञ्चितः । एत्यच शश्वत्तमं शाश्वतिकतमम् सोमं सोमभागंगृहाण
संगृह्यचसुमनाभूत्वा अस्यसोमस्यपाहिपिब । पीत्वाच । अस्मिन्यज्ञेबर्हिषि निषद्य अवस्थानं-

क्रत्वादधिप्रधारयस्व इमंजठरे इन्दुंसोमम् हेइन्द्र ॥ २२ ॥ अमेवन: । देवपत्न्य: त्वष्टाचा-वष्टभ्यन्ते। जगती तार्तीयसवनीया याज्या । अमाशब्दोगृहवचन: । यथागृहाणिम्वानिएवं न.अस्माकं यज्ञगृहाणि । सुहवा: साध्वाह्वाना: आहिगन्तन आगच्छत। हि:पादपूरण: । आगत्यच निबर्हिषिसदतन निषीदत उपविशत बर्हिषि। निषद्यच रणिष्टन रतिंकुरुत।

ठरऽइन्दुमिन्द्र ॥ २२ ॥ अमेवंन: ॥ अमेवंन:सुहवाऽआहिगन्तंनुनिब र्हिषिसदतनारणिष्टन ॥ * अथामन्दस्वजुजुषाणोऽअन्धसस्त्वष्टर्दे वेभिर्जनिभि:सुमद्गण: ॥ २४ ॥ स्वादिष्ठयामदिष्ठया ॥ स्वादिष्ठयाम

आदित्यामुपष्टासुदेवपत्नीषु । अथमन्दस्व तृप्यस्व जुजुषाण: सेवमान: । अन्धस: सोमस्यऽव-मंगम् हेत्वष्ट: देवेभिर्देवै: जनिभि: जननहेतुभूताभि: देवपत्नीभि: सुमद्गण: सन्शोभनमदादेवास्तेषां स्त्रीणाञ्चगण: यस्यससुमद्गण: ॥ २४ ॥ स्वादिष्ठया । सौम्यौपावमान्यौगायत्र्यौ । जपादिषुविनि योग.उक्तश्च । रसीभूतो यदासोम: पवित्रात्क्षरतिग्रहम् ऋग्भि:स्वादिष्ठयाद्याभि: 'पवमान.सउ-

* एवाच्छचक्रमाथ ॥ एव मच्छ चक्रम अथ एतक्रस्याव्यञ्जनमात्रे परेदीर्घमाधत्तेदतानेनअथेत्यकारस्यदीर्घोभवतिमा प० २ । मू० १२५ ॥

च्यते। स्वादिष्ठयास्वादुतमया मदिष्ठयामदयित्टतमया पिवस्वदशापवित्रात् द्रोणकलशंप्रतिगच्छ हेसोमधारया। यस्त्वम् इन्द्रायपातवे इन्द्रःपिवतु इत्यनेनाभिप्रायेण सुत.अभिषुतोस्माभिः ॥२५॥ रक्षोहाविश्वचर्षणिः। अयमेवसोम. रक्षोहा रक्षसामपहन्ता विश्वचर्षणिः सर्वस्याजगतोद्रष्टा। यथाहंम्प्रति। अभिअासदत अाभिमुख्येनसन्तः सीदतिवा। किमभ्यासदत् योनिस्थानम्।

दिष्ठयापवस्वसोमधारया॥ इन्द्रायपातवेसुतः॥ १५॥ रक्षोहाविश्वचर्षणिरभियोनिमयोहते॥ द्रोणेसधस्थमासदत्॥ २६॥ [११]॥ २॥

इतिसंहितायांषड्विंशतितमोऽध्यायः॥ २६॥

कथम्भूताम्। अयोहते। अयसाकुष्णलोहेन हतमुत्कीर्णम सोमभाजनीकृतम्। हतमितिविभक्तिव्यत्ययः योनिसामानाधिकरण्यात्। किंनामानयोनिम द्रोणे। अत्रापिविभक्तिव्यत्ययः द्रोणंद्रोणकलशलक्षणम। सधस्थंसहस्थानलक्षणम सोमानाम्॥ २६॥

इतिउव्वटकृतौमन्त्रभाष्येषड्विंशतितमोध्यायः॥ २६॥

(१) समास्त्वा। आग्निवोधायः। सामिधेन्योनव त्रिष्टुभः आग्नेय्योग्निनादृष्टाः। प्राक्पी-
वोन्नाया ऋपिरग्निः कर्माङ्गभूतमग्निंस्तौति समाशब्दोमासवचनः संवत्सर इतिशब्दोपादान-
सामर्थ्यात्। समाः मासाश्च त्वां हेअग्ने ऋतवश्चवर्द्धयन्तु। संवत्सराश्च ऋपयश्च सप्त-

*समांस्त्वा ॥ समांस्त्वाग्गनऽऋतवोंव्वर्द्धयन्तुसंव्वत्सराऽऋषंयोयानिस
त्त्या ॥ सन्दिव्व्येनंदीदिहिरोचनेनव्विश्श्वाऽआभांहिप्प्रदिशश्श्चतंस्रः
॥१॥ सञ्चेद्ध्यस्वांग्नेप्प्रचंवोधयैनमुच्चंतिष्ठमहतेसौभंगाय ॥ माचंरिषद्

ऋपयामन्त्रदृष्टारोवा प्राणावा। यानिचसत्या सत्यानिआर्पाः मन्त्राःत्वांवर्द्धयन्त्वित्यनुवर्तते। त्वम-
प्येतैर्वर्द्धमानः। सन्दिव्येनदीदिहि रोचनेन। सन्दीदिहि संदीप्यस्व दिव्येन दिविभवेन
रोचनेनदीप्त्या। किञ्च विश्वाःसर्वा आभाहिदीपयदिशःप्रदिशश्च चतस्रःआभाहि ॥ १ ॥ सञ्च।
समिद्धयस्वच हेअग्ने। प्रवोधयच अवगतार्थञ्च यनंयजमानङ्कुरु। यथाग्निस्सेतव्यइति। उत्ते-

१) अयमध्यायः पञ्चचितिकस्याग्नेः मस्वन्धो प्रजापतिदृष्टः। नव ऋचोऽग्निदेवत्यास्त्रिष्टुभोऽग्निना दृष्टा. इष्टकापशो समिध्यमानसमिद्धतोरन्तराले आसां विनियोगः।

* समास्त्वादयोद्ध्र्वांश्रसपोभ्याद्यादगकावभिले कादयचत्वार. पञ्चचत्वारिंश०शत्।

छच महतेसौभगायऐश्वर्याय । किञ्चमाचरिषत् माचविनश्यतु उपसत्ता उपसदनस्यकर्ता यजमान सद्यग्निमुपसीदति । तेतव । हेअग्ने । किञ्च । ब्रह्माणस्ते ब्राह्मणाश्च ऋत्विग्यजमाना. तवसवन्विन. । यशस सन्तु । मत्वर्थीयलोप. यशश्विन सन्तु । माअन्येयशन्विन.सन्तुश्रयजमानाअलङ्करिष्णव ॥ २ ॥ त्वामग्ने । हेअग्ने त्वाम् इमेब्राह्मणा. ऋत्विज इणातेटग्वदन्ति

पसुत्तातेंऽअग्नेब्रुह्मणांस्तेयुशसंःसन्तुमान्न्ये ॥ २ ॥ त्वामंग्ने ॥ त्वां

संग्ग्नेवृणातेब्राह्मणाऽइुमेशिवोऽअंग्ग्नेसंवरंणे*भवान्ऽ ॥ सपत्नुहा

याणाय । यतएवमत प्रार्थयाम । शिव शान्त हेअग्ने सवरणेब्राह्मणै सह एतस्मिन्वरणे । भव न अस्माकम् । त्वन्देवोवयन्त्वमत्या इत्यभिप्राय । सपत्नहानोऽभिमातिजिच्च । सपत्नानाहन्ताचभवास्माकम् अभिमातिशब्दोपिशत्रुवचन । अतएवंव्याख्यायते । सपत्नानान्ताभव हतावशिष्टानाञ्जेताचभवेति । किञ्च । स्वेगयेस्वकीयेगृहे वागृहिणमप्रयुच्छन् । युच्छीप्रमादे । अप्र

* भवच ॥ भवताय दुःस्वोदोघमापद्यतन कारेपरेऽति सूत्रे णभउताकारस्य नकारेपरदोघाभवति तेनभवानदति सिद्धम्
प्रा० अ० ३ । सू० १०८ ॥

मायन् उन्नतमनाइत्यर्थः ॥ ३ ॥ इहैव । इहएवकर्मणि वर्तमानानामस्माकम् हेअग्ने अधिधारयर-यिमउपरिनिचिप्तधनम् । किञ्च । मात्वां निक्रन्नीचैःकुर्वन्तु अवज्ञयापश्यन्तु । पूर्वचितः पूर्वं येअग्निश्चितवन्तः । निकारिणः । ज्ञानकर्मसमुच्चयातिशयेन येन्योन्यजन्मानि । नीचैःकुर्वन्ति । किञ्च । चत्रम् । हेअग्ने सुयमंसाधुयन्तृअस्तु तुभ्यन्तव । किञ्च उपसत्ता यजमानःसह्युपसदनं

नोऽअभिमातिजिच्छुस्वेगयेंजागृह्यप्रंयुच्छन् ॥ ३ ॥ इहैव ॥ इहैवा ग्नेऽअधिधारयारयिम्माखानिक्रन्पूर्वचितोंनिकारिणः ॥ क्षत्रम ग्नेसुयमंमस्तुतुभ्यंसुपसत्ताव्वर्द्धतान्तेऽअनिष्टृतः ॥ ४ ॥ क्षत्रेणाग्ने ॥ क्षत्रेणाग्नेस्वायुःसंरभस्वमित्रेणाग्नेमित्रधेयेयतस्व ॥ सजातानां

करोत्वग्नेः । वर्द्धतान्तेतव । अनिष्टृतः । स्तृहिंसायाम् अनुपहिंसितःसन् ॥ ४ ॥ क्षत्रेणाग्ने । क्षत्रेणसम्पाद्यात्मानम् हेअग्ने । स्वायुःसाध्वायुः सन्संरभस्वयज्ञंवोढुम् । मित्रेणचसम्पाद्या-त्मानंमित्रधेययतस्व । यथामित्राणिधार्यन्ते तथायत्नङ्कुरु । किञ्च । सजातानांसमानजन्मनां

मधमस्याएधि मध्यमस्यानोभव । यथासजाताअपि यज्वानोभवन्ति तथास्यादित्यभिप्राय: । किञ्च । राज्ञां हेअग्ने विहव्य:विविधमाह्वातव्य: दीदिहिदीप्यस्व इहयज्ञगृहे । यथाराजानोपि यज्वानोभवेयु: तथास्त्वित्यभिप्राय: ॥ ५ ॥ अतिनिहः । अतिक्रम्यनिहन्तृन् निपूर्वस्यहन्ते: डःप्रत्यय: । प्रथमैकवचनस्यस्थाने द्वितीयाबहुवचनंवाक्यसंबन्धात् । अतिस्रिधः । स्रेधति:कुत्सित-

मध्यमस्थाऽएधिराज्ञामग्नेविहव्योदीदिहीह ॥५॥ अतिनिहः॥ अतिनिहोऽअतिस्रिधोत्यचित्तिमत्यरातिमग्ने ॥ विश्वाह्यग्ने दुरितासहस्वाथास्मभ्यंसहवीराᳪरयिन्दाः ॥६॥ अनाधृष्योजात

कर्मा । अतिक्रम्यच कुत्सिताचरणान् । अत्यचित्तिम् अचित्तिरन्यमनस्कता । अतिक्रम्यचान्य-मनस्कताम् अत्यरातिम् । अरातिरनुपजीव्योजनः तञ्चातिक्रम्य हेअग्ने । विश्वाह्यग्ने दुरिता-निसहस्व । विश्वानिदुरितानि सहस्वअभिभव हिरनर्थक: अथानन्तरम् अस्मभ्यंसहवीरां सपु-त्रांरयिन्धनं दा:दद्या: ॥ ६ ॥ अनाधृष्य: । यस्त्वमनाधृष्य: । अशक्य: खलीकर्तुम् । जातवेदा:

लातप्रज्ञानश्च अनिष्टृत: अनुपहिंसितश्च। स्तृणाति रेतद्रूपम्। विराट्च राजृदीप्तौ। विरा-
जनशील: विराट्चेवन्त्च। तन्त्वांब्रवीमि हेअग्ने दीदिहिदीप्यस्व इहकर्मणिवर्तमान: विश्वा:
सर्वा आशादिश:। किञ्च प्रमुचन्मानुषीर्भिय:। विचिपन्मानुषानि भयानि जन्मजरामृत्यु-
शोकदैन्यादीनि। शिवेभि: शिवै:शान्तै: अर्चिभि अद्यास्मिन्दावि। परिपाहि न:सर्वतोगो-

वेंदाऽ॥ अनाधृष्ष्योजातवेंदाऽअनिष्टृतोव्विराडग्नेक्षत्त्रभृद्दीदिहीह॥
व्विश्श्वाऽआशाऽ प्रमुञ्चन्न्मानुषीर्भियऽशिवेभिरद्यपरिपाहिनो
वृधे॥ ७॥ बृहस्प्पतेसवितऽ॥ बृहस्प्पतेसवितर्बोधयैनꣳ सꣳशितं
श्चित्सन्तराꣳसꣳशिशाधि॥ व्वर्द्धयैनम्महतेसौभगायव्विश्श्वऽएन

पायाश्चान्। किमर्थम् वृधे वर्द्धनाय॥ ७॥ बृहस्पतेसवित:। हेबृहस्पते हेसवित:। बोधय-
कामित्त्ववगतार्थंकुरु। एनयजमानम् किञ्च। संशितञ्चित्। चित्कव्दोप्यर्थे संशितव्रतमपियज-
मानम् सन्तरामतितराम् संशिशाधिशिश्चय। वर्द्धयच एन यजमानम्महते सौभगायऐश्वर्याय।

विश्वेचदेवा एनंयजमानम् अनुमदन्तु । उत्साहयन्तु । बृहस्पतिशब्देनसवितृ शब्देनचावाग्निरेवोच्यते । अथवा वाक्यद्वयम् एकेनबृहस्पतिरुक्तः अपरेणसविता ॥ ८ ॥ अमुत्रभूयात् । अमुत्रामुष्मिंल्लोकेयत् शरीरम्भूयात् । अघ अथ यत्यमस्यसदनेच शरीरम्भूयात् । तस्मात्च बृहस्पते । अभिशस्ते. अभिशंसनाच्च अमुञ्च । किञ्च प्रत्यौहतां प्रतिप्रेरयताम् अन्यत्रनयताम् अश्विनौमृत्युम् अस्माद्यजमानात् कथंभूतावश्विनौ । देवानांभिषजौ हेअग्ने शचीभिः ।

**मनुमदन्तुदेवाऽ ॥ ८ ॥ अमुत्र भूयादघं ॥ अमुत्र भूयादघयद्यमस्यबृहस्पतेऽअभिशस्तेरमुञ्चऽ ॥ प्रत्यौहतामश्विनामृत्युमस्माद्देवानामग्नेभिषजाशचीभिऽ ॥ ९ ॥ उद्वयम् ॥ उद्वयन्तमसस्परिस्वः पश्यं**

अत्रापिबृहस्पतिशब्दश्चामन्त्रितोग्निशब्दस्य द्रष्टव्यः सामिधेनी प्रकरणस्याग्नेयत्वात् । ननु बृहस्पतिशब्दो नैघण्टुको नचाग्निशब्देइति ताश्चाग्नेय्यः प्राजापत्या यदग्निरपश्यत् तेनाग्नेय्योयत्प्रजापतिठं॰ समैधत तेनप्राजापत्याइतिश्रुते. प्रजापते सर्वदेवात्मकत्वात् । तस्मादेनं प्रजापतिठं॰ सन्तमग्निरित्याचक्षते इतिश्रुतेरदोषः ॥ ९ ॥ उद्वयमितिव्याख्यातम् ।

॥ १० ॥ उद्‌र्ध्वाअस्य । द्वादशआप्रियः प्रयाजदेवताः । उष्णिहः अष्टम्याद्येद्वेगायत्र्यौ । ताविषमा विषमाक्षरपादाद्व्यादिश्रुतेः । ताआग्नेय्यः प्राजापत्याः । यदग्निरपश्यत्तेनाग्नेय्यः यत्प्रजापति-माप्रीणात्तेनप्राजापत्या इतिचश्रुतिः । अग्निरृषिः । प्रजापतिश्चाग्निरूपेण संस्तूयते ॥ अस्याग्नेः प्रजापतिरूपेण संस्तूयमानस्य ऊर्द्ध्वाःप्रगुणाः देवमार्गेण यायिन्यः समिधोभवन्ति । ऊर्द्ध्वाशुक्रा ऊर्द्ध्वा-

ऽतुऽउत्तरम् ॥ देवन्देवत्त्रासूर्य्यमगन्म्मज्ज्योतिरुत्तमम् ॥ १० ॥ [१०]

ऊर्द्ध्वाऽअस्यसमिधोभवन्त्यूर्द्ध्वाशुक्राशोचीँष्यग्नेः ॥ द्युमत्तमा सुप्रतीकस्यसूनोः ॥ ११ ॥ तनूनपादसुरः ॥ तनूनपादसुरोव्विश्ववे

निच शुक्राशुक्रानि शुक्रानिशोचींष्यर्चींषिभवन्ति । द्युमत्तमा दीप्तमत्तमाच वीर्यवत्तमानिचे-ष्यर्थः । सुप्रतिकस्य सुसुखस्ययजमानस्य । सूनोः । सद्योनज्जनयति । यद्वन्यंभूतोग्निस्तंव यंस्तुम इतिवाक्यशेषः ॥ ११ ॥ तनूनपात् । अज्यस्यग्नेर्वा । यःतनूनात्त्वांनपात् आजरा-भिप्रायमेतदुच्यते । अथवा योग्निःतनूनामपांनपात् पौत्रः । असुरःअसुमान् प्राणवान्

रोमलवर्योपः । यद्वा असुरःवसुरः धनवान् अक्षिनपचेआदिलोपः । विश्ववेदाः । सर्वधनः सर्वज्ञोवा । देवोदानादिगुणयुक्तः । देवेष्वपिदेवः दीप्तिमान् । यद्दृश्यःसःपथःयज्ञमार्गान्-अनक्तु । मध्वामधुस्वादुना घृतेन । दृत्यन्नामप्रभूतं यज्ञेघृतमस्तु येनमार्गा अभ्यक्ताः स्युरित्य-भिप्रायः । ॥ १२ । मध्वायज्ञम् । हेअग्नेयस्त्वंमध्वामधुस्वादुना घृतेनयज्ञं नक्षसेव्याप्नोषि ।

वेदादेवोदेवेषुदेवः ॥ पथोअनक्तुमध्वाघृतेन ॥ १२ ॥ मध्वायज्ञम्॥ मध्वायज्ञंनक्षसेप्रीणानोनराशंसोअग्ने॥ सुकृद्देवःसविताविश्ववारः॥ १३ ॥ * अच्छायम्॥ अच्छायमेति। शवसाघृतेनेडा

नक्षतिर्व्याप्तिकर्मा । कथंभूतः । प्रीणानःदेवान् । नराशंसश्च । नरैर्ऋत्विग्भिय शंस्यतेस्तूयतेयः सतथोक्तः । सुकृच्चसाधुकृच्च । देवः सविता । विश्ववारः सर्वस्यवरणीय अभवसि । तंत्वांस्तु-मइतिशेषः ॥ १२ ॥ अच्छायम् । अच्छाभेराप्तुमितिशाकपूणिः अच्छएति अभ्येति । अग्निमयम-मध्वर्युः । शवसास्वकीयेन प्रज्ञानवलेनयुक्तः । घृतेनच गृहीतेनइडानःस्तुवन् । वह्निर्वोढा ।

नमसाचानेन हविर्लक्षणेनाभ्युद्यतेन स्रुचःबाहुभ्यांगृहीत्वा । अध्वरेषु प्रयत्सुयज्ञेषुवर्तमानेषु ॥ १४ ॥ सयक्षत् । सएवाध्वर्युः यक्षत् । यजतु । अस्याग्नेः सम्बन्धिमहिमानं महाभाग्यम् । सद्रम् सएव-चमन्द्रामन्दनीयान्यन्नानि यजतु । कथंभूतस्याग्नेः सुप्रयसः । प्रयइत्यन्ननाम शोभनानिप्रयां-स्यन्नानि हविर्लक्षणानि यस्यससुप्रयाः तस्यसुप्रयसः । अथकस्मादन्यदेवताः परित्यज्याग्नेर्महि-

नोऽग्निर्नमंसा ॥ अग्निᳬस्रुचोऽअध्वरेषुप्रयत्सु ॥ १४ ॥ सयं क्षदस्यमहिमानमग्नेःसऽईम्मन्द्रासुप्रयसः ॥ व्वसुश्चेतिष्ठोव्वसुधात मश्च ॥ १५ ॥ द्वारोदेवीः ॥ द्वारोदेवीरन्न्वस्यव्विश्वेव्व्रतादंदन्तेऽ

मानं यक्षदित्युच्यत इतिचेत् अतआह वसुश्चेतिष्ठो वसुधातमश्च । यतोसौ वसुवासयिता चेति-ष्ठोतिशयेनचेतयिता । कृताकृतगुणविशेषः वसुनांधानानां दातृतमश्च अतःअग्निस्तूयते ॥ १५ ॥ द्वारोदेवीः । अस्याग्नेः प्रथमम् द्वारः देव्यः व्रतावसानिकर्माणि ददन्तेधारयंति । ताभ्यः अनु-पश्चात् । विश्वेविश्वेदेवाः देवशब्दलोपः । व्यवहितपदप्रायोर्द्धर्चः । कथंभूताद्वारः । उरुव्य-

चसः वसुव्यचना: । धाम्नास्थानेन ऋत्विक्संबन्धिनापत्यमानाः । पतऐश्वर्ये ऐश्वर्यंकुर्वाणाः । याद-
त्वंभूता यज्ञगृहद्वारस्तावयंस्तुम इतिशेषः ॥ १६ ॥ तेअस्य । तेउपासानक्ता उषाश्च नक्ताचरात्रिः ।
यस्याग्नेः योनायोनौ आहवनीयाख्ये स्थितस्य योपशोभार्ये । दिव्येदिविभवे नकारोनर्थकः । तेइमं-
यज्ञम् भवतांसुगुमंकुरुताम् । यद्वरंसोमस्य नोस्माकम् सम्पादयतामितिशेषः ॥ १७ ॥ दैव्याहो-

अग्नेः ॥ उरुव्यचंसोधाम्नापत्यमानाः ॥ १६॥ तेऽअस्य ॥ तेऽअस्ययो
पंशोदिव्वेनयोनाऽउपासानक्ता॥इमंयज्ञमंवतामध्वरन्नंः॥१७॥
दैव्याहोतारा ॥ ऽऊर्ध्वमध्वरन्नोग्गनेर्जिह्वामभिगृंणीतम् ॥
कृणुतन्नःस्विष्टिम् ॥ १८ ॥ तिस्रोदेवीः ॥ तिस्रोदेवीर्बर्हिरेदंसं

तारा । अयमग्नि रसौचमध्यमः हेदैव्यौहोतारौ । ऊर्ध्वमध्वरंनः कुरुतम्देवयानयायिनं कुरुत-
मित्यभिप्रायः । अग्नेर्जिह्वामभिगृणीतम् अग्निमुखं साधुवर्णयतमित्यर्थः। कृणुत कुरुतञ्च नःअस्माकं
स्विष्टिम् । साधुयजनम् ॥१८॥ तिस्रोदेवीः । तिस्रः देव्यः । बर्हिः आइदंसदन्तु । आसदन्तु आसीदन्तु

इदंवर्हिः। कतमास्ताः। इडापृथिवीस्थाना सरस्वतीचमध्यस्थाना। मही स्तुवन्तीति। प्रत्येकन्तिसृभिरपियोज्यम् यद्वा एकमेववाक्यम्। तिस्रोदेव्यो वर्हिरिदमासदन्तु इडासरस्वती भारत्योमहत्यो गृणानाइन्ति॥ १९॥ तन्नः। तत्रायस्पोषम् नःअस्मभ्यमस्मदर्थम्। तुरीपम् तूर्णमश्नुते। तूर्णमाप्नोति। अद्भुतंमहत् अभूतपूर्वम्। पुरुत्रु पुरुषुवहुषु यत्क्षियति निवसति तत्पुरुक्षुत्वष्टादेवः

दन्त्विडासरस्वतीभारती॥ महीगृणाना॥ १९॥ तन्नः॥ तन्नस्तुरीपमद्भुतम्पुरुक्षुत्वष्टासुवीर्यम्॥रायस्पोषंविष्यतुनाभिमस्मे॥२०॥ वनस्पतेवसृजारराणस्त्मनादेवेषु॥ अग्निर्हव्यꣳशमितासूदया

सुवीर्यंसाधुवीर्यम्। रायस्पोषविशेषणान्येतानि चत्वारिपदानि। विष्यतु। सप्रतिरूपस्त्वष्टाविमोचने विमुंचतु। नाभिमस्मे राष्ट्रमध्यम् मत्यस्मासु॥ २०॥ वनस्पतेव। हेवनस्पते अवसृज। सुङ्मुखतोरवाचीनं निक्षिप हविंषिरराणः। यद्वा रादाने ददानः। त्मना मन्त्रेष्वाङ्ग्रादेरात्मनइत्याकारलोपः देवेषु विषयभूतेषु। कस्मात्वमेवमुच्यसेस्माभिरित्यतआह। यतःअग्निःशमिता शमित्रमिति

तद्धितलोपः। हव्यंहविर्जातम् सूदयाति। पूदचरणे संस्करोति। अतोहेवनस्पतेअवसृजेति-मंत्रस्थः ॥ २१ ॥ अग्नेस्वाहा। हेजातवेदः स्वाहाकृणुहि स्वाहाकृतिंयज इन्द्राय। हव्यं-हविः प्रयच्छेतिशेषः। विश्वेदेवाश्च इदंहविः जुषन्तांसेवन्ताम् ॥ २२ ॥ अथैनंवायवे नियुत्वते शुक्लतूपरमालभत इत्यस्यपशोः पीवोअन्नारयिवृधः इत्याद्याः पट्याज्यानुवाक्यास्त्रिष्टुभो

ति ॥ २१ ॥ अग्नेस्वाहा ॥ कृणुहिजातवेदऽइन्द्रायहव्यम् ॥ वि

श्वेदेवाहविरिदञ्जुषन्ताम् ॥ २२ ॥ [१२] पीवोऽअन्नारयिवृधः ॥

सुमेधाःश्वेतःसिषक्तिनियुतामभिश्रीः ॥ तेवायवेसमनसोवित

वायव्याः। तत्रचप्राजापत्यः पशुपुरोडाश इतिपठ्यते। तस्यचापोह्यत् इदेप्राजापत्ये। यान् नियुतःपश्यान्। पीवोअन्नान् पीवःपुष्टमन्नं येषामितिपीवोअन्नान् रयिन्धनं येवर्द्धयन्ति तेर-यिवृधः सुमेधाः कल्याणप्रज्ञानोवायुः। श्वेतःवायोर्वर्णवचनम् शुक्लोहिवायुरितिश्रुतिः। सिष-क्तिसेवते। नियुतामभिश्रीः नियुतामभ्याश्रयणीयः अथयान्वायुः सिषक्ति तेनियुतोश्वा वाय-

वेधाय। समनसश्च मनस्काश्च सन्तः वितस्थुः तानुविश्वानि इत्युपादपूरणे नरःमनुष्याऋत्विग्य- जमानाः स्वपत्यानि शोभनानामपत्यानां यानिकर्माणितानि चक्रुःकुर्वन्ति। एतदुक्तंभवति। वायव्वसंयोगे सतिसर्वमिदं यज्ञादिप्रवर्ततेइति ॥ २३ ॥ रायेनु। रायेधनाय उदकलक्षणाय नुक्षिप्रम् यंवायु जज्ञतुःजनयितुः रोदसीद्यावापृथिव्यौ इमे। जनयोर्द्यावापृथिव्योः संयोगेपि- सतिवायुमन्तरेण जगद्धारणं नोपपद्यते इतिजनितवत्यौ द्यावापृथिव्यौ। यंवायुञ्च रायेधनायोदक-

स्तुर्विश्वेनरः स्वपत्यानिचक्रुः ॥ २३ ॥ रायेनु ॥ यञ्जज्ञतूरोदसीमेरायेदेवीधिषणाधातिदेवम् ॥ अधवायुन्नियुतः सश्चतस्वाउतश्वेतंवसुधितिन्निरेके ॥ २४ ॥ आपोह ॥ आपोहयद्बृहतीर्वि

लक्षणाय। देवीधिषणा धियंबुद्धिंकर्मवा सनोतिसम्भजते इतिधिषणावाक् मध्यस्थाना धाति- धारयति। देवंदानादिगुणयुक्तम्। अधअथेत्यर्थः समनन्तरमेव। तस्वायुंनियुतः अश्वाःसश्चतस- श्चतःसेवन्तः स्वाःस्वकीयाः। उतअपिच श्वेतंवायुं वसुधितिंवसुनोधनस्योदकलक्षणस्य धार- यितारम्। निरेके। जनैराकीर्णप्रदेशेवस्थितम् वायुम् नियुतः सश्चतस्वाइत्यनुवर्तते ॥ २४ ॥

आपोह । आपोहवा इदमग्रेसलिलमेवासीदित्येतब्राह्मणं निदानभूत मनयोःकण्डिकयोः । आपः । पुराकल्पद्योतको हइतिनिपातः । यत् । यदाहहती बृहत्य.महत्यः । विश्वंसर्वम् आत्मत्वेन । आयन्प्रापुः । गर्भंहिरण्यगर्भलक्षणन्दधानाः । जनयन्तीःजनयिष्यन्त्यः अग्निम अग्निरूपंहिरण्यगर्भम् हिरण्यगर्भवचनोवा अग्निशब्दः । तत.गर्भात्संवत्सरोषितात् देवानांमध्येसमवर्तत समभवत्

प्रभुस्मायुगर्भन्दधानाजनयंन्तीरग्निम्॥ ततोदेवानाᳬसमंवर्तताsुरेकःकस्मैदेवायंहविषाविधेम ॥ २५ ॥ यश्चित् ॥ यश्चिदापो महिनापर्य्यपश्यद्दक्षन्दधानाजनयंतीर्य्यज्ञम् ॥ योदेवेष्वधिदेवएक

असुःप्राणात्मकः । एकःदेवानां सहिलिङ्गशरीरःयद्रूप भूतोहिरण्यगर्भः । तस्मैकस्मै प्रजापतये-हविषाविधेम हविर्दद्मइतिविभक्तिव्यत्ययः ॥ २५ ॥ यश्चित् । योपिदेवः अन्तर्यामी । आपः अपइतिविभक्तिव्यत्ययः । महिनामहाभाग्येन । पर्यपश्यन् परितोदृष्टवान् । दक्षम्प्रजापतिं दधाना.जनयन्तीः यज्ञंसृष्टियज्ञम् । यश्चदेष्ववेपि अधिदेव. एकआसीत् तस्मैकस्मै प्रजापतयेहवि-

पाविधेम हविरिदम्भद्रतिविभक्तिव्यत्ययः ॥ २६ ॥ प्रयाहि प्रयासि याभिर्नियुद्भिः । नियुच्छब्द उभयलिङ्गः स्त्रियांपुंसिच । दाश्वांसंयजमानम् अच्छअच्छाभेराप्तुमिति शाकपूणिः । हवींषि दत्तवन्तंयजमानमभि । हेवायो इष्टयेयागाय एषणायवा । दुरोणे यज्ञगृहेवर्तमानंयजमानम् । ताभिर्नियुद्भिरागत्य । नोरयिंसुभोजसं युवस्व । निपूर्वोयौतिर्दानार्थः । नियुवस्व देहि नोस्मभ्य-

कुऽआसीत्कस्मैदेवायंहविषाविधेम ॥ २६ ॥ *प्रयाभिः ॥ प्रयाभिर्यासिदाश्वाꣳसमच्छानियुद्भिर्वायविष्टयेदुरोणे ॥ निनोरयिꣳसुभोजसंयुवस्वनिवीरङ्गव्यमश्व्यंञ्चराधः ॥ २७॥ आनः ॥ आनोनि

रयिन्धनम् किम्भूतम् सुभोजसम् साधुभुज्यतइतिसुभोजातम् सुभोजसम् । किञ्च । वीरंपुत्रम् गव्यञ्च राधः अश्व्यंचराधोधनम् नियुवस्वइति ॥ २७ ॥ आनः । आउपयाहि नःअस्माकम् अध्वरंयज्ञम् । नियुद्भिःअश्वैः शतिनीभिः । शतानिविद्यन्तेयासु ताःशतिन्यः ताभिःशतिनीभिः सहस्रिणीभिश्च । एतदुक्तम्भवति । बहूनामपि वाहनानांवयन्तर्पयितुंक्षमाः एत्यच । हेवायो

* यद्यपिपदादौविद्यमानस्यअसंयुक्तस्ययकारस्यजकारोच्चारणंविहितमस्ति तथापिउपसर्गात्परस्यनभवतितदुक्तं याज्ञवल्क्यशिक्षायांउपसर्गंपरोयस्तुपदादिरपिदृश्यते । इंपत्स्पृष्टोयथानित्युत्पदच्छेदात्परम्भवेत् ।

यस्मिन्सवने तृतीयसवने मादयस्व । तृप्यस्व इदानीमृत्विजः पादेनाह । यूयंपात पालयत स्वस्तिभिः अविनाशैः सदानःअस्मान् ॥२८॥ नियुत्वान्वायो । षट्वायव्यायाज्यानुवाक्याः । तत्रवायोशुक्रोइत्यनुष्टुप् । एकयाचेतित्रिष्टुप् । गायत्र्योन्याश्चतस्रः । तृतीयःपादः प्रथमंव्याख्यायते । यतोगन्तागमनशीलः तृनन्तोयम् गन्ताउदात्तः तद्धर्मावातत्साधुकारीवा एतेहितृनोर्थाः । असि ।

युञ्जि॑÷ शु॒तिनी॑भिर॒ध्व॒रꣳसं॒हु॒स्त्रिणी॑भि॒रुप॑या॒हि॒य॒ज्ञम् ॥ वायो॑ऽअ॒स्मिन्त्सव॑ने माद॒यस्व॒ यू॒यम्पा॑त स्व॒स्तिभि॒ः सदा॑नः ॥ २८ ॥ नियु॒त्वान्वायो ॥ नि॒यु॒त्वान्वा॑य॒वाग॑ह्य॒यꣳशु॒क्रो॒ऽअ॑यामि॒ते ॥ गन्ता॑सि सु॒न्व॒तो ग॒ृहम् ॥ २९ ॥ वायो॑शु॒क्रः ॥ वायो॑शु॒क्रो॒ऽअ॑यामि॒तेम॒द्ध्वो

सुन्वतःअभिषवंकुर्वतः यजमानस्यगृहान्प्रति । अतोब्रवीमि । नियुत्वान् नियुत्गुणकोभूत्वा हेवायो आगहिआगच्छ । अयस्वशुक्रो ग्रहःअयामि आगच्छत्वितिलकारपुरुषव्यत्ययः तेत्वांप्रति । त्वमेवहि शुक्रादीनांग्रहाणां स्थानमित्यभिप्रायः ॥ २९ ॥ वायोशुक्रः हेवायो शुक्रोग्रहःअयामिस्वयमेवागच्छतु

तेत्वांप्रतिकथंभूतः। मद्योअग्रम रसस्यसारभूतःदिविएषणोपुयज्ञेष्वित्यर्थः। त्वंचआयाहिसोमपी-
तयेसोमपानाय। यत.स्पार्हःस्पृहणीयःहेदेव। नियुत्वतानियुच्छ्व्दवतामन्त्वेणस्तूयसे ॥ ३० ॥
वायुरग्रेगाः। वायुःअग्रेगमनशीलः यज्ञप्रीः यज्ञेनप्रीयतइतियज्ञप्रीः। साकङ्गच्छगच्छति मनसा-
यज्ञम्। योह्यादरेण विज्ञितघागच्छति समनसासहागतोभवति। कथंभूतः। शिवःशान्तः

ऽअग्रन्दिविष्टिषु॥ आयांहिसोमंपीतयेस्प्पार्होदेवनियुत्वंता।३०।
व्वायुरग्रेगाः॥ वायुरग्रेगायंज्ञप्रीः साकङ्गन्मनंसायज्ञम्॥ शि
वोनियुद्भिः शिवाभिः॥ ३१॥ व्वायोये॥ तेसहस्रिणोरथांसस्तेभि
रागंहि॥ नियुत्वान्त्सोमंपीतये॥ ३२॥ एकंयाच॥ दशभिंश्च

नियुद्भि.अश्वैः शिवाभिरेव ॥ ३१ ॥ वायोये हेवायो येतेतव। सहस्रिणः सहस्रसंख्याभियुक्ताः
रथासः रथाएवरथासः तेभिः तैः आगहिआगच्छ नियुत्वान्भूत्वा सोमपीतयेसोमपानाय ॥ ३२ ॥
एकयाच। एकस्यावायव्याया सूचिपात्राणि विमुच्यन्ते। हेवायो स्वभूते। स्वकीयाविभूति-

यस्य जगत्सर्वस्वभूतिः । यानिपात्राणि वह्सीद्दष्टये देवयज्यायै । एकयाच नियुतादशभिश्च नियुद्भिः द्वाभ्यांश्चनियुद्भ्याम् विंशतीच । विंशतिशब्दस्यपूर्वसवर्णदीर्घआदेशः । विंशत्याच नियुद्भिः । तिसृभिश्च विंशताच नियुद्भिरेव । तातानि पात्राणि इहविमुञ्च ॥ ३३ ॥ तव वायो । हेवायो ऋतस्पते । सत्योदक यज्ञवचनऋतशब्दः । सत्यपते । त्वष्टुरादित्यस्य जामातः ।

स्वभूतिद्वाभ्यामिष्टयेविंशतीच ॥ तिसृभिश्चवहसेत्रिंशताच नियुद्भिर्वायविहताविमुञ्च ॥ ३३ ॥ तववायो ॥ तववायवृतस्पतेत्वष्टुर्जामातरद्भुत ॥ अवांस्यावृणीमहे ॥ ३४ ॥ [ १२ ] अभित्वा ॥ शूरनोनुमोदुग्धाइवधेनवः ॥ ईशानमस्यजगतःस्वर्दृश

सत्त्वादित्यादप आदायगर्भयति ततोविप्रुषोजायन्ते अतोवायुर्जामातात्वष्टुः अद्भुत । अभूतपूर्व । तवसंबंधीनि अवांसिअन्नानि आवृणीमहे आयाचामः ॥ ३४ ॥ अभित्वा रथन्तरं दक्षिणे पक्ष इतिश्रुतिः । नान्योध्वर्युः गायेदितियतोऽत एषांसाम्नांयोनयः पठ्यन्ते । तवेन्द्र प्रगा-

घोरयन्तरस्ययोनिः । तत्रप्रथमाबृहती द्वितीयासतोबृहती । आभित्वाशूरनोनुमः । आभिमुख्येन त्वांहेशूर नोनुमः नमामः । कथमिव अदुग्धाइवधेनवः । यथावत्सान्प्रति अदुग्धाधेनवःनमन्ति एवंत्वांप्रतिहविर्भिः स्तोत्रैः शस्त्रैश्चाभिमुख्येननमाम. । यद्वा णुस्तुतौ । अयमत्रधातुःशब्दसारूप्यात् अभिनोनुमः अभिष्टुमः त्वांकृतकृत्याःसन्तः स्तुतस्तोत्राः कृतशास्त्राउद्यत हविष्काः । कथमिव । अदुग्धाइवधेनवः । यथाअदुग्ध अकृतकृत्याधेनवः वत्समभिष्टुव, एवम् । कथंभूतं त्वामभिनोनुमः

मीशानमिन्द्रतुस्थुषः ॥ ३५ ॥ नत्वावान् ॥ नत्वावाँ२ ॥ ऽअन्योदि व्योनपार्थिवोनजातोनजनिष्यते ॥ अश्वायन्तोमघवन्निन्द्रवा

ईशानमस्यजगतः । जङ्गमस्य स्वर्दृशम् स्वःपश्यतीति स्वर्दृक् तंस्वर्दृशम् । यद्वास्वरादित्यः तद्वत् योदृश्यतेसस्वर्दृक्तंस्वर्दृशम् । ईशानंच हेइन्द्रतस्थुषः स्थितवतः स्थावरस्येत्यर्थः ॥ ३५ ॥ नत्वावान् । येनत्वावान् त्वत्सदृशः अन्यः दिव्यःदिविभवः नचपार्थिवःअस्तीतिशेषः । नचजातः नचजनिष्यतेउत्पत्स्यति अतःअश्वायन्तः अश्वान्कामयमानः हेमघवन् धनवन्निन्द्र । वाजिनः ।

घाजोन्नम् तद्यपामन्तिते वाजिनः हविषासंयुक्ताःसन्तः गव्यन्त.गाःकामयमाना. त्वांह-
वामहे आह्वयामः ॥ ३६ ॥ त्वामित् । बृहतोयोनि. देवतादितुल्यम् इच्छब्दएवार्थे हिर्निर-
र्थकः । त्वामेवहवामहे आह्वयामः । सातौवाजस्य सातिर्लाभः लाभेअन्नस्यविषयभूते । अपि-
चकारव. कर्तारः स्तोमानांवयम् त्वामेवचवृत्रेषु शत्रुषुहन्तव्येषु हेइन्द्र सत्पतिंसतांपालयितारम्

जिनोगुव्यन्तस्त्वाहवामहे ॥ ३६ ॥ त्वामित् ॥ त्वामिद्धिहवामहे
सातौवाजस्यकारवः ॥ त्वांवृत्रेष्विन्द्रसत्पतिन्नरस्त्वाङ्काष्ठास्वर्व
तः ॥ ३७ ॥ सत्वम् ॥ सत्वन्नश्चित्रवज्रहस्तधृष्णुयामहस्तवानो

त्युतिभ्रृविहितानुष्ठातारोनिषिद्धकर्मपरित्यागिन.सन्तः सत्पतिम् । नर.मनुष्याः आह्वयन्ति ।
त्वामेवकाष्ठासु जेतव्यासु अर्वत.अश्ववतः रथिनोवा आह्वयन्ति । नहित्वदृतेपुरुषाणांकिञ्चि-
त्सिध्यतीत्यभिप्रायः ॥ ३७ ॥ सत्वम् । सःत्वंनः अस्मभ्यम् हेचित्र चायनीय हेवज्रहस्तः
धृष्णुयाप्रसहनेन मह.महत्वेनच स्तवानः स्तूयमानइतिविकरणव्यत्ययः । हेअद्रिवः अद्रिवन् ।

अद्रिसारमयंवज्रन्तद्यस्यास्तीतिमंबोध्यते अद्रिवइति। गाम्अश्वञ्च रथ्यंरथेसाधुम् हेइन्द्र संकिर। संकिरतिर्दानातिशये अनेकदेशप्रकीर्णन्देहि कथमिव। सत्रावाजन्नजिग्युषे नकारउपमार्थीयः। यथाजिग्युषेविजितवते। अश्वायहस्तिनेवा। सत्रान्नागसहितम् वाजंयवसम् सस्नेहमपरिमितंसंकिरेयुर्दद्युः एवमस्मभ्यन्देहि ॥ ३८ ॥ कयानः। वामदेव्यस्ययोनिः तिस्रऐन्द्यागायत्र्यः अन्त्यपादनिवृत्। कयानश्चित्रआभुवदूती कयापुनः ऊतीऊत्या केनपुनरवनेनतर्पणेन। नःअस्मा-

ऽअद्रिवः ॥ गामश्वंᳬरथ्यमिन्द्रसङ्किरसत्रावाजन्नजिग्युषे ॥ ३८ ॥

कयानः ॥ कयानश्चित्रऽआभुवदूतीसदावृधःᳬ सखा ॥ कयाशचिष्ठयावृता ॥ ३९ ॥ कस्त्वा ॥ सत्योमदानाम्मᳬहिष्ठोमत्सदन्धसः ॥

कम् चित्रः चायनीयःइन्द्रः आभुवत्भूयात् आकारोवर्णसहमंबधाते। सदावृधः सदाकालंवर्द्धयिता। सखाच कयाचनाम शचिष्टया शचीतिकर्मनाम मतुब्लोपः। अतिशयेनकर्मवत्या अहताकर्मणा सदावृध.सखा भूयादितिवर्तते ॥ ३९ ॥ कस्त्वा। कानामत्वाम् मत्सत्मादयति। सत्यःअवितथः मदानांमध्येमंहिष्ठः अतिशयेनमदजनकः। अन्धसःसोमस्यस्वभूतोंश. येनमत्तःस-

नृत्वम्। दृढाचित् दृढान्यप्यसुरदत्तानि। आरुजे आरुजसिचूर्णयसि वसुचददासीतिशेषः। यद्वा दृढान्यापिसुवर्णप्रभृतीनि चिरकालस्थायीनिवसूनिआरुजसिचूर्णयसिदानाय॥ ४०॥ अभी-युणः। आभिमुख्येनच सुष्ठुच। नःअस्माकंसखीनाम् अविताभालयिता। जरितृणास्तोतृणाञ्च अस्माकम्पालयिता किञ्च। शतंभवासिशतधाभवसि हेइन्द्र ऊतयेअवनाय रक्षणाय। प्रकृत-

दृढाचिंदारुजेव्वसुं॥ ४०॥ अभीषुणः॥ *अभीषुणऽ सखीनामविता जरितॄणाम्॥ शतम्भवास्यूतये॥ ४१॥ यज्ञायंज्ञावऽ॥ यज्ञायंज्ञा वोऽअग्नयेगिरागिराचुदक्षसे॥ प्रप्रवयमम्मृतंञ्जातवेदसम्प्रियम्मि

त्वादस्माकमेवसखीना जरितृणाञ्च॥ ४१॥ यज्ञायज्ञावः। आग्नेयत्र्यचः। तत्रद्वे बृहत्यौ-तृतीयासतोबृहती। यज्ञायज्ञस्यसाम्नोयोनिः यज्ञेयज्ञे इतिसप्तम्येकवचनस्य आआदेशः वीप्सा-याम्। व इतियजमानविषयम् युष्मदर्थम् अग्नयेअग्निमितिविभक्तिव्यत्ययः वाक्यसंबन्धात्। गिरा-गिराच। तयातयाच गिरावाचास्तुतिलक्षणाया दक्षसे। दक्षसमितिसन्नतिः। दक्षवन्तमुत्सा-

* पिबासोममभिवामुग्रस्यस्यामयीभुवोनूरणे शमीध्वेत्यादिसूत्रेण अभीतीकारस्यपुकारेपरेदीर्घाभवतितेनअभीषुण इतिसिद्धम्।

ष्वन्तम् अग्निविशेषणञ्चैतत् । प्रप्रःप्रसमुपोदःपादपूरणमित्यभ्यासः शिंसिषत्याख्यातेनसंवन्धः प्रशंसिषंवयम् अहमितिवचनव्यत्ययः । अमृतममरणधर्माणम् जातवेदसंजातप्रज्ञानम् । प्रियंमित्रन्न मित्रमेव । अथवाक्यर्थंवशासदानुपूर्वी । अहंयज्ञेयज्ञे वःयुष्मदर्थे अग्निन्दक्षवन्तं तयातयाचस्तुत्याप्रशंसिषम् अमृतञ्जातवेदसं प्रियंमित्रमिव ॥ ४२ ॥ पाहिनः । गोपायवः अस्मान् । हेअग्ने

न्नशं॑ᳬसिषम् ॥ ४२ ॥ पाहिनं ÷ ॥ पाहिनोऽअग्नऽएकयापाह्युत द्वितीयया॥ पाहिगीर्भिस्तिसृभिरूर्ज्जाम्पतेपाहिचतसृभिर्व्वसो॥४३॥ ऊर्ज्जोनपातम् ॥ ऊर्ज्जोनपातᳬसहिनायमस्मयुर्द्दाशेमहव्यदा

एकयागिरा ऋग्लक्षणया । पाह्युतगोपायच द्वितीयया द्वाभ्यांगीर्भ्यांमृग्यजुर्लक्षणाभ्याम् । पाहिचगीर्भिः तिसृभिः स्तुतिभिः । हेऊर्जामन्नानांपते पाहिचचतसृभिःगीर्भिः । ऋगाद्यास्तिस्रः गद्यपद्यकाव्यलक्षणाचतुर्थीगीः । हेवसोवासयितः ॥ ४३ ॥ ऊर्जोनपातम् । सत्वं हेअध्वर्यो ऊर्जोनपातम् ऊर्जशब्देनापउच्यन्ते । ताभ्यओषधिवनस्पतयोजायन्ते तेभ्यएषजायतेइत्यपांपौत्रोग्निः ।

तम् । छिन । छिनु । तर्पय । ग्रयमस्मयुः । अयंहिअग्निःअस्मान्कामयते । अतोवयञ्च । दाशेम-संकल्पंकुर्याम । हव्यदातये । हविषोदानाय । भुवद्वाजेष्वविता । यतोयम्वाजेष्वन्नेषुविषयभूतेषु अविता गोप्ता । भुवत्भवति । भुवद्वृधे वर्द्धनायचभवति । उतअपिच । त्रातातनूनांशरीराणाम् बहुवचनोपदेशात्भार्यादिशरीरग्रहणाम् यतएवम् अतःजर्जोनपातं हिनइतिसंबन्धः । एवमादू-

तये ॥ भुवद्वाजेष्ववि॒ता भुव॑द्वृ॒ध उ॒त त्रा॒ता त॒नूना॑म् ॥ ४४ ॥ सं॒व्व॒त्स॒रो॑सि ॥ प॒रि॒व॒त्स॒रो॑सी॒दा॒व॒त्स॒रो॑सी॒द्व॒त्स॒रो॑सि॒ व्व॒त्स॒रो॑सि ॥ उ॒षस॑स्ते क॒ल्पन्ता॒महोरा॒त्रास्ते॑ कल्पन्तामर्द्धमा॒सास्ते॑ कल्पन्ता॒म्मा॒सास्ते॑ क

रविप्रकर्षेण विषममन्त्राव्याख्येयाः ॥ ४४ ॥ संवत्सरोसि । सञ्चितोग्निरनेनवपुषा अभिस्तूयते । पञ्चसंवत्सरमयंयुगाध्यक्षं प्रजापतिमितियदुक्तंज्योतिः शास्त्रेतदिहोच्यते । हेअग्ने यस्त्वंसंवत्सरोसि । सर्वस्यसरितासि नचत्वामन्यःसारयति । यश्चत्वम्परिवत्सरोसि यश्चइदावत्सरोसि इदाइदानीमि-तिसमानार्थौ । यश्चइद्वत्सरोसि इदितिनिपातः । यश्चवत्सरोसिनिर्विशेषेण तस्यतेभवत. उपस.कल्प

गु० नां क्लृप्ताभवन्त्ववयवत्वेन। एवम् अहोरात्राः अर्द्धमासा मासाऋतवश्च संवत्सरश्चकल्पताम्। त्वञ्च
य० प्रेत्यैप्रगमनाएत्यैआगमनाय संचाञ्चप्रसारयच। समंचप्रचसारयच। स्वेच्छयासंकोचविकाशधर्मा-
सं० भवेत्यभिप्रायः। सुवर्णाचिदसीत्याकृतिवचनम् तयादेवतया वाचासहितः। अङ्गिरस्वत् प्राणवद्ध्रुव-

५७४ त्प्यन्तामृतवस्तेकल्पन्ताᳪंसंव्वत्सरस्तेकल्पताम्॥प्रेत्याऽएत्यैसञ्चा
उ० ञ्चप्रचसारय॥सुपर्णचिदसितयादेवतयाङ्गिरस्वद्ध्रुवःसीद॥४५॥[११]
भा०

इतिसंहितायांसप्तविंशोऽध्यायः॥ २७॥

ध्रुवः शाश्वतिकः सीद अवस्थानंकुरु॥ अभित्वाशूरनोनुमइत्यादिपरमेष्ठापश्यत्॥ ४५॥

इतिउव्वटकृतौ मंत्रभाष्ये सप्तविंशोध्यायः॥ २७॥

(१) होतायक्षत्समिधेन्द्रम् । सौत्रामण्यामैन्द्रस्यपशोः प्रयाजप्रैषाः । एकादशऐन्द्रानैवोप्रथमस्ये-
त्यैन्द्राः । आप्रीदेवतास्तु इन्द्रस्यैवविभूतयइति ॥ होतायक्षत् देव्यौहोतायजतु । समिधाइ-
त्यैन्द्राः । आप्रीदेवतास्तु इन्द्रस्यैवविभूतयइति ॥ होतायक्षत् देव्यौहोतायजतु । समिधाइ-
प्रथमकाष्ठेन हविर्भूतेन । समिधावासहितम् इन्द्रम् यदिन्द्रः त्रिषुस्थानेषु समिध्यते । प्रथम-
त्तावत् इडस्पदेपृथिव्या यजनायप्रदेशेसमिध्यते अग्न्यात्मना द्वितीयविद्युदात्मना समिध्यते ।

* होतायक्षत् ॥ होतायक्षत्समिधेन्द्रमिडस्पदेनाभापृथिव्या अधि ॥ दिवोवर्ष्मन्त्समिध्यतऽओजिष्ठश्चर्षणीसहांवेत्वाज्यं

नाभौपृथिव्याअधि पृथिवीशब्देनान्तरिक्षमुच्यते । नाभिभूतेऽन्तरिक्षप्रदेशे अधेउपरि ततःतृतीय-
मादित्यात्मना दिवःद्युलोकस्य वर्ष्मन्वर्षिष्ठेप्रदेशेसमिध्यते एवंत्रिस्थानइन्द्रः स्तूयते । यश्च ओ
जिष्ठः अतिशयेनबली । केषांमध्ये । चर्षणीसहाम् चर्षणयोमनुष्याः तान्येसहन्ते अभिभ-
वन्ति तेचर्षणीसहः देवाः तेषांचर्षणीसहां देवानांमध्ये । सचेज्यमानोवेतुपिबतु स्वमंशमा-

(१) इन्द्रमिड सौत्रामणिकोऽध्याय इति कात्यायनोक्तेः अयमध्याय सौत्रामणीसम्बन्धी सौत्रामण्यङ्गभूतयोरैन्द्रवायो
धसयाराद्यस्तपशो प्रयाजानुयाजप्रैषरूप ततश्च प्राजापत्यत्रिंशत्कण्डिकात्मकोऽध्यायस्य ऋषय । ,

* होतायक्षदेकादशदेवर्षाइर्दादशपुनरप्येवचत्वार पट्चत्वारि ४० मत् ।

ज्यस्य । त्वमपि हैमनुष्यहोत. यज ॥ १ ॥ होतायक्षत्तनूनपातम् आप्रीदेवताभिप्राय मिन्द्राभिप्रायंवा । सहिमरीचिः पौवः । दैव्योहोतायजतु तनूनपातमिन्द्रम् ऊतिभिरवनैः सहितम् जेतारमयज्वनाम् अपराजितम इन्द्रंदेवंदानादिगुणयुक्तम स्वविंदम् । स्वर्गवेत्तिजानाति स्वर्गवाविद्यतेइतिस्वर्वित् तंस्वर्विदम् । केनयजतु । पथिभिर्मधुमत्तमैः । पथिशब्देनाचक्ष-

स्यहोतर्यज ॥ १ होतायक्षत्तनूनपातमूतिभिः ॥ होतायक्षत्तनूनपातमूतिभिर्जेतारमपराजितम् ॥ इन्द्रन्देवꣳस्वर्विदम्पथिभिर्मधुमत्तमैर्नराशꣳसेनतेजसाव्वेत्वाज्ज्यस्यहोतर्यज ॥२॥ होतायक्षदि

वींष्युच्यन्ते तैर्हिस्वर्गं लोकंप्रतियन्तियजमानाः । हविर्भिःमधुमत्तमै रतिशयेनरससंयुक्तैः । कथंभूतमिन्द्रम् । नराशंसेन यज्ञेनसहितम् तत्रतनूनपात् नराशंसावेकस्मिन्प्रयाजेपठितावतउभयवानयंप्रयाजः । तेजसाच सहितमिन्द्रंयजतु । सचेज्यमानोवेत्तुपिबतु आज्यस्यस्वमंशं त्वमपि हैमनुष्यहोतर्यज ॥ २ ॥ होतायक्षदिडाभिरिन्द्रम् । दैव्योहोतायजतु इडभिः

प्रयाजदेवतयासहितमिन्द्रम् ईडितंस्तुतम् आजुह्वानमाह्वयमानं यजमानैरनेकशः । अमर्त्यं-ममरणधर्माणम् । सचेजामानः देवः द्युस्थानइन्द्रः । देवैः द्युस्थानैः सवीर्यः समानवीर्यैः । वज्रहस्तः । पुरन्दरःपुरान्दारयिता । वेतुपिवतु आज्यस्यस्यमंशंत्वमपि हेमनुष्यहोतर्यज ॥ २ ॥ होतायक्षद्बर्हिषीन्द्रम् । दैव्योहोतायजतु वर्हिषीन्द्रम् वर्हिषिप्रयाजदेवतायांस्थितमिन्द्रम् । यज्ञ-

डाभिरिन्द्रम्॥ होतायक्षदिडाभिरिन्द्रमीडितमाजुह्वानममर्त्यम्॥ देवोदेवैऽस्सवीर्योव्वज्रहस्तऽपुरन्दरोव्वेत्वाज्ज्यस्यहोतर्यज॥२॥ होतायक्षद्बर्हिषीन्द्रम् ॥ होतायक्षद्बर्हिषीन्द्रन्निषद्वरंव्वृषभन्नर्यापसम् ॥ व्वसुभीरुद्रैरादित्यैऽ सयुग्भिर्बर्हिरासदद्वेत्वाज्ज्यस्यहोत

साधनमेवात्रप्रयाजदेवतावर्हिः । कथंभूतमिन्द्रम् निषद्वरमनिकुर्वंतां वरमत्कृष्टम् । वृषभंवर्षितारञ्च नर्यापसम् नर्यापसम । नृभ्योमनुष्येभ्योहितंनर्यंनर्यम् अपःकर्मयस्यसनर्यापाः तंनर्यापस-मिन्द्रम् । सचेज्यमानः वसुभिःरुद्रैःआदित्यैः । सयुग्भिःसमानयोजनैः वर्हिः आसदत् । आसी-

दत्त्विति लकारव्यत्ययः । वेतुपिवतु आज्यस्य स्वमग्गम् त्वमपिहेमनुष्यहोतर्यंज ॥ ४ ॥ होतायक्ष-
दोजोन । देव्योऽहोतायजतु । ओजः नइतिसमुच्चयार्थीयोनिपातः । ओजश्ववीर्यञ्चसहश्चद्वारञ्च
इन्द्रियशरीरमनोवलान्यपिसमुच्चितानि । कस्माद्धेतोरेतानियजतु । यतएतानि इन्द्रमवर्द्धयन्
वर्द्धयन्ति । इदानींनवस्तुत्यद्वारःसौति । एवमनेनकर्मणा कृतकृत्या.द्वारः । सुप्रायणाःसुप्रग-

र्यंज ॥ ४ ॥ होतायक्षदोजोनवीर्य्यं सहोद्वारऽइन्द्रमवर्द्धयन् ॥ सुप्रा
युणाऽअस्मिन्यज्ञेविश्रयन्तामृतावृधोद्वारऽइन्द्रायमीढुषेव्यन्त्वा
ज्यस्यहोतर्यंज ॥ ५ ॥ होतायक्षदुषेऽइन्द्रस्य ॥ धेनूसुदुघेमातरा

मनाः यस्मिन्यज्ञे विश्रयन्ताम् विश्रिताभवन्तु । ऋतावृधःसत्यवृधोवा । यज्ञवृधोवा इन्द्रायइन्द्रार्थम्
फयम् भृताय । मीढुषेसेक्त्रे व्यन्तुपिवन्तु आज्यस्वमंशं त्वमपिहेमनुष्यहोतर्यंज ॥ ५ ॥ होतायक्षदुषे ।
देव्योहोतायजतु । उषे नक्तोषासावितिप्राप्ते पूर्वपदलोपश्छान्दसः । इन्द्रस्यधेनू सुदुघेशोभनदो-
हने मातरामातरौ । महीमहत्यौ । तेविज्यमाने सवातरौवाहशब्दोवत्सवचनः समानोवातोव-

त्सःययोस्तेसवातरौ। नकारउपमार्थीयः। एकाभिशुक्रेद्रवगावीतेजसावत्समिवइन्द्रम्अवर्द्धताम्। वीताम्पिवताम्आज्यस्यस्वमंशंत्वमपिहेमनुष्यहोतर्यज ॥ ६ ॥ होतायक्षद्दैव्याहोतारा। दैव्योहोतायजतु दैव्यौहोतारौ। भिषजाभिषजौ देवानांवैद्यौ। सखायासखायौ समानख्यानौ। यौचहविषा इन्द्रम्भिषज्यतः। यौचकवीक्रान्तदर्शनौ यौचदेवौद्युस्थानौ यौचप्रचेतसौ प्रकृष्टज्ञानौ-

सुष्टौ ॥ सुवातरौनतेजसावत्समिन्द्रमवर्द्धतांवीतामाज्यस्यहोतर्यज ॥ ६ ॥ होतायक्षद्दैव्याहोतारा ॥ भिषजासखायाहविषेन्द्रम्भिषज्यतः ॥ कवीदेवौप्रचेतसाविन्द्रायधत्तऽइन्द्रियंवीतामाज्यस्यहोतर्यज ॥ ७ ॥ होतायक्षत्तिस्रोदेवीः ॥ होतायक्षत्तिस्रो

यौच इन्द्राय इन्द्रइतिविभक्तिव्यत्ययः। धत्तःस्थापयतः इन्द्रियंवीर्यम्। तौचेज्यमानौ वीताम्पिवताम् आज्यस्य त्वमशन्त्वमपि हेमनुष्यहोतर्यज ॥ ७ ॥ होतायक्षत्तिस्रोदेवीः। नभेषजं त्रयस्त्रिधातवोपस.नकारोभिन्नक्रमःसमुच्चयार्थीयः। भेषजञ्च येचत्रयोलोकाः त्रिधातवः। अग्निवायुसूर्यास्ते-

पांधातवः अपसः। अपइतिकर्मनाममत्वर्थीयलोपः। अपस्विनः कर्मवन्तः। शीतोष्णवर्षादी-
निहितेपा ङ्कर्माणि। तांश्चहोतायजतु। कतमास्तिस्रोदेव्यः इडासरस्वतीभारतीच। महीःम-
हतीः इन्द्रपत्नीःइन्द्रस्यपालयित्रीः हविष्मतीःहविषासंयुक्ताः। ताश्चेज्यमानाः व्यन्तुपिबन्तु आज्य-
स्यत्वमग्नेत्वमपि हेमनुष्यहोतर्यज ॥ ८ ॥ होतायक्षत्त्वष्टारमिन्द्रम्। दैव्योहोतायजतु। त्वष्टारम्प्र-

देवीर्न्निभेपजन्त्रयस्त्रिधातवोपसऽइडासरस्वतीभारतीमहीः। ॥ इन्द्र
पत्नीर्हविष्मतीर्व्यन्त्वाज्ज्यस्यहोतर्यज ॥ ८ ॥ होतायक्षत्त्वष्टा
रमिन्द्रम् ॥ होतायक्षत्त्वष्टारमिन्द्रन्देवम्भिषजंसुयजङ्घृतश्रि
यं म् ॥ पुरुरूपंसुरेतसम्मघोनमिन्द्रायत्त्वष्टादधदिन्द्रियाणिवेत्वा

याजदेवताम्। इन्द्रमइटिपरमैश्वर्यें त्वष्टाचेन्द्रः सामानाधिकरण्यात्। देवन्दानादिगुणयुक्तम
भिषजमिंद्रस्य। सुयजम्। साधुयष्टव्यम् अक्लेशयागम्वा। घृतश्रियम् आज्यहविष्काहिप्रयाजाः।
पुरुरूपं बहुरूपम् सुरेतसंशोभनरेतस्कम् मघोनंमघवन्तंधनवन्तम्। सचेज्यमानस्त्वष्टाइंद्राय

इंद्रइतिविभक्तिव्यत्ययः दधत्स्थापयत् इंद्रियाणिवीर्याणि । वेतुचपिवतुच आज्यस्यस्वमंशं त्वम-पिहेमनुष्यहोतर्यज ॥ ९ ॥ होतायक्षद्वनस्पतिम् । दैव्योहोतावनस्पतिंयजतु । शमितारंहविषासं-स्कर्तारम् शतक्रतुम्बहुकर्माणम् । धियोजोष्टारम् बुद्धेःकर्मणोवासवितारम् । इंद्रियंवीर्यात्म-कम् सचेजयमानः । मध्वासमञ्जन् मधुस्वादुनाघृतेसमञ्जन् यज्ञंसंसृष्टीकुर्वन् । पथिभिःसुगेभिः

ज्ज्यस्यहोतर्यज ॥ ९ ॥ होतायक्षद्वनस्प्पतिंशमितारम् ॥ होता यक्षद्वनस्पतिंशमितारंशतक्रतुन्धियोजोष्टारमिन्द्रियम् ॥ मद्ध्वासमञ्जन्पथिभिःसुगेभिःस्वदातियज्ञम्मधुनाघृतेनवेत्वाज्ज्यस्यहोतर्यज ॥ १० ॥ होतायक्षदिन्द्रस्वाहा ॥ होतायक्षदिन्द्र

मार्गैःशोभनगमनैः । स्वदातियज्ञम् । स्वदातिःप्रापणार्थः । प्रापयतुयज्ञंदेवानन् मधुनामधुस्वा-दुनाघृतेन सहितम् । वेतुचपिवतुचाज्यस्य स्वमंशंत्वमपि हेमनुष्यहोतर्यज ॥ १० ॥ होतायक्ष-दिंद्रम् । दैव्योहोयजतु इंद्रम् । स्वहाज्यस्य स्वाहाकारेणाज्यदेवतानाञ्च संस्थाङ्करोतु । स्वाहा-

मेदसः । स्वाहाकारेणमेदोदेवतानाञ्च संस्थाङ्करोतु । स्वाहास्तोकानाम् स्तोकाविंदवः । स्वाहाकारेण चस्तोकदेवतानांसंस्थांकरोतु । स्वाहा स्वाहाकृतीनाम् स्वाहाकारेणचस्वाहाकृतिदेवतानांसंस्थांकरोतु । स्वाहादेवाआज्यपाजुषाणाइंद्रआज्यस्य । प्रयाजानुयाजावैदेवाआज्यपाः । स्वाहाकारेणवैदेवाआज्यपा. जुषाणाः सेवमानाः प्रीयमाणावाइंद्र । आज्यस्यवेततु स्वमंशपिवतु त्वमपिहेम-

स्वाहाज्ज्यंस्यस्वाहामेदंसः स्वाहास्तोकानाꣳस्वाहास्वाहांकृतीनाꣳस्वाहाहुव्व्यसूंक्तीनाम्॥ स्वाहांदेवाऽआंज्ज्यपाजुंषाणाऽइन्द्रऽआज्ज्यंस्यव्व्यन्तुहोतुर्य्यंज ॥ ११॥ [११] देवम्बर्हिरिन्द्रꣳसुदेवन्देवैर्व्वीरवंत्स्तीर्णव्वेद्यामवर्द्धयत् ॥ व्वस्तोर्व्वृतम्प्राक्तोर्भृतꣳराया बर्हिष्ष्मतो

तुव्यन्तोतयंज ॥११॥ देवंवर्हिः । एकादशानुयाजप्रैषाः ऐन्द्राःमैत्रावरुणोब्रवीतियज्ञसाधनभूतं वर्हिरिहदेवता । यद्देवंवर्हिः । इंद्रमवर्द्धयदितिसंबन्धः कथंभूतमिंद्रम् । सुदेवम् शोभनादेवामरुदादयोयस्य समुदेवः तंसुदेवम् । देवैर्वीरवत् वर्हिषोविशेषणमेतत् । देवैःहविषादातृभिः ऋत्विग्भिः वीर-

वत्शीरयुतम् । यच्चस्तीर्णवेद्याम् यच्चवर्हिःवस्तोर्वृतम् अहनिलूनम् यच्चअक्तोरात्रौप्रभृतम प्रधारितम् । वस्तोरहर्वचन: अक्तोरात्रिवचन: इत्यव्ययद्वयम् । इन्द्रमवर्धयदितिसंबन्धसंबध्यते यच्चरायाधनेन हविर्लक्षणेन अन्यान्यजमानान् वर्हिषात: वर्हिषासंयुक्तान् अत्यगात् अतिक्रम्यगतं संस्कारोत्कर्षात् तद्वर्हि: वसुवनेवसुवननायच वसुधेयसायवसुधानाय धननिखननायच वेतुपिवतु । त्वञ्चहे होत:यज ॥ १२ ॥ देवीर्द्वार: यज्ञगृहद्वारउच्यते यादेव्योयज्ञगृहद्वार. इन्द्रमृयामनृयामनिकर्मप्रा-

त्र्यंगाद्वसुवनेवसुधेयस्यवेतुयज ॥१२॥ देवीर्द्वार: ॥ देवीर्द्वारऽइन्द्रᳬसङ्घातेवीड्वीर्यामन्नवर्द्धयन्॥आवत्सेनतरुणेनकुमारेणचमीवतापा

र्वाणं रेणुककाटं नुदन्ताम्। वसुवने वसुधेयस्य व्यन्तु यज॥

...सत्याम अवर्धयन् । याश्चसंघाते देहली कपाटपुटार्गलादि संघातेसतिवीड्वी दृढा: । नहिसंघातमन्तरेण तासां दृढत्वमुपपद्यते । ताइदानीम् याश्चाभिमुख्येनस्थित्वा वत्सेनतरुणेन कर्मोदमणकुमारेण चमीवता मीड् हिंसायाम । गत्यांहिंसायामता अपग्रवाणम् रेणुककाटम समासपदमेतत् नुदन्ताम । दुरितपदानि अपनुदन्तामपनयन्त । वत्सै: पुत्रैश्चअर्थतेगम्यते पल्यतेयस्मिन्नित्यर्वा तमर्वाणम् रेणुककाट १ । काट:कृप: । ककारारम्भास.कुत्सार्थ: । रेणु:पूर्ण.कुत्सित.कूप:रेणुककाट: ।

तंरेगुक्वाटम् उपलक्षणमेतत् यज्ञभंगकराणिकूपादीनि यज्ञमार्गादपनयन्त्वित्यर्थः । वसुवननाय वसुनिधानायच व्यन्तुपिबन्तु त्वमपिहेहोतर्यज ॥ १३ ॥ देवीउषासानक्ता । येदेव्यौ उषाश्चनक्ताचनिश्च इन्द्रंयज्ञेप्रयतिगच्छति वर्तमाने अह्वेताम् आहूतवत्यौवर्द्धनाय । येचदेव्यौ दैवीर्विशः । यसवोरुद्रायादित्या विश्वेदेवामरुतइत्यादिकाः प्रतिअयासिष्टाम् गतवत्यौखेनसम्भोगेन ।

व्वींगाऽ उगुक्वाटव्वृदन्तांव्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥ १३ ॥ देवी ऽउषासानक्ता ॥ देवीऽउषासानक्तेन्द्रंय्यज्ञेप्रयत्यह्वेताम् ॥ दैवी र्व्विशःप्रायासिष्टाᳬसुप्रीतेसुधितेव्वसुवनेव्वसुधेयस्यव्वीतांय्यज ।१४।

यद्वा । देव्यौवाएताविशोयत्पशवइतिश्रुतिः दैवीर्विशः यज्ञाङ्गभूतान्पशून्प्रति अयासिष्टां गतवत्यौ अनुयाजेपुष्टितयोभाग इत्यभिप्रायः । येचसुप्रीतेसाधुप्रीते । येचसुधितेसाधुहिते । तेवसुवननायवसुनिधानायच वीतांपिबतां त्वमपिहेहोतर्यज ॥ १४ ॥ देवीजोष्ट्री । देव्यौजोषयित्र्यौ । इदानींदेवता विकल्पः । द्यावापृथिव्याविति वाहोरावेइतिवा । सस्यञ्चसमाचेतिकात्यक्यः येदे-

व्योजोपयित्र्यौ। वसुधितीवसुधान्यं यातेवसुनोधारयित्र्यौवा । येचदेवमिन्द्रम् अवर्द्धताम् अवर्द्धयताम् । अयाव्यन्याघाद्वेषांसि ययोश्च मध्ये अयावि । युपृथग्भावे पृथक्करोतिलकारव्यत्ययः । अन्याएका अवाघघानिपापानि द्वेषांसिचदौर्भाग्यानि आअन्यावक्षत् वसुवार्याणियजमानाय । अन्याएकाआवक्षत् आवहतिवसूनिवरीयांसि यजमानार्थम् । कथंभूते शिक्षितेविदि-

देवीजोष्ट्री ॥ देवीजोष्ट्रीवसुधितीदेवमिन्द्रमवर्द्धताम् ॥ अयाव्यन्या घाद्वेषाᳪस्यान्यावक्षद्वसुवार्याणियजमानायशिक्षितेवसुवनेवसु धेयस्यवीतांयज ॥ १५ ॥ देवीऊर्ज्जाहुती ॥ देवीऊर्ज्जाहुतीदुघे सुदुघेपयसेन्द्रमवर्द्धताम् ॥ इषमूर्जमन्यावक्षत्सग्धिᳪ सपीति

तवेद्येतलक्षे । तेचवसुवननायवसुधानायच वीतां पिबतांत्वमपि हेहोतर्यज ॥ १५ ॥ देवीऊर्जाहुती । अधस्तनप्रैषोक्ताएव देवताविकल्पः । येदेव्यौ ऊर्जाहुतीऊर्जाह्वान्यौ दुघेदोग्ध्र्यौ अन्योन्यम् । अनयोरनुसंभोगमिमाः सर्वाःप्रजाः । अनुसम्भुञ्जतइतिश्रुतिः । सुदुघेसाधुदोहने येचपयसा इन्द्रम्अवर्द्धतामवर्द्धयताम् । ययोश्च । इषमन्नम्ऊर्जंरसंतदुपसेचनन्दध्यादि अन्याएकाआ-

वक्षत् आवहतियजमानाय। सग्धिंसपीतिमन्या अन्याश्चपराच सग्धिंसमानांजग्धिंपुत्रपौत्रादिभिः। सपीतिंसमानाम्पीतिं पानञ्चआवक्षत्। आवहतियजमानाय नवेनपूर्वंदयमानेपुराणेननवमधाताम्। येचदेव्यौनवेन ऊर्जोन्धान्येनपूर्वंपुरातनमूर्जन्धान्यम्। दयमाने दयति.रूपदयाकर्मा। रक्षितवत्यौसत्यौ अधाताम् पुराणेनच उर्जाधान्येन नवमूर्जन्धानम् अधाताम्।

मुन्न्यानवेनुपूर्व्वन्दयमानेपुराणेनुनवमधातामूर्ज्जमूर्ज्जाहुती ऽऊर्ज्जयमानेवसुव्वार्य्याणियजमानायशिक्षितेव्वसुवनेव्वसुधेयस्यव्वीतांयज॥ १६॥ देवादैव्या॥ देवादैव्याहोतारादेवमिन्द्रंमवर्द्ध

धारितवत्यौ। येचऊर्जाहुती ऊर्जयमानेस्वीकुर्वाणे। वसूनिवरणीयानियजमानाय। शिक्षितेविदितवेद्येच वसुवननाय वसुधानायच वीताम्पिवताम् त्वमपिहेहोतर्यज॥ १६॥ देवादैव्या। यौदेवौ दैव्यौहोतारौ। एकःपार्थिवोग्निः एकश्चमध्यमः। देवमिन्द्रमवर्द्धताम यौचहताघशंसावभार्ष्टांवसुवार्याणियजमानायशिक्षितौ। अत्रम्यापंयेशसन्ति तेअघशंसा हताअघशंसायाभ्यान्तौ-

हुताघशंसी। आभार्ष्टाम् आहार्ष्टाम् हुतवन्तौवसूनिवरणीयानि यजमानाय । शिघितौअवगतार्थौ तौचवसुवननाय वसुधानायच वीतांपिबता त्वमपिहेहोतर्यज ॥ १७ ॥ (१) देवीस्तिस्रः । आदरार्थोभ्यासः पतिम्देवानाम्पालयितारम् इन्द्रमवर्द्धयन् । तासांमध्येभारती भरतआदित्यः

ताम् ॥ हुताघंशंसावाभार्ष्टांवसुवार्याणियजमानायशिक्षितौ वसुवनेवसुधेयस्यवीतांयज ॥ १७ ॥ देवीस्तिस्रः । देवीस्तिस्रस्तिस्रोदेवीः पतिमिन्द्रमवर्द्धयन् ॥ अस्पृक्षद्भारतीदिवंरुद्रैर्यज्ञंसरस्वतीडावसुमतीगृहान्वसुवनेवसुधेयस्यव्यन्तुयज ॥ १८ ॥

तस्यद्वयभारती दिवम् अघतस्पृशति । रुद्रैर्यज्ञं सरस्वती सरस्वतीचरुद्रैः सहितायज्ञम् अस्पृक्षत् । इडाचवसुमतीवसुभि. तद्वतीगृहान् अस्पृक्षत् । गृहशब्देनात्रायंलोकोभिधीयते लक्षणयापृथिवीस्थानत्वादिडायाः । ता.वसुवननाय वसुधानायच व्यन्तुपिबन्तु त्वमपिहेहोतर्यज ॥ १८ ॥

---

(१ प्रतिजगतीछन्दस्कोयमृक

देवइन्द्रः। यज्ञोदेवता देवःदानादिगुणयुक्तः यज्ञःइन्द्रः। इदिपरमैश्वर्ये परमेश्वरः। नरा-
शंस. नराअस्मिन्नासीनाः शंसन्तीतिनराशंसः। त्रिवरूथाः। वरूथशब्दोगृहवचनः त्रीणिव-
रूथानि गृहाणिसदोहविर्धानाग्नीध्राणियस्य सत्रिवरूथः। त्रिवन्धुरः वन्धुरशब्दःसारथिस्था-
नवचनः। त्रीणिवन्धुराणिसारथिस्थानानि ऋग्यजुःसामलक्षणानियस्य सत्रिवन्धुरः। देवमिंद्रम-

देवऽइन्द्रं॥ देवऽइन्द्रोनराशꣳसस्त्रिवरूथस्त्रिवन्धुरोदेवमिन्द्रमव
र्ध्दयत्॥ शतेनंशितिपृष्ठानामाहितꣳ सहस्रेणप्रवर्त्ततेमित्रावरुणे
दंस्यहोत्रमर्हतोबृहस्पतिस्तोत्रम् श्विनाध्ध्वर्य्यवंव्वसुवनेव्वसु
धेयस्यव्वेतुयज॥ १९॥ देवोदेवैः॥ देवोदेवैर्व्वनस्पतिर्हिरण्यपर्णो

वर्द्धयत्। यश्च शतेनशितिपृष्ठानामाहितः। शतगुणोहिअग्निराधेयः तदभिप्रायमेतत्। सह-
स्रेणगवांप्रवर्तते। सहस्रेणगवांयष्टव्यमित्युक्तेः। यश्चास्य मित्रावरुणाद्भुत् मित्रावरुणावेवहो-
त्रमर्हतः। बृहस्पतिश्च स्तोत्रमौद्गात्रमर्हति। अश्विनौच आध्वर्यवमर्हतः। सवसुवननाय
वसुधानायच वेतुपिवतु. त्वमपिहेहोतर्यज॥ १९॥ देवोदेवैः। यूपउच्यते योदेवोवनस्पतिः

देवैरेवहिरण्यपर्णः देवाःसौवर्णानिपर्णानियस्यसतथोक्तः । मधुशाखः मधुरसवतीशाखायस्य समधुशाख.देवैरेव । सुपिप्पलः साधुफलोदेवैरेव । देवमिन्द्रमवर्द्धयत् यश्चदिवम् अग्रेणअस्पृचत् स्पृशति । आअन्तरिक्षम्स्पृचदित्यनुषङ्गः । मध्येनेतिशेषः साकांक्षत्वात् । पृथिवीमदृंहीत् पृथिवीमुपरेणेतिशेषः अदृंहीत्दृढामकरोत् सवनस्पतिः वसुवननायवसुधानायच वेतुपिवतु ।

मधुशाखः सुपिप्पलोदेवमिन्द्रमवर्द्धयत् ॥ दिवमग्ग्रेणास्पृक्षदान्तरिक्षम्पृथिवीमदृंहीद्वनस्पतिर्वसुवने वसुधेयस्यव्वेतुयज ॥ २० ॥ देवम्बर्हिः॥ देवम्बर्हिर्व्वारितीनान्देवमिन्द्रमवर्द्धयत् ॥ स्वासस्थमिन्द्रेणासन्नम्

त्वमपिहिहोतर्यज ॥ २० ॥ देवंवर्हिः । यद्देवंवर्हिः वारितीनाम् । वाःउदकम्तूणगती वारुदकमितिःस्थानंयस्यतावारितय ओषधयः तासांमध्येदेववरिष्टम् । यद्वावार्यङ्रतिदर्भरूपेणास्थान येषांतेवारितयःदर्भाः । अत्रश्रुतिः । तदेताभ्यामुत्युना तीत्युपक्रम्य । तस्मादुहैकाआपोवीभस्यास्त्रिरिदृति अभिधीयते । तदूमेदर्भाइत्याह । वारितीनान्दर्भाणांसंघातभूतम् देवमिन्द्रम-

वर्द्धयत्। यच्चस्वासस्सम् साधुत्र्याश्रेयंदेवमनुष्यैः। यत्तच इन्द्रेणआसन्नम् आस्थितम् यच्च वर्द्धयत्। तत्वसुवननाय वसुधानायच वेतु-पिवतु त्वमपिहेहोतः यज ॥ २१ ॥ देवोअग्निः। स्विष्टकृत् शोभनमिष्टंकर्तव्यमिति यस्या-

न्न्यावृहींष्यभ्यभूद्वसुवनेव्वसुधेयस्यव्वेतुयज ॥ २१ ॥ देवोऽअग्निः ॥ देवोऽअग्निःस्विष्टकृद्देवमिन्द्रमवर्द्धयत् ॥ स्विष्टङ्कुर्व्वन्त्स्विष्टकृत्स्विष्टमद्यकरोतुनोव्वसुवनेव्वसुधेयस्यव्वेतुयज ॥ २२॥ अग्निमद्यहोतारमवृणीतायंय्यजमानः पचन्न्पक्तीः पचन्न्पुरोडाशम्बध्नन्निन्द्रायच्छागम् ॥ सूपस्थाऽअद्यदेवोव्वनस्पतिरभवदि

यमधिकारः देवंच इन्द्रमवर्द्धयत्। यश्चस्विष्टं कुर्वन् स्विष्टकृतनामभूतःसः। स्विष्टंसाध्विष्टम् अद्य अस्मिन्कर्मणिकरोतु नोस्माकम् अपिच वसुवननाय सुधानायच वेतुपितु त्वमपिहेहोतर्यज ॥ २२॥

मग्निमद्य। व्याख्यातः प्रैषः ऐन्द्रपशुः पशुरितिविशेषः ॥ २२ ॥ होतायक्षत्। इन्द्रायवयो-
धसे। पशुसंस्कारश्चैन्द्रः। तत्रैतेप्रैषाः अतः प्रयाजदेवताऽ विरोधेनयथैन्द्राः संपद्यन्तेतथा-
व्याख्यायन्ते। दैव्योहोतायजतु। समिधानमग्निम्। मह्न्वयशः अग्निसम्बन्धि। सुसमिद्धं

न्द्रायुच्छागेन ॥ अघुत्तमेदस्तः प्रतिपचताग्रभीदवीवृधत्पुरोडा
शेन ॥ त्वामद्यऽऋषे ॥ २३ ॥ [ १२ ] होतायक्षत् ॥ होतायक्षत्स
मिधानम्महद्यशः सुसमिद्धंवरेण्यमग्निमिन्द्रंवयोधसम् ॥ गायत्री
ञ्छन्दऽइन्द्रियन्त्र्यविङ्गांवयोदधद्वेत्वाज्यस्यहोतर्यज ॥ २४ ॥

माग्निमेव। वरेण्यंवरणीयंचाग्निम्। इन्द्रंचवयोधसम् वयः यथातथ्यमस्मिन्निति वयोधा स्तं व-
योधसम् वयमः आयुषोवाधारयितारम्। किंकुर्वन् दैव्योहोतायजतु। गायत्रीं च्छन्दः इन्द्रि-
यम्वीर्यंच त्र्यविंचगांवयश्चआयुः दधत्धारयन् इन्द्रे इत्यध्याहारः प्रकरणात्। प्रयाजदेवताय
इन्द्रसहिता वेतुपिबतु आज्यस्यस्वमंशंत्वमपिहेमनुष्यहोतर्यज ॥ २४ ॥ होतायक्षत्तनूनपातम्।

दैव्योहोतायजतु तनूनपातम् उद्भिदम् उद्भेत्तारं यज्ञफलानाम्। यंचगर्भमदितिः दधेधारितवती। शुचिपविवम्। इन्द्रंचयजतु वयोधसम् वयश्चायुर्धीयतेयस्मिन् तंवावयसोधारयितारंवा। किञ्चेन्द्रेदैव्योहोतायजतु। उष्णिहंचछन्दः इन्द्रियवीर्यंचदित्यवाहंचगांवयश्चायुश्च इन्द्रे-

होतायक्षत्तनूनपातमुद्भिदम्॥ होतायक्षत्तनूनपातमुद्भिदंयङ्गर्भमदितिर्दधेशुचिमिन्द्रंव्वयोधसम्॥ उष्णिहञ्छन्दऽइन्द्रियन्दित्यवाहङ्गांव्वयोदधद्वेत्वाज्ज्यस्यहोतर्य्यज॥ २५॥ होतायक्षदीडेन्न्यमीडितम्॥ होतायक्षदीडेन्न्यमीडितंवृत्रहन्तममिडाभिरीड्यꣳ०

दधत् धारयन्। प्रयाजदेवताच इन्द्रसहितावेतुपिबतु आज्यस्यसमग्रं त्वमपिहेमनुष्यहोतर्यज॥ २५॥ होतायक्षदीडेन्यम। दैव्योहोतायजतु। ईडेन्यंस्तुत्यम् ईडतेरेन्यप्रत्ययः। ईडितम् ऋषिभिः स्तुतम। वृत्रहन्तमम अतिशयेनवृत्रस्यहन्तारम्। इडाभिः प्रयाजदेवताभिः ईड्यंस्तुत्यम्। इन्द्रविशेषणान्येतानि। सहः सोमंचयजतु। सहः सोमशब्दौ नैघण्टुकौइन्द्रसम्बन्धा-

त्पद्यते। इन्द्रं चवयोधसं वयसश्चायुषोधारयितारम्। किंकुर्वन्यजतु। अनुष्टुभंचछन्दः इन्द्रि-
यम्वीर्यंच पष्ठाविंचगांवयश्चायुश्च इन्द्रे दधत्धारयन्। प्रयाजदेवताच इन्द्रसहितावेतुपिवतु
भाज्यम्यस्त्वमंग त्वमपिहेमनुष्यहोतर्यज॥ २९॥ होतायक्षत्। दैव्योहोतायजतु। सुवर्हिषंशो-

सहुऽसोमुमिन्द्रंव्वयोधसम्॥ अनुष्टुभुञ्छन्दऽइन्द्रियम्पष्ठौंविङ्गाँव्व
योदधद्वेत्वाज्ज्यस्युहोतुर्य्यज॥ २९॥ होतायक्षत्सुवर्हिषम्पूषण्व
न्तम्॥ होतायक्षत्सुवर्हिषम्पूषण्वन्तममर्त्त्यं सीदन्तम्बुर्हिषिप्रि
येमृतेन्द्रंव्वयोधसम्॥ बृहतीञ्छन्दऽइन्द्रियन्त्रिवुत्सङ्गाँव्वयोदधद्वे

ऽनवर्हिष्मम्। पूषणवन्तंपूषासंयुक्तम् अमर्त्यममरणधर्माणम्। सीदन्तंवर्हिषिप्रियेश्रवस्थानंकुर्वन्तं
वर्हिष्यभिरुचिते अमृतेइन्द्रं वयोधसम्। किंकुर्वन्यजतु। बृहतींचछन्दः इन्द्रियंवीर्यंच त्रिव-
त्संचगांवय आयुश्च इन्द्रे दधत्धारयन्। प्रयाजदेवताचेज्यमाना इन्द्रेणसह वेतुपिवतु आज्य-
सस्त्वमंगत्वमपि हेमनुष्यहोतर्यज। ननुप्रयाजदेवताया अत्रधिकरणभावः केवलमुपलभ्यते-

नतु देवतात्वमिति यश्चोदयेत् तम्प्रत्याह। इत्थंभूतमेव वर्हिषोदेवतात्वमित्यदोषः। तथाद्वा-
राणामपिदेवतात्वम्॥ २७॥ होतायक्षद्व्यचस्वतीः। दैव्योहोतायजतु व्यचस्वतीर्व्यञ्जनवतीर्गमन-
वतीः। सुप्रायणाः साधुप्रगमनाः ऋतावृधः सत्यवृधोवा यज्ञवृधोवा। द्वार. यज्ञगृहद्वारः

त्वाज्ज्यस्यहोतर्य्यज॥ २७॥ होतायक्षद्व्यचस्वतीः सुप्प्रायणाः॥
होतायक्षद्व्य चस्वतीः सुप्प्रायणाऽऋतावृधोद्वारोदेवीर्हिरण्ययी
र्ब्रह्माणमिन्द्रंव्वयोधसम्॥ पङ्क्तिञ्छन्दऽइहेन्द्रियन्तुर्य्यवाहङ्गांव्व
योदधद्व्यन्त्वाज्ज्यस्यहोतर्य्यज॥ २८॥ होतायक्षत्सुपेशसासुशि

द्वितीयबहुवचनान्येतानिपदानि। देवीर्यज्ञफलदात्रीः हिरण्मयी अविनाशिनीः। तथा। ब्रह्मा-
णंपरिवृढम् इन्द्रंवयोधसम् आयुषोधारयितारम्चयजतु। पङ्क्तिंचछन्दः। इहेत्यभिनयदर्शनम्।
इहास्मिन्निन्द्रे इन्द्रियंवीर्यंच तुर्य्यवाहंगांच आयुश्चदधत् धारयन् सेन्द्राद्वारोयेज्यमानाव्यन्तु
पिबन्तु आज्यस्यस्वमंशंत्वमपि हेमनुष्यहोतर्यज॥ २८॥ होतायक्षत्सुपेशसा। दैव्योहोताय-

जतु सुपेशसासुपेशसौपेशइतिरूपनाम। सुरूपे। सुशिल्पे। यद्वै प्रतिरूपं तच्छिल्पम् अन्यो-
न्यं प्रतिरूपे। बृहतीमहत्यौ उभेनक्तोपासार्न। समुच्चयार्थीयोनकारः उभेअपिनक्तोपसौ।
नक्तारात्रिः उषाश्चरात्रेरपरकालः। दर्शतेदर्शनीये। विश्वंसर्वात्मकमिन्द्रं वयोधसम् आयु-

ष्पे ॥ बृहतीऽउभेनक्तोषासानदर्शतेव्विश्वमिन्द्रंव्वयोधस॑म् ॥
त्रिष्टुभुञ्छन्दऽइहेन्द्रियम्पष्ठ वाहङ्गांव्वयोदधंद्वीतामाज्ज्यस्यहो
तुर्ज्जं ॥ २८ ॥ होतायक्षत्प्रचेतसादेवानामुत्तमंय्यशोहोतारादैव्या
कवीसयुजेन्द्रंव्वयोधसम् ॥ जगतीञ्छन्दऽइन्द्रियमनड्वाहङ्गांव्वयो

योधारयितारश्च यजतु। किंकुर्वंतुयजतु। त्रिष्टुभंचछन्दः इहइंद्रे इंद्रियंच वीर्यंपष्ठवाहं गांच-
वय आयुश्चदधत् धारयन्। नक्तोपासौसेंद्रे चेज्यमाने वीतांपिवतामाज्यस्य स्वमंशंत्वमपि
हेमनुष्यहोतर्यज ॥ २८ ॥ होतायजत्प्रचेतसा। देवौहोतायजतु प्रचेतसाप्रकृष्टज्ञानौ। यौच-
देवानामुत्तमं यशः पश्वौ। पुञ्जीकृतय होतारौदैव्यौ अयंचाग्निरसौचमध्यमः। कवीक्रान्त-

दर्शनौ। सयुजासह योगिनौ इंद्रस्ववयोधसम् आयुपोधारयितारम्। किङ्कुर्वन्दैव्योहो-
तायजतु। जगतीच्छन्दः इंद्रियं वीर्यं च। अनड्वाहंच गांवयः आयुश्चइंद्रे दधत् धारयन्। तौच-
दैव्यौ होतारौसेंद्रा वीजग्मानौ वीतांपिवता माज्यस्यस्वयंश त्वमपिहेमनुष्यहोतर्यज॥ २०॥
होतायचत्पेशस्वतीः। दैव्योहोतायजतु पेशस्वतीःरूपसम्पन्नाः तिस्रोदेवीःहिरण्ययीः हिरण्या-

दधंद्धोतामाज्ज्यस्यहोतर्यज॥ ३०॥ होतायक्षुत्पेशस्वतीस्तिस्रः॥
होतायक्षुत्पेशस्वतीस्तिस्रोदेवीर्हिरण्ययीर्भारतीर्बृहतीर्मुहीःपति
मिन्द्रंव्वयोधसम्॥व्विराजञ्छन्दऽइहेन्द्रियन्धेनुङ्गान्नव्वयोदधद्व्यन्त्वा

लङ्कृतशरीराः। भारती भरतआदित्यः तस्यभारती.वहुवचनमिडासरस्वत्युपलक्षणार्थम्। बृहतीः
प्रभावतःमहत्यःआदित्येन्द्राग्निसंबन्धात्। पतिम्पालयितारम् इन्द्रञ्चवयोधसम् आयुपोधारयितारम्।
यजतु। किंकुर्वन्यजतु विराजञ्छन्दः इहास्मिन्निन्द्रे इंद्रियंवीर्यञ्च। धेनुङ्गांन नकारःसमुच्चयार्थीयः।
धेनुञ्चगांवयआयुश्च दधत्धारयन्। तिस्रोदेव्यश्च सेन्द्राइज्यमानाः व्यन्तुपिवन्तु आज्यस्य स्वमंशंत्व-

मपि ह्रैमनुष्यहोतर्यज ॥ ३१ ॥ होतायचत्सुरेतसम् । दैव्यो होतायजतु सुरेतसंत्वष्टारम् । शोभनंहि रेतस्त्वष्टुर्जगदुत्पत्तिवीजत्वात् । पुष्टिं वर्द्धयितारम् । रूपाणिविभ्रतंपृथक्पुष्टिम् । जाति-पुरूपाणि पुष्टिञ्चपृथक्धारयन्तम् । इंद्रञ्चवयोधसम् आयुषोधारयितारंयजतु । किंकुर्वन्यजतु द्विपदञ्चछन्दः इंद्रियंवीर्यम् उत्ताणञ्चांन नकारःसमुच्चयार्थोयोभिन्नक्रमः । उत्ताणञ्चगाम् वय-

उज्यंस्यहोतुर्य्यज ॥ ३१ ॥ होतायक्षत्सुरेतसन्त्वष्टारम् ॥ होतायक्षत्सुरेतसन्त्वष्टारम्पुष्टिंवर्द्धनᳬरूपाणिविब्भ्रतम्पृथक्पुष्टिमिन्द्रंव्वयोधसम् ॥ द्विपदञ्छन्दऽइन्द्रियमुक्षाणङ्गान्नवयोदधद्वेत्वाज्यस्य होतुर्य्यज ॥ ३२॥ होतायक्षद्वनस्पतिᳬशमितारम् ॥ होतायक्षद्वनस्प

आयुश्च इंद्रेदधत्धरयन् । त्वष्टाचसेन्द्रःईज्यमानः वेतुपिवतु आज्यस्यस्वसंथंत्वमपि ह्रैमनुष्य-होतर्यज ॥ ३२ ॥ होतायचद्वनस्पतिम् । दैव्योहोतायजतु वनस्पतिंशमितारं हविषःसंस्कर्तारम् शतक्रतुंवहुकर्माणम् । हिरण्यपर्णम् सुवर्णमयपत्नम् । उक्थिनम् । वचपरिभाषणे अस्यउवथम्

वचनवन्तंयज्ञवन्तंवा। रशनांबिभ्रतम स्वरूपानुवादः। यूपेहिपशुबन्धनार्थरज्जुर्बध्यते। वर्षिं-कान्तम्भगम्भजनीयम। इंद्रश्चवयोधसमायुषोधारयितारंयजतु। किंकुर्वन् दैव्योहोतायजतु। ककुभश्छन्दः इहेंद्रेइंद्रियंवीर्यंस्व वशांवन्ध्यांविहतङ्गर्भघातिनीश्चगांवयश्चायुश्च दधत्धारयन्। वन-स्पतिश्च सेंद्रईज्यमानः वेतुपिबतुआज्यस्य स्वमंशंत्वमपिहेमनुष्यहोतर्यज ॥ २२ ॥ होतायक्ष-

त्तिँ शमसितारँ शुतक्रतुँ हिरँगयपर्णमुक्थिनँ रशनाम्बिभ्रतँ वशि म्भगमिन्द्रँ वयोधसम् ॥ ककुभञ्छन्दऽइहेन्द्रियँ वशांवेहतङ्गांवयो दधद्वेत्वाज्ज्यस्य होतर्यज ॥ २२ ॥ होतायक्षत्स्वाहाकृतीरग्निम् ॥ होतायक्षत्स्वाहाकृतीरग्निङ्गृहपतिम्पृथग्वरुणम्भेषजङ्कविङ्क्षत्र

त्स्वाहाकृतीः। दैव्योहोतायजतुस्वाहाकृती.प्रयाजदेवताः। अग्निश्चगृहपति पृथक्यजतु। वरुणञ्चभेषजम्। तथा कविंक्रान्तदर्शनं जनमप्रहारादक्षितारम् इंद्रञ्चवयोधसमायुषोधारयि-तारम् यजतु। किंकुर्वन्यजतु अतिछन्दसञ्छन्द. इंद्रियञ्चवीर्यं वृहत्महत् ऋषभञ्चगांवय-

चायुश्च इन्द्रे दधत् धारयन् । सेंद्रश्च प्रयाजदेवता इळामाना व्यन्तु पिबन्तु आजस्य स्वमंशं त्वमपि हि मनुष्य होतर्यज ॥ ३४ ॥ अथ वयोधसोनुयाजप्रैषाः । देवं बर्हिः यत् देवं द्योतनं बर्हिः । वयोधसमायुषोधारयितारं देवं दानादिगुणयुक्तम् इन्द्रम् अवर्द्धयत् किं कुर्वन् । गायत्र्याः छन्दसा इंद्रियवी-

मिन्द्रं वयोधसम् ॥ अतिच्छन्दसुऽछन्दऽइन्द्रियम्बृहदृषभङ्गां वयोदधद्व्यन्त्वाज्यस्यहोतर्यज ॥ ३४ ॥ [ ११ ] देवम्बर्हिः ॥ देवम्बर्हिर्व्वयोधसन्देवमिन्द्रमवर्द्धयत् ॥ गायत्र्याच्छन्दसेन्द्रियञ्चक्षुरिन्द्रे वयोदधद्वसुवने वसुधेयस्य वेतु यज ॥ ३५ ॥ देवीर्द्वारः ॥ देवीर्द्वारो वयोध

यं चक्षुश्च इंद्रे वयश्च आयुश्च दधत् धारयत् । तत् वसुवननाय वसुधानाय च वेतु पिबतु आजस्य स्व अंशं त्वमपि हे होतर्यज ॥ ३५ ॥ देवीर्द्वार. । या देव्य द्वारः वयोधसमायुषोधारयितारम् शुचिं पवित्रम् इंद्रम् अवर्द्धयन् किं कुर्वंयः । उष्णिहा छन्दसा इंद्रियं वीर्यं प्राणश्च इंद्रे वयश्च आयुश्च दधत् ।

दधत्यद्गतिलिङ्गवचनव्यत्ययः धारयन्त्यद्दत्यर्थान्तरम्। ताःवसुवननायवसुधानायच व्यन्तुपिबन्तु त्वमपिहेहोतर्यज ॥ ३६ ॥ देवीउपासानक्ता। येदेव्यौउषासानक्ता उषाश्चरात्रेरपरकालः नक्तेतिरात्रिनाम। देवमिद्रं वयोधसमायुपोधारयितारम्। देवीदेव्यौदेवम् एकोदेवीशब्दोदीप्तिवचनो-

स॒ꣳ शुचि॒मिन्द्र॑मवर्द्धयन् ॥ उ॒ष्णिहा॒च्छन्द॑से॒न्द्रि॒यम्प्रा॒णमिन्द्रे॒ व्वयो॒ दध॑द्व॒सुव॑ने॒ व्व॑सु॒धेय॑स्य॒ व्य॑न्तु॒ यज॑ ॥ ३६ ॥ दे॒वीऽउ॒षासा॒नक्ता॑ ॥ दे॒वमिन्द्रं॒ व्वयो॒धसं॑ दे॒वीदे॒वम॑वर्द्धताम् ॥ अ॒नु॒ष्टुभा॒च्छन्द॑से॒न्द्रि॒यम्ब॒लमिन्द्रे॒ व्वयो॒ दध॑द्व॒सुव॑ने॒ व्व॑सु॒धेय॑स्य॒ व्वीतां॒ यज॑ ॥ ३७ ॥ दे॒वीजोष्ट्री॑ ॥

परोदानादिगुणाय,तावचनः देवशब्दोप्येवमेव। अवर्द्धताम् किंकुर्वन्त्यौ। अनुष्टुभाछन्दसा इंद्रियंबलंच इंद्रेवयश्चाय,श्च दधत्धारयन्त्यौ। तेवसुवननाय वसुधानायच वीतांपिबतामाज्यस्य स्वमंशन्त्वमपिहेहोतर्यज ॥ ३७ ॥ देवीजोष्ट्री। येदेव्यौजोष्ट्र्यौ जोषयित्र्यौ। वसुधिती,वसुधात्र्यौ देवं-दीतंवयोधसमायुपोधारयितारमिंद्रम् देव्यौदेवम् अवर्द्धताम्। तेबृहत्याछन्दसा इंद्रियंवीर्यं

योवंचइन्द्रेवयआयुश्च दधतुधारयन्त्यौ सत्यौवसुवननाय वसुधानायच वीतांपिवतामाज्यस्य हमंघंत्वमपि होतर्यज ॥ २८ ॥ देवीऊर्जाहुती । येदेव्यौदात्र्यौ ऊर्जाहुतीऊर्जाह्वान्यो दुघेदोग्ध्र्यौ मुदुघेसुदोग्ध्र्येपयसा इन्द्रंवयोधसं देवीदेव्यौदुग्स्थानेदेवंदुग्स्थानम् अवर्द्धताम् । तेपंक्त्याछ-

देवीजोष्ट्रीव्वसुधितीदेवमिन्द्रंव्वयोधसन्देवीदेवमंवर्द्धताम् ॥ बृहत्त्याच्छन्दसेन्द्रियंश्रोत्त्रमिन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्वीतांय्यज ॥ ॥ २८ ॥ देवीऽऊर्ज्जाहुती ॥ देवीऽऊर्ज्जाहुतीदधेसुदुघेपयसेन्द्रंव्वयोधसन्देवीदेवमंवर्द्धताम् ॥ पङ्क्त्याच्छन्दसेन्द्रियꣳशुक्रमिन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्वीतांय्यज ॥ २९ ॥ देवादैव्या ॥ देवादैव्याहोतारा

न्दसा इन्द्रियंवीर्यशुक्रं च इन्द्रे वयआयुश्च दधतुधारयन्त्यौ वसुवननायवसुधानायच वीतांपिवतामाज्यस्य हमंघंत्वमपिहे होतर्यज ॥ २९ ॥ देवादैव्या । यौदेवौ दातारौदेवगोहोतारौ । अयंचाग्निरसौचमध्यमः । देवंदातारमिन्द्रंवयोधससायुषोधारयितारम देवौदुग्स्थानौ देवंदुग्स्थानम्

श्रवर्द्धताम्। तौविष्टुभाछन्दसा इन्द्रियंवीर्यन्त्विपिदींमिश्वहन्द्रे वयश्वायुः दधत् धारवन्तौ वसुव-
ननायवसुधानायच वीतांपिवता माज्यस्यस्वमंधं हे्होतर्यज ॥ ४० ॥ देवीस्तिस्र.। याः तिस्रो-
देव्यः सरस्वतीडाभारत्य'। श्रादरार्थमभ्यासः। वयोधसमायुषोधारयितारम पतिंपालयितवराम
इन्द्रमवर्द्धयन्। ताजगत्याछन्दसा इंद्रियवीर्यम्। श्रूपम् श्रूषशब्दोवलवचनः। वलम् इन्द्रे-

देवमिन्द्रंव्वयोधसन्देवौदेवमवर्द्धताम् ॥ त्रिष्टुभाच्छन्दसेन्द्रियन्त्वि
षिमिन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्वीताँय्यज ॥४०॥ देवीस्तिस्रः ॥
देवीरतीस्तिस्रोदेवीर्व्वयोधसम्पतिमिन्द्रमवर्द्धयन्॥जगत्याच्छन्दसे
न्द्रियꣳशूषमिन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्यन्तुयज॥४१॥ देवोनरा

वयश्वायुश्च दधत् दधत्यः वसुवननाय वसुधानायच वान्तुपिवन्तु श्राज्यस्यस्वमंधं हे्होतर्यज ॥ ४१ ॥
देवोनराशंस.। योदेवोद्युस्थानो नराशंसोयज्ञः देवंद्युस्थानम् इंद्रम वयोधसमायुषोधारयिता-
रम्। देवोदेवम् दानादिगुणयुक्तद्युभवत्व। श्रवर्द्धयत्। महदानींगिराजाछन्दसा इंद्रियवीर्यं

रूपमिन्द्रे वयआयुश्च दधत् धारयन् वसुवननाय वसुधानायच वेतुपिबतु आज्यस्यस्वसंशं होतर्यज ॥ ४१ ॥ देवोवनस्पतिः । योदेवोवनस्पतिर्यूपः देवदुरास्थानम् इंद्रं वयोधसमायुर्धारयितारम् देवोदेवम् दीप्तइत्युभयत्र । अवर्द्धयत् । मध्यदानीन् द्विपदाछन्दसा इंद्रियंवीर्यं भगमैश्वर्यंच

प्रशस्तः ॥ देवोनराशंसोदेवमिन्द्रंव्वयोधसन्देवोदेवमवर्द्धयत् ॥ व्विराजाच्छन्दसेन्द्रियरूपमिन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्वेतुयज ॥४२॥ देवोव्वनस्पतिः ॥ देवोव्वनस्पतिर्देवमिन्द्रंव्वयोधसन्देवोदेवमवर्द्धयत् ॥ द्विपदाच्छन्दसेन्द्रियम्भगमिन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्वेतुयज ॥ ४३ ॥ देवम्बर्हिः ॥ देवम्बर्हिर्व्वारितीनान्देवमिन्द्रंव्वयोध

इंद्रे वयआयुश्च दधत् धारयन् वसुवननायच वसुधानाय वेतुपिबतु त्वमपिहेहोतर्यज ॥ ४३ ॥ देवंबर्हिः । यद्देवं यष्टम् बर्हिः । वारितीनाम् वाभ्रः अद्भ्यः इतीनामुदकानाम् । ओष-धीनामित्यर्थः । देवंद्युस्थानम् इन्द्रं वयोधसमायुर्धारयितारम् देवन्देवम् दानादिगुणयु-

त्तादृत्युभयत्र । अवर्द्धयत् । तत्ककुभाछन्दसा इन्द्रियंवीर्य्यंयशश्च इन्द्रे वयआयुश्च दधत्धारयन्
वसुवननाय वसुधानायच वेतुपिबतु आजाख्यमंशं त्वमपिहेहोतर्य्यज ॥ ४४ ॥ देवोऽग्निः ।
योदेवोद्युस्थानः अग्निःस्विष्टकृत्साधुइष्टं कर्त्तव्यमितियस्यायमधिकारः । देवंद्युस्थानम

सन्देवन्देवमवर्द्धयत् ॥ ककुभाच्छन्दसेन्द्रियं यशऽइन्द्रे व्वयोदधद्व
सुवनेव्वसुधेयस्यव्वेतुयज ॥ ४४ ॥ देवोऽअग्निः ॥ स्विष्टकृद्देवमिन्द्र
व्वयोधसन्देवोदेवमवर्द्धयत् ॥ अतिच्छन्दसाच्छन्दसेन्द्रियङ्क्षत्र
मिन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्वेतुयज ॥ ४५ अग्निमद्यहोतारम
वृणीतायंय्यजमानः पचन्पक्तीः पचन्पुरोडाशंवध्नन्निन्द्रायव्वयो

इन्द्रं वयोधसमायुषोधारयितारम् । देवोदेवम् दीप्तइत्युभयत्र । अवर्द्धयत् अतिछन्दसाछ-
न्दसामहतानाम् इन्द्रियंवीर्यम् क्षत्रं क्षतोत्राणम् इन्द्रेवयआयुश्च दधत् धारयन् वसुवननाय-
वसुधानायच वेतुपिबतु आजसामगमंशं त्वमपिहेहोतर्य्यज ॥ ४५ ॥ अग्निमद्येति व्याख्यातम्

इन्द्रायवयोधसे इतिविशेषः ॥ ४६ ॥

इतिउव्वट कृतौमन्त्रभाष्येऽष्टाविंशतितमोध्यायः ॥ २८ ॥

घसेच्छागस्य ॥ सूपस्थाऽअद्यदेवोव्वनस्पतिरभवदिन्द्रायव्वयोधसेच्छागेन ॥ अघुत्तम्मेदस्तः प्प्रतिपचताग्ग्रभीदवीवृधत्पुरोडाशेन ॥ त्वामद्यऽऋषे ॥ ४६ ॥ [ १२ ] ॥ ४ ॥

इतिसंहितायामष्टाविंशोऽध्यायः ॥ २८ ॥

* समिद्धोऽअञ्जन् ॥ समिद्धोऽअञ्जन्कृदरम्मतीनाङ्घृतमग्नेमधुमत्

(१) एकादशत्रिष्टुभः । आप्रीनराशंसाः बृहदुक्थोवामदेव्यः । अश्वोवासमुद्रिरपश्यत् । अश्वस्तुति. आश्वमेधिकं प्राजाग्नेयः कृष्णग्रीवइत्येतस्मात् हेभगवन्नग्ने समिद्धःसंदीप्तः । अञ्जन्व्यक्तीकुर्वन्

(१) आश्वमेधिकोऽध्याय ततोऽस्य प्रजापतिऋर्षिः । आद्या एकादश त्रिष्टुभः आप्रीसञ्ज्ञाः अश्वस्तुतयो वामदेवपुत्रेण बृहदुक्थेन समुद्रपुत्रेणाश्वेन वा दृष्टा समित्तनूनपादिडादिदेवताका

* समिद्धोअंजनमेकादशयदक्रन्दयोदशसमिद्धोअद्यद्वादशकेतु कृण्व चतुर्विंशतिश्चत्वार पष्टि:

आज्येहि सर्वासां देवतानां मनांस्येतानि ममेदं स्यान्ममेदं स्यादिति । घृतं मधुमत् मधुस्वादु । पिन्वमानः आत्मानं प्रतिसिञ्चन् स्वेच्छया पिबन्नित्यर्थः । वाजी वेजनवान् चलनवान् वहन्वाजिनं हविः । हे जातवेदः । देवानां वक्षि वह प्रापय । प्रियम् आसधस्थं सहस्थानम् ॥ १ ॥ घृतेनाञ्जन् । प्रथमोऽर्द्धर्चः परोक्षकृतः उत्तरः प्रत्यक्षकृतः । यतस्तयोरेकवाक्यता नोपपद्यते

तिपिन्वमानः ॥ वाजीवहन्वाजिनंजातवेदोदेवानांवक्षिप्रियमा सधस्थम् ॥ १ ॥ घृतेनाञ्जन् ॥ घृतेनाञ्जन्त्सम्पथोदेवयानान्प्रजा नन्वाज्यप्येतुदेवान् ॥ अनुत्वासप्तेप्रदिशः सचन्ताꣳस्वधाम स्मैयजमानायधेहि ॥ २ ॥ ईड्यश्च ॥ ईड्यश्चासिवन्द्यश्चवाजि

अतः पुरुषव्यत्ययः । घृतेन अंजन् समञ्जन् । पथः देवयानान् । हवींषि देवरथाः पन्थान उच्यन्ते । तैर्हि ते जीवन्ति । प्रजानन् अहं देवानां हविरिति जानन् वाजी अपि तु अभ्यागच्छतु देवान् । किञ्च । अनुसचन्ताम् अनुसेवन्ताम् त्वां हे सप्ते सरण । प्रदिशः दिगाश्रयाणि भूतानि । किञ्च स्वधाम् अन्नम् अस्मै यजमानाय धेहि प्रयच्छ अवधृतयज्ञस्तनूपाकल्पपर्यायः ॥ २ ॥

ईडयश्चासि। यस्त्वम् ईड्यश्चासि स्तुत्यश्चासि॥ वंद्यश्च। हेवाजिन् आशु च शीघ्रश्च मेद्धश्च यज्ञसंपादीचश्चसि हेसप्त। तंत्वाम् अग्निः देवैःवसुभिः सजोषाः समानजोषणः प्रीतम् आप्रीभिः प्रीतम्। निर्हवोढारम् वहतुमापदत्तु जातवेदाः॥ ३॥ स्तीर्णंवर्हिः। स्तीर्णमपि-वर्हिः सुष्टरीम् साधुस्तृणाम आनुपाणा विभक्तो डींदेशः। सेवमानम्। ततस्तीर्यमाणम् उरुवहु

न्नाशुश्चासिमेद्ध्यश्चसप्ते॥ अग्निष्ट्वादेवैर्व्वसुभिः सजोषाः प्रीतं व्वह्निंव्वहतुजातवेदाः॥३॥ स्तीर्णम्बर्हिःसुष्टरीमाजुषाणोरुपृथु प्प्रथमानम्पृथिव्व्याम्॥ देवेभिर्युक्तमदितिः सजोषाःस्योनङ्कृण्वा नासुविते दधातु॥४॥ एताऽउवः॥ सुभगाव्विश्वरूपाव्विपक्षो

पृथुविस्तीर्णम् प्रथमानम्। पृथिव्यांवेद्याम्। देवेभिः देवै.युक्तम्। अदितिः सजोषासमानजोष-णामच। प्रीयमानास्योनंसुखं कृण्वानाकुर्वाणा। सुवितेसुगतेमंगंप्रजाटांवा। दधातुस्थापयतु॥४॥ एताउवःएताश्चयज्ञगृहद्वारः हेयजमानाः वः युष्माकं सुभगाःविश्वरूपाः अनेकरूप चित्रिताः।

त्रिपत्नीभिः श्रयमाणाउद्वातैः । पत्नीभिः उद्वातैः ऊर्द्धमायातैः । सततमायातैः सततगमनैः विश्रय माणाविस्तीर्यमाणाः । पत्तस्शब्दःसान्त. कपाटवचन. । ऋष्वाः महत्यः सतीःसत्यः कवषः कुषिता मसुषिराः । शुंभमान.ः आत्मानंशोभयन्त्यः । द्वारोदेवीः दीप्तिमत्यः । सुप्रायणाः सुप्रगमनाः भवन्तु । ५॥ अन्तरामित्रावरुणा । ये अन्तरामध्येन मित्रावरुणाचरन्ती । अयस्वैलोकोमित्रोसौवरुण

भिः श्रयमाणाऽउद्वातैः ॥ ऋष्वाः सतीः कवषः शुम्भमानाद्वारो देवीः सुप्रायणाभवन्तु ॥ ५ ॥ अन्तरामित्रावरुणा ॥ अन्तरामित्रा वरुणाचरन्तीमुखंयज्ञानामभिसंविदाने ॥ उषासावार्ठसुहिरण्ये

इतिश्रुतिः द्यावापृथिव्योर्मध्येन सञ्चरन्त्यौ । मुखंयज्ञानामभिसम्विदाने यज्ञानांमुखमग्निहोत्रं तस्यकालम् अभिसम्विदाने प्रकथयन्त्यौ । उच्चिउतामयमग्निहोत्रहोमकालःप्राप्तइतीवलक्ष्यते । तेउषासा द्विवचनोपदेशा साहचरितत्वाच्च द्वितीयाराबिः । नक्तोषासौ वांयुवयोः हेदम्पति-यजमानौ सुहिरण्ये सावुहिरण्यालङ्कारभूषिते । सुशिल्पेसाध्वन्योन्यंप्रतिरूपे ऋतस्ययज्ञस्ययोनो

इहसादयामिस्थापयामि ॥ ६ ॥ 'प्रथमावाम् । यौप्रथमौहोतारौ अयञ्चाग्निरसौचमध्यम: । वायुश्चयो: इदम्पतीयजमानौ । सरथिना एकरथारूढौ सुवर्णाशोभनवर्णौ । देवौदानादिगु-णयुक्तौ पश्यन्तौभुवनानि भूतजातानि । विश्वानिसर्वाणि मध्यस्थतया । अपिप्रयम् प्रीणा-तेरेतद्रूपम् । प्रीणितनानहमस्मितौचोदनासुप्रमाणकांक्षम् । वांयुवयो: इदम्पतीयजमानौ

सुंभ्रित्यपेऽऋतस्ययोनांविहसादयामि ॥ ६ ॥ प्रथमावांम् ॥ प्रथमा वांᳬसरथिनासुवर्णादेवौपश्यंन्तौभुवंनानिविश्वा ॥ अपिंप्प्रयुञ्चो दनावाम्मिमानाहोताराज्ज्योतिं: प्प्रदिशादिशन्ता ॥ ७ ॥ आदि त्यैर्न्नं: ॥ आदित्यैर्न्नोभारंतीवष्टुयज्ञᳬसरंस्वतीसहरुद्रैर्न्नंऽआ

मिमानानिर्मिमानौ होतारौ ज्योति:प्रदिशादिशन्ता । आहवनीयाख्यं ज्योति. पृष्ट्व्यमिति प्रदिशाप्रदेशेनअभिनयेन दिशन्तादर्शयन्तौ । आशतेद्गतिवाच्यम् ॥ ७ ॥ आदित्यैर्न. । अन्वय: पादा.परोक्षकृता: चतुर्थ.पाद.प्रत्यक्षकृत: । नचैवंसामजस्यम् अतश्चतुर्थस्य पादस्यसन्नति: ।

आदित्ये.सहितानो अस्माकंभारती वक्तुकामयतांयज्ञम्। सरस्वतीचरुद्रैः सहितां नःअस्मान् आवीत्अवतु। इडाचउपहूता ह्वतपाह्वाना वसुभि सजोषासमानप्रीतिः नःआवीदित्यनुवर्तते। एवमनेनप्रकारेण यज्ञंनोऽस्माकं तिस्रोदेव्यः अमृतेषुदेवेषु धत्तदधत्विति पुरुषव्यत्ययः परोक्षीकृत्यस्तुताः ताइदानींप्रत्यक्षकृताः स्तौति। यज्ञनोदेवीरमृतेषुधत्तेति ॥ ८ ॥ त्वष्टावीवीत् ॥ इडोपहूताव्वसुभिः सजोषायज्ञन्नोदेवीरमृतेषुधत्त ॥ ८ ॥

त्वष्टावीरम् ॥ त्वष्टावीरन्देवकामञ्जजानत्वष्टुरर्वाजायतऽआशुरश्वः ॥ त्वष्टेदंव्विश्वम्भुवनञ्जजानबहोःकर्त्तारमिहयक्षिहोतः ॥ ९ ॥

अश्वोघृतेनत्मन्यासमक्तऽउपदेवाँ२ ॥ ऽऋतुशः पाथऽएतु ॥

रम्। यःत्वष्टावीरंपुत्रम् देवकामम् देवानांयागाकरणसमर्थं जजानजनयति। यस्माच्चत्वष्टुः अर्वाअरणः आशुःशीघ्रः अश्वःजायते। यश्चत्वष्टा इदंविश्वसर्वं भुवनंभूतजातं जजानजनयति। तंत्वष्टारं बहोःभूतग्रामस्यकर्तारम् इहयज्ञेयक्षियज हेहोतः ॥ ९ ॥ अश्वोघृतेन। यःअश्वः पत्नीभिःघृतेनत्मन्या आत्मनास्वयमेवसमक्तः समुचितःसन्। उपएतु उपगच्छतु देवान्प्रति ऋतुशः

ऋतावृतौ कालेकाले पाथ.अन्नंभूत्वा । कथंदेवलोकमजानन्नदेवान्प्रतियायादित्यतआह । वन-
स्पति:देवलोकंप्रजानन् अश्वस्यदर्शयन्निविशेष: । अग्निनाच तन्मित्रेण हव्याहवींषि स्वदि-
तानिमृष्टीकृतानि वक्षत्वहतुदेवान्प्रति ॥ १० ॥ प्रजापतेस्तपसा । यस्त्वंप्रजास्तपसा वावृधा-
न.वर्द्धमान. सद्योजात: अरण्यो:शकासादुत्पन्न:दधिषेधारयसि यज्ञं हेअग्ने । तंत्वांब्रवीमि

वनस्पतिर्देवलोकम्प्रजानन्नग्निना हव्यास्वदितानिवक्षत् ॥१०॥
प्रजापतेस्तपसा ॥ वावृधानऽसद्योजातोदधिषेयज्ञमग्ने ॥ स्वाहा
कृतेनहविषापुरोगायाहिसाध्याहविरदन्तुदेवाः ॥ ११ ॥ [ ११ ] य
दक्रन्दः ॥ प्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येन

स्वाहाकृतेनहविषा । स्वाहाकारोपलक्षितेनहविषा पुरोगा:पुरोगामीसन् । याहिसाध्या साधु-
शब्दविभक्त्यर्थेड्यादेशेटिलोप: । साधुहवि:अदन्तुदेवा: ॥ ११ ॥ यदक्रन्द: । त्रयोदशत्रिष्टुभोश्वाभि-
ष्टवोहोतु: । यत्यदा अक्रन्द: क्रेषाशब्दमकार्षी: । प्रथमञ्जायमान: यत्त्वउद्यन्उद्गच्छन् समुद्रा-
त्अन्तरिक्षलोकात् पार्थिवाद्वासमुद्रात् । उतवाअपिच पुरीषात्अन्यस्माज्जलसंघात्पशोर्वा ।

उद्यन् अक्रान्दः तदाश्येनस्यपक्षौशीघ्रतयाअजैषीः हरिणस्यबाहूशीघ्रतयाअजैषीःइतिशेषः । उपस्तुत्यमउपसङ्गम्य स्तुत्यंस्तवनीयमृषिभिः महिमहत् जातमुत्पन्नम् तेतव हेअर्वन्अरणाअश्व ॥ १२ ॥ यमेनदत्तम् । अत्रचतुर्थपादःपृथग्व्याख्यायतेयोग्यत्वात् । सूरादश्वंवसवोनिरतष्ट हेवसवःयूयंसूरात् आदित्यमण्डलात् अश्वंनिरतष्ट । तक्षतिःकरोतिकर्मा निष्कृष्यकृतवन्तः । तंयमेन्दत्तम्

स्यपुक्षाहरिणस्यबाहूऽउपस्तुत्यम्महिजातन्तेऽअर्वन् ॥ १२ ॥ युमेनंदत्तम् ॥ युमेनंदत्तन्त्रितऽएनमायुनगिन्द्रऽएणम्प्रथमोऽअध्यतिष्ठत् ॥ गन्धर्वोऽअस्यरशुनामगृभ्णात्सूरादश्वंवसवोनिरतष्ट ॥१३॥ असियमोऽअस्यादित्योऽअर्वन्नसित्रितोगुह्येनव्रतेन ।

त्रितःत्रिस्थानोवायुः एनमायुनक्युक्तवान् । इन्द्रश्चएनंप्रथमःअध्यतिष्ठत् । गन्धर्वश्चविश्वावसुः अस्यरशनाम् अगृभ्णात् अगृह्णात् । यद्रूत्थंभूतोश्वःतवयंस्तुमइतिवाक्यशेषः ॥ १३ ॥ असियमः । भवसिचआदित्यः हेअर्वन्अरणाअश्व । भवसिचत्रित स्त्रिस्थानइन्द्रः गुह्येनगुप्तव्रतेनकर्मणा । भवसिचसोमेनसमयाअधातः विपृक्तःसंपृक्तः एकीभूत । एताभिर्देवताभिस्तवसायुज्यज्ञातमि-

त्यभिप्राय:। किञ्च आहुःबुधाः तेतव। त्रीणिदिविद्युलोके आदित्यात्मनावस्थितस्य। बन्धनानिऋग्यजुः सामलक्षणानि। मण्डलान्तरपुरुषार्चींषि ॥ १४ ॥ त्रीणिते। त्रीणितआहुर्दिविबन्धनानि इतिव्याख्यातम्। त्रीणिअप्सुबन्धनानि कृषिर्वृष्टिर्बीजमिति। त्रीण्यन्तः समुद्रे समुद्रशब्देनान्तरिक्षमभिधीयते। अन्तरिक्षस्य मध्येतवत्रीणिबन्धनानि। मेघोविद्युत्

असि सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि ॥ १४ ॥

त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे ॥ उतेव मे वरुणश्छन्त्स्यर्वन्यत्रा त आहुः परमं जनित्रम् ॥ १५ ॥ इमा ते वाजिन्नवमार्जनानीमा शफानां सनितुर्निधाना ॥ अत्रा ते भद्रा रशना अपश्यम्

अशनिरिति उतइवअपिच। मेममवरुणाःछंसिस छन्दतिरर्वतिकर्मा शंसतिकथयति हेअर्वन्यत्र गाभरव। यत्रतेतवआहुःपरमञ्जनितं जन्मवायुरूपेण ॥ १५ ॥ इमाते। इमानितेतव हेवाजिन्नश्व। अवमार्जनानियैस्तवावमार्जनं कृतन्तान्येवमार्जनानि नूतनवेतसकटप्रभृतीनि अहमपश्यम्पश्यामि। इमानिचशफानांखुराणांसनितुःसम्भक्तुः पादवासस: निधानानिधानानि

यत्र पाद्वास. प्रभृतीनिधीयन्तेतानि अहमपश्यम । अपिच अत्रतेतवभद्रा भन्दनीयास्तुत्या: रशनायज्ञमपश्यम् । ऋतस्यसत्यस्ययारशना अभिरक्षन्तिगोपा: गोपायितव्यान्पशून् ॥ १६ ॥ एतैरधस्तनै रश्वचरितै रश्वमभिष्टुत्य अथेदानींभविष्यत्कर्मभिरभिष्टौति । अत्मानन्ते । पशुसं शनोत्तरकालम् आत्मानन्तेतवदिव्यसहंमनसा आरात्दूरात् अजानाम्जानासि । जानातेरे-

ध्यमृतस्ययाऽअभिरक्षन्तिगोपाः ॥ १६ ॥ आत्मानन्ते ॥ आत्मानन्ते मनसा रादंजानामवोदिवापतयन्तम्पतङ्गम् ॥ शिरोऽअपश्यम्पथिभिः सुगेभिररेणुभिर्जेहमानम्पतत्रि ॥ १७ ॥ अत्राते ॥ रूपमुत्तममपश्यञ्जिगीषमाणमिषऽआपदेगोः ॥ यदाते मर्त्तोऽअनुभोगमा

तदनुदात्तत्वाद्रूपं लुङ्उत्तमैकवचने । अत्र.अधस्तात् प्रदेशात् । दिवादिवंप्रतिपतयन्तम् उत्पतयन्तम् पतङ्गम् आदित्यरूपिणम । शिरश्चाहंतवअपश्यम् पथिभि:मार्गै: सुगेभि: सुगमनै: अरेणुभि.उपद्रवरहितै. जेहमानङ्गच्छत् पतत्रिउत्पतनशीलम् ॥ १७ ॥ अत्राते । अत्रद्युलोकेतेतवरूपमुत्तमम् अहमपश्यम्पश्यामि कथंभूतम् । जिगीषमाणं जेतुमिच्छति इष.अन्नानिआभास्थि-

तंपदे गोः गन्तुमंगडतस्य । एवंच्यु लोकावस्थितस्यतवादं रूपमपश्यम् । अथपुनः पृथिवीस्थितस्य यदातेतवमीतामनुष्य भोगम् वाहनादिकम् अनुआनट अनुव्याप्नोत् आतङत् इतिपादपूरणार्थौ तदाग्रसिष्ठः ग्रसुअदने । ग्रसिष्ठतमः अतिशयेनभक्षयितासन् ओषधीः अजागः गृह्णासिगिरसिवा । अन्योहिवाजितश्चलितुमपिनशक्नोति त्ववीर्यवत्तरोसीतिभावः ॥१८॥ अनुत्वा । अनुइतिपरभावमा-

नुडादिद्ग्रसि'ष्ठ ऽओषधीरजीगः ॥ १८ ॥ अनुंत्वा ॥ अनुंत्वारथोऽ अनुमर्योऽअर्वन्ननुगावोनुभगंः कनीनाम् ॥ अनुव्रातासुस्तवंस वस्यसोयुरनुदेवाममिरेवीर्यन्ते ॥ १९ ॥ हिरंण्यशृङ्गोयः ॥ हिरं

षष्टे । हेअर्वन् यस्यसुकृतिनोगृहेत्वञ्चेष्टसेतस्यगृहेत्वामनुरथः त्वामनुमर्योमनुष्यः त्वामनुभगः सौभाग्यधनीनाम्कन्यकानाम् । तनैतेपदार्थाभवन्तीत्यर्थः किंच । व्रातासः पुरुषसवा अपितवस-ख्यमखिभानमन्वीयुः । किमन्यद्बहुवदाम । अनुदेवासमिरेवीर्यन्ते अनुममिरेअनुमितवन्तः देवावी-र्यवीरकर्म तेतव । मचिन्त्यशक्तिस्त्वमसीत्यभिप्राय. ॥ १९ ॥ हिरण्यशृङ्गः । हिरण्यशृङ्गस्थानीयम-

ख्येति हिरण्यशृङ्गः। अयोअस्यपादाः यस्यचासस्यअयः अयइतिसर्वेषांरजतादीनामुपलक्षणम पादाद्यवयवानाम्। रजतादिविशिष्टाअवयवाः। मनोजवा.मनोवेगयुक्ताः। यस्मादयमवरःकनिष्टःइन्द्रः आसीत्अभवत्। वायुरूपेणाश्वस्यावस्थानात्। देवाइत्देवाअपि यस्याश्वस्याहविरद्यंहविर्भक्षणमदनीयम्आगच्छन्। यश्चअर्वन्तम्प्रथम अध्यतिष्ठत् सचइन्द्रः यस्यहविरद्यमागतम तंवयंस्तुमइ॰

गयशृङ्गोऽयोऽअस्यपादामनोजवाऽअवरऽइन्द्रऽआसीत्॥ देवाऽइदस्यहविरद्यमायन्न्योऽअर्वन्तम्प्रथमोऽअद्ध्यतिष्ठत् ॥ २० ॥ ईर्म्मान्तासः सिलिकमद्ध्यमासः ॥ ईर्म्मान्तासः सिलिकमद्ध्यमासः संशूरणासोदिव्यासोऽअत्याः ॥ हंसाऽइवश्रेणिशोयतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः ॥

तिशेष ॥ २० ॥ ईर्मान्तासः आदित्यस्यरथेयेश्वायुक्ता स्तदारेणायमश्वस्तूयते। ईर्मईरितः अन्तोयेषान्ते ईर्मान्ताईर्मान्ताएव ईर्मान्तासः तेषांहिसप्तानामश्वानांसमीरितान्ता विक्षिप्ता. प्रान्ता विक्षिप्ताविरलाइत्यर्थः। दृष्टान्ताश्च तेहिपृथूरस्काः पृथुजघनाश्चेत्यर्थः। सिलिकमध्यमासः संलग्नमध्यमाकृशोदराइत्यर्थः। सप्तानामपिसश्लिष्टा उदरप्रदेशानिरुदरास्तेश्वाइत्यर्थः। तथापिहिस्तुतिरूप-

पयतेएव संशूरणास: । संहिता:शूरणेनभगवतादित्येन दिव्यास:दिविजा: । अत्या:सततगमना: तेहिसप्तद्यु मावाह्नंसहस्रयुगपर्यंन्तमहर्वंहन्ति । यद्वत्थंभूताअश्वा: तेहंसाइवश्रेणिशोयतन्ते । यथा-हंसा:श्रेणीभृता एकयारीत्याप्रथमगमनादान् कुर्वंतिएवमश्वाअपीत्युपमार्थ: । कदाइत्याह यदाय-स्मिन्काले अचिपु:अगुङ्म्यामावित्यसैग्रतद्रूपम व्याप्नुवन्ति दिव्यंदिविभवम् अज्मम्अजनम आजिम्

व्यमज्मुमश्वा॑: ॥ २१ ॥ तवशरीरम् ॥ तवशरीरंपतयिष्णवर्वन्तवंचित्तंवातंऽइवध्रजीमान् ॥ तवशृङ्गाणिविष्ठितापुरुत्रारण्येपुजर्भुराणाचरन्ति ॥२२॥ उपप्र ॥ उपप्रागाच्छसनंवाज्यर्वादेवद्रीचामनसादीध्यानः ॥ अजः पुरोनीयतेनाभिरस्यानुपश्चात्कवयो

यन्त्वा: ॥ २१ ॥ तवशरीरम । हेअर्वन्तवशरीरंपतयिष्णुउत्पतनशीलम । तवचित्तञ्चवातइवध्रजीमान्गतिमान् वेगवत् सूक्ष्मानर्थान्प्रति गच्छेदित्यर्थ: । तवशृङ्गाणि शृङ्गाणीतिज्वलान्नामसुपठितम् । तवार्चींषि विष्ठिताविविधंस्थितानि पुरुत्रावहुधाविद्युच्चन्द्रार्काग्न्यादिषु । अरण्येषु वनेषु जर्भुराणाजर्भुराणानि देदीप्यमानानिदावाग्निरूपेणाचरन्ति ॥ २२ ॥ उपप्रागात् । उपप्रअगात् शसनं विश-

सनन् । वाजीविजनशान् अर्वाअरणोश्व: देवद्रीचादेवानप्रत्यञ्चितेन मनसादीध्यान: धग्रायन् हिर-
ण्यगर्भपदम् । किञ्च अज:पुरोनीयते । तदुक्तम् कृष्णग्रीवआग्नेयोरराटेपुरस्तादिति । नाभिरस्य
पश्चस्य । तदुक्तमृसौमापौष्णा: श्यामोनाभ्यामिति । किञ्च अनुलग्ना:पश्चात् कवय:क्रान्तदर्शना:
यन्तिगच्छन्तिरेभा: स्तोतार: ॥ २३ ॥ उपप्रागात् । एवमश्वमभिष्टुत्य अथेदानींयजमानं
कृतकृत्यतयासंबोधयन्नाह । उपप्रागात्प्राप्तवान् परममुत्कृष्टम् यत्यस्मात्सधस्थंसह स्थानन्दे-

वन्तिरेभाः ॥ २३ ॥ उपप्र ॥ उपप्रागात्परमँय्यत्सधस्त्थमर्व्वाँ२ ॥
ऽअच्छापितरम्मातरञ्च ॥ अद्यादेवाञ्जुष्टतमोहिगम्म्याऽअथाशा
स्तेदाशुषेव्वार्य्याणि ॥ २४ ॥ [ १३ ] समिद्धोऽअद्य ॥ मनुषोदुरोणे

वमनुष्याणान् । अर्वान्अर्वाअश्व: नकारउपजन: । अच्छापितरंमातरञ्च अच्छाभिराप्तुमिति
शाकपूणि: । अभ्यगाच्चयस्मात् पितरंमातरञ्च द्यावापृथिव्यौअश्व: । तस्माद्ब्रवीमि हेयजमान-
अद्यापिकृतकृत्य:सन् देवान्गम्या:गच्छे: जुष्टतम:सन् हिनिश्चये । अथैवंगतायभवते दाशुषे-
दत्तवतेऽश्वौपि यजमानाय । भागास्तेअश्वएववार्याणि वरणीयानि ॥ २४ ॥ समिद्धोअद्य । द्वाद-

गाभ्रास्त्रिष्टुभः भार्गवोजमदग्निरपश्यत्। यस्त्वंसमिद्धः अद्याग्निन्यजनीयेहनि। मनुषः मनुष्यस्ययजमानस्य। दुरोणेयज्ञगृहे देवोदानादियुक्तः। देवान्दानादियुक्तान् यजसि हेजातवेदः जातप्रज्ञान। संत्वांप्रार्थयामि आचवह देवान्यजच। हेमित्रमहः मित्राणांपूजयितः। यस्त्वं चिकित्वान् चेतनावान्परिहृष्टकारी। अपिचैतदेवचिचेयत्वमस्माकमस्मिन्कर्मणिवर्तेथाः। किंकारणयतोब्रवीमि। त्वदूतःदेवानां कविःक्रान्तदर्शनश्चासिप्रचेताः प्रहृष्टचेताश्च ॥२५॥ तनूनपात्पथः।

देवोदेवान्यंजसिजातवेदः ॥ आचुव्वहंमित्रमहश्चिकित्वान्त्वन्दूतः कविरसिप्रचेताः ॥ २५॥ तनूनपात्पथः ॥ तनूनपात्पथऋतस्ययानान्मद्ध्वासमञ्जन्त्स्वदयासुजिह्व ॥ मन्मानिधीभिरुतय

तनूनपाच्छब्देनाज्यमभिधेयमग्निर्वा। हेतनूनपात् गवामपांवापौत्र। पथःऋतस्ययानान् ऋतस्ययज्ञस्य गमनान्पथ.हवींपि। हविर्भिर्हियज्ञोयातिप्रवर्ततेतोयज्ञमार्गाहवींष्युच्यते। मद्वामधुरसेनसमञ्जन्भञ्जयन्स्वदयदेवेभ्यःरोचय। हेसुजिह्वकल्याणजिह्व। कल्याण्यग्नेर्जिह्वायानादेवत्यानिहवींपि प्यभ्यवहरतेनकिञ्चनोच्छेषयति। किञ्चमन्मानिमननानिधीभिःबुद्धिभिःसहि-

तानि उतश्चपिच यज्ञम् ऋत्विनृसमर्द्धयन् । देववाचकृणुहि देवान्प्रतिगमय । करोतिर्गमनार्थः यद्वरं नःअस्माकम् ॥ २६ ॥ नराशंसस्य । नसमस्मिन्नासीनाःशंसन्तीति नराशंसोयज्ञः । प्रजापतिर्वाग्निर्वा । नरैःप्रशस्योभवतीतिनराशंसः तस्यमहिमानंमहाभाग्यम् एषांदेवगणानांमध्ये उपस्तोपाम उपस्तुमः कथंभूतस्यनराशंसस्य । यजतस्ययष्टव्यस्य यज्ञैराहुतिभिः । तस्यचमहि-

उप्रसुष्वन्देवताचंकृणुह्यध्वरन्नः ॥ २६ ॥ नराशꣳसस्यमहिमा नम् ॥ नराशꣳसस्यमहिमानमेषामुपस्तोषामयजतस्ययज्ञैः ॥ येसु क्रतवःशुचयोधियन्धाः स्वदन्तिदेवाउभयानिहव्या ॥ २७ ॥ आजुह्वानऽईड्यः॥आजुह्वानऽईड्योवन्द्यश्चायाह्यग्नेवसुभिः

मानमासाद्य येदेवाःसुक्रतवः सुकर्माणः । शुचयःनिपिक्तपाप्मानः अणिमाद्यैश्वर्ययुक्ताः धियन्धाःप्रज्ञायाः कर्मणोवाधारयितारः स्वदन्तिभक्षयन्ति उभयानिहव्याहवींषि । सोमञ्चइतराणिचहवींषि तान्याणिप्रयाज्यभागस्विष्टकृत्प्रभृतीनि आवापिकानिप्रधानान्युभयानीति ॥ २७ ॥ आजुह्वान. । यस्त्वम् आजुह्वानः आह्वयमानः सन् ईड्यःस्तुत्यः वन्द्यःनमस्यश्चभवसि तंत्त्वांया-

ह्यागच्छ इत्यग्नेवसुभिः सजोषा. सहप्रीतिः । यश्चत्वांदेवानां होतासि इत्यत्र सहन्सएतान्देवानाहूय यक्षियज । इषित: प्रेषित: अधीष्टोवा । यजीयान् यष्टृतर.सन् ॥ २८ ॥ प्राचीनंवर्हिः प्राचीम्प्रागग्रं वृज्यतेप्रस्तीर्यते । किंसमनीषयानेत्याह । प्रदिशा । प्रदिक्शब्देन श्रुतिवाक्यमभिधीयते । प्रागग्रंवर्हिस्तृणातीति । पृथिव्यावस्तोरस्याः । अस्याः पृथिव्याः । वेदेः

सुजोषाः ॥ त्वन्देवानामसियह्वहोतासऽएतान्यक्षीषितोयजीयान् ॥ २८ ॥ प्राचीनंव्वर्हिः प्प्रदिशापृथिव्याव्वस्तोरस्याव्वृज्यतेऽअग्रेऽअह्नाम्॥ व्व्युप्रथतेव्वितरंव्वरीयोदेवेभ्योऽअदितयेस्योनम् ॥ २९ ॥ व्व्यचस्वतीरुर्व्विया व्विश्रयन्तांपतिभ्योनजनयः

वस्तोः वसनायाच्छादनाय । अग्रे अन्हाम् पूर्वान्हेदिवसानाम् । सहियागकालः प्रशस्तः । तत् वृज्यमानं वर्हिः विउप्रथतिविप्रथतिविविधमाच्छादयति । उकारःपादपूरणः । वितरमतितराम् वरीयः वरतरमुरुतरंवा । किंकारणमपेक्ष्य व्युप्रथतेइत्यतआह । देवेभ्यश्च अदितयेचसयोनं सुखमकर्तुमितिशेषः ॥ २९ ॥ व्यचस्वतीः । यज्ञगृहद्वारोऽभिधेयाः । अत्रचप्रथमोर्द्धर्चः परोक्षकृ-

सो द्वितीयः प्रत्यचकृतः नचतयोरेकवाक्यतासंपद्यतेअतः प्रथमस्यसन्नतिः । व्यचस्वतीः व्यञ्च नवत्यः गमनवत्यः । उर्विया उरुत्वेनविश्रयन्ताम् विहृत्ताभवत । कथमिव । पतिभ्योनजनयः शुंभमानाः यथामैथुन्यधर्मेपति भ्योर्थाय जनयः जायाआत्मानंशोभयन्त्यः । उरूविश्रयेयुः विहृतीकुर्वंति यथाहिविहृताजायाउपसर्पन्तिपतिन्न तथाइति इतीदमुक्तंपतिभ्योनजनय.एवविहृताश्चभूत्वा हेदेव्यः द्वारः बृहत्यः महत्यः । विश्वमिन्वाः विश्वमाभिरेताभिःविश्वानिन्वाः । यूयंदेवेभ्यः भत्विग्यजमानेभ्यः भवतसुप्रायणाः सुप्रगमनाः ॥ ३० ॥ आसुष्वयन्ती । स्मयतेर्वानिरुपसर्गात्स्वपतेर्वासूपसर्गात् । सेस्मीयमानेपरस्परं हसन्त्यौसाधुस्वपन्त्यौवा । यजतेयज्ञेसये उपाकेउपाक्रान्ते परस्परमेकदेशसवलीभूते । उपासानक्ता उषाश्चनक्ताराचिश्च । सदतान्नियोनौ । आसीदताम्निरनर्थक उपसर्गः । यद्वा निरितिसदतामित्याख्यातेनयुज्यते । निषीदताम् । योनौयज्ञगृहे कथंभूते ।

शुम्भमानाः ॥ देवीर्द्वारोबृहतीर्विश्वमिन्वादेवेभ्योभवतसुप्रायणाः ॥ ३० ॥ आसुष्वयन्ती ॥ यजतेउपाकेउषासानक्तासदतान्नियोनौ ॥ दिव्येयोषणेबृहतीसुरुक्मेअधिश्रियंशुक्रपिशन्द

मपिहि-अध्वर्योपावसृज उत्पिष्टांयासुकमन्नदानम् अवसृजनिचिप । तमन्याआत्मना । आदरा-र्थमचनम्मनेवाङाादेरात्मनङ्ख्याकारलोपः ॥ समञ्जन्संम्रचयन् देवानाम्पाथ. अन्नम् ऋतु-थास्वताक्ष्तौचहवींषिअवसृज ॥ ३५ ॥ सद्योजात. । योग्नि. सद्योजातः जायमानः सन् व्यमिमीतनिरमिमीतयज्ञम् । यश्चदेवानाम् अभवत् पुरोगा. अग्रतोगामी । तस्यास्यहोतुः प्रदि शिप्राच्यादिशि ऋतुथाऋताक्ष्तौआचहवनीयात्मनाव्यवस्थितस्य । वाचिआस्येमुखेवाग्ग्रहणेनलच-

व्यध्वमधुनाघृतेन ॥ ३५ ॥ सद्योजातः ॥ सद्योजातोव्व्यमिमीतय्ज्ञमग्निर्देवानामभवत्पुरोगाः ॥ अस्यहोतुः प्रदिश्यृतस्यव्वाचि स्वाहाकृतꣳहविरदन्तुदेवाः ॥ ३६ ॥ [ १२ ] केतुङ्कृण्वन् ॥

गाया मुखमभिधीयते तदुक्तं वार्तिककारेण । "अभिधेयाविनीभाव प्रतीतिर्लक्षणेष्यते । लक्ष्यमाणगुणैर्योगा द्वृत्तिरिष्टातुगौणतेति" । स्वाहाकृतम् स्वाहाकृत्युपलक्षितं हविः अदन्तुदेवाः ॥ ३६ ॥ इतउत्तर मध्वरचिणाधोद्गारः युद्धोपकरणानिच स्तूयन्तेप्रागाग्नेय इतिश्रुतेः ॥ केतुंकृण्वन् । अग्निर्गायत्रीअनिरुक्ता केतुंमज्ञानं ज्ञानकुर्वन् । अकेतवेनविद्यते केतुमज्ञानं यस्य तस्मैअ-

गृ० केतवे पेशःसुवर्णंरूपंवा मर्याःमर्यायेतिविभक्तिव्यत्ययः । मर्यायमनुष्याय अपेशसेनविद्यते अ०
य० पेशःयस्यतस्मै अविद्यमानसुवर्णाय अविद्यमानरूपायवा पेशःकुर्वन् । समुषद्भिरजायथाः हेअ- २९
ग्नेउषद्भिः । उषदाहेअग्निहोत्रादीनिकर्माणि कुर्वद्भिः । जायमानःसन् जन्मनाजातेर्वा ।
मं० यमतेर्वोक्ततसंप्रसारणमेतद्रूपम् उषद्भिःअग्निं प्रतिनित्रसद्भिः जायमानःसन् समजादथाःउ
५६८ त्पद्यसे ॥ ३७ ॥ जीमूतस्येव । वर्मस्तूयते जीमूतोमेघः तमोत्रभवतिप्रतीकम् अनीकम्

उ० केतुङ्कृण्वन्नकेतवेपेशोमर्याअपेशसे ॥ समुषद्भिरजायथाः ॥ ३७ ॥
भा० जीमूतस्येवभवति ॥ जीमूतस्येवभवतिप्रतीकंयद्वर्मीयातिसम
दामुपस्थे ॥ अनाविद्धयातन्वाजयत्वंसत्वावर्मणोमहिमापि

सर्वमितिपर्यायः । यथामेघमासुसंविद्युत्स्फुरित स्तनयित्नुधारानिकरैरसह्यंभ त्यन्तः सरणैःएवं
क्षत्रयरत्रपदातिमुसंनिशिताख्त गम्भीरद्वयंनिनादशरधारा भिरसह्योभवति एवंकश्चित्कालेकसन- शिवम्
वेत्यतआह । यद्वर्मी यदावर्मासन्नविद्यातेइतिवर्मी । यातिगच्छति समदाम । संमादन्ति सहवामादन्ते ५९९
आमुष्मिद्वारइतिसमदः समदःशब्दःसंग्रामवचनः । समदांसंग्रामाणाम् उपस्थे उत्सङ्गे यतएवमतोब्रवीमि ।

दिव्येदिविभवे योपर्याप्रीतिमत्यौ स्वीरूपिण्यौवा । बृहतीबृहत्यौ महत्यौ । सुरुक्मेसुरोचने । अधिश्रियंशुक्रपिशंदधाने । शुक्रपिशंशुक्लरूपंश्रियन् अधिदधानेस्थापयन्त्यौ ॥ ३१ ॥ दैव्याहोतारा । यौदैव्यौहोतारौ अयंचाग्निरसौचमध्यम. प्रथमाआद्यौसुवाचा । सुवाचौनहि तौपाठंविनाशयतः । मिमाना । निर्मिमाणौ यज्ञम्मनुषोमनुष्यस्य यजध्यैयजनाय प्रचोदयन्तौच विदथेधाने ॥ ३१ ॥

दैव्याहोतारा ॥ प्रथमासुवाचामिमानायज्ञम्मनुषोयजध्यै ॥ प्रचोदयन्ताविदथेषुकारूप्राचीनञ्ज्योतिः प्रदिशादिशन्ता ॥ ३२ ॥ आनः ॥ आनोयज्ञम्भारतीतूयमेत्विडामनुष्वदिहचेतयन्ती ॥ तिस्रोदेवीर्बर्हिरेदंस्योनंसरस्वतीस्वपसः सदन्तु ॥

षुयज्ञेषु अन्यानृत्विजः स्वयंचकारूकर्तारौ । प्राचीनंपूर्वस्यान्दिशिभवंआहवनीयाख्यंज्योतिः यष्टव्यमितिप्रदिशाअभिनयेनथुतिवाक्येनवा । दिशन्ता । कथयन्तौ । आशास्तावत्त्वादीयंप्रसाधयेतामितिशेषः ॥ ३२ ॥ आनोयज्ञम् । आङुपसर्गः सदन्त्वित्याख्यातेनसम्बध्यते । आएतुआगच्छतुनः अस्माकंयज्ञम् भारतीभरतआदित्यस्तस्यभारती । तूयंक्षिप्रम् इडाचआगच्छतु । मनुष्वत्

मनुष्यवत् इहचेतयन्तीपरिदृष्टकारिणी । सपस्वतीच । यइत्थंभूतास्तिस्रोदेव्यः ता.वर्हि आङ्-उपसर्गः सदन्त्वित्याख्याते नसंबध्यते आसदन्तुआसीदन्तु इदंस्योनंसुखरूपम् स्वपसः अपइतिकर्मनाम । साधुकर्मणः ॥ ३३ ॥ यइमे । यस्त्वष्टाइमेद्यावापृथिव्योजनित्री जनयित्रीसवंभूता नाम् । रूपैः अपिंशत्सुचिचितेअकरोत् । भुवनानिविश्वा । भूतजातानिचसर्वाणिरूपैरपिं-

न्तु ॥ ३३ ॥ यऽइमे ॥ द्यावांपृथिवीजनित्रीरूपैरपिंशुद्भुवनानि विश्श्वा ॥ तमुद्य होतरिषितोयजीयान्देवन्त्वष्टारमिहयंक्षिविद्वान् ॥ ३४ ॥ उपावंसृजत्मन्न्यां ॥ समुञ्जन्देवानाम्पाथऽऋतुथाहवीᳬषि ॥ वनस्पतिः शमितादेवोऽअग्निः स्वदन्तुहु

शत् । आश्टतान्यकरोत् तम् अद्यास्मिन्नहनि । हेहोतः इषितः प्रेषितइतिवाअधीष्टइतिवा । यजीयान्यष्टतरः । देवंदानादिगुणयुक्तम् त्वष्टारम् इहयक्षेयजियज । विद्वान्स्वमधिकारंजानानः ॥ ३४ ॥ उपावसृज । द्वितीयोर्द्धर्चः प्रथमंव्याख्यायते सामर्थ्यात् । यजमानआह । वनस्पतिः यूप.शमितादेव. अग्नि.शामित्रः स्वदन्तु.मृष्टीकुर्वन्तु । हव्यंहविः मधुनामधुरसेनघृतेन त्व-

अनाविद्धयातन्वाजयत्वम् हेवर्मिन् अनाविद्धयाअक्षततया अरिष्टयातन्वात्वंजयेम । किञ्च सत्वावर्म-
णोमहिमा पिपर्त्तुपालयतु ॥ ३८ ॥ धन्वनागाः । अनु.स्तूयतेत्रिष्टुभा धन्वनाधनुषागाःजयेम ।
धनुषाचआजिंमार्गंजयेम । धनुषाचतीव्राःपटवः उद्गूर्णायुधाःसमदः संग्रामाञ्जयेम । धनुश्चशत्रोः
अपकामंकृणोति अपनयतिकामम् । कर्तृत्वविवक्षाधनुषः । धनुषाचसर्वाः प्रदिशःजयेम ॥ ३८॥

पत्तं ॥ ३८ ॥ धन्वनागाः ॥ धन्वनागाधन्वनाजिञ्जयेमध
न्वनातीव्राः समदोजयेम ॥ धनुः शत्रोरपकामंकृणोतिध
न्वनासर्वाः प्रदिशोजयेम ॥ ३९ ॥ वक्ष्यन्तीवेदागनीगन्तिक
र्णंप्रियंसखायंपरिषस्वजाना ॥ योषेवशिङ्क्तेवितताधिध

न्वन्त्येवत् । ज्याअभिधेया । त्रिष्टुप् । याज्यावक्ष्यन्तीव वचनोत्सुकेव । योषित् इच्छ-
ब्दः पादपूरणार्थः । आगनीगन्ति आगच्छन्ति अत्यर्थमागच्छतिवा कर्णंधानुष्कस्य कर्णमूलम् यात्वप्रियमि-
वसखायमिषुम् परिषस्वजाना आलिङ्गयन्ती । योषेवशिंक्ते । शिंजिअव्यक्तेशब्दे । यथासुगधायो-
पित्सामुकरञ्जनार्थमव्यक्तं कूजितङ्करोति एवमियमव्यक्तंशब्दंकरोति । प्रसारिताच अधिउप-

रिधनुपिनिवद्धा । सेयञ्ज्यासमनेसंग्रामे पारयन्ती विजयंकुर्वंती संग्रामान् तारयन्ती स्तूयतेस्मा-
भिरितिशेषः ॥ ४० ॥ तेआचरन्ती । धनुषः कोटीस्तूयेते । त्रिष्टुप् । येइमे आर्त्नी आत्मीं
धनुषः कोटी । समनाइत्यसमनेइतिवचनव्यत्ययः । समानभर्तृगतमनस्के योषेइव यथासमान-
भर्तृगतमनस्कोयोषेपतिमागच्छत्यौ तेआचरन्ती आगच्छन्त्यौधानुष्कम् । मातेवपुत्रंबिभृतामुपस्थे ।
यथामाता उपस्थेउत्सङ्गे पुत्रंधारयति एवंबिभृतांधारयतांशरम् । अपशत्रून् विध्यताम् व्यध-

न्तुज्याऽइयᳬंसमनेपारयन्ती ॥ ४० ॥ तेऽआचरन्ती ॥ तेऽआ
चरन्तीसमनेवयोषामातेवपुत्रम्बिभृतामुपस्थे ॥ अपशत्रून्विध्यताᳬंसंविदानेऽआर्त्नीऽइमेविष्फुरन्तीऽअमित्रान् ॥ ४१ ॥
बह्वीनाम्पिता ॥ बहुरस्यपुत्रश्चिश्चाकृणोतिसमनावगत्य ॥ इषु

ताडने । अपविध्यताघ्नन्तु । संविदाने । सुमनसौभवन्त्यौ । विष्फुरन्तीअमित्रान् । अमि-
त्रान् घ्नन्त्यौ विष्फुरन्त्यौ ॥ ४१ ॥ बह्वीनामपिताम् इषुधिरभिधेयः । त्रिष्टुप् । यः बह्वीनामि-
षूणां पितापालयिता । तेनसहिताः पालयन्तेसहिताः सन्निदधाति । यस्यचास्यबहुः इषुकला-
पः पुत्रः पुत्रस्थानीयः । सहितेनइषुकलापेनवायते । बहुजातदयं हितंकुर्वन्ति । चिश्चाकृणोति ।

शब्दानुकरणमेतत् इषोर्निष्काम्यमाणः चिरेत्येवंशब्दं करोति । समनादगत्य । समनात्संग्रामात् अवगत्य ज्ञात्वा । सद्द्युधिः संका: संकामं धत्ते अस्मिन् योधा इति संका: संकीर्यंते अस्मिन् रथ-इति संका: यत्र संकटा । पतनाश्च सर्वाः पृतनाः स्पर्द्धनीयतमाः संग्रामभूमीः सर्वाः । पृष्ठे निनद्धः धानुष्कस्य पृष्ठे बद्धः प्रमृतः धानुष्केणाभ्यनुज्ञातः सन् जयति अवदृधे: कटं त्वम् । विश्वानः कारकाणि भवन्तीति वैयाकरणाः ॥ ४२ ॥ रथेतिष्ठन् । जगत्या अर्द्धेन सारथिः स्तूयते अर्द्धेन रश्मयः ।

धिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥ ४२ ॥ रथे तिष्ठन् ॥ रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः ॥ अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः ॥ ४३ ॥ तीव्रान्घोषान् ॥ तीव्रान्घोषान्कृण्वते वृ

सुसारथिः रथे तिष्ठन् नयति वाजिनः । प्रापयत्यश्वान् पुरः पुरतोवस्थितान् । यत्रयत्र कामयते । तत्र यत्र इति शेषः । अभीशूनाम् प्रग्रहाणां मानं महत्त्वं पनायत पूजयत हे जनाः । दे मनः अश्वमेव नियच्छतम् पश्चात्सन्तः अनुयच्छन्ति अनुगम्य गृह्णन्ति रश्मयः अन्तारः ॥ ४३ ॥ तीव्रान्घोषान् । अश्वास्तूयन्ते त्रिष्टुभा । तीव्रान् जयजयेत्युग्रान् घोषान् शब्दान् कृण्वते कुर्वन्ति ।

वृपपाणयः । इमाअश्वाः पाणीयेरांसं गृहीत्प्रभृतीनां योक्तृणांतितथोक्ताः । युक्ताः श्वसन्तः
अश्वाः रथेभिः रथैः । सहवाजयन्तः पूजतन्तः रांयनः ॥ तीव्रानेववोपान् क्रपितादीन्कृण्वन्ते ।
अवक्रामन्तः प्रपदैः खुरैः अमित्रान् शत्रून् चिपान् तिचिपवन्तिकिरन्ति । अनपव्ययन्तः । व्ययच-
ये । अपपूर्वादस्माच्छ्लप्रत्ययः । अपव्ययन्तः नव्ययन्तः नअपव्ययान्तोनपव्ययन्तः ननश्यन्तः । अप-
रित्यजन्तोनास्वामिनम् ॥ ४४ ॥ रथवाहणम् । रथस्तुतिः त्रिष्टुप् । यस्यास्त्रनसः रथवाहणंरथ-

पंपाणयोऽश्वारथेभिः सुहवाजयन्तः ॥ अवक्रामन्तः प्रपदैरमित्रान्क्षिणन्तिशत्रूँ ॥१ रनपव्ययन्तः ॥ ४४ ॥ रथवाहं णंहविः ॥ रथवाहंणंहविरस्यनामयत्रायुधन्निहितमस्यवर्म्म ॥ तत्रारथमुपशग्मंसदेमविश्वाहावयंसुमनस्यमानाः ॥ ४५ ॥

वोढइतिनाम । हविरितिनाम्नोद्वर्लोपः । हविर्द्धीनमितिचाहतीयंनाम । विमुच्यसयंत्रकारथवा-
हणं करोतिअनस्तत्कर्मेतिकात्या यनः । तस्मादनसएवपौरोडाशेषु यजूंष्यपिस्तुतिः । यत्रयस्मिन्
आयुधंनिहितस्थापितम् : अस्यवाहुः वर्मचसंनहनम् । तत्रानसिरथम् शग्मंसुखम् उपसदेम उ-
पसादयाम विश्वाहासर्वदावयम् सुमनस्यमानाः अनुकूलचित्ताः ॥ ४५ ॥ स्वादुसंसदः ।

रथगोपान् त्रीतिविष्टुप् । स्वादुसुखकरं संसदःमंसदनंयेषान्ते स्वादुसंसदः रथगोप्तारःपितरः पातारः ॥ वयोधाः अन्नस्यायुषोवाधारयितारः । कृच्छ्रेश्रितः क्लेशाश्रयिणः शक्तीवन्तः बल-वन्तआयुधवन्तोवा । गभीराः गंभीरप्रज्ञानावागंभीरवक्षावा । चित्रसेनाः विचित्रसेनाः इषु-बलाः इषुपुत्रियेपतोबलंयेषान्तेतथोक्ताः । अम्हृधाः अमृदवः उग्रशासनःसतोवीराः । सतः विद्य

स्वादुषंऽसदः पितरः ॥ स्वादुषंऽसदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवन्तो गभीराः ॥ चित्रसेनाऽइषुबलाऽअमृध्राः सतोवीराऽउरवो व्रातसाहाः ॥ ४६ ॥ ब्राह्मणासः पितरः ॥ सोम्यासः शिवे नो द्यावा

मानस्थगतसर्वविषमोरयितारोश्च । एकुजघनोरस्कावा । एकमनसोवा व्रातसाहाः । व्राताः गणास्ते-षामभिभवितारः । यद्वेत्थंभूताः पूर्वगाऽस्तेऽस्माकंरथगोप्तारोभवन्त्वितिशेषः ॥ ४६ ॥ ब्राह्मणासः । जगतीजिज्ञोलदेवता । रथताइत्यादिः प्रत्यक्षभूतोमंत्रः ब्राह्मणास इत्यादिः परोक्षकृत । अतएवंव्याख्यायते । हेऽस्तताइथः सत्यदृष्टोवा यत्नदृष्टोवा । देवादृत्यध्याहारः सामर्थ्यात्

रच । रचतइतियचनव्यत्ययः । माकिः । माचकश्चनन:अस्माकम् । अघशंसः अघानिपापानिय: शंसतिप्रकाशयतिसाधयंस ईयतईंष्टेइतिवचनव्यत्यय: । भवत्प्रसादाच्च । ब्राह्मणास: ब्राह्मणा: . पित र:सोम्यास:सोमसम्पादिन: । पान्तिवव्यत्ययः शिवेकल्याणकारिण्यौ द्यावापृथिवीच अनेहसा-अनुपहिंसिन्यौ अनपराधिन्यौवापाताम् । पूषाचन:अस्मान् पातु दुरितात्अशुभात् ॥ ४७ ॥

पृथिवीऽअ॑नेहसा॑ ॥ पू॒षान॑ःपातुदुरि॒ताद्दृ॑तावृधोरक्षामाकि॑र्नोऽअ॒घ शंसऽईशत ॥४७॥ सुप॒र्णंव॑स्ते ॥ मृ॒गोऽअ॑स्या॒दन्तो॒गोभि॒ःसन्न॑द्धा पतति॒प्रसू॑ता॥ *यत्रा॒नर॒ःसञ्च॒विच॒द्रव॑न्ति॒तत्रा॒स्मभ्य॒मिष॑व॒ःशर्म॑

सुपर्णंवस्ते । द्वाभ्यांविट्‌बनुष्टुभ्यामिषुंस्तौति । यासुपर्णंवस्तेसुपर्णः पक्षीतद्विकार:सौपर्णमिति-भवति । तदकृत्स्नवन्निगम: राजानमभिप्रेत्य । मृगोअस्यादन्त: यमग्राघ्यास्या दृपो:मृगोदन्त: फलम् मृगयतेर्मृग: । सहिविध्यन्मृगयते याच गोभि:सन्नद्धा । गोविकारै:श्लेष्मस्नायुभि:संनद्धा । पततिशल्-बलंमति । प्रसूताप्रेरिताधनुष्मता सास्पु:यत्रनर:सञ्चविचद्रवन्ति । सङ्गच्छन्तिच । विगच्छन्तिचतत्र

सुभगनृइव: इपुरितिसन्नति: । शर्मशरणम् यंमन् यच्छतिशतिसन्नति: ॥ ४८ ॥ ऋजीतेपरि ।
हेऋजीते ऋजुगामिनि । परिहृङ्ग्धिनःपरिवर्जयास्मान् । अस्माभवतुनस्तनूः अश्ममयीचभ-
वतुनःअस्माकंतनूःशरीरम् । सोमश्चअधिब्रवीतु आशिषाअनुवदतु नोस्माञ्जीवनाय । अदितिश्चशर्म-
शरणम् यच्छतुददातु ॥ ४९ ॥ आजङ्घन्ति । कशास्तुति: । अनुष्टुप् येषामश्वानाम् अजङ्घन्ति-

यछसन् ॥ ४८ ॥ ऋजीतेपरि ॥ वृङ्ग्धिनोऽश्माभवतुनस्तनूः ॥ सो
मोऽअधिब्रवीतुनोदितिःशर्मयच्छतु ॥ ४९ ॥ आजङ्घन्ति ॥ आजङ्घ
न्तिसान्वेषाञ्जघनाꣳ ॥ ऽउपजिघ्नते ॥ अश्वाजनिप्रचेतसोऽश्वा
न्त्समत्सुचोदय ॥ ५० ॥ अहिरिवभोगैःपर्येतिबाहुञ्ज्यायाहेतिम्परि

अश्वारोहा:सानुसानूनिमांसोपचितान्यङ्गानि । येषामेषाञ्च जघनान् जघनानि उपजिघ्नति उप-
निघ्नन्ति । अश्वाजनि अश्वाञ्जनयतीत्यश्वाजनी तस्या:संबोधनं हेअश्वाजनि । प्रचेतस:
परिहृष्टकारिण: प्रकृष्टज्ञानान्वा । अश्वान् समत्सु संग्रामेषु चोदयप्रेरय ॥ ५० ॥
अहिरिव । हस्तघ्नः स्तूयते त्रिष्टुप् । हस्तेएवस्थितोहन्तिय: सहस्तघ्न: खेटक: प्रकोष्ठादि-

चार्णवा । यः हस्तघ्नः अहिरिवसर्पद्रवभोगैः । शरीरावयवैः । पर्येतिपरिवेष्टयतिवाहुम् । ज्यायाघ्नैतिंपरिवाधमानः । ज्यामायुधात्परित्रायमाणः । महस्तघ्नः विश्वाविश्वानिसर्वाणि वयुनानि विद्वान्प्रजानन् परिहृष्टकारीवा । पुमान्शूरोक्लीबोवा । पुमांसमक्लीवं परिपातुविश्वतः सर्वतः ॥ ५१ ॥ वनस्पतेवीड्वङ्गः । रथदुन्दुभिरेत्याद्यचौत्रिष्टुभौ । ऐन्द्रावान्त्योर्द्धर्चः । हेव-

वाधंमानः ॥ हुस्तुघ्नोव्विश्वाव्वयुनांनिव्विद्वान्न्पुमान्न्पुमांᳬसम्परिं पातुव्विश्वतः ॥५१॥ व्वनंस्पतेव्वीड्वङ्गः ॥ व्वनंस्पतेव्वीड्वङ्गोहिभूयाऽअुस्म्मत्संखाप्रुतरंणःसुवीरंः ॥ गोभिःसन्नंद्धोऽअसिव्वीडयंस्वास्थातातेंजयतुजेत्त्वांनि ॥ ५२॥ दिवःपृंथिव्व्याः ॥ दिवःपृंथिव्व्याः

नस्पतेयानस्यरथ । अत्मवन्निगमः । वीड्वंगोहिभूयाः । वीडुशब्दोदृढवचनः । दृढाङ्गोभव । अस्मत्सखासन् । प्रतरणः प्रतरन्त्यनेनसंग्रामानतिप्रतरणः सुवीरः साधुवीरः । यतस्त्वम् गोभिः । श्लेषचर्मभिः सन्नद्धोसि अतस्त्वांब्रवीमि । वीडयस्वमंस्तंभयस्वात्मानम् आस्थाताते । मंस्थाताच तेतवजयतु जेत्वानिजेतव्यानि ॥ ५२ ॥ दिवः पृथिव्याः दिवः द्युलोकात् यत्

ओजः परिसर्वतः उद्भृतम् । उद्धृतम । यच्चपृथिव्या पृथिवीलोकात्परिउद्धृतम् । यच्चवनस्प-
तिभ्यः । वनस्पतिशकाशात् परिसर्वतः आभृतम आहृतम् सहः वलम यच्चअपांसवन्वि ओ
जमानम् ओजः परिमाणम । तदेतच्चतुष्टयं रथभावमुपनीतम । परिगोभिरावृतम् । परिस-
मन्तात् गोभिः गोविकारैः स्नायुश्लेष्मचर्मभिः आवृतमुपनिवद्धम् इन्द्रस्यवज्रम । इन्द्रोह्ययवव्-

पृथिव्याऽउद्भृतंवनस्पतिभ्यःपर्याभृतᳬसहः ॥ अपामोज्मानम्प
रिगोभिरावृतमिन्द्रस्यवज्रᳬहविषारथंयज ॥५३॥ इन्द्रस्यवज्रः ॥
इन्द्रस्यवज्रोमरुतामनीकम्मित्रस्यगर्भोवरुणस्यनाभिः ॥ सेमान्नो

वाय यजुः पलशारेत्युपक्रम्य रथमतीयचेत्यभिधाय । रथेनवशरेणच राजन्यवन्स्वद्भूतिश्रुतिः ।
तदभिप्रायमेत [ हविषातनोहश रथयज हेमध्वर्यो ॥ ५३ ॥ इन्द्रस्यवज्रः । यस्त्वम इन्द्रस्य-
वज्रः असिमरुतांच अनीकमुखमसि ॥ मित्रस्यचगर्भोसि । वरुणस्यचनाभिरसि । स त्वमिमाम् नः
अस्माकम् हव्यदातिहविषोदानम् जुषाणा. सेवमानः । हेदेवरथ प्रतिहव्यागृभाय प्रतिगृभाय

प्रतिगृह्णाण हव्याहवींषि ॥ ५४ ॥ उपश्वासय । उपशब्दयपृथिवीम् उतद्याम् अपिचउपशब्द-
यद्याम् । पुरुत्रातेवहुधाच तेतव एकस्यसतः घोषंमनुतांमन्यन्ताम् । विष्ठितम्विविधंस्थितंस्था-
वरम् जगत्जङ्गमञ्च । यस्त्वमेवास्माभिः प्रार्थितः सत्वम् हेदुन्दुभे । सजूः समानप्रीतिः सन्
इन्द्रेणसह देवैश्च । दूराद्दूरतरम् अपसेधअपगमयशत्रून् ॥ ५५ ॥ आक्रन्दय । हेदुन्दुभेआ-

हुव्यदातिजुषाणोदेवंरथुप्रतिंहुव्यागृभाय ॥५४॥ उपंश्वासय ॥
पृथिवीमुतद्याम्पुरुत्रातेमनुतांविष्ठितुञ्जगंत् ॥ सदुंन्दुभेसुजूरि
न्द्रेणदेवैर्दूराद्दवीयोऽअपंसेधुशत्रून् ॥ ५५ ॥ आक्रन्दय ॥ आक्र

क्रन्दयदीनान् शब्दान्कारय अथोपलायद्वंपितामेहतोभ्रातामेहतद्गति । वलंशत्रुसेनाम् ओजो-
नआधाः ओजस्तेजः नः अस्माकम् आधाः आधेहि । किञ्चनिष्टनिहि । निश्चितंशब्दंजयाय
कुरु । दुरिताबाधमानः दुरितानिअपगमयन् । किच । अपप्रोथ प्रोथतिर्नाशनार्थः । अप-
हत्यापहत्य प्रोथनाशय । दुच्छुनाः दुष्टशुनः इवयाः सेनःसुखवचनोवाशुनाशब्दः दुःसुखाः

विसर्जनीयस्यदत्वम् । दूतः सेनायाः । यतश्चत्वम् इन्द्रस्यमुष्टिरसिअतोब्रवीमि । वीडयस्वदृ-
ढीकुरुष्वात्मानं ॥ ५६ ॥ आमूः । ऐन्द्री आअज । अजगतिक्षेपणयोः । आक्षिप । अमूः शत्रुसेनाः ।
प्रत्यावर्तयइमा । प्रत्यावर्तयजितंजितमिति । इमाः अस्मदीयसेनाः किञ्च ॥ केतुमत्प्रज्ञात-

न्द्यवत्सुमोजोंनऽआधानिष्ट्वनिहिदुरितावाधमानः ॥ अपप्प्रोथदु
न्दुभेदुच्छुनाऽइतऽइन्द्रस्यमुष्टिरसिव्वीडयस्व ॥ ५६ ॥ आमूः ॥
आमूरजप्प्रत्यावर्त्तयेमाः केतुमद्दुन्दुभिर्व्वावदीति ॥ समश्वपर्णा
श्चरन्तिनोनरोस्माकमिन्द्ररथिनोजयन्तु ॥ ५७ ॥ आग्नेयः कृष्ण
ग्रीवः ॥ सारस्वतीमेषीबभ्रुः सौम्यः पौष्णः श्यामः शितिपृ

वान् दुन्दुभिः वावदीति । लोडर्थेलट् अत्यर्थंवदतु । जयप्रकाशकम् ॥ किञ्चसमश्वपर्णाश्च-
रन्तिनोनरः । मचापिलोडर्थेलट । संचरन्तुअश्वपर्णाः अश्वपतनाः नोनरः अस्मदीयामनुष्याः
संग्रामेन । हेइन्द्रअस्माकंरथिनः जयन्तुत्वत्प्रसादादितिशेषः ॥ ५७ ॥ आग्नेयः कृष्णग्रीव-

इतिश्रुतिः । चाश्व्यायपरिसमाप्तेः । द्वयोरेकादशिन्योः पशुदेवतासम्बन्धविधानौ परतोद्वादश-

ष्ठौवार्हस्पत्य॑ शिल्पोवैश्वदेवऽऐन्द्रोरुणोमारुत॑ कल्माषऽ
ऐन्द्राग्न॑ सꣳहितोधोरामः सावित्रोवारुण॑ कृष्णऽएकशिति
पात्पेत्वः ॥ ५८ ॥ अग्नयेनीकवते ॥ अग्नयेनीकवतेरोहिता
ञ्जिरनड्वानधोरामौ सावित्रौपौष्णौरजतनाभीवैश्वदेवौपिशङ्गौ
तूपरौमारुत॑ कल्माषऽआग्नेय॑ कृष्णोज॑ सारस्वतीमेषीवा
रुणी॑ पेत्वः ॥ ५९ ॥ अग्नयेगायत्राय ॥ त्रिवृतेराथन्तरायाष्टा
कपालऽइन्द्रायत्रैष्टुभायपञ्चदशायबार्हतायैकादशकपालोविश्वे

हविषोवेद्देवताः ॥ ५८ ॥ स्पष्टार्थः ॥ ५९ ॥ अग्नयेऽष्टाकपालः पुरोडाशः कार्यः कीदृशाया-
ग्नये गायत्राय त्रिवृते स्तुताय राथन्तराय साम्ना स्तुताय इन्द्राय त्रैष्टुभाय त्रिष्टुभा स्तुतायपञ्च-

वनोयेनुष्टोति । देवसवितः । तत्सवितुर्वरेण्यम् । विश्वानिदेवसवितरिति । तत्तद्व्याख्याते ॥ १ ॥ २ ।
विश्वानिदेवसवितरिति देगायत्र्यौ विश्वानिसर्वाणि हेदेवसवितः दुरितानिअसत्यानि । परा-
सुवपरांचिगमय । यद्भद्रंभन्दनीयं तत् नःअस्माकम् आसुवआगमय ॥ ३ ॥ विभक्तारम् ।

व्योगंन्युर्व्वः केतपूः केतंन्नः पुनातुव्वाचस्पतिर्व्वाचंन्नः स्वदतु ॥ १॥
तत्संवितुः ॥ तत्संवितुर्व्वरेण्यम्भर्ग्गोदेवस्यंधीमहि ॥ धियो
योनः प्रचोदयात् ॥ २ ॥ व्विश्वानिदेव ॥ सवितर्दुरितानिप
रासुव ॥ यद्भद्रन्तन्नऽआसुव ॥ ३ ॥ व्विभक्तारंᳫहवामहे ॥ व्विभ
क्तारंᳫहवामहेव्वसोश्चित्रस्यराधसः ॥ सवितारंन्नृचक्षसम् ॥ ४ ॥

यमांनुरूपेण विभक्तारम् । हवामहेआह्वयामः । वसोःवासयितुःचित्रस्य चायनीयस्य राधसःधनस्य
भागयत्र । सवितारम् नृचक्षसम् नृणांद्रष्टारम् । येनरोयथा दृष्ट्यास्तांस्तथापश्यति ॥ ४ ॥

पत्नीव्यटभाष्या भावादमरामरणभाष्यान्तरादय विलिखामि अतः परं पुरुषमेधका पशवः आध्यायसमाप्तेः ततः प्रतियूपमेकैकमेकादशिनं नियुज्य ब्राह्मणादीनष्टाचत्वारिंशत्सङ्ख्याकान् पुरुषान् प्रकामोद्याय समित्यन्तानग्निष्ठे यूपेनियुनक्ति इतरेषु यूपेष्वेकादशैकादश पुरुषान वर्णायानुरुधमित्यादीन्नियुनक्ति । ब्रह्मणे ब्राह्मणम तत्र ब्रह्मणे जुष्टं नियुनज्मीति अग्निष्ठे ब्राह्मणं प्रथमं नियुनक्ति । एवमग्रे सर्वथा यूपे एव बन्धनम् चतुर्थ्यन्तं देवतापदं द्वितीयान्तं पुरुषपदं बोध्यम । क्षत्राय राजन्यं क्षत्रियम् २. मरुद्भ्यो वैश्यम् ३. तपसे शूद्रम् ४. तमसे तस्कर स्तेनम ५.

ब्रह्मणेब्राह्मणम् ॥ ब्रह्मणेब्राह्मणङ्क्षत्रायराजन्यम्मरुद्भ्यो व्वैश्यन्तपसेशूद्रन्तमसेतस्करन्नारकायंव्वीरहणम्पाप्मनेक्लीबमाक्रयायाऽअयोगूम्कामायपुँश्चलूमतिक्रुष्टायमागधम् ॥ ५ ॥ नृत्तायसूतम् ॥ नृत्तायसूतङ्गीतायशैलूषन्धर्म्मायसभाचरन्नरिष्ठायैभीम

नारकाय वीरहणं नष्टाग्निं शूरं वा ६. पाप्मने क्लीबं नपुंसकम् ७. आक्रयायै अयो गूमयसो गन्तारम् ८. कामाय पुंश्चलूं व्यभिचारिणीम् ९. अतिक्रुष्टाय मागध मगधदेशजं क्षत्रियायां वैश्यपुंसो जातं वा १० ॥ ५ ॥

नृत्ताय सूत ब्राह्मण्या क्षत्रियाज्जातः सूतः ११. गीताय शैलूष नटम् १२. धर्माय सभाचरं सभायां चरतीति तम् १३. नरिष्ठायै भीमलं भयङ्करम् १४. नर्माय रेभं शब्दकर्तारं वाचाटम् १५. हसाय कारिं कर्णबिजिटम् १६ आनन्दाय

दृशाय पञ्चदशस्तोमस्तुताय बार्हताय बृहत्सामस्तुताय विश्वेभ्यो देवेभ्यः द्वादशकपालः पुरोडाशः कीदृशेभ्यः जागतेभ्यः जगत्या छन्दसा स्तुतेभ्यः सप्तदशेभ्यः सप्तदशस्तोमस्तुतेभ्यः वैरूपेभ्यः वैरूपसामस्तुतेभ्यः मित्रावरुणाभ्यां पयस्या पयसि श्रितः चरुः कीदृशाभ्यामानुष्टुभाभ्याम् अनुष्टुभा स्तुताभ्याम् एकविंशाभ्यामेकविंशस्तोमस्तुताभ्याम् वैराजाभ्यां वैराज-

भ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो द्वादशकपालो मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविꣳशाभ्यां वैराजाभ्याम् पयस्या बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय चरुः सवित्र औष्णिहाय त्रयस्त्रिꣳशाय रैवताय द्वादशकपालः प्राजापत्यश्चरुरदित्यै वि

सामस्तुताभ्याम् बृहस्पतये चरुः कीदृशाय पाङ्क्ताय पङ्क्तिच्छन्दसा स्तुताय त्रिणवाय त्रिणवस्तोमस्तुताय शाक्वराय शाक्वर सामस्तुताय सवित्रे द्वादशकपालः पुरोडाशः कीदृशाय सवित्रे औष्णिहाय उष्णिक् छन्दसा स्तुताय त्रयस्त्रिंशाय त्रयस्त्रिंशस्तोमस्तुताय रैवताय रैवतसामस्तुताय एवं छन्दः

शु० स्तोमसाममहितान् षट् देवा नभिवाय चतुरः केवलानाह प्रजापत्यश्चरुः प्रजापतिर्दे- श्रा०
य० वत्यश्चरुः कार्यः विष्णुपत्न्यै अदित्यै चरुरेव वैश्वानराय वैश्वानर गुणविशिष्टायाग्नये ३०
सं० द्वादशकपालः पुरोडाशः अनुमत्यै देवतायै अष्टाकपालः पुरोडाशः कार्यः ॥ ६० ॥
इति उव्वटकृतौ मंत्रभाष्ये एकोनत्रिंशोऽध्यायः ॥ २९ ॥

६०८ ष्णुंपत्न्यै चुरुरुग्नयेंवैश्वानरायुद्वा दंशकपालोनुंमत्याऽअष्टा
उ० कपालः ॥ ६० ॥ [ २४ ] ॥ ४ ॥
भा० इतिसंहितापाठेएकोनत्रिंशोऽध्यायः ॥ २९ ॥

* देवंसवितः ॥ देवंसवितुःप्रसुंवयुज्ञम्प्रसुंवयुज्ञपंतिम्भगांय ॥ दि

(१) इतउत्तरम् पुरुषमेधः द्वावध्यायौनारायणः पुरुषोपश्यत् । देवसवितः । तिस्रःसावित्रीराह-

(१) चैत्रशुक्लदशम्यामारम्भ । ब्राह्मणराजन्ययोरतिष्ठाकामयो पुरुषमेधसञ्ज्ञकोयज्ञोभवति । सर्वभूतान्यतिक्रम्य स्थान- शिव०
मतिष्ठा । अत्र त्रयोविंशतिर्दीक्षा भवन्ति द्वादशोपसद पञ्च सुत्याइति चत्वारिंशोहेन सिध्यति । एव यूपैकादशिनो भवति
एकादशाग्नीषोमीया पशवो भवन्ति तेषां चर्षातियूप मध्यमे वा यूपे यथेच्छा नियोजनम् । आज्येन सकृदग्रहोतेन देव सवरिति ६०८

० दवसवित. षटतपमेकौलान्न ठं० षोडशदोषाव ठं० सति. ॥ .

स्त्रीषख स्त्रिया सखायम् १७ प्रमदे कुमारीपुत्रं कानीनम् १८ मेधायै रथकारं माहिष्येण करिण्या जातम् १९ धैर्याय तक्षाणं सूत्रधारम् २० ॥ ६ ॥ तपसे कौलालं कुलालापत्यम् २१ मायायै कर्मारं लोहकारम् २२ रूपाय मणिकारं रत्नकर्तारम् २३ शुभे शुभाय वपं बीजवप्तारम् २४ शरव्यायै इषुकारं बाणकर्तारम् २५ हेत्यै धनुष्कारं चाप

ल्लन्नर्म्मायरेभꣳ हसायकारिमानन्दायस्त्रीषखम्प्रमदे कुमारीपुत्रम्मे
धायैरथकारन्धैर्य्यायतक्षाणम् ॥ ६ ॥ [ ६ ] तपसेकौलालम् ॥ तप
सेकौलालम्मायायैकर्म्मारꣳ रूपायमणिकारꣳ शुभेवपꣳ शरव्या
याऽइषुकारꣳ हेत्यैधनुष्कारङ्कर्म्मणेज्याकारन्दिष्टायरज्जुसर्ज्जं
म्मृत्यवेमृगयुमन्तकायश्वनिनम् ॥ ७ ॥ नदीभ्यः पौञ्जि
ष्ठम् ॥ नदीभ्यः पौञ्जिष्ठमृक्षीकाभ्योनैषादम्पुरुषव्याघ्रा

कारिणम् २६ कर्मणे ज्याकारं प्रत्यञ्चाकर्तारम् २७ दिष्टाय रज्जुसर्जं रज्जो स्रष्टारं निर्मातारम् २८ मृत्यवे मृगयुं मृगघातकम् २९ अन्तकाय श्वनिनं शुनो नेतारम् ३० ॥ ७ ॥ नदीभ्यः पौञ्जिष्ठं पुञ्जिष्ठान् त्यज पुल्कसस्तदपत्यम् ३१ ऋक्षीकाभ्यो नैषादं निषादपुत्रम् ३२ पुरुषव्याघ्राय दुर्मदं उन्मत्तम् ३३ गन्धर्वाप्सरोभ्यो व्रात्यं सावित्रीपतितम् ३४ प्रयुग्भ्य उन्मत्तम् ३५ सर्प-

देवजनेभ्य' मप्रतिपदं प्रतिपद्यते जानातीति प्रतिपत् चतथाविध विकल्पमित्यर्थं ३६ मयेभ्य. कितव द्यूतकारम ३७ ईर्यताये चकितवमद्यूतक्रतम ३८ पिशाचेभ्य विदलकारी वधविदारिणी वशपात्रकारिणोम ३९, यातुधानेभ्य कण्टकीकारीं काण्टकी चर्म तत्कारिणोम ४० ॥ ८ ॥ सन्धये जारमुपपतिम् ४१ गेहाय उपपति याभि चारिणम् ४२, आर्त्यै परिवित्तम् ऊढे कनिष्ठेऽनू-

यंदुर्म्मदंङ्गन्धर्व्वाप्सरोभ्योव्रात्त्यम्प्प्रयुग्ग्भ्युउन्न्मंत्तंᳫ सर्प्पदेवजने

भ्योप्प्रंतिपदुमयेंᳫभ्यः कितवमीर्य्यतांयाऽअकिंतवम्पिशाचेᳫभ्योंवि

दलकारींय्यांतुधानेंᳫभ्यः कण्टकीकारीम् ॥ ८ ॥ सुन्धयेंजारम् ॥

सुन्धयेंजारङ्गेहायोंपपतिमार्त्त्यैं परिंवित्तन्निर्ऋत्यैपरिविविदानमरां

ध्याऽएदिधिषुःपुतिन्निष्कृंत्यैपेशस्कारींᳫसंज्ञानायस्मरकारीम्प्रं

ढम ४३ निर्ऋत्यै परिविविदानम् चनूढे ज्येष्ठे ऊढवन्तम् ४४, मराध्यैदेव्ये एदिधिषु पतिम् ज्येष्ठायां पुत्रामनूढायामूढा एदि धिषु तत्पतिम् ४५, नि ष्कृत्यै पेशस्कारीं रूपकर्त्रीम ४६ सञ्ज्ञानाय स्मरकारीं कामदीपिकारीम ४७ प्रकामोद्याय तत्सञ्ज्ञाय देवाय उपसदतीत्युपसत् समीपस्थितम् ४८ एतानलिष्टे, नियुनक्ति ॥ अथ द्वितीये यूपे। वर्णाय अनुरुधम् अनुरुध्यतेऽनु

शु॰ य॰ मं॰ ६०९ उ॰ भा॰

अ॰ ३०

शिवम् ६०९

मरतीतानुक्त तम् १ बलाय उपदाम् उपदद्दातीत्युपदास्तमुपायनदातारम् ॥ ९ ॥ उत्सादेभ्य ःकुब्जं वक्राङ्गम् ३ प्रमुदे वामन ह्रस्वाङ्गम् ४ द्वार्भ्यं स्राम सर्वदा जलक्लिन्ननेत्रम् ५ स्वप्नाय अन्ध नेत्रहीनम् ६ अधर्माय बधिरं कर्णेन्द्रियहीनम् ७ पवित्राय भिषज वैद्यम् ८ प्रज्ञानाय नक्षत्राणि दर्शयति तम् गणकम् ९ आशिक्षायै प्रश्निन प्रश्नवन्तम् शकुनादिप्रष्टारमित्यर्थं १० उपशिक्षायै अभिप्रश्निनमभिप्रश्नवन्तम ११ ॥ अथ तृतीये यूपे । मर्यादायै प्रश्नविवाक सता॰प्र-

कामोद्यायोपसदंवर्णायानुरुधम्बलायोपदाम् ॥ ९ ॥ उत्सादेभ्यः कुब्जम्॥ उत्सादेभ्यः कुब्जम्प्रमुदेवामनन्द्वार्भ्यः स्रामस्वप्नायान्धमधर्मायबधिरम्पवित्रायभिषजम्प्रज्ञानायनक्षत्रदर्शमाशिक्षायैप्रश्निनमुपशिक्षायाऽअभिप्रश्निनम्मर्यादायैप्रश्नविवाकम् ॥१०॥ अर्मेभ्यो हस्तिपम् ॥ अर्मेभ्योहस्तिपञ्जवायाश्वपम्पुष्ट्यैगोपालंवीर्या

श्नान्यो विविनक्ति ब्रूते स प्रश्नविवाकस्तम् ॥ १ १० ॥ अर्मेभ्यो हस्तिप गजपालकम् २ जवाय अश्वप तुरगपालकम् ३ पुष्ट्यै गोपाल धेनुपालकम् ४ वीर्याय अविपालम् ५ तेजसे अजपालम् ६ इरायै कीनाश कर्षुक कीनाश कर्षुके यमे ७ कीलालाय सुराकार मद्यकृतम् ८ भद्राय गृहपं गेहपालकम् ९ श्रेयसे वित्तधं वित्तं दधातीति वित्तधस्तम् धनकर्तारम् १० आध्यक्ष्याय

अनुचत्तार मारथ्यनुसारिणम् ११ ॥ ११ ॥ अथ चतुर्थे यूपे। भायै दार्वाहार काष्ठानामाहर्तारम १ प्रभायै अग्न्येधम अग्निमेध मतोति अग्नेर्वर्धकम २ बृध्नस्य विष्टपाय सूर्यलोकाय अभिषेक्तारम ३ वर्षिष्ठाय नाकाय उत्कृष्टस्वर्गाय परिवेषणकर्तारम् ४ देवलोकाय पेशितारम पिश अवयवे पिशतीति पेशिता तम प्रतिमादवयवकर्तारम ५ मनुष्यलोकाय प्रकरितारम कॄ विक्षेपे विक्षे

याविपालन्तेजसेजपालमिरायैकीनाशङ्कीलालायसुराकारम्भद्रायगृ
हपꣳ श्रेयसेवित्तधमाध्यक्ष्यायानुक्षत्तारम् ॥ ११॥ भायैदार्व्वाहा
रम् ॥ भायैदार्व्वाहारम्प्रभायाऽअग्न्येधम्ब्रध्नस्यविष्टपायाभिषेक्ता
रंव्वर्षिष्ठायनाकायपरिवेष्टारन्देवलोकाय पेशितारम्मनुष्यलो
कायप्रकरितारꣳ सर्व्वेब्भ्योलोकेब्भ्यऽउपसेक्तारमवऽऋत्यैव्वधायो
पमन्थितारम्मेधायव्वासःपल्पूलीम्प्रकामायरजयित्रीम् ॥ १२ ॥

तारम ६ सर्वेभ्यो लोकेभ्य उपसेक्तारसुपसेचनकर्तारम ७ अवऋत्यै वधाय उपमन्थितारसुपमन्थनकर्तारम् ८ मेधाय वास पल्पूलीम् वाससां प्रक्षालनकर्तारम पल्पूल प्रक्षालनच्छेदनयोः ९ प्रकामाय रजयित्रीं वस्त्राणां रङ्गकारिणी नारीम १० ॥ १२॥

ऋतये स्तेनहृदयं स्तेनस्येव हृदयं यस्य तम् ११ ॥ अथ पञ्चमे यूपे। वैरहत्याय पिशुनम्परहत्तसूचकम् १ विविक्त्यै क्षत्तारं प्रतीहारम् २ औपद्रष्ट्राय अनुक्षत्तारं प्रतिहारं वकम् ३ बलाय अनुचरं सेवकम् ४ भूम्ने परिष्कन्दम् परितः स्कन्दति रन मित्रानतम ५ प्रियवादिन मधुरभाषिणम् ६ अरिष्ट्यै अश्वसादम् अश्वारोहम् ७ स्वर्गाय लोकाय भागदुघे भागदुघ म्नाम विभागपदम् ८ वर्षिष्ठाय नाकाय परिवेष्टारम् ९ ॥ १२ ॥ मन्यवे अयस्तापमयस्ताप लोहतापकम् १० क्रोधाय

ऋतयेस्तेनहृदयम् ॥ ऋतयेस्तेनहृदयंव्वैरहत्यायपिशुनंव्विविक्त्यै क्षत्तारमौपद्रष्ट्रायानुक्षत्तारम्बलायानुचरम्भू म्नेपरिष्कन्दम्प्रिया यंप्प्रियवादिनमरिष्ट्याऽअश्वसाद ँ स्वर्गायंलोकायभागदुघंव्व र्षिष्ठायनाकायपरिवेष्टारम् ॥ १२ ॥ मन्यवेयस्तापम् ॥ मन्य वेयस्तापङ्क्रोधायनिसरंय्योगाययोक्तार ँ शोकायाभिसर्त्तारङ्क्षे

निसर नितरां सर्तारम् ॥ ११ ॥ अथ षष्ठे यूपे। योगाय योक्तारं योगकर्तारम् १ शोकाय अभिसर्तारं सम्पक्षसागच्छ न्तम् २ क्षेमाय विमोक्तारम विमोचनकरम ३ उत्कूलनिकूलेभ्य त्रिष्ठिनम् त्रिषु तिष्ठतीति त्रिष्ठीतम विद्यादिषु स्थित गोत्रत्वमितार्थ ४ वपुषे मानस्कृत पूजाया अभिमानस्य वा कर्तारम् नक छान्दस ५ शीलाय

अञ्जनीकारीम् अञ्जनविधाकर्त्रीम् ६. निर्ऋत्यै कोशकारीं खड्गाद्यावरणं कोशस्तत्कारिणीं स्त्रियम् ७. यमाय असूम् न सूते सा असूः ताम् वन्ध्याम् ८. ॥ १४ ॥ यमाय यमसूम् युग्मप्रसवित्रीम् ९. अथर्वभ्योऽवतोकां निरपत्याम् १०. संवत्सराय पर्यायिणीम् पर्यायोऽनुक्रमस्तद्वतीमनुक्रमज्ञाम् ॥ ११ ॥ अथ सप्तमे यूपे। परिवत्सराय अविजाताम् अप्रसूतां १. इदावत्सराय

सायंविमोक्तारं सुत्कूलनिकूलेभ्यस्त्रिष्ठिनं वपुषे मानस्कृतं शी
लायाञ्जनीकारीं निर्ऋत्यै कोशकारीं यमायासूम् ॥ १४ ॥ यमाय
यमसूम् ॥ यमाय यमसूमथर्वभ्योऽवतोकां संवत्सराय पर्यायिणीं
परिवत्सरायाविजातामिदावत्सरायातीत्वरीमिद्वत्सरायातिष्कद्वरीं
वत्सराय विजर्जरां संवत्सराय पलिक्नीमृभुभ्योऽजिनसन्धं साध्ये
भ्यश्चर्मम्नम् ॥ १५ ॥ सरोभ्यो धैवरम् ॥ सरोभ्यो धैवरमुपस्था

अतिष्कन्दनवति अतीत्वरीमत्वन्तं कुलटाम् पुंश्चली कुलटेत्वरी २. इद्वत्सराय अतिष्कद्वरीम् अतिस्कद्वरी स्कन्दे-त्वन्तात् डीप्प्रत्ययौ ३. वत्सराय विजर्जरां शिथिलशरीराम् ४. संवत्सराय पलिक्नीं श्वेतकेशाम् ५. ऋभुभ्यः अजिनसन्धं चर्मसन्धातारम् ६. साध्येभ्यः चर्मम्नम् चर्माभ्यासकरम् ७ ॥ १५ ॥ सरोभ्यो धैवरं कैवर्तापत्यम् ८. उपस्थावरा

दाशम दाश दाने दातारम दाशो धीवरो वा ८ वैशन्ताभ्यो वैन्दं विन्दो निषादापत्यम १० नड्वलाभ्य शौष्कलं मत्स्याजीवनम शुष्कला मत्स्यास्तज्जीवति तम ११ ॥ अथाष्टमे यूपे । पाराय मार्गारम् मृगादेरपत्य मार्गारस्तम् १. अवराय कैवर्तम् २ तीर्थेभ्य आन्दम् अदि बन्धने अदति आन्दस्त बन्धनकर्तारम् ३. विषमेभ्यो मैनालम अल् वारणे मीनानलति वारयति जालैर्सो मीनालस्तदपत्यम ४ स्वनेभ्य पर्णकं भिल्लम् ५. गुहाभ्य किरातम् ६ सानुभ्य जम्भकं

वराभ्योदाशंव्वैशन्ताभ्योवैन्दन्नड्वलाभ्यःशौष्कलम्पारायमार्गा
रंमवारायकैवर्त्तन्तीर्थेभ्यऽआन्दंव्विषमेभ्योमैनालंस्वनेभ्यः पर्ण
कङ्गुहाभ्यः किरात सानुभ्योजम्भकम्पर्व्वतेभ्यः किम्पूरु
षम् ॥ १६ बीभत्सायैपौल्कसम् ॥ बीभत्सायैपौल्कसंव्वर्णायहि
रण्यकारन्तुलायैवाणिजम्पश्चादोषायग्ग्लाविनंव्विश्वेभ्योभूते

अभि नागने जम्भयतीति तम् ७ पर्वतेभ्य किम्पूरुषं कुत्सितनरम ८ ॥ १६ । बीभत्सायै पौल्कसम पुल्कसाप त्यम ८ वर्णाय हिरण्यकार स्वर्णनिष्पादकम १० । तुलायै वाणिज वणिगपत्यम ११ ॥ अथ नवमे यूपे । पश्चादोषाय ग्लाविन ग्लो हर्षक्षये षष्ठटम १. विश्वभ्यो भूतेभ्य सिधल सिधाख्यरोगवन्तम् २. भूतेभ जागरण जागरूकम् ३. अभूतेभ

शु० य० सं० ६१२ उ० भा०

मपनं ग्रयालुम ४ पार्ति जनवादिन जनान्वदति तम ५ व्यृद्ध्यै अपगल्भम् ६. संशराय प्रच्छिदं प्रच्छेदनकर्तारम ७.॥१७॥ अक्षराजाय कितवं धूर्तम ८ कृताया आदिनवदर्शम आदिनवो दोषस्तं पश्यति तथाभूतम ९. त्रेताय कल्पिनं कल्पकम । १० । द्वापराय अधिकल्पिनम अधिकल्पनाकर्तारम् ११ अथ दशमे यूपे । आस्कन्दाय सभा- अ० ३०

दश्यं॑ऽसिध्मुलम्भूत्यै जागरुणमभूत्यै स्वपुनमात्यै जनवादिनं॒ व्यृद्ध्या ऽअपगुल्भँ सँशुराय प्रच्छिदम् ॥ १७ ॥ अक्षराजाय कितवम् ॥ अक्षराजाय कितवं कृतायादिनवदर्शं त्रेतायै कल्पिनं द्वापरायाधिकल्पिनमास्कन्दाय सभास्थाणुं मृत्यवे गोव्यच्छमन्तकाय गोघातं क्षुधे यो गां विकृन्तन्तं भिक्षमाणऽउपतिष्ठति दुष्कृताय चरकाचार्यं पाप्मने सैलगम् ॥ १८ ॥ प्रतिश्रुत्काया ऽअर्त्तनम् ॥ प्रतिश्रु

स्थाणुं सभायां स्थिरम १ मृत्यवे गोव्यच्छं गां प्रति गमनशीलम. २ अन्तकाय गोघातम गवां हन्तारम ३ क्षुधे यो गां विकृन्तन्तं भिक्षमाण उपतिष्ठति पुमान गां विकृन्तन्तं छिन्दन्तं भिक्षमाणो याचितारं क्षुधे देव्यै आलभेत ४ दुष्कृताय चरकाचार्यं चरकाणां गुरुम ५. पाप्मने सैलगं सैलगो दुष्टस्तदपत्यम. ६ ॥ १८ ॥ प्रतिश्रुत्कायै अर्त्तनं दु खि-

नम् ७ घोषाय भषं कन्यकम् ८ अन्ताय बहुवादिनम् ९ अनन्ताय मूक वाग्विकलम् १०. शब्दाय आडम्ब-
रमाहन्ति तम् कोलाहलकर्तारम् ११. ॥ अथैकादशे यूपे । महसे वीणावाद वीणावादनकर्त्तारम् १. क्रोशायतूणवध्म-
म् तूणव वाद्यविशेष धमति तथाभूतम् २ अवरस्पराय शङ्खध्मं शङ्खवादकम् ३. वनाय वनप वनपालकम् ४. अन्यतो
ऽरण्याय दावप वनदाहप ५ ॥ १९ ॥ नर्माय पुंश्चलूं दुष्टां नारीम्, हसाय कारिं करणशील यादसे शाबल्याम् शबलः

त्वांयाऽअर्त्तनं घोषायभषमन्तायबहुवादिनमनन्तायमूक ँ शब्दाया
डम्बराघातम्महसेवीणावादङ्क्रोशायतूणवध्ममवर स्परायशङ्ख
ध्मं वनायवनपमन्यतोऽरण्यायदावपम् ॥ १९ ॥ नर्मायपुँ
श्चलूम् ॥ नर्मायपुँश्चलू ँ हसायकारिँ यादसेशाबल्यां

यथुं स्वर्णं, तदपत्यभूतां स्त्रियं ग्रामण्यं ग्रामनेतारं गणकं ज्योतिर्विदं अभिक्रोशकं निन्दकं तान्महसे जुष्टं नियु-
नज्मीति एकादशे यूप आलभते ॥ एवं प्रतियूपमेकादशस्वेकादशसु नियुक्तेषु येऽधिका अवशिष्टास्तान् समाप्तिपर्यन्ता-
न्द्वितीयोच्छ्रिते यूपे नियुनक्ति तत्र वीणावाद पाणिघ्नमित्यादीन् रात्रै कृष्णं पिङ्गाक्षमित्यन्तांश्चतुर्दश ततोऽथैतानष्टौ
विरूपानितरांष्टौ च मागधादींश्चतुर एवं षड्विंशति द्वितीये यूपे पूर्वोक्ता एकादश एवं सप्तत्रिंशत् । तानेवाह । वीणा-

याद पाणिघ्न हस्ततालवादक तूणवध्म तान् वीन् नृत्ताय आलभते ३ आनन्दाय तलव वागतिगन्धनयोः गन्धन शिमा तल हस्तादितल वाति वाद्यमुख हन्ति स तलवस्त वाद्यवादक ४ ॥ २० ॥ अग्नये पीवान स्थूल ५ पृथिव्यै पीठसर्पिण पीठनामनेन सर्पति गच्छति पीठसर्पीति पङ्गु ६ वायवे चाण्डाल चण्डालकर्माण ७ अन्तरिक्षाय वंश-

मुगवङ्गांकमभिक्रोशंकुन्तान्न्सहंसे वीणावादम्पाणिघ्नन्तूणवध्म न्तान्नृत्तायानन्दायंतलवम् ॥ २० ॥ अग्नये पीवानम् ॥ अग्न ये पीवानम्पृथिव्यैपीठसर्पिणंव्वायवेंचाण्डालमन्तरिक्षायव्वंशनर्ति नन्दिवेखलतिᳬसूर्यायहर्यक्षन्नक्षत्रेभ्यःऽ किर्मिरञ्चन्द्रमसेकिला समहन्नेशुक्लम्पिङ्गाक्षᳬरात्र्यै कृष्णम्पिङ्गाक्षम् ॥ २१ ॥ अथैता न् ॥ अथैतानष्टौव्विरूपानालंभतेतिदीर्घञ्चातिंह्रस्वञ्चातिंस्थू

नर्तिन वंशेन नर्तनशील ८ दिवे खलतिमलोमशिरस्क खल्वाटमितार्थ ९ सूर्याय हर्यक्षहरितनेत्र १० नक्षत्रेभ्य किर्मिर कर्बुरवर्ण ११ चन्द्रमसे किलास सिध्मरोगवन्त १२ अह्ने शुक्लवर्णं पिङ्गाक्ष १३ रात्रै कृष्णवर्णं पिङ्गाक्ष १४ ॥ २१ ॥ एतान् विरूपान् आलभत अतिदीर्घ अतिह्रस्व अतिस्थूल अतिकृश अतिशुक्ल अतिकृष्ण अतिकुल्व रोमरहित अतिलो

मर्श सर्वाङ्गव्यापिरोमाण । ते षडौ अशूद्रा अ०ब्राह्मणा शूद्रब्राह्मणव्यतिरिक्ताः पशवो भवन्ति तेऽष्टावपि प्राजापत्याः मागध पुंश्चलोकितवः क्लीवः एतेऽपिप्राजापत्याः

इति महीधरादि भाष्येत्रिंशोध्यायः ।

लञ्चातिंकृशञ्चातिंशुक्लञ्चातिंकृष्णञ्चातिंकुल्वञ्चातिंलोमशञ्च ॥ अशूद्राऽअब्राह्मणास्तेप्राजापत्याः ॥ मागधः पुंश्चलीकितवः क्लीबोशूद्राऽअब्राह्मणास्तेप्राजापत्याः ॥ २२ ॥ [ १६ ]

इतिसंहितापाठेत्रिंशत्तमोऽध्यायः ॥ ३० ॥

* सहस्रशीर्षापुरुषः ॥ सहस्राक्षः सहस्रपात् ॥ सभूमिं

ॐ (१) परमात्मविज्ञानानन्दादि गुणाधारात्मनि प्रभूत.पकृपमेधोयज्ञः प्रजापति.लोककाला-न्यादिवपुः पशूपोत्पत्तिस्थितिसंहृतीनां हेतुः स्वर्गापवर्गैश्वर्यमोक्षदो ज्ञानकर्मसमुच्चयकारि-

(१) कात्य० नयुतान् ब्रह्माभिष्टौति होत्वदनुवाकेन सहस्रशीर्षेति ।

* सहस्रशीर्षापोडशाह्रा.सम्भूत.पटह्रोह्राविठं०शति

गम् शरीरंयत्तोवाचस्यात्माभवतीतिश्रुतिः। सहस्रशीर्षापुरुषइत्यनुवाकेन षोडशर्चेनानुष्टुभेन त्रिष्टुबन्त्येन ब्रह्मणेब्राह्मणमित्यादावयवभूत पुरुषद्वारेणावयवी स्तूयते। इदानींस्तुत्यर्थं निर्वचनद्वारेण दृढयितुमाह। अथयस्मात्पुरुषमेधो नानेमेवैलोकाःपूरयमेव पुरुषोयोयंपवते सोस्यांपुरिशेते तस्मात्पुरुषः। तस्ययदेषु लोकेष्वन्नं तदस्यान्नंमेध स्तदस्यैतदन्नं मेधस्तस्मात्पुरुषमेधः। पुरुषसूक्तस्यनारायणऋषिः पुरुषोदेवतानुष्टुप्छन्दः अन्त्यात्रिष्टुप्मोक्षे विनियोगः अस्यभाष्यं शौनकोनामऋषि रकारोत्। प्रथमंविच्छेदः क्रियाकारकसंबन्धःसमासः प्रमेयार्थव्याख्येति सर्वमेतज्जनकाय मोक्षार्थंकथयामासेति सहस्रशीर्षापुरुषः। सहस्राक्षःसहस्रपात् सःभूमिम्

सुर्व्वतंस्पृत्वात्त्यंतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुषऽएव ॥ पुरुषएवे

सर्वतःस्तृत्वा अतिअतिष्ठत् दशाङ्गुलम्। सःपुरुषः नारायणाख्यःसर्वतः भुवनकोशस्यभूमिंस्तृत्वा व्याप्यदशाङ्गुलम अत्यतिष्ठत्। दशचतानि अङ्गुलानिदशाङ्गुलानीन्द्रियाणि। केचिदन्यथारोचयन्ति दशाङ्गुलप्रमाणं हृदयास्थानम्। अपरेतु नासिकाग्रन्दशाङ्गुलमिति किम्भूतोसौ सहस्रशीर्षा। अनेकपर्यायःसहस्रशब्द. अनेकानिशिरांसि यस्यससहस्रशीर्षा पुरुषः। सहस्राक्षः। सहस्राण्यक्षीणिनेत्राणि तस्यासौसहस्राक्ष. सहस्रपात् पादानामङ्गानांसहस्राणियस्य ससहस्रपात्। एतद्गुणःपुरुषः तद्व्याप्यअतिक्रम्यस्थितइति ॥ १ ॥ पुरुषएव। पुरुषःएव इदम्सर्वम्

यत्भूतम यत्चभाव्यम्। उतअमृतत्त्वस्य ईशानः यत्अन्नेनअतिरोहति। सएवपुरुषः पूर्वपर्यायविशेषितएव शब्दोनान्यः। इदंवर्तमानकंसर्वम् यच्चभूतमतीतम यच्चभाव्यस्भविष्यत् तस्यकालत्रयस्यईशानः। नकेवलङ्कालत्रयस्य ईशानः। उतअमृतत्त्वस्यापिमोक्षस्यापि। उतशब्दोपिशब्दार्थे कस्मात्कारणात्। यत्अन्नेनअमृतेन अतिरोहति अतिरोधंकरोति। सर्वस्येश्वरइति ॥२॥ एतावानस्य। एतावान्अस्यमहिमा अतःज्यायांश्च पुरुषः। पाद.अस्यविश्वाभूतानित्रिपात्अस्य

दᳬसर्वँ᳭यद्भूतंयच्चभाव्व्यम् ॥ उताम्मृतत्त्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥ एतावानस्य ॥ महिमातोज्ज्यायाँश्चपूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतन्दिवि ॥ ३ ॥ त्रिपादूर्ध्वः ॥

अमृतन्दिवि। अस्य पुरुषस्य पूर्वोक्तविशेषणविशेषितस्य एतावान्महिमा। एतदेवमहत्त्वमस्य अतःकारणात् ज्यायांश्चपुरुषः महानित्यर्थः। कस्मान्महत्त्वमायातम् यस्मात्पादःएकोंशः अस्य पुरुषस्य। विश्वाभूतानिविश्वानि चतुर्दशभुवनसमूहेयानिचतुर्विधभूतानि तान्येकोंशः। त्रिपात्पुनः त्रयोंशाः अस्यपुरुषस्य अमृतम् ऋग्यजुःसामलक्षणम् आदित्यलक्षणंवादिविद्योततेइति ॥ ३ ॥ त्रिपादूर्ध्वः।

त्रिपात्ऊर्द्ध्वः उत्ऐत्पुरुषःपादः अस्यइह अभवत्पुनः । ततः विष्वङ्विअक्रामत्साशनानशने- अभि । यस्मादयंपुरुषः त्रिपात्त्र्यंशभूतः ऊर्द्धः उपरिष्टात्उदैत्देदीप्यमानस्तिष्ठति । अस्यच पुरुषस्यपादः एकोंशःइहत्रैलोक्ये बीजभूतश्चतुर्षुभूतेषु अभूत्भूतम् ।• ततःतस्मात्कारणात् विष्व- ङ्भुवनकोशंव्यक्रामत् उत्पन्नमित्यर्थः तस्मादेवपुरुषात् । साशनानशनेअभि साशनंस्वर्गम् अनशनं मोक्षम सर्वंजगत्स्वर्गंप्रतिमोक्षम्प्रतिच तस्मादेवोत्पन्नमित्यर्थः ॥ ४ ॥ ततोविराट् ।

त्रिपादूर्ध्वऽउदैत्पुरुषुः पादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्य् क्रामत्साशनानशनेऽअभि ॥ ४ ॥ ततोविराट् ॥ ततोविराडजा यतविराजोऽअधिपूरुषः ॥ सजातोऽअत्यरिच्यतपश्चाद्भूमिमथो

ततःविराट्अजायत विराजःअधिपूरुषः । स.जातः अतिअरिच्यत पश्चात्भूमिम् अथोपुरः । तस्मादेवपुरुषात् विश्वोत्पत्तिः । तवएवंविराट् अजायत विराजःअधिपूरुषः प्रधानन्तेजः । सचेतज्ञः ब्रह्मास्पष्टिकृत् जातःसन्अतिरिच्यते सोभितः । पश्चात्अस्मात् चेतज्ञात्ब्रह्मणः भूमिः पृथिव्यादीजाता उत्पन्नादृति अथोनन्तरम् पुरःशरीराणि पुराणिचतुर्विधानिभूतानि अजायन्त ।

पुत्रादीनितेनैवोत्पादितानि एवमेकोश तेनैवसर्वंविश्वमुत्पादितमिति ॥ ५ ॥ तस्माद्यज्ञात् । तस्मात् यज्ञात् सर्वहुतःसंभृतम् पृषदाज्यम् पशून्ताश्चक्रे वायव्यान्आरण्या.चये । यथाअग्निष्टोमाख्यात् तस्माद्यज्ञा सर्वहुतः । सम्भृतपृषदाज्यम् तेनवायव्यानपशून् आरण्याग्राम्याश्च येतान्कृतवन्तः । एवमात्मयज्ञात् । सर्वहुतात्पूरितात् उत्पन्नेनयोगिन सर्वान्पशून् सर्वाणिभूतजातानि करतल-

पुरः ॥ ५ ॥ तस्माद्य ज्ज्ञात् ॥ तस्माद्यज्ञात्सर्वहुतऽसम्भृतम्पृषदाज्ज्यम् ॥ पशूँस्ताँश्चक्क्रेवायव्यानारण्याग्ग्राम्याश्चये ॥६॥ तस्माद्य ज्ञात् ॥ तस्माद्यज्ञात्सर्वहुतऽऋचः सामानिजज्ञिरे ॥ छन्दाᳬंसिजज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ७ ॥ तस्माद

वत्पश्यन्ति । पश्यन्तिकिलज्ञान तेजसाभूतजातानि ॥ ६ ॥ तस्माद्यज्ञात् । तस्मात् यज्ञात्सर्वहुत. ऋच सामानिजज्ञिरे । छन्दांसियज्ञिरे तस्माद्यजुःतस्मात् अजायत । तस्माद्देवयज्ञात्सर्वहुत. प्रज्वालितात् यथाऋच.सामानि यजूंषिच देवाउत्पादयन्ति छन्दांसिच । एवमात्मयज्ञे प्रणादेनदीपिते स्वयमेवज्ञानादधिष्ठितानिभवन्ति । एवयेनपरमात्मनिज्ञायते सर्वोजगधाः सर्ववाङ्मयंज्ञानम्भवतीति ॥ ७ ॥ तस्माद्यज्ञात् अश्वाः अजायन्त उत्पन्ना तथा ये के चाश्वातिरिक्ता

गर्दभादयोऽश्वतराश्च उभयादत: उभयोर्भागयोर्दन्ता येषां ते उभयदत: छान्दसं दीर्घम् ऊर्ध्वाधोभागयोर्दन्तयुक्ता: सन्ति तेऽप्यजायन्त। तथा ह स्फुटं तस्माद्यज्ञात् गाव: च जज्ञिरे। किञ्च तस्माद्यज्ञात् अजावय: अजा: अवयश्च जाता:। न हि पशुभिर्विना यज्ञ: सिध्येत् ॥ ८ ॥ तंयज्ञम्। तम् यज्ञम् बर्हिषि। प्रौक्षन् पुरुषम् जातम् अग्रत:। तेन। देवा: अयजन्त साध्या:

प्रश्वाः॥ तस्मादश्वाऽअजायन्तयेकेचोभयादतः॥ गावोहज ज्ञिरेतस्मात्तस्माज्जाताऽअजावयः॥८॥ तंयज्ञम्॥ तंयज्ञम्ब र्हिषिप्रौक्षन्पुरुषञ्जातमग्रतः॥ तेनदेवाऽअयजन्तसाध्याऽऋषय

ऋषयश्च। ये॥ यथेन्द्रेण तत्रयज्ञे अग्निष्टोमाख्ये बर्हिषाप्रोक्षित: पुरुषोजात:। तद्वदात्मयज्ञे बर्हिषाप्राणायामेन दीपितेन तस्मिन्पुरुषोजात: ज्ञानमुत्पद्यतेदिव्यम्। अग्रत: प्रथमत:। तेन देवाइन्द्रादय: साध्याश्चऋषयश्च यथाअयजन्त। तथादेवा योगिन: कपिलादयश्च साध्याश्चापरे-

ऋषय: । ऋषयश्चान्येतेनैव प्रणवाधिष्ठेतेन पुरुषेणात्मयज्ञं कृतवन्तइति ॥ ९ ॥ यत्पुरु
षम् । यत्पुरुषम् व्यदधु. कतिधा व्यकल्पयन । मुखम्किम् अस्यआसीत् किंबाहू किम्ऊरू
पादौउच्येते ॥ यत्पुरुषम् देवाइन्द्रादय. तस्मिन् यज्ञे व्यदधु: कृतवन्तोयथा । तद्वत् योगिन:
आत्मयज्ञे पुरुषज्ञानम् यत्ज्ञानान्त तत्कृतवन्त: । कतिप्रकारविकल्पितवन्त: । तस्यैववि-

प्रच्चुये ॥ ९ ॥ यत्पुरुषम् ॥ यत्पुरुषंव्यदधुः कतिधाव्व्यकल्प
यन् ॥ मुखङ्किमस्यासीत्किम्बाहूकिमूरूपादाऽउच्येते ॥ १० ॥
ब्राह्मणोस्य ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यः कृतः ॥

ध+यकिंमुखम् कौबाहूकौऊरूपादौउच्येतेउच्यतामित्यर्थः । ब्राह्मणक्षत्रियवैश्यशूद्रा: स्थिताइत्य-
र्थं ॥ १० ॥ ब्राह्मणोस्य । ब्राह्मण: अस्य मुखम्असीत् बाहू राजन्य: कृत: ऊरूतत् अस्यय-
त्वैश्य: पद्भ्याम्शूद्र अजायत । अस्ययज्ञोत्पन्नस्यपुरुषस्य येकेचिद्ब्राह्मणा: तेमुखम्आसीत् ।
येक्षत्रिया: तेबाहूकृता: । येवैश्या: तेअस्यऊरूकृता: । येशूद्रा: तेपद्भ्याम्अजायत इतिक-

ख्यन्ते । तदस्योत्पन्नत्वादिति । एवमेतेवयवाः शिरः प्रभृतयः पुरुषस्यविद्यन्तेनान्येइति ॥ ११ ॥
चन्द्रमामनसः । चन्द्रमाःमनसःजातः चक्षोः सूर्यःअजायत । श्रोत्रात्वायुःचप्राणःचमुखात्
अग्निःअजायत । तस्यैवंविधस्य यज्ञोत्पन्नस्यपुरुषस्य । चन्द्रमाःमनसः चेतसःजातःअजायते
तिकल्पना । मनएवचन्द्रमाः । चक्षोः नेत्राभ्यांसूर्यः । नेत्रे एवसूर्यः । यःप्राणोजीवः सए-

ऊरूतदस्ययद्वैश्यः पुद्भ्याᳪशूद्रोऽअजायत ॥ ११ ॥ चुन्द्रमाम
नसो ॥ चुन्द्रमामनसोजातश्चक्षोः सूर्यो॑ऽअजायत ॥ श्रोत्रा
द्वायुश्चप्राणश्चमुखादुग्निरजायत ॥ १२ ॥ नाभ्याऽआसीत् ॥
नाभ्याऽआसीदन्तरिक्षᳪशीर्ष्णोद्यौः समवर्त्तत ॥ पुद्भ्याम्भूमि

वनायुःश्रोत्रात् अजायतेतिकल्प्यतेश्रोत्रमेववायुः । योयमग्निःसमुखात् अजायतेतिकल्प्यते मुख-
मेवाग्निः अंशोत्पन्नत्वादिति ॥ १२ ॥ नाभ्याआसीत् । नाभ्याःआसीत् अन्तरिक्षम शिर्ष्णः
द्यौःसमवर्त्तत । पद्भ्याम्भूमिःदिशःश्रोत्रात् तथालोकान् अकल्पयन् । तस्यैवंविधस्यपुरुषस्य

यानाभि.तदेवान्तरिचन्नभः। याद्यौःतत्शीर्षंशिरः। समवर्ततेतिकल्पितम्। यादौभूमिरेव। श्रोत्रे श्रवणोदिशः। श्रोत्रवयवा.यस्माहिशः ब्रह्मणोजाता. तथैवसर्वान् लोकान् पुरुषस्यावयवभूतान् अकल्पयदिति ॥ १३ ॥ यत्पुरुषेण। यत्पुरुषेण हविषा.देवाः यज्ञमूअतन्वत। वसन्तः अस्यआसीत् आज्यम् ग्रीष्म.इध्मः शरत्हविः। कथमन्ने नाधिरोहति। यत्यस्मात्कारणात्

दिशः श्रोत्रात्तथांलोकाँ ॥ अकल्पयन् ॥ १३ ॥ यत्पुरुषेण ॥ हविषादेवायज्ञमतन्वत ॥ वसन्तोस्यासीदाज्यंग्रीष्मइध्मः शरद्धविः ॥१४॥ सप्तास्यासन् ॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमि

पुरुषेणहविषा हविर्भूतेन देवाइन्द्रादयः यथायज्ञम् अतन्वत विस्तारितवन्तः। तथायोगिनोपिपुरुषेणैवामृतभूतेन दीपितेनात्मना आत्मयज्ञंसमधिकृतवन्तः। अत्रयज्ञेवसन्तः आज्यमासीत् ग्रीष्मःइध्मः शरद्धविरिति। इतरयागेवसन्तशब्देन सात्विकोगुणउच्यते ग्रीष्मशब्देनराजस। शरच्छब्देनतामस.। त्रयाहिगुणा स्तत्रात्मयज्ञेयोगिनोजुह्वतीति ॥ १४ ॥ सप्तास्यासन्। सप्तअस्यआसन् परिधयः त्रिःसप्तसमिध.कृताः। देवाःयत्यज्ञम्। तन्वानाःअवध्नन्

पुरुषम्पशुम। देवाइन्द्रादय: यथायज्ञंपुरुषमेधाख्यं विस्तारयन्त: पुरुषंपशुम् अवध्नन्हतवन्त:। अस्यपुरुषमेधयज्ञस्य सप्तमुद्रा.परिधय.आसन्। भारतेद्विवर्षेयाग: प्रवर्तते। त्रि:सप्तछन्दांसि गायत्र्यादीनि समिध:कृता:। आ मयागेपरिधिशब्देन पृथिव्याप स्तेजो वायु राकाशं मनोबुद्धिरित्येते परिधय:कल्प्यन्ते त्रि:सप्तसमिध:। पञ्चमहाभूतानिपृथिव्यादीनि पञ्चतन्माल्राणिरूपादीनि। पञ्चबुद्धीन्द्रियाणि श्रोत्रादीनि। पञ्चकर्मेन्द्रियाणिपाण्यादीनिमनश्च एता: त्रि:सप्तसमिध:कल्पयन्ति। तथादेवादीप्यमानाज्ञानेनयोगिन: समाध्याख्यंयज्ञ न्तन्वानाविस्तायन्त:।

धं: कृता: ॥ देवायद्यज्ञन्तन्वानाऽअवध्नन्पुरुषम्पशुम् ॥१५॥ यज्ञेनयज्ञम् ॥ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्यां

पुरुषंज्ञानं पुरुष मेधपशुरूपेणावस्थितम् अव भन्अग्टह्णन्॥ १५ ॥ यज्ञेनयज्ञम्। यज्ञेनयज्ञम्अयजन्त। देवा:। तानिधर्माणिप्रथमानिआसन्। तेहनाकम्। महिमान:सचन्तयत्रन: पूर्वेसाध्या.सन्तिदेवा.। यथाइन्द्रादयोदेवा: यज्ञेनज्योतिष्टोमाख्येन यज्ञपुरुषंवासुदेवम् विधिनाअयजन्त। यत:तानियजनरूपाणिधर्माणि प्रथमानिआसन्। तेहमहाभाग्ययुक्ता:नाकंसचन्त स्वर्गंसेवन्ते। यत्रपूर्वेसाध्या. प्रथमेसुरा:सन्तिविद्यन्तेदेवा: तेजसादेदीप्यमाना:। एवंयो-

गिनोपिदीपनाद्वैवायज्ञेन समाधिनानारायणाख्यं ज्ञानरूपम् अयजन्तयतः तानिसमाधिरूपाणि धर्माणि प्रथमान्यासन । तेतुनाकं सनकादीनांस्थानंगच्छन्ति । येतुयोगिनोमहिमानः जन्मान्तरैर्निर्धूतगुणाःशुद्धाः तेनारायणाख्यं पुरुषमाविशन्ति मुक्तिं गच्छन्तीत्यर्थः ॥ १६ ॥ अद्भ्यःसंभृतः । अद्भ्यःसंभृतः पृथिव्यैरसात् चविश्वकर्मणः समवर्ततअग्रे । तस्यत्वष्टा विद-

सन् ॥ तेहनाकम्महिमानः सचन्तयत्रपूर्वेसाध्याः सन्तिदेवाः ॥ १६ ॥ [ १६ ] अद्भ्यः सम्भृतः ॥ पृथिव्यैरसाच्चविश्वकर्मणः समवर्त्तताग्रे ॥ तस्यत्वष्टाविदधद्रूपमेतितन्मर्त्यस्यदेवत्वमाजानमग्रे ॥ १७ ॥ वेदाहम ॥ वेदाहमेतम्पुरुषम्महान्तमादि

धत्रूपम एतितन्मर्त्यस्य देवत्वम आजानमग्रे । त्वष्टाप्रजापतिब्रह्मा यद्रूपमेकांशभूतं विदधत्कृतवान् तदेवमर्त्यस्य मर्त्यभूलोकेदेवत्वंप्रभुत्वम् आजानमाप्तमित्यर्थः । किंभूतोस। अद्भ्यःसकाशात् संभृतःपिण्डीभूतः पृथिव्याःरसात्च । विश्वकर्मणः अग्रेप्रथमतः समवर्तत । संयोगरूपेणाहृतः । तस्यैवनान्यस्य तदेवकारणामर्त्यैप्राप्तवान् सतुपालनायदानवादि विनाशनायेति ॥१७॥ वेदाहम् वेदअहम एतम्पुरुषम् महान्तम्आदित्यवर्णम् तमसःपरस्तात् । तम्एवविदित्वा

अतिमृत्युम् एति नअन्यः पन्थाविद्यतेअयनाय। ऋषेःप्रतिवचनम्। अहमेनंपुरुषंवेद महान्तन्देशकालाद्यवच्छेदरहितम् आदित्यवर्णम् स्वप्रकाशम् तमसःपरस्तात् अविद्यायाःभेददर्शनम्। तमेवविदित्वा अतिमृत्युम् एतिअतिक्रम्य मृत्युंतंपुरुषमनुप्रविशति। नअन्यः पन्थामार्गः तस्यायनायगमनायविद्यते किंभूतंतं विशिष्यते ॥ १८ ॥ प्रजापतिश्चरति। प्रजापतिःचरति गर्भेअन्तः

च्यवर्णन्तमसः पुरस्तात् ॥ तमेवविदित्वातिमृत्युमेतिनान्यः पन्थाविद्यतेयनाय ॥ १८ ॥ प्रजापतिश्चरति ॥ प्रजापतिश्चरति गर्भेअन्तरजायमानोबहुधाविजायते ॥ तस्ययोनिम्परिपश्यन्ति धीरास्तस्मिन्हतस्थुर्भुवनानिविश्वा । १९ ॥ योदेवेभ्यः ॥

अजायमानःबहुधाविजायते। तस्ययोनिम परिपश्यन्ति धीराः तस्मिन्हतस्थुः भुवनानिविश्वा। सएवपुरुष एकांशभूतः प्रजापतिः अस्यगर्भेसमान्तः अजायमानः चरतिचतुर्विधेषु भूतेषु। सएवजायमानः बहुधानेकप्रकारंविजायते। येधीराः योगिनः तेतस्यैयोनिं परिपश्यन्ति। सयत्यागेनपरिहरन्ति विश्वेवेलोक्येभुवनानितस्मिन्नातस्थुः ॥ १९ ॥ योदेवेभ्यः। यःदेवेभ्यः

घातपति यःदेवानाम्पुरः- हितः। पूर्वःयः देवेभ्यःजातः नमःरुचाय ब्राह्मये। अग्रेयोदेवेभ्यः योगिनस्तन्नमन्तिध्यायन्ति योदेवेभ्यः सर्वेभ्य.घातपति घतिशयेनतेजसा तपतिघादित्यरूपेणे- त्यर्थः। यश्चदेवानां पुरोग्रे इन्द्रत्वेनस्थितः यश्चपूर्वः अग्रे ब्रह्मरूपेण देवेभ्योजातः तस्मैरुचायते- जसेब्राह्मये ब्रह्मपुरुषोपत्यायनमः ॥ २० ॥ रुचंब्राह्मम्। रुचमब्राह्मम् जनयन्तः देवाअग्रे तत्अब्रु-

योदेवेभ्य॑ऽआतपतियोदेवानांम्पुरोहितः ॥ पूर्वोयोदेवेभ्योजातो नमोरुचायब्राह्मये ॥ २० ॥ रुचम्ब्राह्मम् ॥ रुचम्ब्राह्ममञ्जन यन्तोदेवाऽअग्रेतदब्रुवन् ॥ यस्त्वैवम्ब्राह्मणोविद्यात्तस्यदेवाऽअसन्वशे ॥ २१ ॥ श्रीश्च ॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रे

वन्। यःत्वाएवम् ब्राह्मणःविद्यात् तस्यदेवाःअसनवशे। रुचन्देदीप्यमानं ब्राह्मंब्रह्मणउत्पन्नं जन- यन्तःसृष्ट्यर्थम् देवायोगिनः तेजसादीप्यमानाः यत्तअब्रुवन् यद्ब्रूयुःअग्रे प्रथमतः। किमूचुः अपरोपि- योब्राह्मणः सब्रह्मविद्याज्जानीया। तस्यदेवाअसन्वशे सोपिसनकादीनां स्थानङ्गच्छतीत्यर्थः ॥ २१ ॥ श्रीश्चते। श्रीःचतेलक्ष्मीः चपत्न्यौ अहोरात्रे पार्श्वेनक्षत्राणिरूपम् अश्विनौव्यात्तम्। इष्णन्इषाण

घमुन्मइषाण सर्वलोकम्मइषाण । असत्रपुरुषस्यैतेवयवाः । श्रीश्चलक्ष्मीश्च पत्न्यौभार्ये अहश्चरा-त्रिश्च तेपार्श्वेनक्षत्राणिरूपम् अश्विनौव्यात्तंमुखम् । इष्णन् इषाण स्वर्गसत्रलोकसत्रईशानः । एत-द्गुणविशिष्टः नाममोक्षस्यईशानः सर्वलोकस्यच सएवदेवानामीशानइति ॥ २२ ॥

इतिशौनक प्रणीतं पुरुषसूक्तभाष्यं समाप्तम् ॥ ३१ ॥

प्राश्वेंनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मंऽइ षाणसर्व्वँलोकम्मंऽइषाण ॥ २२ ॥ [ ६ ] ॥ २ ॥

इतिसंहितायांएकत्रिंशोऽध्यायः ॥ ३१ ॥

* तदेव । तदेवाग्निस्तदादित्यस्तद्वायुस्तदुचन्द्रमाः ॥ तदेवशु

(१) इदानींसर्वेमन्त्राः प्राक्प्रवायुमित्यस्मादनुवाकात्सर्वमेधसंबद्धाः । ब्रह्मणआर्षम् । तदेवाग्निः इत्यनुष्टुभौ । विज्ञानात्मापरेणात्मना विशिष्टाग्न्यादिषु ओतप्रोतत्त्वेनोपास्योभिधीयते । तदेव-

(१) पुरुषमन्त्रा उक्ता । अथ सर्वमेधमन्त्रा उच्यन्ते प्रवायुमच्छे तस्मात्प्राक स्वयम्भूब्रह्मदृष्टा आत्मदेवता मनमेऽहनि पात्रीयामसञ्चिके मन्त्रहोमे विनियुक्ता आत्मीयाम मसमसर्वभवतीत्युपक्रम्य सर्वं जुहोति सर्वं स्वाम्यै सर्वस्यावरुद्ध्य इति, श्रुते।

---

* तदेव मसवेनमतमपहीयोऽस्य ।

कारणमग्निः तदादित्यः तद्वायुः तत्उचन्द्रमाः। उकारएवार्थे तदेवशुक्रान्तयौवनगम। तद्ब्र-
ह्मपरम् ताआपः स प्रजापतिः ॥ १ ॥ सर्वेनिमेषाः। सर्वेनिमेषत्रुटिकाष्ठादयः कालविशेषाः
जज्ञिरेजाताः। विद्युतः विद्युत्पर्जन्यस्तनयित्नवः। पुरुषादधिशकाशात् नचएनं पुरुषंसर्वस्यापि
जनकं सन्तम्। ऊर्ध्वंनचतिर्यञ्चं नचमध्येपरिजग्रभत्। नपरिगृह्णातिकश्चिदपि। नह्यसौप्रत्यक्षादी-

कृन्तन्नद्वस्त्रमुताऽआपःसप्रजापतिः ॥१॥ सर्वेनिमेषाः ॥ सर्वेनिमेषा
जज्ञिरेविद्युतःपुरुषादधि॥ नैनमूर्द्ध्वन्नतिर्यञ्चन्नमध्येपरिजग्र
भत् ॥ २ ॥ नतस्य ॥ प्रतिमाऽअस्तियस्यनाममहद्यशः ॥ हिर

नाविषयः। आगमोपि न प्रवर्तते तदुक्तम्। एषनेतिनेत्यात्मना अगृह्योनहि गृह्यतइत्यादि ॥२॥
नतस्य। गायत्रीद्विपदा नतस्यपुरुषस्य प्रतिमाप्रतिमानभूतं किञ्चिद्विद्यते। यतोयस्यनाममह-
द्यश इत्येपवेदान्तविदःपठन्ति। हिरण्यगर्भ इत्येषचतुर्ऋचोनुवाको ऽदूरविप्रकर्षेण हिरण्य-
गर्भं प्रतिमाभूतमाह। मामाहिंसीदित्येषाचर्क् यस्मान्नजातइत्येषाचद्विकण्डिकोनुवाकः।

पोडगिदैवत्यो ऽदूरविप्रकर्षेणाभिवदति । आसांचकण्डिकानां ब्रह्मयज्ञाध्ययनं कर्तव्यं प्रतीकगृहणत्वात् ॥ २ ॥ एषोह । त्रिष्टुभः सर्वा.सदसस्पतिमद्भुत मित्यस्यागायत्र्याःप्राक् । इदानीस्वरूपत कथयति। एषएवदेवः प्रदिशः दिशश्चसर्वाः अनुव्याप्यवर्त्तते तिर्यगूर्ध्वमधश्चेति। पूर्वोहजातअनादिनिधन. सभूत । सउगर्भेअन्तः । सएवचमातुदरेऽन्तर्गर्भे व्यवतिष्ठते।

गयगर्भऽइत्त्येषमामांहिꣳसीदित्येषायस्मान्नजातऽइत्त्येषः ॥ ३ ॥ एषोह ॥ देवः प्प्रदिशोनुसर्व्वाः पूर्व्वोहजातः सऽउगर्भेऽअन्तः ॥ सऽएवजातः सजनिष्ष्यमाणः प्प्रत्यङ्जनास्तिष्ठतिसर्व्वतोमुखः ॥ ४ ॥ यस्म्माज्जातम् ॥ यस्म्माज्जातन्नपुराकिञ्चनैवयऽ

श्ते । सएवचजातः सएवचजनिष्यमाणः तदुक्तम् । सर्वंखल्विदंब्रह्मतज्जानातिशान्तमुपासीतेति। प्रतिपदार्थमञ्चन.। हेजनाः तिष्ठतिसर्वतोमुखः । सर्वतोक्षिशिरोग्रीव पाणिपादः तिष्ठति अचिन्त्यशक्तिरित्यर्थः। जनाइत्याद्युदात स्वरमपिस्वरामन्त्रितायस्यादावेववर्तते ॥ ४ ॥ यस्मान्नजात.। यस्मात्पुरुषात् जातंनपुराकिञ्चनएव। ययआवभूव सम्भावयतिभुवनानिभूतजा-

तानिविश्वानिविश्वानिसर्वाणि । प्रजापतिरिति व्याख्यातम् । अयंषोडशकलिङ्गयुक्तः ॥ ५ ॥ येनपुरुषेण द्यौः उग्रा उद्गूर्णावृष्टिदायिनी कृता । पृथिवीच दृढास्थिरा प्राणिधारणाय वृष्टि-ग्रहणायच अन्ननिष्पादनायच कृता । येनचस्वः आदित्यमण्डलं स्तभितं स्तभितम् । येनच नाकः स्वर्गोलोकः । स्तभितः । यश्चान्तरिक्षे रजसः उदकस्य वृष्टिलक्षणस्य विमानोनिर्माता ।

ओंभूर्भुवःस्वःभुवनानिविश्वा ॥ प्रजापतिःप्रजयासꣳरराणस्त्रीणिज्योतीꣳषिसचतेसषोडशी ॥ ५ ॥ येनद्यौः ॥ येनद्यौरुग्रापृथिवीचदृढायेनस्वस्तभितंयेननाकः ॥ योऽअन्तरिक्षेरजसोविमानः कस्मैदेवायहविषाविधेम ॥ ६ ॥ यङ्क्रन्दसी ॥ यङ्क्रन्दसीऽअवसात

तंपरित्यज्य कस्मैअन्यस्मै देवायहविषाविधेम कन्दिदूमद्रुतिसमसुरम ॥ ६ ॥ यंक्रन्दसी यंपुरुषं क्रन्दसीद्यावापृथिव्यौ अवसा अन्नेनहविर्लक्षणेन वृष्टिधारणादुपकारजनितेन । तस्तभानेसंस्तं-भयन्त्यौ सर्वप्राणिजातम् अभिऐक्षेतामनसा । साध्वेतत्कृतमनेनेति । रेजमानेकम्पमाने ।

यत्रचयधि उपरिस्थितः यदाधारदृथ भिराय: । सूरः सूर्यः उदितः सन् विभाति । तंन्देवम परित्यज्य कस्मैदेवाय हविषाविधेम इतिसमंजसम् । आपोहयद्बृहतीर्यश्चिदाप इतिद्वेप्रतीकग्रहीते अत्रापिस्वाध्यायेध्ययनं प्राप्तंप्रतीकस्योपलक्षणार्थत्वात् ॥ ७ ॥ वेनस्तत्पश्यत् । वेनः पण्डितः विदितवेदान्तरहस्य. सद्भावनया तद्रूपंब्रह्म पश्यत्पश्यति । निहितंस्थापितम् ।

स्तभानेऽअभ्यैदेताम्मनसारेजमाने ॥ यत्राधिसूरऽउदितोव्विभाति कस्मैदेवायहविषाविधेम ॥ आपोहयद्बृहतीर्यश्चिदापः ॥ ७ ॥

[ ७ ] व्वेनस्तत् ॥ व्वेनस्तत्पश्यन्निहितङ्गुहासद्यत्रव्विश्वम्भवत्येकनीडम् ॥ तस्मिन्निदर्ठसञ्चव्विचैतिसर्व्वर्ठसऽओतःप्रोत

गुहागह्वरायामिव । सन्नित्यम् । यत्रविश्वं सर्वमिदं विकारजातं भवति एकनीडम् एकानलयमविभक्तम् । कारणमेवोपसंहृतं सर्वविशेषम् । तस्मिन्निदं सञ्चविचैति सर्वम् । तस्मिन्नेवपरमात्मनि इदंविकारजातं सर्वंसमेतिच उपसंहृतिकाले । सवेत्यच । व्येतिसृष्टिकाले सर्वमेव । सचपरमेश्वरः ओतश्चशरीरभावेन प्रोतश्चजीवभावेन इतरथावा विभूः विभवति

चक्रार्थेकारणभावेन । प्रजासु ॥ ८ ॥ एतत् प्रवोचेत् प्रब्रूयात्तत् अमृतंशाश्वतम् । नुचि-
मम् विद्वान्पण्डितः गन्धर्वः । गन्धर्वलोकेहि ब्रह्मविद्यासुतराञ्ज्ञायते । धामस्थानम् । विभृ-
तंनिहृतंनानाभूते सर्गस्थितिप्रलये । गुहासत् गुहायामिवनिगूढम् अविद्वतवेदान्तरहस्यम-
ज्ञानानाम् । किञ्च । त्रीणिपदानिनिहितानि गुहा । गुहायामिवअस्यअक्षतस्य सर्गस्थिति-

श्चव्विभूऽ प्प्रजासु ॥ ८ ॥ एतत् ॥ प्रतद्वोचेदमृतन्नुव्विद्वान्गन्धुर्व्वो
धामुव्विभृतङ्गुहासत् ॥ त्रीणिंपुदानिनिहिताुगुहास्युयस्तानिव्वे
दुसपितुः पितासंत् ॥ ९ ॥ सनंः ॥ सनोबन्धुर्ज्जनितासव्विंधाता

प्रलयाः त्रयोवावेदाः त्रयोवाकालाः । भूयस्त्वोपलक्षणार्थंवा । भूयांसोहि तत्वगुणाश्रूयन्ते
विज्ञानघनानन्दसत्यसंकल्पादयः । परब्रह्मान्तर्याम्यव्याकृतानित्रयःपादाः । यस्तानिवेदजा-
नातिसपितुरपिपिताभवति । परब्रह्मभवतीत्यर्थः । तद्विषब्रह्मरूपंश्लोकम् ॥ ९ ॥ सनोबन्धुः ।
सनोस्माकंबन्धुः, सचास्माकञ्जनिता । जनदितेतिप्राप्ते जनितामंत्र इतिणिचोलोपः । सचनो-

विधाता धारयिता । यःधामानिब्रह्मणःस्थानानि वेद । भुवनानिभूतजातानिविश्वासर्वाणिवेद । नान्यात्मनोभिन्नानिवेद । किञ्च । यत्रदेवाअग्न्यादयः अमृतम्परब्रह्मलक्षणम् । आनशानाः व्याप्नुवन्त. तृतीयेधामनि स्थानेअविद्यपरिस्थिताः ऐरयन्त स्वेच्छयाप्रवर्तन्ते तद्ब्रह्मयोवेद सनो-बन्धुरित्यादनुवर्तते ॥ १० ॥ इदानींसर्वेषु भूतेष्वहमस्मिसर्वाणिचभूतानि मयिसन्तीत्यनद्दर्श-

धामा॑नि॒ वेद॒ भुव॑नानि॒ विश्वा॑ ॥ यत्र॑ दे॒वा अ॒मृत॑मानशा॒नास्तृ॒तीये॒ धाम॑न्न॒ध्यैर॑यन्त ॥ १० ॥ प॒रीत्य॑ भू॒तानि॑ ॥ प॒रीत्य॑ लो॒कान्प॒रीत्य॒ सर्वाः॑ प्र॒दिशो॒ दिश॑श्च ॥ उ॒प॒स्थाय॑ प्रथम॒जामृ॒तस्या॒त्मना

नावगुण्ठितस्य सर्वमेधयाजिनो मुक्तिरुच्यते द्वाभ्यांकण्डिकाभ्याम् नचालसर्वमेधेग्रहः कर्तव्यो-दर्शनसाप्राधान्यात् । एवंहि पश्यतो यजमानस्याग्निहोत्रादयो यज्ञाः सर्वे सर्वमेधाएव । आलम्ब-नमात्रं हितवयज्ञा. । परीत्यभूतानि । अनेन दर्शनेन परिज्ञायसर्वाणिभूतानिएवमेतदित्यवधार्य । एवपरिज्ञायचसर्वान्लोकान् परिज्ञायचसर्वाः दिशः परिज्ञायच सर्वाःप्रदिशः । उपस्थायचप्रथम-

जांबातं त्रयीलक्षणाम् । अपिहि तस्मात्पुरुषाद्ब्रह्मैव पूर्वमभ्युत्पद्यतेतिश्रुतिः प्रथमजामित्यर्थः । ऋतं-स्ययज्ञस्य । आत्मना आत्मानम् परिणम्य्य गत्वा विशिष्टं ब्रह्म अभिसंविशति अपुनरावृत्तये ॥ ११ ॥

परिद्यावा । परीत्ययमुपसर्गइत्यनेन संबध्यते । परीत्यद्यावापृथिव्यौ अनेनदर्शनेन । परीत्य-चलोकान् परीत्यचदिशः परीत्यच स्वःआदित्यम । ऋतस्य यज्ञस्य तन्तुं विततं विचृत्यविच्छिद्य

नात्मानमभिसंविवेश ॥ ११ ॥ परिद्यावापृथिवी ॥ सद्यऽइत्वाप रिलोकान्परिदिशः परिस्वः ॥ ऋतस्यतन्तुंविततंविचृत्यतद पश्यत्तदभवत्तदासीत् ॥ १२ ॥ सदसस्पतिम् ॥ सदसस्पतिम

परिममाय । सदाएवतत् तथाभूतमात्मनम अपश्यत्पश्यति । तदभवत् तथाभूतंब्रह्मभवति । तदासीत् तदेवास्ति । तदुक्तम् । तदेतत्सत्यं यथासुदीप्तात्पावकाद्विस्फुलिङ्गा यथाग्नेर्विस्फुलिङ्गाः । यथाह्येकस्याग्नेप्रदीपसहस्रा-णितस्यगतोनिर्गच्छन्ति । एवंपरमात्मन इमेजीवाव्युच्चरन्ति । आभ्याङ्गच्छाभ्यांगृहस्था-नामेत्सुक्तिदर्शिताभवति तेषांहिभूयांसउपायाःयज्ञादयः ॥ १२ ॥ इतउत्तरनतिसृभिः कश्चिद्-

काभि मेधायाच्यते योश्चचर्ध्यां । सदसस्पतिम् सदसस्पतिर्देवता सदोयज्ञगृहं तस्यपतिं तम् । अद्भुतमश्चान्त नचिन्त्यशक्तिम् । प्रियमिन्द्रस्य । काम्यङ्कामसंपत्करम् कमनीयंवा धनमेधार्थिभिः । सनिन्धनंमेधाम् अयासिषम् याचे.द्विकर्माचायधातुः ॥ १३ ॥ याम्मेधाम् तिस्रोनुष्टुभ आग्नेयी । यामेधां देवगणाःपितरश्च उपासतेपूजयन्ति । तयामाम् अद्यमेधया हेअग्ने मेधा-

इं तम्प्रियमिन्द्रस्यकाम्म्यम् ॥ सनिम्मेधामयासिषᳪ स्वाहा ॥ १३ ॥ याम्मेधाम् ॥ याम्मेधान्देवगणाऽ पितरश्चोपासते ॥ तयामामद्य मेधयाग्ने मेधाविनङ्कुरु स्वाहा ॥ १४ ॥ मेधाम्मे ॥ मेधाम्मेव्वरुणोद दातुमेधामग्निःप्प्रजापतिः ॥ मेधामिन्द्रश्चव्वायुश्चमेधान्धातादंदा तुमेस्वाहा ॥ १५ ॥ इदम्मे ॥ इदम्मेब्रह्मचक्षत्रञ्चोभेश्रियमश्नु

विनं कुरु स्वाहासुहुतमस्तु ॥ १४ ॥ मेधांमे । लिङ्गोक्तादेवता । मेधाम् मेमह्यं वरुणोददातु । मेधांचाग्निः प्रजापतिश्च । मेधांच इन्द्रश्चवायुश्च । मेधांचधाताददातु मेमह्यम् स्वाहासुहुतमस्तु ॥ १५ ॥ इदमे । अनुष्टुप् । इदंब्रह्मचक्षत्रञ्च उभेब्रह्मक्षत्रियेयम् अश्नुताम् मदीयां-

श्रियमुपजीवताम् । मयि च देवाः दधतु स्थापयन्तु श्रियम् उत्तमाम् यथाहं सर्वजनभोग्ये भवामि । तस्यैते स्वाहा । यात्वमेव सर्वजनैरभिलष्यसे तस्यै श्रियै तेतुभ्यं स्वाहासुहुतमस्तु । अप्राप्यच मेधायियं च नयन्त्या सिषन्तीत्यपसंबन्धः ॥ १६ ॥

इति उवटकृतौ मंत्रभाष्ये द्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥

ताम् ॥ मयिदेवादधतुश्रियमुत्तमान्तस्यैतेस्वाहा ॥ १६ ॥ [८] ॥ २ ॥

इतिसंहितायांद्वात्रिंशोऽध्यायः ॥ ३२ ॥

* अस्याजरासः ॥ अस्याजरासोदमामरित्राऽअर्चद्धूमासोऽ

(१) इतउत्तर सप्तदशका पुरोरुग्गाना अस्मिन्नध्यायेपठ्यन्ते । तत्रसार्वमेधिकानां चतुर्णामह्नांचत्वार आद्या पुरोरुच इत्येवमेतेविदुः । यथास्याग्निष्टुदग्नि ष्टोम. प्रथममहर्भवति तस्याग्नेया-गृह्यामवन्ति आग्नेयः पुरोरुचइति । एवमिन्द्रस्तदुत्थो द्वितीयमहर्भवन्ति ऐन्द्यः पुरोरुचः । सूर्य-

(१ सर्वमेधेऽग्निष्टोमसंस्थेऽग्निष्टुत्सञ्ज्ञे प्रथमेऽहनि अस्याजरास इत्याद्या महो अग्ने इत्यन्ता सप्तदश ऋचोऽग्निदेवता पुरोरुचोभवन्ति । पुरोरुकशब्देन ऋग्रूपा ग्रहणमन्त्रा उच्यन्ते न यजूरूपा ऋगपि पुरोरुगिति श्रुतेः ।

* अस्याजरास सप्तदशापयिन्द्रद्वादशविभ्राटचतुर्दशप्रवाहजएकादशप्रवायु प्रवोयापञ्चदशआवानस्त्रयोदशसप्तसप्तनवति ।

ग० य० मं० ६२५ उ० भा०

स्तुत्यस्तृतीयमरर्भवति तस्यसौर्यागृहाभवन्ति सौर्व्यःपुरोरुचः । वैश्वदेवश्चतुर्थंमहर्भवति तस्य-
वैश्वदेवागृहाभवन्तिविश्वदेव्यःपुरोरुचइति । यएतस्वंयोनुवाका अनारभ्याधीताः । एताश्चपु-
रोरुचो यच्छन्दस्काः प्रकृतिदृष्टा सच्छन्दस्का इहापिप्रायोदृश्यन्तेअन्यसनुवाकंवर्जयित्वा । अस्था-
जरासः । ऐन्द्रवायवस्य द्वेपुरोरुचौ । अस्ययजमानस्य अजरासःजरारहिताः । दमांगृहा-
णाम् अरिताःअरणाः । नाशामिवकेनिपाताः । यद्वादमांदमनीयानां रक्षसाम्भरणास्तारकाः

अ॒ग्नयः॑ पाव॒काः ॥ श्वि॒ती॒चयः॑ श्वा॒त्रासो॑ भुर॒ण्यवो॑ वन॒र्षदो॑ वा॒य॒वो॒ न सोमाः॑ ॥ १ ॥ हर॑यो धू॒मके॑तवः ॥ हर॑यो धू॒मके॑तवो॒ वात॑जू

अर्चद्रूमासः अर्चंपूजनीयोधूमोयेषांतेअर्चद्रूमासः । पूज्यधूमाः पावकाःपावयितारश्च अग्नयोभवन्तु ।
अस्यच श्वितीचय. श्वेतत्वप्रचयकारिणः । श्वात्रासःश्वात्रशब्दःक्षिप्रवचनः क्षिप्रकर्माणः । भुर-
ण्यवःभर्तारः वनसदःरेफउपजनः । वनमुदकन्तत्रसन्नाउदकाभिपुताइत्यर्थः । वायवोन वायवइ-
वोद्दीपयितारः गृह्येरक्षमाणाः सोमाःसन्तु । यद्वा सर्वाण्यश्यग्निविशेषणानि । श्वितीचयः
श्वेतत्वसंचनाः । वायवइवश्वात्रासः क्षिप्रगमनाः । वनर्षदोवनसदः । * वनसदोवेटोरेफेणेतिप्रा-
तिशाख्यसूत्रेणरेफागमः । सोमाइवयजमानेष्टदाः । समानमितरत् ॥ १ ॥ हरयोधूमकेतवः ।

* वनसदोऽवटोरेफेण ॥ वनशब्द सदशब्दे प्रत्ययेरेफेणव्यवधीयतेसचेद्वनशब्दोवेट् शब्दास्परोनभवति प्रा०प०२। सू० ४८ ॥

येऽग्नय. हरयोहरितवर्णाः । धूमकेतव धूमप्रज्ञाना । वातजूतावातगमनाः । उपद्यविद्यु-
लोकंप्रति । यतन्तेयत्नमाचरन्ति । वृथक् । पृथगितिप्राप्ते वर्णव्याप्तिः । पृथक्नाना । ताम्
स्तुमइतिशेष. ॥ २ ॥ यजानः । मैत्रावरुणीगायत्री । यजनःअस्माकम् मित्रावरुणामित्रावरुणौ ।
यजचदेवान् यजच ऋतयज्ञम् बृहत्माहात्म्यम् । हेअग्ने यक्षियजच स्वन्दमंस्वकीयंगृहम् ॥३॥

ताऽउपद्यवि ॥ यतन्तेवृथग्ग्नयः ॥ २ ॥ यजानः ॥ यजानोमित्रा
वरुणायजादेवा२ँ ॥ ऋतम्बृहत् ॥ अग्नेयक्षिस्वन्दमम् ॥ ३ ॥
युक्ष्वाहि ॥ देवहूतमा२ँ ॥ ऽअश्वा२ँ ॥ ऽअग्नेरथीरिव ॥
निहोतापूर्व्यःऽ सदः ॥ ४ ॥ द्वेविरूपे ॥ चरतःऽ स्वर्थेऽअन्या

न्याथित्रनस्य । युक्ष्वाहीतिव्याख्यातम् ॥ ४ ॥ द्वेविरूपे । त्रिष्टुप् शुक्रस्य । द्वेराल्यहनीविरूपे
नानारूपे । कृष्णारात्रिशुक्लमहः चरत आदित्येन सहाहश्चरति इतरत्वअग्निनातुरात्रिः । स्वर्थे-
शोभनार्थे । अन्यान्या वत्समुपधापयेते । अन्याएकारात्रिः एकमग्निरूपं वत्सम् अन्याएकमहः

एकमादित्यरूपं वत्समुपधापयेते। रात्रिरग्निदेवत्यमग्निहोत्रम् अहःसूर्यदेवत्यमग्निहोत्रं वत्समित्याशयः। किञ्च हरिर्हरितवर्णोऽग्निः अन्यस्यांरात्रौ स्वधावान् अन्नवानुपभोग्यः तापपाकप्रकाशैर्भवति। शुक्र.शुक्रवर्णआदित्यः अन्यस्यामहनि ददृशेदृश्यते सुवर्चाःसुतेजाः। यद्वा द्वे द्यावापृथिव्यौ विरूपेनानारूपे परस्परापेक्षयाचरतः स्वर्थंकल्याणप्रयोजने अन्यापृथिवी अग्नि-

न्न्यांव्वत्समुपंधापयेते॥ हरिंरुन्न्यस्याम्भवंतिस्वधावाञ्छुक्रोऽअन्न्यस्यान्ददृशेसुव्वर्च्चाः॥ ५॥ शतम्॥ १७००॥ अयमिह॥ पप्रंथमोधायिधात्टभिर्होतायजिंष्ठोऽअद्ध्वरेष्ष्वीड्यं॥ यमप्प्नंवानोभृगंवोव्विरुरुचुर्व्वनेषुचित्रंव्विभ्वं व्विशेविंशे॥ ६॥ त्रीणिशता॥ त्रीसहस्रा

वत्सम अन्याद्यौरादित्यंवत्सम उपधापयेतेपोषयतः। किञ्चहरिरग्निः अन्यस्यांपृथिव्यांस्वधावान् भवति। शुक्रआदित्यश्च अन्यस्यान्दिविददृशेसुवर्चाःदृश्यतेसुतेजः॥ ५॥ मन्थिनः अयमिहेति व्याख्यातम्॥ ६॥ वैश्वदेवंगृह्णाति। त्रीणिशतानीति त्रीणिशतानि त्रीणिसहस्राणि। त्रिंशत्

नवच। देवा:असपर्यन्। सपर्यति:परिचरणकर्मा परिचरितवन्त: कथमितिचेत्। औक्षन्अ-
सिञ्चन् अग्निम्घृतै:। अस्तृणन्बर्हिः अस्मैअग्नये। आत् इत् अथ एव अनन्तरमेव। होता-
रंहृत्वा न्यसादयन्त। नितरांविनियुक्तवन्त: ॥ ७ ॥ अथध्रुवस्य। मूर्द्धानन्दिव इतिव्याख्या-

यग्निन्त्विदं अस्वंदेवालवंचासपर्य्यन् ॥ औक्षंन्घृतैरस्तृणन्बर्हिरस्मा आदिद्धोतारन्न्यसादयन्त ॥ ७ ॥ मूर्द्धानन्दिवः ॥ मूर्द्धानन्दिवो अरतिम्पृथिव्या वैश्वानरमृत आजातमग्निम् ॥ कविँसम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्तदेवाः ॥ ८ ॥ अग्निर्वृ

तम् ॥ ८ ॥ ऐन्द्राग्नस्य। अग्निर्वृत्राणि गायत्री। अग्नि:वृत्राणि यजमानस्य वृजिनानि।
जंघनत् अत्यर्थंहन्ति। किंभूत.द्रविणस्यु. धनंहविर्लक्षणमिच्छन्। केनहेतुनाजंघनत् विपन्यया।
विपनिरर्चतिकर्मा यजमानपूजया निमित्तभूतया। पुन.किंभूतोग्नि: समिद्ध:दीप्त: शुक्र:शुक्ल:

आहुतःयभिहुतः सन् ॥ ९ ॥ वैश्वदेवस्य । विश्वेभि.सोम्यम् गायत्री । विश्वेभिःदेवैःसह । मांमसंरन्विमधु हेग्यग्ने इन्द्रेणचसहवायुनाचसह पिव । मित्रस्यधामभिर्न्नामभिः स्तुतःसन् । तद्दुक्तम् त्वमग्ने वरुणोजायसे यस्त्वमित्रोभवसि दृसईडाद्गति ॥ १० ॥ आयत् । द्वाभ्यांस- हलतीयाभ्याम् हे त्रिष्टुभौ । व्यवहितपदप्रायः आहुतिपरिणाम वादिन्यौ । आउपसर्गः

त्नाणां ॥ जञ्जन्हविणस्युर्व्विप्रन्न्यया ॥ समिद्धऽशुक्रऽआहुतऽ ॥ ९ ॥ व्विश्वेभिऽ सोम्म्यम् ॥ व्विश्वेभिऽ सोम्म्यम्मद्ध्वग्नऽइन्द्रेणव्वा युना ॥ पिवामित्रस्यधामभिः ॥ १० ॥ आयत् ॥ आयदिषेनृपति न्तेजऽआनट्शुचिरेतोनिषिक्तन्द्यौरभीके ॥ अग्निः शर्द्धमनवद्यं

यानट्इत्यनेनाख्यातेन संवध्यते। यत्यदा इषेअन्नाय निषिक्तंनितरांसिक्तंदेवतोद्देशेनचिप्तम् शुचिमंत्रैःसंस्कृतम तेजःजगदुत्पत्तिबीजम् । नृपतिमग्निम् आआनट् अग्नोतेरेतद्रूपम् व्याप्नोति । ततोपिरेतोमध्यस्थानंव्याप्नोति विद्युल्लक्षणंतेजः । द्यौरभीके । द्यौरपितस्या- हुतिपरिणामभूतस्यरसस्य अभीकेनिकटएववर्त्तते । ततअग्नि.शर्द्धम् शर्द्धंवलंतस्यहेतुभूतम्

अनवद्यं प्रशस्यम् युवानमपरियक्तरसम् स्वाध्यंसुछ्ध्यानीयम् । सर्वोपिवृष्टिमभिलषति । जनयत्जनयति षष्टभिर्मासैः । सूदयच्च । सूदक्षरणे । निष्पन्नमुदकंचतुर्भिर्मासैः क्षरतिच दृष्टिद्वारेण ॥ ११ ॥ अग्नेशर्द्ध । हेभगवन्नग्ने शर्द्धउत्सहस्वबलमाविष्कुरु । महतेसौभगाय । महत्सौभाग्यंलोकस्थितिः । एवंकुर्वतस्तवद्युम्नानि उत्तमानिसन्तु । द्युम्नंद्योततेयशोन्नंवा ।

द्युवानꣳस्वाद्ध्यञ्जनयत्सूदयच्च ॥ ११ ॥ अग्नेशर्द्ध ॥ महतेसौभगा यतवद्युम्नान्युत्तमानिसन्तु ॥ सञ्जास्पत्यꣳसुयममाकृणुष्वशत्रू यतामभि * तिष्ठा महाꣳसि ॥ १२ ॥ त्वाꣳहि ॥ मन्द्रतममर्कशोकै

हविर्लक्षणानिधनानि सन्तुयशांसिवा । किञ्च एतत्त्वंप्रार्थ्यसे । संजास्पत्यम् । जायापतिमितिप्राप्ते आकारयकारयोर्लोपः सुक्च । सुयमंसुनियमअन्योन्यवशरागम् समाकृणुष्वकुरुष्व । शत्रूयतांशत्रुत्वमिच्छताम् । अभितिष्ठपदध्यामभिभव । महांसिमहत्वानि ॥ १२ ॥ त्वाꣳहि । माहेन्द्रस्य । त्रिष्टुप् । त्वांहित्वामेव मन्द्रतमंमन्दनीयतमं सृदुहृदयंवा । अर्कशोकैः मंत्रदीप्तैः ।

यथोक्तस्थानकर्णानुप्रदानवद्भिः । देवतादात्मवित्तेन सन्तानगर्भगुरुसुश्रूषाधिगताविप्लावित ब्रह्म चर्यै । एवंहि मनादीप्ता.स्युः । वहमहे हतवन्तोवयम् । त्वचहत.सन् महिमहत्स्तोत्रम् नोस्माकम् श्रोपित्र्णोपि । शुश्चाचप्रभावयसि कर्महेअग्ने । किञ्च इत्थंनामत्वं महतीदे वता । येनइन्द्रन्त । उपमार्थीयोनकारः । इन्द्रमिव त्वाशवसावलकृत्वा पृषन्तिपूरयन्ति । वायुमि-वचपूरयन्ति राधसाहविर्लक्षणेन धनेनन्तमाः मनुष्यतमाः मनुष्यश्रेष्ठाः ॥ १३ ॥ त्वे अग्ने आदि

त्वँवृमहेमहिनुऽ श्रोष्यंग्ने ॥ इन्द्रन्नत्वाशवंसादेवतांवायुम्पृंणन्ति राधंसानृतमाऽ ॥ १३ ॥ त्वेऽअंग्ने ॥ स्वाहुतप्प्रियासः सन्तुसूरयः ॥ यन्तारोयेमघवानोजनांनामूर्व्वान्दयन्तुगोनांम् ॥१४॥ शुचिश्शुल्कश्च ॥

त्वग्रहस्य । ध्रुत्यौ । त्वेतव हेअग्ने । स्वाहुत । साधुनाप्रकारेणाभिहुत । प्रियासः । प्रियाः सन्तु सूरय पण्डिताः । येचयन्तारः निगृहितसर्वविषयाः । येचमघवानः धनवन्तः । जना-नामध्ये । नकेवलं धनवन्तएव किन्तर्हि । ऊर्वान्अन्नप्रकारान् दयन्त । दयतिर्दानार्थः । ददति । गोनाम्गवामितिप्राप्ते गो.पादान्तइतिनुट । गवांसंवन्धिभिरुपसेचनै.सहितान् ॥ १४ ॥

श्रुधिश्रुत्कर्णं । हेग्ने श्रुधिश्रुणु । पूर्ववदित्यादिनाधिभाव: । सत्त्वरं यज्ञमाग्नेयम् । हे श्रुत्कर्ण । शृण्वत:कर्णावर्थिनां वचांसि यस्यसतथोक्त: । त्वयिन्नुतवति । वह्निभि.वोढृभिर्देवै: । सयावभि: । याप्रापणेवनिप् । समानप्राप्तिभि: । सहिता: । आसीदन्तु बर्हिषि । मित्र:अर्यमाच । अन्येचप्रातर्यावाण: । प्रातरेव हवि:प्राप्तिर्येषांतेतथोक्ता: ॥ १५ ॥ विश्वेषामदिति: ।

श्रुधिश्रुत्कर्णवह्निभिर्देवैरग्नेसयावभि: ॥ आसीदन्तुबर्हिषिमित्रोऽअर्य्यमाप्रातर्य्यावाणोऽअध्वरम् ॥ १५ ॥ विश्वेषामदिति: ॥ विश्वेषामदितिर्य्यज्ञियानांविश्वेषामतिथिर्म्मानुषा

आदित्यग्रहे दधिश्रयणमंत्र: । अयमपि पुरोरुचां मध्येगण्यते । तथाहि । कदाचनस्तरीरसि । कदाचनप्रयुच्छसि । यज्ञोदेवानामिति तिसृणामादित्येभ्यस्त्वेत्यनुषङ्ग: । त्रिष्टुप् । योग्नि:विश्वेषाम् अदिति:खण्डीन: । यज्ञियनाम् । यज्ञसंपादकानाम् । विश्वेषांचअतिथि: मानुषाणाम् अग्निर्भवतिपाम । सोग्नि:देवानामवव: अन्नंहविर्लक्षणम् आवृणान:समर्प्पयन् । सुश्र-

डीकोभवतुजातवेदा:जातप्रज्ञान: ॥ १६ ॥ महोअग्ने: । सावित्रस्य । त्रिष्टुप् । महःमहत: अग्ने:समिधानस्यसंदीप्यमानस्य । शर्मणिशरणेआश्रयेवर्तमाना: अनागा:अनपराधा:स्याम । येन-चमित्रेवरुणे अनपराधाएवस्याम । स्वस्तयेअविनाशाय । येनच श्रेष्ठे स्यामसवितु: । सवीमनि । प्रसवे । तत्देवानां संबन्धि अव.हविर्लक्षणमन्नम् । अद्य । आवृणीमहे । अभिसंस्कुर्म: ॥ १७ ॥

याम् ॥ अग्निर्हेवानामवऽआहणानःसुमृडीकोभवतुजातवेदाः॥१६॥

महोऽअग्नेः ॥ समिधानस्यशर्म्मण्यनागामित्त्रेवरुणेस्वस्तये ॥

श्रेष्ठेस्यामसवितुः सवीमनितद्देवानामवोऽअद्यावृणीमहे ॥१७॥

[१७] आपश्चित्। आपश्चित्पिप्युस्तर्य्योनगावोनक्षन्नृतञ्जरितारस्त

इदानीमिन्द्रस्तुति: । उथसंस्थे द्वितीयेहनि पुरोरुचएेन्द्र्योद्वादश ॥ आपश्चित् । त्रिष्टुप् । आपोपि । पिप्यु:प्याय:पी आदेश: । प्याययेयु: निग्राह्यसोमे । स्तर्योनगाव: । सुन्वन्ति-अभिषुण्वन्ति याभिर्याभि: सोमन्तास्तर्य्य: । सोमाभिषवेहि लयोलचाणावाचोव्याप्रियन्ते । तदे-

तद्गम् । तयेनगाव: तयेद्वगाव: नक्षन्ततंजरितारस्तइन्द्र । नक्षम् नक्षतिर्व्याप्तिकर्मा एवमनेन-प्रकारेण नक्षन्त्याप्नुवन्ति स्तर्तंयज्ञम् । जरितार.स्तोतार: तेतव हेइन्द्र । एतस्त्वात्वा । याहिवा-युर्नंनियुतोनोअच्छ । अच्छअभियाहि । आयाहि न:अस्मान् वायुर्नंनियुत: वायुर्यथानियुत: अश्वा-न्याति । त्वंहि । हियस्मात् । पुनस्त्वमेनमुच्यसे । यस्त्वं धीभि: स्वकीयाभिवुद्धिभि: दयसे-ददासि । विविधंवाजान्अन्नानि ॥ १८ ॥ गावउप । तिस्रोगायत्र्य: । दक्षिणालक्षणागावउच्यन्ते ।

ऽइन्द्र ॥ याहिवायुर्न्ननियुतोंनोऽअच्छात्वँहिधीभिर्द्दयसेव्विवाजान् ॥ १८ ॥ गावऽउप । गावऽउपावतावतम्महीयज्ञस्यरप्सुदा ॥ उभाकर्णाहिरण्ययां ॥ १९ ॥ यदद्य ॥ सूरऽउदितेनागामित्रोऽ

हेगाव: उपावतउपगच्छत दक्षिणामार्गेणअवतप्रति । अवतमितिकूपनाम । सचाक्षत्वाल तदन्तरे-णाहि गत्रासचार:। कोहेतुरागमन इतिचेत् । महीयज्ञस्यरप्सुदा । महीमहत्य:यज्ञस्यरप्सुदा दानंवर्तते । यतासभवतीनाम् उभौकर्णौहिरण्मयौकृतौ । दानार्थमेत्र अतउपावर्ततेतिसवन्ध: ॥ १९ ॥ यदद्य । यत्कर्मअद्यअस्मिन्यवि सूरेउदिते उद्गतेअनागा: अनपराधोमित्र: सुवातिप्रसौति तत्कर्मप्रयादिति-

शेषः। एवमर्यमा सवितुर्भगस्य च वाक्यानि अविशेषात् ॥ २० ॥ आसुते। तृतीयःपादः प्रथ-
मं व्याख्यायते। यं सोमम् रसा नदीः सतेः शब्दकर्मणः। दधीत धारयति नद्युपकण्ठे हि सोमो-
जायते। वृषभं वर्षितारम् आसुते सिञ्चत आसिञ्चत ग्रहपात्रेषु चमसेषु सोमं हे ऋत्विजः। सुते अ-
भिषुते सति सोमे। कथंभूतम् श्रियम् श्रियोहेतुभूतम्। रोदस्योः अभिश्रियम् द्यावापृथिव्योः अधि-

अर्य्यमा ॥ सुवातिं सविताभगः ॥ २० ॥ आसुते सिंञ्चत श्रियुं रोदं
स्योरभिश्रियम् ॥ रसादधीत वृषभम् ॥ तम्प्रत्नथायं वेनः ॥ २१ ॥
आतिष्ठन्तम्परि ॥ आतिष्ठन्तम्परि विश्वेऽअभूषञ्छ्रियो वसान

गतश्रियम् ब्रह्माण्डव्यापिनी हि सोमश्रीः तम्प्रत्नथायं वेनः इति द्वे प्रतीके उक्ते ॥२१॥ आतिष्ठन्तम्।
त्रिष्टुप्। इन्द्रस्य आवहृष्टिकर्मोच्यते शोपान्ते मध्यमस्थाने आतिष्ठन्तम् इन्द्रम् पर्यभूषन् परिरचि-
तवन्तः विश्वे सर्वे देवा मध्यमका देवगणाः। श्रियो वसानश्चरति स्वरोचिः स तु मध्यमस्थानः सर्वेषां-
देवगणानां श्रियः आच्छादयन् स्वेच्छया चरति। स्वरोचिः अपराधीनदीप्तिः तृतीयःपादश्चतुर्था-

न्तेव्याख्यायते तच्छब्दयोगात् । अविश्वरूपो अमृतानितस्थौ । यत् आतस्थौविश्वरूपः इन्द्रः अमृतानि उदकानि उदकेषु पातयितव्येषु । महत् तत्वृत्रवधःवर्धितुः असुरस्यप्रज्ञानवतः नाम । नमनम्प्रह्वीभावः ॥ २२ ॥ प्रवः । त्रिष्टुप् । हैरण्यस्तूपः ॥ वैश्वदेवः ॥ ऋ । विश्वदेवाः ॥ प्र । प्राचत । वःयूयम् स्तुतीः । महे इन्द्रविशेषणमेतत् । महते । अन्धसःअन्नस्य दाने इतिवाक्यशेषः । मन्दमानायस्तूयमानाय मोदमाना-

प्रचरतिस्वरोचिः ॥ महत्तद्वृष्णोऽअसुरस्यनामाविश्वरूपोऽअमृतानितस्थौ ॥२२॥ प्रवः ॥ प्रवोमहेमन्दमानायान्धसोर्चाविश्वानरायविश्वाभुवे ॥ इन्द्रस्ययस्यसुमखꣳसहोमहिश्रवोनृम्णञ्चरोदसीसपर्य्यतः ॥ २३ ॥ बृहन्नित् ॥ बृहन्निदिध्मऽएषाम्भूरि

यवा । विश्वानरायसर्वभूताय । विश्वाभुवेसर्वव्यापिने किञ्च । इन्द्रस्ययस्य सुमखंसाधुयज्ञम् । सहःबलं च महिमहच्चश्रवः श्रवणीयञ्च यशः । नृम्णञ्चधनञ्च नृन्नमयतीतिनृम्णम् । रोदसीद्यावापृथिव्यौ सपर्यतः परिचर्यतः । तस्यचेन्द्रस्य प्राचतस्तुतीरित्यनुषङ्गः ॥ २३ ॥ बृहन्नित् । द्वेगायत्र्यौ अन्त्यःपादः प्रथमंव्याख्यायते यच्छब्दयोगात् । येषामिन्द्रो युवा सर्वकर्मसुदक्षः सखा । तेषा-

मेषां यजमानानाम् इहन्नित् मघामेवद्धम:भवति। महत्वञ्च साधनानां साधग्रोत्कर्षंकुर्वतांस्भवति। भूरिशस्तश्भवति। पृथुश्वस्त्ऱः भवति। यज्ञानांवा भूयोभूय: करणमेवाभिप्रेतस्यात् ॥ २४ ॥ इन्द्रेहि। हेइन्द्र आइहिश्चागच्छ। एत्यच मत्सिदयिंकुरु अन्धस:अधग्रानीयस्य सोमलक्षणस्यान्नस्य स्वेनांशेन। ततोपिविश्वेभि: सर्वै:सोमपर्वभि: सोमयागकालैर्निमित्तभूतै:। आ-

शुस्तऽपृथु॒ऽस्वरुं॑ ॥ येषामिन्द्रो॒युवासखा॑ ॥ २४ ॥ इन्द्रेहिं ॥ इन्द्रे॒हिमत्स्यन्धंसोविश्वे॑भिः सोमुपर्व्वे॑भिः ॥ महाँ२ ॥ ऽअभिष्टिरोजंसा ॥ २५ ॥ इन्द्रोवृत्रम् ॥ इन्द्रोवृत्रमंवृणोच्छर्द्धनीतिःप्रमायिनांम

इहि यद्वा सर्वसवनगतै: सोमांशुभि:निमित्तभूतै:। कस्मात्पुनस्त्वमेवमस्माभि: प्रार्थ्यसेइत्यत आह। यतोमहानसि अभिष्टिश्च। अभ्येषणशीलश्च शत्रूणामभियष्टव्योवा। ओजसाखकीयेन बलेन ॥ २५ ॥ इन्द्रोवृत्रम्। त्रिष्टुभीयइन्द्र: वृत्रं युद्धायआवृणोत्शर्द्धनीति:। शर्द्धइतिबलनाम। शर्द्धं चतुरङ्गबलेनीतिर्यस्यसतथोक्त:। प्रमायिनामभिनात्। यश्च मायिनांमायाविनां

प्रथमिनात् । मीड्हिंसायाम् । छिनत्सि । यश्चवर्पणीतिः । वर्पइतिरूपनाम । रूपसन्नद्धः स्वेच्छारूपविजृम्भकः । यश्च षहन् हन्ति । व्यसनिरससधिसवन्विनंमायिनम् । उग्रधक् । वश्र-कानामस्यक्षतसंप्रसारणस्यैतद्रूपम् । दहतेरुत्तरं क्षतमप्रभावस्य । अथकोर्थः शत्रुत्वंकामयमा-नान् दहतिवनेप्ववपिवर्तमान् । भाविधंनाअक्षणोद्रास्याणाम् । सइन्द्रः अविःप्रकटम् । धेनाः

मिनाह्वर्पणीतिः ॥ अहुन्व्यंसमुशधग्वनेष्वाविर्धेनाअकृणोद्रा म्याणाम् ॥ २६ ॥ कुतस्त्वम् ॥ कुतस्त्वमिन्द्रमाहिनःसन्नेकोया सिसत्पतेकिन्तइत्था ॥ सम्पृच्छसेसमराणः शुभानैर्वोचेस्तन्नोह

स्तुतीः इत्यंग न् भ्हन्ति इत्यमपरिमितं धनंददातीति । अवश्यं चरमयितव्यानांयायजूकाना-म् ॥ २६ ॥ कुतस्त्वम् । इन्द्रमरुत्संवादे मरुतामेतद्वाक्यम् । हेइन्द्र त्वम्कुतः कस्माद्धेतोः माहिनः महनीयः सर्वस्यपूज्यःसन् शत्रून् एकःअसहायः यासि । हेसत्पते । श्रुतिस्मृत्यनु-ष्ठानरतानां पालयितः । किन्तइत्थाकिस्य तेतवइत्थंभूतम्प्रयोजनमस्ति येनैकाकीयासि ।

संपृच्छसेसमराय: संगच्छमान: शुभानै: शोभनै:र्वचोभि: संपृच्छसेकतम:पन्थाइति हेहरिव: हरि-
वन्तत्करणं न:अस्माकं वोचे:ब्रूया: । यत्ते अस्मे । यतृच्याप्तत्तिकारणं तेतव अस्मे अस्मासुवर्त्ततइति॥
मर्ष्णा २ इन्द्रोयओजसा । कदाचनस्तरीरसि । कदाचनप्रयुच्छसि । इतितिस्र: प्रज्ञाता:प्रतीको-
क्ता: ॥ २७ ॥ आतत् । त्रिष्टुप् । आङुपसर्ग: पनन्तेत्याख्यातेनसंबध्यते । आपनन्त ।

रिवोयत्तेऽअस्मे ॥ मर्षा २ ॥ ऽइन्द्रोयऽओजसाकदाचनस्तरीरसि
कदाचनप्रयुच्छसि ॥ २७ ॥ आतत्तऽइन्द्रायव: पनन्ताभियऽऊर्व्वं
गोमन्तन्तितृत्सान् ॥ सकृत्स्वं येपुरुपुत्राम्महीं सहस्रधारांबृह

पनति.पूजाकर्मा पूजयन्ति वृत्रवधादिकम् तेतव संबन्धिकर्महेइन्द्र आयव: मनुष्या:यजमाना: ।
कथंभूताआयव: अभितितृत्सान् । तृत्सदतिहिंसाकर्मा । येअभितर्दितुं हिंसितुमिच्छन्ति । किमि-
त्यतआह । ऊर्व्वम् अन्नं सोमलक्षणम् । गोमन्तम् उदकवन्तम् । निगाभ्याभि: सोमोभिषू-
यते । येपिउदकवन्तं सोममभिषुण्वन्ति तेपिपूजयन्तीत्यर्थ: । किंच । सकृत्स्वम् । एकवारमे-

यप्रमुयतैयागोष्ठिरख्यधान्यादिभिः सासऋत्सूक्तांसक्तत्स्वम् । येयजमानाः । पुरुपुत्रांवहुपु-
त्राम्। सर्वेएवपदार्थाः पृथिवीतउत्पद्यन्ते । महींभूमिम् । सहस्रधाराम् । अनन्तभोगप्रदायि-
नीम् । वहुधाप्राणिजातं धारयन्तींवा । वृहतीमहतीम् । दुदुहन् दोग्धुमिच्छन्ति । भूमि-
दानं मश्वमेधयाजिनश्चोद्यते तदभिप्रायमेतत् । येच सोमाभिषवं कुर्वन्ति येचपृथिवींददति
तेत्वांपूजयन्ति नान्येदुर्मेधसइति ॥ २८ ॥ इमान्ते । हेइन्द्र इमांतेतवधियंस्तुतिंप्रभरेप्रहरामि

हुतीन्दुदुहन् ॥ २८ ॥ इमान्ते ॥ इमान्तेधियम्प्रभरेमहोमहीमस्य
स्तोत्रेधिषणायत्तऽआनजे ॥ तमुत्सवेचप्रसवेचसासहिमिन्द्रन्देवा

गमयामि । कथंभूतस्यते । महःमहतः । कथंभूतांधियम् । महीं महतीम् । अस्ययस्यस्तोत्रे-
धिषणावाक् । यत्तेयस्मात्तेतव स्वभूतान्गुणान् आनजे । अभिव्यनक्ति ऐन्द्रमेवयज्ञंप्रकाश-
यति । किञ्च । तमेवेन्द्रम् । उत्सवेचअभ्युदये प्रसवेचअभ्यनुज्ञायां विषयभूतायाम् । सास-
हिंगत्रूणामभिभवितारम् । देवासःदेवाअपि शवसामदन्नु । शवसावलेन अन्वमदन् अभिष्टु-

वन्ति । पूर्वोर्द्धेच:प्रत्यक्षकृत: उत्तरस्तुपरोक्षकृत: यतोवाक्यभेदेनव्याख्यानम् ॥ २९ ॥ विभ्राड्बृहत् । जगतीसूर्यस्तुति: द्वितीयेर्द्धनिगदव्याख्यापुरोरुच: । द्वितीयोर्द्धेच: प्रथमंव्याख्यायते यच्छब्दयोगात् । य.वातजूत: वातप्रेरित: वातोयम्यवोढेत्यभिप्राय: । अभिरक्षतित्मनात्मनैवजगत् । मन्त्रेष्वादेरात्मन इत्याकारलोप: । यश्चप्रजा.पुपोषपोषयतिशीतोष्णवर्षै: । यश्चपुरुधाविराजति । बहु-

सुऽश्रवंसामलुब्धनम् ॥ २९ ॥ [ १२ ] विभ्राड्बृहत् ॥ विभ्राड्बृहत्पिबतुसोम्यम्मध्वायुर्दधद्यज्ञपतावविंह्रुतम् ॥ वातजूतोयोऽअभिरक्षतित्मनाप्रजाऽ पुपोषपुरुधाविराजति ॥ ३० ॥ उदुत्यम् ॥ उदुत्यञ्जातवेदसन्देवंव्वहन्तिकेतव: ॥ दृशेविश्वायसूर्यम् ॥ ३१ ॥

धावदीप्यति गग्निविद्युन्नक्षत्रादिरूपै: । रुविभ्रट् विविधंभ्राजतेइतिविभ्राट्सूर्य. । बृहत्महन् पिबतुसोम्यंसोममयंमधु । किंकुर्वन् । आयु.जीवनम् दधत्स्थापयन् यज्ञपतौयजमाने । अविह्रुतम्अनवखण्डितम् । ह्वृकौटिल्ये । ऋत्यश्छन्दसीतिऋत्यादेश: । ३० ॥ उदुत्यमितिव्याख्यातम् ॥ ३१ ॥ येनापावक । हेगायत्र्यौसर्वे.धाम्नियीयते । तेनरूपेण । आत्मानंसंपा-

यचिमं यजमानोमोचंप्राप्नोति । तदिह्प्रार्थ्यते । येन हेपावकपावयितः । येनं चचसादर्शनेन । भुरण्यन्तञ्जनान् अनु । शकुनिःचिप्रपाती भुरण्युरित्यभिधीयते । सर्वमेधयाजिनोजनान् अनुभुरण्यन्तम् पचिरूपेणात्मानं संगाद्यचिमं गच्छन्तमित्यर्थः । त्वंहेवरुण सूर्यपश्यसि । तदोध्याहारेणवाक्यपरिपूर्त्तिः । येनजनान् अनु भुरण्यतः पश्येति ॥ ३२ ॥ दैव्यावध्वर्यू । हेदैव्यावध्वर्यू ।

वेनापावक ॥ येनापावकचचंसाभुरण्यन्तञ्जनाँ२ ॥ ऽअनु ॥ त्वंव्वरुणपश्यसि ॥ ३२ ॥ दैव्यावध्वर्यू ॥ दैव्यावध्वर्यूऽआगतꣳरथेनसूर्यत्वचा ॥ मध्वायज्ञꣳसमञ्जाथे ॥ तम्प्रत्नथायंव्वेनश्चित्रन्देवानाम् ॥ ३३ ॥ आनः ॥ आनऽइडाभिर्व्विदथेसुशस्तिव्विश्वा

यू आ रसातेतारौ इह आगतम आगच्छतम् आगमनंकुरुतम् । रथेनसूर्यत्वचा । सूर्यस्येवत्वक् यस्यसमूर्यत्वक् येनसूर्यत्वचा। मध्वामधुरयादनाहविषासोमपुरोडाशेनदध्यादिना । यज्ञंसमञ्जाथे समानितिसाधुरूपं समंजयन्तम् प्रभूतानिहवींषिकुरुत मित्यर्थः तंप्रत्नथायंवेनश्चित्रं देवानामितितिसः प्रतीकोक्ताः ॥ ३३ ॥ आनः । त्रिष्टुप् । द्वितीयोर्द्धर्चः प्रथमंव्याख्यायते यच्छब्दयोगात् । अपि

यथायेनप्रकारेण । हेदेवाः युवान.सर्वकर्मतमा अविपरिणामिनोवा: मत्सयमाद्यत्यथन: अस्माकंगृहे । विश्वंजगदुद्धरामइतिकृत्वा । अभिपित्वे अभिपतनकालेप्राप्ते । मनीपामनीपयेतिवि-भक्तिव्यत्यय: मनसइच्छया । अपितथा तेनप्रकारेण मादतयथेष्टम् । न.अस्माकं विद्धेयज्ञेइडाभि: करणभूतै:। सुशस्ति अविभक्तिकोनिर्देश.। सुशस्तिभिश्च शोभनै:शंसमैश्च करणभूतै:। विश्वानर: आ-

नेरंऽ सवितादेवऽएतु ॥ अपियथायुवानोमत्संथानोव्विश्वञ्जगदभि पित्वेमनीपा ॥ ३४ ॥ यदद्य ॥ कच्चंव्वृत्रहन्नुदगाऽअभिसूर्य्य ॥ सर्व्वन्तदिन्द्रतेव्वशे ॥ ३५ ॥ तरणिर्व्विश्वदर्शतः ॥ तरणिर्व्विश्वदर्श

एतुसविताच देव:आएतु ॥३४॥ यदद्य । हेगायत्र्यौ यत् अद्यकच्चकुत्रचित् यत् । हेवृत्रहन् वृत्रस्यपा-प्मन:शार्वरस्यतमसोहन्त:। त्वमुदगाअभि। अभ्युदगा: असुरदेपि हेसूर्य। तत्सर्वमेतत् हेइन्द्र ऐश्व-र्ययुक्ततेतव शेवर्तते । त्वमेवैक ईश्वरोनद्वितीयइत्यभिप्राय: ॥ ३५ ॥ तरणिर्विश्वदर्शत: यस्त्वंतरणिर सितूर्णंवर्तसे विश्वदर्शत: सर्वदर्शनीयश्चासि । ज्योतिष्कृत् ज्योतिषश्चकर्तासि हेसूर्य । तंत्वां-

प्रतितथाह्नम: त्वमेवनिखं सर्वम् आभासिदीपयसि । रोचनंदीप्तम् अग्निविद्युदग्रहतारकरूपन्त्व-
दीयमेवैकंज्योतिः सर्वंचाभातीत्यर्थः ॥ ३६ ॥ तत्सूर्यस्य । देवित्वभौ तदेवसूर्यस्य देवत्वम् । तच्च-
महित्वमहाभाग्यम् तत्किमित्यतआह । मद्धाकर्तोर्विततं मञ्जभार मध्यामध्येइत्यर्थः । कर्तोः
कर्मणइत्यर्थः । मधेयत्कर्मणांक्रियमाणानां देवासुरमनुष्यसंवन्धिनां विततंरश्मिजालं अहर्लंचषाम्
सञ्जभार । अयमेवसंहरते नान्यएतत्तनितुं शक्नोतिनचोपसंहर्तुमित्यभिप्रायः । किञ्च यदाइत्

तोज्योतिष्कृदसिसूर्य ॥ विश्वमाभासिरोचनम् ॥ ३६ ॥ तत्सू
र्यस्य ॥ देवत्वन्तन्महित्वम्मध्याकर्तोर्विततंसञ्जभार ॥ यदेदयु
क्तहरितः सधस्थादाद्रात्रीवासस्तनुतेसिमस्मै ॥३७ ॥ तन्मि

अयुक्त यदाप्रयुङ्क्तेआत्मनि आत्मसंस्थान्करोति हरितःहरितवर्णान् रश्मीन् । तेच्चस्तमनकाले
लोहितायन्ति सधस्थात्सहस्थानादाहृत्य पृथिव्यादिलोकत्रयं तेषांसहस्थानम् । ततहि तेनि-
पतन्ति । आद्रात्रीवासस्तनुते । आत्अथानन्तरम् रात्रीतमोमयंवासः तनुतेविस्तारयति । सिमस्मै-
सर्वस्मैजगति एकत्वादित्य सहितंज्योतिरेकत्वतम: आदित्यप्रभावा त्वभमतीत्यवसमभिप्राय: ॥३७।

तन्मित्रस्य। सूर्यं.तद्रूपंज्योतिः कृणुतेकुरुते द्योलोकस्य उपस्थेउत्सङ्गे। मित्रस्यवरुणस्याभिचक्षे अदर्शनाय । मित्रोहि सुकृतिनोगृह्णातिवरुणःदुःकृतिनोगृह्णाति एवमनेनप्रकारेण जगदनु- गृह्णातीत्यभिप्रायः। किञ्च अनन्तम् अपर्यन्तंकालतः देशतश्च । अन्यत्एकम् रुशत्शुक्लं जरामरणादिभिर्वियुक्तम्। विज्ञानघनमानन्दः अस्यसूर्यस्यपाजः। पाजइतिवलनामइहतुरूपमुच्यते

त्वस्य ॥ तन्मित्रस्यवरुणस्याभिचक्षेसूर्योरूपङ्कृणुतेद्योरुपस्थे ॥ अनन्तमन्यद्रुशदस्यपाजः कृष्णमन्यद्धरितःसम्भरन्ति ॥ ३८ ॥ बण्महाँ२॥ बण्महाँ२॥ ऽअसिसूर्यबडादित्यमहाँ२ ॥ऽअसि ॥

रूपम् अस्तीतिशेषः। तच्चाद्वैतलक्षणम् कृष्णंद्वैतलक्षणं अन्यत् अपरंरूपम् हरितःहरिणाइन्द्रिय- वृत्तयः संभरन्तिनिदानभूताभवन्ति ॥ ३८ ॥ बण्महान् । प्रगाथः द्वाभ्याम् पूर्वाबृहती उत्तरासतो बृहती। बट्सत्यम् महान्परब्रह्मअसिहेसूर्यरट्हेआदित्य तेजसा आदानादित्यः। महानसिकिञ्च महःमहतःतेतवसतः महिमासद्भाग्यं सर्वेषुदेवेष्ववस्थितम् । पनस्यतेपूज्यते सर्वैःप्राणिभिः ।

अद्धासत्यं हेदेवदानादिगणयुक्त महान् असि। अभ्यासेभूयांसमर्थंमन्यन्ते यथाअहोदर्शनीयाहो दर्शनीयाइति ॥ ३९ ॥ बट्सूर्य। बट्सत्वम् हेसूर्यंअवसाय्यवर्णीयेन अनेनमहानसि। सत्रासत्यम् हे देवमहानसि। किञ्च मन्हाव्हकोयेन महत्वेन त्वमेवदेवानां मध्येअसुर्यः। असवःप्राणाः संतियेषांते असुराः तेभ्योहितः असुर्यः उपगवादित्वाद्यत् प्राणिभ्योहितइत्यर्थः।

महस्तेसुतोमहिमापनस्यतेद्धादेवमहार॥ असि ॥ ३९ ॥ बट्सूर्यश्रवसामहार॥ ऽअसिसत्वादेवमहार॥ ऽअसि ॥ मह्नादेवानामसुर्य्यः पुरोहितोविभुज्ज्योतिरदाभ्यम् ॥ ४० ॥ श्रायन्तऽइवसूर्य्यम् ॥ श्रायन्तऽइवसूर्य्यंविश्वेदिन्द्रस्यभक्षत ॥ व्वसूनि

पुरोहितश्च पुरएनन्धाति सर्वेषुकार्येष्वितिपुरोहितः। किञ्च विभुर्व्यापि। ज्योतिः विज्ञानघनानन्दम् अदाभ्यम्अनुपहिंसितम् ॥ ४० ॥ श्रायंतइव। बृहती। यथाश्रायन्त आश्रिताः सूर्यरश्मयः विश्वानि धनानिदृदिति निपातःपादपूरणार्थः। इन्द्रस्यसंबन्धीनि इन्द्रानुज्ञातानि। भक्षत-

आख्यातमेतत् अनुदात्तत्वात् विभक्तंते विभजंते एवं वचमपि समाथिताः मूर्यविश्वानीन्द्रसाधनानि विभजाम:। किञ्च वसूनि धनानि जाते पौत्रादौ जनमाने जनिष्यमाणे च भविष्यत्कालविषये। श्रोजसा बलेन ज्ञानकर्मसमुच्चकारितया। प्रतिपुरुषम् भागन्नभागमिव दीधिम। निधीमश्विघापयाम दधाते रेतद्रूपं नउच्यायते रथं पौष्कल्यात्॥ ४१॥ अद्यादेवा:। द्वे त्रिष्टुभौ अद्या-

जातेजनंमानुऽओजंसाप्रतिंभागन्नदीधि ॥ ४१ ॥ अद्यादेवाः ॥ *

अद्यादेवाऽउदितासूर्यस्युनिरंहसः पिपृतानिरंवद्यात् ॥ तन्नो

मित्रोव्वरुणोमामहन्तामदितिः सिन्धुः पृथिवीऽउतद्यौः ॥४२॥

स्मिन्नहनि हे देवा: रश्मय:उदयकाले सूर्यस्य। निरंहस:पिपृत निष्पिपृत निर्मुचत अंहस:पापात्पकाशात्। अहंतिघ्नांहस्तांऽस्त्वहीतनिगूढोपधादिपरीतात्। निरवद्यात् निष्पिपृतच निर्मुञ्च च अवद्यात् अवदनीयात्। येनदुर्यशोभवति तदवद्यम्। तदेतदुच्यमानम् न:अस्माकम् मित्रावरुणःमामहन्ताःपूजयंतु अदिति:सिन्धुःनदी। पृथिवीउतअपिचद्यौः ॥ ४२ ॥ आकृष्णेन।



* अद्यादेवा इत्यस्य अदृश्यतठं॰ इकारचकारभजतश्चो मध्येदेवेषु। अस्यार्थः अवेत्यय ऋक्षस्ताकारादिषु परेषुदीर्घमापद्यते इति दीर्घ. प्राति॰ अ॰ ३। सू॰ ११५॥

आवर्तमानः पुनःपुनर्भ्रमणंकुर्वन् । कृष्णेनरजसा रात्रिलक्षणेनसह । निवेशयन् स्वेषुस्वेषुप्रदे-
शेषुस्थापयन् अमृतंदेवादिकम् मर्त्यंचमनुष्यादिकंच । हिरण्ययेनहिरण्मयेन सवितारथेन ।
आदेवोयाति आयाति देवः दानादिगुणयुक्तः । भुवनानिभूतजातानिपश्यन् कानिकानिसा-
धुकुर्वन्ति कानिकानिवा असाध्विति । स्वरूपानुवादः ॥ ४२ ॥ प्रवाहजे । त्रिष्टुप् । वैश्व-
देवस्तुतिः चतुर्थेऽहनि सर्वमेधेवैश्वदेव्यः पुरोरुचः । प्रवाहजे प्रहन्यते प्रच्छिद्यते । सुप्रयाः

आकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतम्मर्त्यंच ॥
हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ ४२ ॥ [ १ ]
प्रवाहजे ॥ सुप्रयाबर्हिरेषामाविश्पतीवबीरिटइयाते ॥ विशा

सुप्रयाणं सुगमनम् बर्हिः एषाम् येषामितिसर्वनामव्यत्ययः । येषांयजमानानाम् । आइ-
याते आगच्छतम् अश्विनौ । कथमिव । विश्पतीइव । सर्वप्रापतीइव बीरिटशब्दोगणवचनः ।
यथाविशांमनुष्याणां पतीराजानौ विशांमनुष्याणां गणे अवस्थितौ कस्मिन्काले । अक्तोः रात्र्याः
अवसाने । उषसःआगमनकाले । पूर्वहूतौपूर्वस्मिन् आह्वानकाले । किञ्च वायुः नियु-

त्वान् न्यश्ववान् । पूषाच स्वस्तयेऽस्त्वयनाय अविनाशोयआह्याते ॥ ४४ ॥ इन्द्रवायू-
वृहस्पतिम् । तिस्रोगायत्रः । इन्द्रवायूवृहस्पतिम् । मित्रामित्रमितिप्राप्ते, आकारः । मित्रम्
अग्निम् पूषणम्भगम् । आदित्यान्मारुतंच गणम् आह्वयामीतिशेषः ॥ ४५ ॥ वरुणः प्रा-

सुवत्तोऽउपस्तुः पूर्व्वहूंतौवायुःपूषास्वुस्तयेनियुत्त्वांन् ॥ ४४ ॥ इन्द्रवा
यूवृहस्पतिम् ॥ इन्द्रवायूवृहस्पतिंम्मित्राग्निम्पूषणम्भगंम् ॥ आ
दित्त्यान्मारुंतङ्गणम् ॥ ४५ ॥ वरुणः प्राविता ॥ भुवन्मित्त्रो
विश्वाभिरुतिभिंः ॥ करंतान्नः सुराधंसः ॥ ४६ ॥ अधिनः ॥
अधिंनऽइन्द्रैषांविष्णोंसजात्त्यानाम् ॥ इतामरुंतोऽअश्विनां ॥

विता । वरुणःप्राविता प्रकर्षेणअवितारक्षकः भुवन्भवतु । मित्रश्च । विश्वाभिःसर्वाभिः
ऊतिभिः अवनैःपालनैः । किञ्च करतामकुरुतांच नःअस्मान् सुराधसःशोभनधनान् ॥ ४६ ॥
अधिनः । अधि इत् अधयागच्छतिनोस्माकम् एषांचसजात्यानाम्त्विजाम् । हेइन्द्र हेवि-

पाोहेमरुतः हेअश्विनौ । अयमतीजोता: । तम्मलया । अयवेनः । येदेवासः । आनडू-
डाभिः । विश्वेभि.सोम्यंमधु ओ मासश्चर्षणीधृतः ॥ ४७ ॥ अग्नइन्द्र । त्रिष्टुप् । हेअग्ने-
हेनद्र हेमित्रहेदेवाः । शर्द्धःवलं संगृह्य । प्रयन्तमगच्छत । सोमिनोगृहं सोमंपातुम् । हेमा-

तम्प्रत्नथायंव्वेनोयेदेवासऽआनऽइडाभिर्व्विश्वेभिः सोम्यम्मद्
ध्वोमासश्चर्षणीधृतः ॥ ४७ ॥ अग्नऽइन्द्र ॥ व्वरुणमित्र देवाः
शर्द्धःप्प्रयन्तमारुतोतव्विष्णो ॥ उभानासत्त्यारुद्रोऽअधग्नाः
पूषाभगः सरस्वतीजुषन्त ॥ ४८ ॥ इन्द्राग्नीमित्त्रावरुणा ॥
इन्द्राग्नीमित्त्रावरुणादितिःस्वः पृथिवीन्द्यास्मरुतः पर्व्वतान् ॥

रुतगण उत अपिहेविष्णो । मत्वचक्रतोयमर्द्धचः । द्वितीयस्तु परोक्षकृतः वाक्यभेदात् । उभा-
नासत्या उभौनासत्यौरुद्रःअधग्ना.देवपत्न्य. पूषाभगः सरस्वतीच जुषन्तसेवन्त यज्ञंसोमपाना-
य ॥ ४८ ॥ इन्द्राग्नीमित्रावरुणा । जगती । इन्द्राग्नीचमित्रावरुणौच अदितिःस्वःआदि-

त्वंच पृथिवींच द्यांच्च मरुतश्चपर्वतांश्च अपश्च । हुवे आह्वयामि । विष्णुञ्च पूषणंच ब्रह्मण-स्पतिञ्च नुविप्रम् शंसंशंसितव्यं सवितारञ्च हुवे । ऊतयेअवनाय ॥ ४९ ॥ अस्मेरुद्राः । त्रिष्टु-भःपञ्च अस्मेअस्माकंरुद्राः मेहनाःसेचनाः यद्वा मंहनीयाः पूजनीयाः पर्वतासःपर्वताश्च वृत्र-हत्येच वृत्रवधेभरहूतौ संग्रामाह्वानेच सजोषाः समानजोषणाः समानप्रीतयः एकाभिप्रायाः

अपः ॥ हुवेव्विष्णुम्पूषणुम्ब्रह्मणुस्पतिम्भगन्नुशᳬसᳬसवितारमू तये ॥ ४९ ॥ अस्मेरुद्राः ॥ अस्मेरुद्रामेहनापर्व्वतासोव्वृत्रहत्येभरहूतौसुजोषाः ॥ यःशᳬसंतेस्तुवतेधायिपज्र्रऽइन्द्रज्ज्येष्ठाऽअस्माँ२ ॥ अवन्तुदेवाः ॥ ५० ॥ अर्व्वाञ्चोऽअद्य ॥ अर्व्वाञ्चोऽअद्याभवतायजत्रा ।

भवन्त्वितिशेषः । यःशंसतेशस्त्राणि स्तुवतेस्तोत्राणि धायिदधाति हवींषि । पज्रःप्रा-र्जितधनःसन्तस्मैचरुद्रा सजोषाभवन्तु । किञ्च इन्द्रज्येष्ठाः इन्द्रोज्येष्ठोयेषांतेतथोक्ताः अस्मान् अवन्तुपालयन्तु देवाः ॥ ५० ॥ अर्वाञ्चोअद्य । अर्वाग्गमनाः अद्यभवत हेयजत्राः हेयजनीयाः यिञ्च भावोहार्दिंभयमानोव्ययेयम् । आव्ययेयम् व्ययतिर्गत्यर्थः आगमेयम् अभिमुखमापादयेयम्

व.युष्माकं हार्दिहृदयम् भयमानः बिभ्यत्। बिभेतेर्विकरणव्यत्ययेनशानचिशप्। यतएवमतो-
ब्रवीमि वाइंपालयत नःअस्मान् हेदेवाः निजुरः नितरांयोभक्षित जरयतिसनिजूः वुभुचि-
तादित्वः वकस्ववकादिति विभक्तिव्यत्ययः। वाद्वन्चकर्तात् कूपात्। अवपदः अवाचीनानिय-

ऽआवोहार्दिभयमानोव्व्ययेयम् ॥ त्रार्ध्वन्नोदेवानिजुरोवृकस्यत्रा
द्ध्वंद्धुर्त्तादवपदोयजत्राः ॥ ५१ ॥ व्विश्वेऽअद्य ॥ मुरुतोव्विश्वऽऊ
तीव्विश्वेभवन्त्वग्नयुःसमिद्धाः ॥ व्विश्वेनोदेवाऽअवुसागमन्तुव्वि
श्वमस्तुद्रविणंव्वाजोऽअस्मे ॥ ५२ ॥ व्विश्वेदेवाः ॥ शृणुतेमंहवं
म्मेयेऽअन्तरिक्षेयऽउपद्यविष्ठ ॥ येऽअग्निजिह्वाऽउतवायजत्राऽआ

त्पपादानि सतयोक्त. तस्मात्सोपाने यंत्रोत्तरितुं नशकतेइत्यर्थः। हेयजत्रा यष्टव्याः ॥ ५१ ॥
विश्वेअद्यइतिव्याख्यातम् ॥ ५२ ॥ विश्वेदेवाः। हेविश्वेदेवा.शृणुतइमंहवम्आह्वानंममम। येअ-
न्तरिक्षेस्थभवथ। येचउपद्यविद्युलोकेसभवथ। येचअग्निजिह्वाअग्निमुखाः। उतवाअपिचयजत्रा-

यष्व्याः श्रुत्वाचयाह्वानमासद्यास्मिन्वर्हिषिमादयध्वमत्प्यध्वम् ॥ ५३ ॥ देवेभ्योहि । यस्माद्देवेभ्यः प्रथमंयज्ञियेभ्यः यज्ञार्हेभ्यःअमृतत्वं सुवसिअभ्यनुजानासि भागमुत्तमंसुवसि आत् इत् अथानन्तरमेवदामानम् दातारमुत्पत्तिस्थितिलयानाम् स्वकीयंरश्मिजालम् हेसवितः व्यूर्णुषे विहणोषि विस्तारयसि । रश्मीनामुद्गमेहि विप्रोऽर्पितमनसाग्निहोत्रादीनिकर्मा-

सद्यास्मिन्बर्हिषिमादयध्वम् ॥ ५३ ॥ देवेभ्योहि ॥ प्प्रथमंयज्ञियेभ्योमृतत्वंसुवसिभागमुत्तमम् ॥ आदिद्दामानंसवितर्व्यूर्णुषेनूचीनाजीवितामानुषेभ्यः ॥ ५४ ॥ [११] प्रवायुम् ॥ प्रवायुम

णिपुर्वीत । किञ्च अनूचीनाअन्वञ्चितानि तदनुगतानि जीविताजीवितानि जीवनहेतूनिकर्माणि मानुषेभ्यः ददासितस्मात् त्वामेवस्तुम इतिवाक्यशेषः ॥ ५४ ॥ समाप्तंसवर्मेधकर्म । इदानीमयोनुवाकाः पुरोरुचामनारभ्याधीताः व्याख्येयाः । आदित्यस्यवा याज्ञवल्क्यस्यवा आर्षमापित्र्मेधात् । प्रवायुम् त्रिष्टुप् । चतुर्थःपूर्वंव्याख्यायते वाक्यवशात् । हेप्रय-

ज्योप्रकर्षेण यजनशील अध्वर्यो यस्त्वं कवि.क्रान्तदर्शन वायुमच्छ आभिमुख्येन प्रद्वयच-सिप्रकर्षेण यष्टुमिच्छसि। यजतेरेतद्रूपम् बृहतीमनीषा बृहत्यामनीषया। किंभूतं वायुम्। इष्टद्रयिम् महाधनम। विश्ववारं सर्वस्ववरणीयम् रथप्रां रथपूरणम् शत्रुधनैरसौरथंपूरयति। द्युतद्यामा द्योतनंयमनं यस्य सतथोक्त.। द्युतद्यामानमिति विभक्तिव्यत्ययः वायुविशेषणत्वात्।

च्छा॑बृहतीम॑नीषा बृ॒हद्र॑यिंविश्ववा॑रꣳरथ॒प्राम्॥ द्युतद्या॑मानि॒युतः॑ पत्य॑मानःक॒विः क॒विमि॑यक्षसिप्रयज्यो॥ ५५॥ इन्द्र॑वायूइ॒मे॥ सु॒ताऽउप॒प्रयो॑भि॒रागत॑म्॥ इन्द॑वोवामु॒शन्ति॒हि॥ ५६॥ मि॒त्रꣳहु॑वे॥ पू॒तद॑क्षं॒वरु॑णञ्चरि॒शाद॑सम्॥ धियं॑घृ॒ताची॒ꣳसाध॑न्ता॥ ५७॥

नियुत.पत्यमानः अत्रापिपत्यमानमिति पदयोर्विकारोवाक्यवशात् नियुद्भिरश्वैरुत्पतन्तम् कविंक्रान्तदर्शनम् ॥ ५५॥ इन्द्रवायूइमे व्याख्यातम् ॥ ५६॥ मित्रꣳहुवे। द्वे गायत्र्यौ मित्रमाह्वयामि पूतदक्षम् पूतस्यशुद्धस्य प्राणिनउद्धरणेदक्षं सोमम्। वरुणञ्च रिशादसम् हिंसकादिविनाशने शक्तिङ्कुर्वाणम् हुवे। कीदृशो। धियंकर्मघृताचीम् येनकर्मणाघृतमच्यते इयतेतत्कर्मसाधन्ता-

साधयन्तौ। नहिदेवतामन्तरेणकर्मसिद्धिः ॥ ५७ ॥ दस्त्रायुवाकवः। द्वयोरश्विनो रेकस्यदस्त्रइति-
नाम अपरस्यनासत्यइति। तत्रायंविभक्त्यर्थे आकारोविरूपैकशेषेवर्तते। सुपांसुलुकोरितिच
पर्वनिर्देशयति। हेदस्त्रौ दर्शनीयौ हेनासत्यौ नअसत्यौ सत्यावेवनभ्रान्नपादितिप्रकृतिभावः।
युवाकवः युवांकामयमानः अहमहमेकया मांपिबतं मांपिबतमिति सुताअभिषुताः वृक्तब-
र्हिषः प्रस्तीर्णबर्हिषः। यतःअतोब्रवीमि आयातम्आगच्छतम् हेरुद्रवर्तनी। रुद्रस्येववर्तनि-

दस्त्रायुवाकवः॥ सुतानासंत्त्याव्वृक्तबर्हिषः॥ आयातꣳरुद्रवर्तनी॥
तम्प्रत्क्नथायंव्वेनः॥ ५८॥ व्विदद्यदिं॥ व्विदद्यदीसरमारुग्णमद्द्रे
र्म्महिपाथःपूर्व्यꣳसध्र्यक्कः॥ अग्ग्रन्नयत्सुपद्यक्षराणामच्छारवम्प्रथमा

र्ययोस्तौ तयोक्तौ रुद्रपत्न्यानौ। तम्प्रत्नथायंवेन इतिप्रतीकोक्तौ ॥ ५८ ॥ आग्रयणंगृह्णाति।
विदद्यदि विष्टुप। इहवाक्प्रकटीभवेतिसोच्यते विदत्जानीयात् यदि। सरमावाक् त्रयील-
क्षणा। साहिअभिपवे समानंरमते। रुग्णंचूर्णीकृतम् अद्रेःसोमाभिषवस्यकर्तुः। अद्रिभिर्ह्यसो-
मोभिषूयते। महिमहत् पाथःसोमलक्षणमन्नम् पूर्व्यम् उपांश्वन्तर्यामैन्द्रवायवादिपुगृहीतम्।

सध्र्यक्समानाञ्चनम् सहस्यसधि. अञ्चतेरुत्तरम् । क.कुर्यात् । किञ्च अग्रन्नयत् यत्राग्रन्नयत्ति-सामाय:। सुपदीशोभनानिपदानि यस्यावाच.सातथोक्ता । नहिपदानिमत्याख्यायवाक्यंस्यात् । अचराणामकारादीनां रवशब्दंजानती प्रथमाअच्छआभिमुख्येनअगात् । गच्छति एवमधियज्ञंमन्त्रो-व्याख्यायते । वह्वृचान्तुसंवादसूक्तम् । तत्रसरमादेवसुना इन्द्रेणप्रेषितान्वेषणार्थम् गोधनेपणिभिर-सुरैर्हृते तदभिप्रायेणव्याख्यायते । तत्रासुराणांपर्य्यालोचनवाक्यम् । विदद्यदिविदत्अलभत् यदा-सरमादेवसुनी । रुग्णंभग्न गवांसवन्धिभि:खुरै: । अद्रे:पर्वतस्यद्वारम् । अथानन्तरं महिमहत्

# जानतीगात् ॥ ५८ ॥ नहिस्पशम् ॥ नहिस्पशमविदन्नन्यमस्मा द्वैश्वानरात्पुरएतारमग्नेः ॥ एमेनमवृधन्नमृताऽअमर्त्यंवैश्वानर

गोजयणाय अग्रम । पूर्व्वमपूर्वेषुकालेषु अपहृतम् । सध्र्यक् देवान्प्रतिसहाञ्चनम् क.करोते: रूपङकरिष्यति । अग्रम् गवामग्रमवस्थायनयत् नेष्यति । सुपदी शोभनपादयुक्ता पदेनयान्वे-षयतिनष्टंसैवमुच्यते । अचराणामक्षरीयवा वाक्यसंवन्धिनाम् अच्छअभिरवमुच्चारणम् प्रथ-माजानती अगात्आगमिष्यति ॥ ५८ ॥ नहिस्पशम् । त्रिष्टुप् । नहिशब्द.प्रतिषेधवचन: स्पश-स्पश.प्रणिधिरुच्यते । अविदन्अन्यमस्मात्वैश्वानरादग्ने: । पुरएतारम् सर्वेषुकार्येषु अग्रग-न्तारञ्चनहिअविदन् । आईमद्दीनिपातौ अथशब्दस्यार्थेवर्तेते अथएनं वैश्वानरम्अवृधन् वर्द्धि-

तवन्तः यस्ता अमरणधर्माणोदेवाः अमर्त्यम्अमरण धर्माणंवैश्वानरम् । चैत्रजित्याय यजमानस्यदेवयजनचैत्रजयनिमित्तम् ॥ ६० ॥ उग्राविघनिना । हेगायत्र्यौ उग्राउग्रौउद्गूर्णौ । विघनिना हन्तेर्घत्वम् विहन्तारौमृधः संग्रामसंग्रामकारिणांवा । इन्द्राग्नीहवामहे आह्वयामः । तौचआहूतौ नःअस्मान् मृडातःमृडयतःसुखयतः ईदृशेकर्मणि ॥ ६१ ॥ उपास्मै । उपगायत हेनरः ऋत्विजः

ड्क्षैत्रंजित्यायदेवाः ॥ ६० ॥ उग्राविघनिना ॥ उग्राविघनिनामृधऽइन्द्राग्नीहवामहे ॥ तानोमृडातऽईदृशे ॥ ६१ ॥ उपास्मै ॥ गायतानरःपवमानायेन्दवे ॥ अभिदेवाँ२ ॥ ऽइयक्षते ॥ ६२ ॥ येत्वा ॥ हिहत्येमघवन्नवर्द्धन्येशाम्बरेहरिवोयेगविष्टौ ॥ येत्वानूनमनुमद

अस्मैपवमानाय । दशापवित्राद्द्रोणकलशम्प्रतिगच्छते । इन्दवेसोमाय अभिदेवयक्षते यष्टुमिच्छते सनियकारलोपः । देवान् ॥ ६२ ॥ येत्वा । हेत्रिष्टुभौ येमरुतः त्वाम् अहिहत्ये अहिरसुरः । अहिवधेकर्तव्ये हेमघवन् अवर्द्धन्वर्द्धितवन्तः । येचशांवरे वधेकर्तव्ये हेहरिवन् । येचगविष्टौ गवामपामेषणायोपस्थितं सन्तं त्वामवर्द्धन् । येचत्वा त्वाम् नूनंनिश्चयेन अनुमदन्ति उत्कर्पयन्ति

तर्प्पयन्त्विना । विप्रामेधाविनः पिव हेइन्द्र सोमम् सगणःसमानगणः तैःमरुद्भिः ॥ ६३ ॥
जनिष्ठाउग्रः । जात.उग्रः उद्गूर्णः । सहसेवलाय तुरायत्वरणाय । वचनविशेषणम् । मन्द्रःमन्द-नीयः ओजिष्ठःअतिशयेन ओजसायुक्तः । वहुलाभिमानः अचिन्त्याभिमानः वहुप्रकाराभिमानोवा । अभिमानःज्ञानम् यत्तस्मात् । अवर्द्धन्अवर्द्धयन् इन्द्रंमरुतश्चित् मरुतोपि अत्रपरमपदेस्थितम् ।

न्त्विप्राः पिबेन्द्रसोमं सगणोमरुद्भिः ॥ ६३ ॥ जनिष्ठाऽउग्रः ॥
सहसेतुरायमन्द्रऽओजिष्ठोबहुलाभिमानः ॥ अवर्द्धन्निन्द्रम्मरुतश्चित्
दत्रमाताय्यद्वीरन्दधनद्धनिष्ठा ॥ ६४ ॥ आतू ॥ आतूनऽइन्द्रवृत्र
हन्नस्माकमर्द्धमागहि ॥ महान्महीभिरूतिभिः ॥६५॥ त्वमिन्द्र ॥

माता अदितिः यत्यस्मात् वीरन्त । दधनन् दधातेरेतद्रूपम् नकारउपजनः धारितवती । धनिष्ठा अतिशयेनधन्या धनवतीतस्माच्च मरुतःअवर्द्धन्नितिसवन्धः ॥ ६४ ॥ आतूनः । आ तू नः इति त्रयोनिपाताः छन्दःपरिपूर्तिकराः । हेइन्द्र हेवृत्रहन् वृत्रस्यहन्तः । अस्माकमर्द्धम् अस्म-दीयंपक्षम् आगहिआगच्छ । एत्यच अस्मान्पालयेतिशेषः । महान्सन् महीभिर्महतीभिः ऊतिभिरवनैःपालनैः ॥ ६५ ॥ त्वमिन्द्र । वृहती । त्वमेव हेइन्द्र । प्रतूर्तिषुप्रतरणेषु शत्रुप्

निमित्तभूतेषु । अभिविश्वाअसि । अभ्यसि अभिभवसिविश्वा:सर्वाः स्पृधःसंग्रामान् किञ्च अशस्तिहा अभेरादिशेषः । अभिशस्तिहा । जनयिताच सुखानाम् । विश्वतूः सर्वतूरणश्चासि अतोब्रवीमि । त्वमेवतुर्य्य जहिमारय । तरुष्यतः हनिष्यतः शत्रून् ॥ ६६ ॥ अनुते । सतोबृहती । चतुर्थःपादःप्रथमंव्याख्यायतेयच्छब्दयोगात् । हेइन्द्रयत् यस्मात्कारणात्

त्वमिन्द्रप्प्रतूर्त्तिष्वभिविश्श्वाऽअसिस्पृधः॥ अशस्तिहाजनिताव्विश्श्वतूरसित्त्वन्तूर्य्यतरुष्यतः॥६६॥ अनुते॥ अनुतेशुष्म्मन्तुरयन्तमीयतुःक्क्षोणीशिशुन्नमातरा॥ व्विश्श्वास्तेस्पृधःश्नथयन्तमन्न्यवेव्वृत्त्रंयदिन्द्रतूर्व्वसि॥६७॥ यज्ञोदेवानाम्॥ यज्ज्ञोदेवानाम्प्प्रत्त्येतिसुम्म्नमा

वृत्रमसुरंतूर्वसि । तूर्वतिर्हिंसाकर्माहिंसि । अतःकारणात् । अनुते शुष्मं तुरयन्तमीयतुः । अन्वीयतुः अनुजग्मतुः अनुगतवत्यौत्वामेव । तेतवशुष्मं बलम् किंकुर्वाणम्तुरयन्तम् तूर्णंगच्छन्तम् । क्षोणी क्षोण्यौ द्यावापृथिव्यौ । शिशुं नशिशुमिवपुत्रमिव । मातरामातापितरौ विरूपैकशेषः । किंचविश्वाः सर्वाःस्पृधः संग्रामाः तेतवमन्यवे मन्योःभयात् श्नथयन्तिविगो यन्ति । याहित्वं हन्ति यस्यचद्यावापृथिव्यौ बलमीयतुः ॥ ६७ ॥ यज्ञोदेवानामि-

तिश्याख्यातम् ॥९८॥ अदब्धेभिः सवितः । जगती । हेसवितः अदब्धेभिःअनुपहिंसितैः पायुभिःपालनैः त्वम् शिवेभिःशान्तैः अद्यपरिपाहि परिपालय नोस्माकम् गयंगृहम् हिरण्यजिह्वः सत्यवाक् भूत्वा । सुवितायसुप्रसूताय कर्मणे नव्यसेनवतराय । भवेतिवाक्यशेषः । रक्षचसर्वथा । माकिः माकश्चन नोस्माकम् अघशंसः अघंपापं यःशंसति सअघशंसः । ईशतईष्टा ईशिताभवदित्यर्थः ॥

दित्यासोभवताम्भृडयन्तः ॥ आवोर्व्वाचीसुमतिर्व्ववृत्याद्ꣳहोश्चिद्या वरिवोवित्तरासत् ॥ ९८ ॥ अदब्धेभिःसवितः ॥ पायुभिष्ट्ठꣳशिवेभिरद्यपरिपाहिनोगयम् ॥ हिरण्यजिह्वःसुवितायनव्यसेरक्षामाकिर्न्नोऽअघशꣳसऽईशत ॥ ९९ ॥ [ १५ ] प्रवीरया ॥ शुचयोद्दहिरेवामत ॥ ९९ ॥ प्रवीरया । अन्यःपुरोरुगगणः । त्रिष्टुप् । प्रवीरयावहुवचनस्ययास्यादेशः । प्रशस्तवीराः सोमाःशुचयः स्वभावादेवशुद्धाः । दद्दरेहविदारणे । विदीर्णाःकणीभूताः । वांयुवयोः मंत्रस्विनः । हेयजमानौ जायापती । कथंदद्दरेइतिचेत् । वाम्अध्वर्युभिः मधुमन्तः

उदकवन्तःसुतासः अभिषुताःग्रावभिः। एवमनेनार्द्धर्चेन यजमानोसंबोध्यं अथेदानींसंबोधयति वायुम्। वहवायोनियुतः। वहप्रापयहेवायो नियुद्गणकानश्वान्। याहिच अच्छसोममभि। सोमंवाप्राप्तुम्। पिवचसुतस्याभिषुतस्य अन्धसःसोमस्य। मदोयत्क्षये मदजननार्थंवा ॥ ७० ॥ गावउपेति व्याख्यातम् ॥ ७१ ॥ काव्ययोराजानेषु। गायत्री। काव्ययोः कवीनांहितयोः।

दृध्वद्भिर्म्मधुमन्तःसुतासः। वहंवायोनियुतोयाह्यच्छा*पिवासु
तस्यान्धसोमदाय ॥७०॥ गावउप ॥ गावउपावतावतम्महीयज्ञस्य
रप्सुदा ॥ उभाकर्णाहिरण्यया ॥७१॥ काव्ययोराजानेषु ॥ काव्य
योराजानेषुक्रत्वादक्षस्यदुरोणे ॥ रिशादसासधस्थआ ॥७२॥ दैव्या

धानानेषु आजन्मभूमिषु उत्पत्तिस्थानेषु। क्रत्वा कर्मणाअग्निष्टोमादिकयाक्रियया। दक्षस्यउत्साहवतोयजमानस्य दुरोणेयज्ञगृहे। रिशादसा। रेसितव्यस्योपलक्षयितारौ। सधस्थआ। सहस्थाने आगच्छतं हेमित्रावरुणाविति शेषः ॥ ७२ ॥ दैव्यावध्वर्यू व्याख्यातम् तंप्रत्नथा

* पिवासोममभियासुतस्यन्धासयोभुवो इत्यादि सूत्रेण पिवासुतस्येत्यत्र दीर्घोनिपात्यते प्रा० अ० ३। सू० ॥ १३० ॥

थयंवेन इतिद्द्रप्रतीकोक्तेः ॥ ७२ ॥ तिरश्चीनोविततः । त्रिष्टुप् । आग्रयणीनया गृह्यते तदभिप्रायेण प्रधार्य्यंते आधवनीयादुन्नेतानि गृह्यास्तासिंचति ताःपवित्रे यजमानः ततो- गृह्णगृह्णणम् । तिरश्चीनोविततोरश्मिरेषाम् एषांसोमानाम् अन्तरादशापवित्रलक्षणात् । रश्मिः तिरश्चीनः विततःप्रसारितः । उद्गातृभिः तस्मिन्दशापवित्रे सोमःप्रक्षिप्तःदशापवित्रात् अधः

वदूवत्यं ॥ दैव्यांवदूत्वत्यूँऽआगंत॑रथेनसूर्यत्वचा ॥ मदूवा युज्ञ॑समंञाथे ॥ तम्प्रत्नथायंवेनः ॥ ७३ ॥ तिरश्चीनोवि तंतः ॥ तिरश्चीनोवितंतोरश्मिरेषामधः स्विदासी ३ दुपरि स्विदासी ३ त् ॥ रेतोधाऽआसन्महिमानंऽआसन्त्स्वधाऽअवस्ता

स्वित् अधश्चआसीत् उपरिस्वित् उपरिचआसीत् आसीदित्युभयत्रविचारेप्लुतिः । किञ्च रेतोधाआसन् । रेतःसोमः सहिजगदुत्पत्तिबीजम् । तस्यधारयितारआसन् गृहचमसाधवनी- यद्रोणकलशादयः । महिमानश्चआसन् । सोमैकादशाः सोमस्यमहिमानः । किञ्च । स्वधा- अवस्तात् स्वधाअन्नम्अवस्तात् । शुक्रोद्रोणकलश इत्येतदुक्तंभवति । प्रयतिःपरस्तात् प्रयतन-

म्रयतिः परस्तादुपरिष्टात् । आधवनीयादुन्नेतानिगृभ्यास्वासिञ्चति ताःपवित्रे यजमानोवन-यति इत्येतदुक्तंभवति ॥७४॥ आरोदसी । जगती वैश्वानरउच्यते । आअपृणत् आपूरयतिरोदसी-द्यावापृथिव्यौ । आस्वः आपूरयतिच स्वःआदित्यम् महत्महान्तम् । कदाआपृणत् यत्यदा जातं-जातमरम् एनवैश्वानरम अपसः अपस्विनः कर्मवन्त.अधारयन् कर्मणिस्थापितवन्तः । सोअध्वराय

त्प्रयंतिः पुरस्तांत् ॥ ७४ ॥ आरोदंसी ॥ ऽअपृणादास्वंर्म्महज्जातंय्यदेंनमुपसोऽअधांरयन् ॥ सोऽअंध्वरायुपरिंणीयतेकुविरत्योनव्वाजंसातयेचनोंहितः ॥ ७५ ॥ उक्थेभिर्व्वृत्रहन्तंमा ॥ उक्थेभिर्व्वृत्र

सएनायमग्निः अध्वराय यज्ञार्थंपरिणीयते कविःक्रान्तदर्शनः । कथमिव अत्योनअश्वइव । वाज-सातये अन्नसभजनाय । चनोहितः चनसिअन्नेस्थापित. । अश्वोहिघृतादिभिरभिधारितेनान्ने-नपोष्यते अतस्तेनोपमीयते ॥ ७५ ॥ उक्थेभिर्वृत्रहन्तमा । द्वे गायत्र्यौ । यौइन्द्राग्नी । उक्थेभिः उक्थै. स्तुतौसन्तौ । वृत्रहन्तमा वृत्रस्यातिशयेनहन्तारौस्तः । याचित्यौचगिरावाचास्तुतौ आम-

न्द्रानामोदमानौस्त: यौच आङ्गूषै:स्तोमै: स्तुतौआविवासत: परिचरत:स्तोतॄन् । तौउक्थै: गिराआ-ङ्गूषैघस्तुम: सर्वकामास्यर्थम् ॥७६॥ उपन: । उपशृण्वन्तु नोअस्माकम् गिर:वाच: सूनव:पुत्रा: अमृत-स्यप्रजापते: येविश्वेदेवा: शृत्वाच । सुमृडीका: अतिशयेनसुखयितार: भवन्तु न:अस्माकम् ॥ ७७ ॥ ब्रह्माणिमे तिस्रस्त्रिष्टुभ: । इन्द्रमरुत्संवादे इन्द्रस्यैतद्वाक्यम् । ब्रह्माणिस्तुतय: हवींषिवा । मेमतय:

हन्तंमायामंन्द्रानाचिदागिरा ॥ आङ्गूषैराविवासत: ॥७६॥ उपंन: ॥
सूनवो गिर:शृण्वन्त्वमृतस्यये ॥ सुमृडीकाभंवन्तुन: ॥ ७७ ॥
ब्रह्माणिमे ॥ मतय: शंसुतास: शुष्मंइयर्तिप्रभृतोमेअद्रि: ॥

ममममती: इयर्ति उद्गमयन्ति । शंसुखम् सुतास:अभिषुता: सोमा.ममउद्गमयन्ति । शुष्मइयर्तिप्रभृ-तोमेअद्रि: । शुष्म:बलम् इयर्ति । ऋगतौ विचोलोपश्छान्दस: आरयति उद्गमयति । प्रभृत: हृग्रहो-र्भश्छन्दसिइत्येतिहकारस्यभकार: प्रहृत: सोमाभिषवनिमित्तम् । मेमम अद्रि:ग्रावा । यत्वचआशा-सते यजमाना: मदीयमागमनमिच्छन्ति । यत्वचप्रतिहर्यन्ति । हर्यति:प्रेप्साकर्मा । प्रतिकामयन्ति

उक्थाउक्थानि । इमानि इन्द्रःशृणोत्विति । इमाउमौहरी अश्वौवहतःप्रापयतः तातानि-स्थानानिनःअस्मान् अच्छअभिमुख्येन ॥ ७८ ॥ अनुत्तमाते । एवमिन्द्रेणोक्ता मरुतःप्रत्याहुः । अनुत्तम् णुदप्रेरणे अस्यनिष्ठाप्रत्ययेनुत्तप्रतूर्तैत्यादिनासिद्धिः । अनुत्तम् अप्रच्युतस्य भावंमहा-भाग्यम् । आथास्ते । ते तव । हेमघवन्धनवन् । नकिनु । नवाकश्चित् प्रच्यावकोम-

आश्रासतेप्रतिहर्यन्त्युक्थेमाहरीवहतस्तानोऽअच्छ ॥ ७८ ॥ अनुत्तमाते ॥ मघवन्नकिर्नुनत्वावाँ२ ॥ऽअस्तिदेवताविदानः ॥ नजायमानोनशतेनजातोयानिकरिष्याकृणुहिप्रवृद्ध ॥ ७९ ॥ तदित् ॥

स्वभागस्यकिञ्च । नत्वावान् मतुप्सादृश्यार्थे । नत्वत्सदृशः अस्तिदेवतादेवःविदानः सर्वज्ञ-स्त्वर्थः । किञ्च नजायमानःनशते । नशिर्व्याप्त्यर्थश्छन्दसि । व्याप्नोति । नचजातः । तानिका-रिष्यति । तानिकानि । यानित्वंकृणुहिकरोषीतिलकारव्यत्ययः हेप्रवृद्ध ॥ ७९ ॥ तदित् । तत् इत् आस । इच्छब्दएवार्थे आसीदितिलकारव्यत्ययः । तदेवासीत् भुवनेषुभूतजातेषु ज्येष्ठं च

वतमम्। यतोजज्ञोजातः उग्रः उद्गूर्णः वज्रहस्तइन्द्रः। त्वेषन्नृम्णः तेजोधनोवा महाधनोवा। कार्यंदृष्ट्वाकारणानुमानं कुर्वते नहि यतः कुतश्चिदिन्द्रोजायतइति। किंच। यश्च सद्यो-जज्ञानः। जायमानः वाल्यमनपेक्ष्य। निरिणाति निहन्तिशत्रून्। पुनरपि विशिनष्टि। यनुयविश्वेमदन्ति। अनुमदन्ति अनुतृप्यन्ति यंविश्वेसर्वेदेवाः। ऊमाः। अवितारः अवनी-

तदिदासभुवनेषुज्येष्ठंयतोजज्ञउग्रस्त्वेषनृम्णः॥ सद्योजज्ञानोनिरिणातिशत्रूननुयंविश्वेमदन्त्यूमाः॥ ८०॥ इमाउत्वा॥ * पुरुवसोगिरोवर्धन्तुयाममं॥ पावकवर्णाःशुचयोविपश्चितोभि

याया। नास्तियतः कुतश्चिज्जायत इतिविशेषः॥ ८०॥ इमाउत्वाहेवृहत्यौ। तृतीयःपादः पूर्वव्याख्यातेसामर्थ्यात्। यन्त्वाम्पावकवर्णाग्निवर्णा ऋषयःशुचयः यमनियमपराः। विपश्चितः त्रिकालदर्शिनः। अभ्यनूषतअभिष्टुवन्तः। स्तोमैःस्तोत्रैः। तंत्वाइमाउःपादपूरणः। याःममगि-

* पुरुवसोइत्यस्यत्रमतिसुमतिवसुतमहस्ताविदमिन्द्रियवार्यैत्यादि सूत्र णपुरुवसोइत्तावस्थायावकारेपरेपुरुइत्युकारस्य दीर्घो भवति प्रा० प० २। सू० ॥ ८८॥

र:ईपुरूवसो प्रभृतधनता वर्द्धन्तुवर्द्धयन्तु ॥ ८१ ॥ यस्यायम्। यस्येन्द्रस्यअयंविप्रः सर्व.आर्यः दासः। वर्णाश्रमविहितकर्मानुष्ठानादासद्व। सेवधिपाअरि:सेवधिनिधिः। निधिमिवये। धनंरचति नवर्णाश्रमविहितकर्मानुष्ठानं करोति स:यस्यशत्रुभूतः। किञ्च। तिरश्चित् प्राप्तेपि षर्य्येईश्वरे रुशमे। रुशतिर्हिंसाकर्मा। हिंस्रे। पवीरवि। पवीरमायुधंतद्दति। आयुधवति-

स्तोमैरनूषत ॥ ८१ ॥ यस्यायम्॥ यस्यायंव्विश्वऽआर्य्योदासःशेव
धिपाऽअरिः।तिरश्चिच्चदर्य्येरुशमेपवीरवितुभ्येत्सोऽअज्यतेरयिः॥८२॥
अयᳫंसहस्रम्॥ अयᳫंसहस्रमृषिभिः सहस्कृतः समुद्रऽइवपप्रथे ॥

युवकर्मणि। यद्रन्द्रः अरिःशत्रुः। हेयजमानं तुभ्यद्दतुभ्यमेव। सइन्द्रः अज्यते। धातूनामनेकार्थत्वादंजिर्दानार्थः विकरणव्यत्ययश्च अनक्तिर्ददातिरयिःधनम् अत्रापिरयिमितिविभक्तिव्यत्ययः ॥ ८२ ॥ अयᳫंसहस्रम्। सतोबृहती। योयमिन्द्रः सहस्रंसहस्रक्रत्वः। ऋषिभिः। सहस्कृतः। सहइतिबलनाम। बलंकृत्वास्तुतःसन् समुद्रइवपप्रथेप्रथते। तस्यास्यसत्य: स:महि-

सुत्यः सोऽअस्यमहिमागृणेश्रवोयज्ञेषुंविप्रराज्ये ॥ ८३ ॥ अदब्धेभिः सवितः ॥ पायुभिष्ट्वᳬशिवेभिरद्यपरिपाहिनोगयम् ॥ हिरण्य जिह्वः सुवितायनव्व्यसेरक्षामाकिर्न्नोऽअघशᳬसऽईशत ॥ ८४ ॥ [१५] आनः ॥ आनोयज्ञन्दिविस्पृशंव्वायोयाहिसुमन्मभिः ॥ अ

मायवः यललक्षणः गुणोगीयतेअस्माभिर्यज्ञेषु । विप्रराज्ये । यत्रेहिब्राह्मणाः स्वतंत्राराजान-द्रवभवन्ति ॥ ८३ ॥ अदब्धेभिःसवितरितिव्याख्यातम् ॥ ८४ ॥ (१) आनः आयाहिनःअस्माकंयज्ञम् । दिविस्पृशं द्युलोकगामिनम् । ऋत्विग्यजमानैर्विद्वभिरारब्धःदक्षिणादिभिःसम्पन्नःयज्ञः दिविस्पृगस्त्येव । हेवायो सुमन्मभिः सुमननैः संकल्पैः । आगतस्यकिंफलमितिचेत् । अन्तःपवित्रे दशापवित्रस्य उपरियोणानः द्रोणकलशेनिपिच्यमानः सोमोवर्त्तते ततत्वग्रहोगृह्यते । ऋयंच

(१) पठः पुरोरुगण: समास: इतोऽध्यायसमाप्तान्तं वयोदश ऋचः प्रतीकोक्तायतरश्चेति , ऐन्द्रवायवादिसावित्रान्तानां ग्रहाणां ग्रहणमन्त्राः पूर्ववत् ॥

यःशुक्रः सोमःतम् अयामिप्रापयामितितव ॥ ८५ ॥ इन्द्रवायूसुसंदृशा । इन्द्रवायू । सुसदृशा । मुतरांसम्यग्दर्शनीयौ । सुहवा । स्वाह्वानौच । इहहवामहे आह्वयामः । तथाचाह्वयामः । यथा-येनप्रकारेण नःअस्माकम्सर्वंइत्सर्वएवजनः । अनमीवःअमीवाव्याधिस्तद्रहितः । सङ्गमेइन्द्रवायुसंगतौ । सुमनाशोभनमनस्कः । असत्भूयात् ॥ ८६ ॥ ऋधगित्था । तृतीयःपादः प्रथमंव्या-

न्तः पुवित्र्त्रंऽउपरिंश्रीणुानोयंशुक्रोऽअयामिते ॥ ८५ ॥ इन्द्रवायू सुसुन्दृशा ॥ सुहवेहहंवामहे ॥ यथांनुः सर्व्वऽइज्जनोंनमीवः सुङ्ग मेसुमनुाऽअसंत् ॥ ८६ ॥ ऋधंगित्था ॥ समर्त्यः शशुमेदेवतांतये ॥ योनूनम्मित्रावरुणावुभिष्टंयऽआचुक्रेहुव्यदांतये ॥ ८७ ॥ आयां

स्यायतेयच्छन्दयोगात् । यःमर्त्यःनूनंनिश्चयेन मित्रावरुणौअभिष्टयेस्वाभिष्टप्राप्तये । आचक्रेसे-वतेहव्यदातये हविषो दानाय । समर्त्यः ऋधक्समृद्धियुक्तः इत्था । इत्थमित्यभिनयेन दर्श-यति । शशमे । शाम्यतियमनियमवान्भवति । देवतातये । देवानांकर्मदेवतातिः तस्मै । यज्ञाये-त्यर्थः ॥ ८७ ॥ आयातम् । आगच्छतम् उपभूषतम् अलंकुरुतंचयज्ञम् । मध्वः मधुरूपस्य

मन्नंगपिवतंच । हे अश्विनौ । किंच । दुग्धंपयः महावीरसेचनार्थम् । हेदृषणौसेक्तारौ । हेजेन्यावसू जेन्यजितं स्वीकृतंवसुधनं याभ्यांतौजेन्यावसू । किंच मानोमर्द्धिष्टम् माचमर्द्धिष्टम् संप्रहारकुरुतम् नःअस्मान्प्रति । आगतम् अवश्यञ्चआच्छतम् ॥ ८८ ॥ प्रैतु । अस्मदीयं यज्ञंप्रतिआगच्छतु ।

तम् ॥ आयातमुपंभूषतम्मद्ध्वः पिबतमश्विना ॥ दुग्धम्पयोवृषणा जेन्यावसूमानोमर्द्धिष्टमागतम् ॥ ८८ ॥ प्रैतु ॥ प्रैतुब्रह्मणस्पतिः प्रदेव्येतुसूनृता ॥ अच्छावीरन्नर्यंम्पुङ्क्तिराधसन्देवायज्ञन्नयन्तुनः ॥ ८९ ॥ चन्द्रमाऽअप्सु ॥ चन्द्रमाऽअप्स्वन्तरासुपर्णो

ब्रह्मणस्पतिः बृहस्पतिः । प्रैतुपदेवीवाक् । सूनृता शोभनासत्यरतोवयीलक्षणा । कंप्रत्यागच्छन्तित्यतआह । अच्छ अभि । वीरंपुत्रं । महावीरंवा । नर्यम् नृभ्योहितम् अनुग्राहकम् । पंक्तिराधसम् यज्ञापङ्क्तिसाधकम् पंक्तिपावनमित्यर्थः । किञ्चदेवाः यज्ञं नयन्तु नःअस्माकम् ॥ ८९ ॥ चन्द्रमाअप्सु । आहुतिपरिणामोवोच्यते । योसौचन्द्रमाः सतथासोमरूपापन्नः । अभिष्टुतः

अप्स्वन्त. मध्येरसरूपेण आस्थितः। अग्नौहुतःसन् सुपर्णःसुपतनः धावतेदिवि। तस्मात्प र्जन्यरूपमास्थाय। उदकदानद्वारेण। रयिंधनम् पिशंगंपीतवर्णम् बहुलमसंख्यातम् पुरुस्पृहम् बहवोयन्नरस्पृहयन्ति। हरिःसोमएति। कनिक्रदत् पर्जन्यरूपेणात्यर्थं स्तनितंकुर्वन् ॥ ९० ॥ देवंदेवंवः। देवंदेवमितिवीप्सार्थोभ्यासः। यावन्तोदेवास्तावतोदेवान् व. युष्माकमवसेपालनाय।

धावतेदिवि॥रयिम्पिशङ्गम्बहुलम्पुरुस्पृहꣳहरिरेतिकनिक्रदत्॥९०॥ देवन्देवं॒व्वः॥देवन्देवंव्वोवसेदेवन्देवमभिष्टये॥देवन्देवꣳहुवेमव्वाजंसातयेगृणन्तोदेव्याधिया॥९१॥ दिविपृष्ठः॥दिविपृष्ठोऽअरोचताग्निर्वैश्वानरोबृहन्॥ क्ष्मयावृधानऽओजसाचनोहितोज्ज्यो

हुवेमेत्यनेनसंबन्धः आह्वयामः। देवंदेवमभिष्टये अभिष्टकामावाप्तये आह्वयामः। देवन्देवंहुवेम। वाजसातये अन्नंसम्भजनाय। कथंहुवेमेतिचेत्। गृणन्तःस्तुतिभिः देव्याधिया। देवतायाथात्म्यचिन्तनपरयाबुद्ध्या ॥ ९१ ॥ दिविपृष्ठः। योग्निर्वैश्वानरः दिविपृष्ठः द्युलोकेस्थितः आदित्यात्मना अरोचतदीप्यते। बृहन्महान्। सोयम् क्ष्मायापृथिव्या कारणभूतया। वृधानः

वर्द्धमानः श्री वत्सावलेनच । चनोहितः चनसिअन्ने हविर्लक्षणे हितःस्थापितः । ज्योतिपा-बाधतेतमः ॥ ८२ ॥ इन्द्राग्नीअपात् । प्रवल्हिकेयमृक् । यथामन्त्रान्तु व्याख्यायते । मानुषीवा-गनयोच्यते । उक्तंच । अथयन्मानुष्यावाचाह इतोदंकुरुतेतीदंकुरुतेति । तदुहतयाचोयतइति । हेइन्द्राग्नी अपात् पादरहितागद्या इयंवाक् । पूर्वाआअगात् आगता । पद्दतीभ्यः पादव-

तिंपावाधतुतमः ॥ ९२ ॥ इन्द्राग्नीऽअपात् ॥ इन्द्राग्नीऽअपादिय स्पूर्व्वागात्पुद्दतीभ्यः ॥ हित्वीशिरोजिह्व्वयाव्वावदच्चरंत्त्रि ६ शत्प दान्न्यंक्रमीत् ॥ ९३ ॥ देवासोहिष्मा ॥ मनवेसमंन्न्यवोव्विश्वेसा

तीभ्यःसकाशात् । हित्वीहित्वापरित्यज्यशिरः प्रथमंपदम् अन्यत्करोति । नहिलौकिक्यावाचः कश्चित्पदनियमोस्ति । जिह्वया । जिह्वया वावदत्वदन्ती । चरत्चरति । कियन्तितत्पदानि । त्रिंशत्पदानि । त्रिंशत्संख्याकानिपदानि अक्रमीत्अतिक्रामति । नहिपरतः वाणविषयः ॥ ९३ ॥ देवासोहिष्मा । हिस्मनिपातौ । येदेवासः मनवेसमन्यवः मनुनासमानदीप्तयः समानक्रोधावा ।

विसश्चैवेंसासकं‍ह उपास्या: । सरातय: ममानदानाश्च । तेविश्वेदेवा: न:अस्माकम् अद्य । तेचअपरम् आगामिकाले । तुचेतुन: । तुगित्यपत्यनाम । अपत्यायच अस्मदीयाय । भवन्तु । वरिवोविद. । वरिवोधनं येअस्मदर्थंविन्दन्ति तेवरिवोविद: ॥ ९४ ॥ अपाधमत् । प्रथमोर्द्ध-र्च:परोक्षकृत: द्वितीय:प्रत्यक्षकृत: अतोवाक्यभेद: पदसन्ततिर्वैकस्मिन्नर्द्धर्चे ।अपाधमत् धमतिर्गति-कर्मा । यदा अपगमयति । अभिशस्ती: अभिशापान् अशस्तिहा अभे रादिशेप: । अभिशस्तिहा

कऽसरांतयः॥ तेनोऽअद्यतेऽअपरन्तुचेतुनोभवन्तुवरिवोविदः ।९४।

अपांधमत् ॥ . अपाधमदभिशस्तीरशस्तिहाथेन्द्रोद्युम्न्याभवत् ॥

देवास्तऽइन्द्रसख्यायेमिरेबृहद्भानोमरुद्गण ॥ ९५ ॥ प्रवः ॥ प्रव

स्तएव । अथानन्तरम् इन्द्र.द्युम्नी अन्नवान्यशस्वीवा आअभवत्भवति । एवंस्तुतइन्द्र: प्रत्यक्षी-भूत: । इतउत्तरोर्द्धर्च:प्रत्यक्षकृत: । देवा: तेतव हेइन्द्रसख्यायसखिभावाय येमिरे आत्मानंसंयतंकृत वन्त: हेबृहद्भानो महादीप्ते । हेमरुद्गण एकवाक्येतु बहूनांपदानां सन्तति:कार्या ॥ ९५ ॥ प्रव: । प्रथमाद्ध्रवचनस्य वआदेश: । प्राचंतप्रोच्चारयत व:यूयम् स्तुती: इन्द्राय बृहतेमहते

ष्टेमशतः । नह्मवयोलक्षणाः किमितिचेत् । हन्हनति हन्तीतिमाम्नेशप.श्रवणम् । हत्रहा ह त्रवधमवणः शतक्रतुः वज्रकर्मा । वज्रेण शतपर्वणा शतग्रन्थिना ॥ ९६ ॥ अस्येत् । अस्य इत् इदितिनिपातःपादपूरणः । मदे सुतस्यविष्णावि विष्णुर्वज्ञ. । यज्ञे अभिषुतस्य मदेसंजाते

ऽइन्द्रायबहुतेमरुतोब्रह्ममार्चत ॥ वृत्रह्ंहनतिवृत्रहाशतक्रतुर्व्वज्रेणशतपर्व्वणा ॥ ९६ ॥ अस्येत् ॥ अस्येदिन्द्रोवावृधेवृष्ण्यंशवोमदेसुतस्यव्विष्णवि ॥ * अद्यातमस्यमहिमानमायवोनुष्टुवन्तिपूर्व्वथा ॥ इमाउत्वायस्यायमयंसुहस्रमूर्द्ध्वऽऊर्ध्वाः ॥ ९७ ॥ [१२]

इतिसंहितापाठेत्त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

यइन्द्रोवावृधेवृद्धवा । वृष्ण्यंसेक्तृत्वम् आविष्करोति । शवोबलञ्च आविष्करोति । तस्यास्य इन्द्रस्य अद्यअद्यापि संमहिमानतं आयव मनुष्याः अनुष्टुवन्ति । पूर्वथापूर्ववत् यथापूर्वमृषिभिःस्तुतः । इमाउत्वा यस्यायम् । अयप्सहस्रम् । ऊर्ध्वऊर्ध्वाः इतिचतस्रः प्रतीकोक्ताव्याख्याताः ॥९७॥

इतिउव्वटकृतौ मन्त्रभाष्ये त्रयस्त्रिंशोध्यायः ॥ ३३ ॥

शु॰ य॰ सं॰ ६८॰ उ॰ भा॰

(१) यज्जाग्रत: । षट्‌ऋचिङ्कात्रिष्टुभो मनोदेवत्या: । अस्मिन्नध्याये लैङ्गिकोविनियोग: । लिङ्ग-चसामर्थ्यमुच्यते । अभिधा नशक्ति. । यन्मन. जाग्रत: पुरुषस्य दूरम् उदैतिउद्गच्छति चक्षु:प्र-भृतीन्यपेक्ष्य । यच्चदेवम् देवोविज्ञानात्मा सोनेनगृह्यत इतिदेवम । उक्तञ्च । मनसैवानुद्रष्टव्य-मेतदप्रमेय ध्रुवमिति । तदुसुप्तस्य तद.स्थाने यदोहृक्ति: । उकार:समुच्चयार्थीय: । यच्चमन:

* यज्जाग्ग्रंतः ॥ यज्जाग्ग्रंतोदूरमुदैतिदैवन्तदुसुप्तस्यतथैवैति ॥ दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मेमनः शिवसङ्कल्पमस्तु ॥१॥

सुप्तस्य तथैवतेनैवप्रकारेणएति । यच्चदूरंगमम् दूरंगच्छतीतिदूरंगमम् । अतीतानागतवर्त-मानव्यवहितविप्रकृष्टगृहीत् । ज्योतिषांश्रोत्रादीनां विज्ञाननेतृणां मध्यएकमेवज्योति: । तत् मेमन: शिवसंकल्पम् । संकल्प.कामस्तलपदार्थस्रस्त्रादे: सुरूपताज्ञानवत: कामप्रभृति । शान्त संकल्पम् अस्तुभवतु ॥ १ ॥ येनकर्माणि । येनमनसा सताकर्माणि । अपस: अपइतिकर्मनाम

अ॰ ३४

(१) अनारभ्याधीतोऽध्याय आ पितृमेधात् आदित्ययाज्ञवल्क्यदृष्टा मन्त्रा पाठे विनियुक्ता ॥ षड्चस्त्रिष्टुभो मनो-देवत्या शिवसङ्कल्पदृष्टा ।

* यज्जाग्रत पंचमस्य सोमोधेनुमाकाण्वो नपूर्वमवदग्रकानतदष्टीपउष्टापचाशत् ॥

तद्धितलोपः । अपस्विनःकर्मवतः । मनीषिणःमेधाविनः । यज्ञे कृण्वन्तिकुर्वन्ति । विदथेषु-
वेदनेषु यज्ञविधिविज्ञानेषु धीराःधीमन्तः । यच्च अपूर्वम् । नविद्यतेपूर्वमिन्द्रियंयस्मात्तदपूर्वम् यद्वा
अपूर्वमनपरम् यच्च यक्षम्पूज्यम् । यच्च अन्तर्मध्ये प्रजानामास्ते । तन्मेमनइतिव्याख्यातम् ॥२॥

येनकर्म्माणि ॥ येनकर्म्माण्यपसोमनीषिणो यज्ञेकृण्वन्तिविदथे
पुधीराः ॥ यदपूर्व्वंयक्षमन्तः प्रजानान्तन्मेमनः शिवसङ्कल्प
मस्तु ॥ २ ॥ यत्प्रज्ञानम् ॥ यत्प्रज्ञानमुतचेतोधृतिश्चयज्ज्योतिर
न्तरमृतम्प्रजासु ॥ यस्मान्नऽऋतेकिञ्चनकर्म्मक्रियतेतन्मेमनः
शिवसङ्कल्पमस्तु ॥ ३ ॥ येनेदम् ॥ येनेदम्भूतम्भुवनम्भविष्यत्परि

यत्प्रज्ञानम् । यन्मनःप्रज्ञानम् विशेषप्रतिपत्तिप्रज्ञाम् । उत अपिच चेतः । सामान्यप्रतिपत्ति-
चेतः धृतिश्चप्रसिद्धा । यन्मनः अन्तर्ज्योतिरन्तश्चप्रजासु । यस्मान्नऋते येनचविना नकिञ्च-
नकर्मक्रियते । तन्मेमनइतिव्याख्यातम् ॥ ३ ॥ येनेदम् । येनमनसा इदंभूतंभूतकालम् ।

गु० य० सं० ६८१ उ० भा०

अ० ३४

भुवनं वर्त्तमानकालम् । भविष्यत्कालञ्च । परिगृहीतम् । अमृतेन सर्वम् । येन च मनसा यज्ञस्तायते तन्यते सप्तहोता । सप्त होतारोऽग्निष्टोमे भवन्ति । तन्मे मनइतिव्याख्यातम् ॥ ४ ॥ यस्मिन्नृचः यस्मिन्मनसि ऋचः प्रतिष्ठिताः । यस्मिन्सामानि प्रतिष्ठितानि । यस्मिन्यजूंषि प्रतिष्ठितानि । कथमिव । रथनाभाविव आराः । यस्मिन् चित्तं संज्ञानम् सर्वम् तस्य तस्यार्थस्य । ओतं निक्षिप्तम् तन्तुमं तत मिव सूतम् प्रजानाम् । तन्मे मनइतिव्याख्यातम् ॥ ५ ॥ सुषारथिः । यन्मनः मनुष्यान् । नेनीयते अत्यर्थं नयति । कथमिव सुषारथिः कश्या-

गृहीतममृतेन सर्वम्॥ येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ॥ ४ ॥ यस्मिन्नृचः ॥ यस्मिन्नृचः सामयजूंषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः ॥ यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ ५ ॥ सुषारथिरश्वानिव ॥ सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन

शिवम ६८१

यासारथिः अश्वान् इव । यन्मनुष्यान् । यन्मनः सुसारथिरिव । अभीशुभिः प्रग्रहैः वाजिन इव वेजनवतोऽश्वानिव । यमयतीतिशेषः । हृत्पदे एकवचनमन्यत्रनियमनमर्थः यच्च हृत्प्रतिष्ठम् । तत्रोपलब्धेः । यच्च अजिरम् जरारहितम् यच्च जविष्ठम् अतिशयेनगन्तृ । तन्मेमनः शिवसंकल्पमस्तु ॥ ६ ॥ पितुम् । अन्नस्तुतिः । उष्णिगनुष्टुभावाद्यौ । द्वितीयोऽर्धर्चः प्रथमंव्याख्यायते यत्कृत्स्नयोगात् यस्यपितोः अन्यस्यान्नस्य विस्तारः इन्द्रः ओजसावलेन । इवम् ।

ऽइव ॥ हृत्प्रतिष्ठं यदजिरञ्जविष्ठन्तन्मेमनः शिवसङ्कल्प मस्तु ॥ ६ ॥ पितुन्नु ॥ स्तोषम्महोधर्म्माणन्तविषीम् ॥ यस्यत्रितो व्योजसाव्वृत्रंव्विपर्व्वमर्दयत् ॥ ७ ॥ अन्विदत् ॥ अन्विदनुमते त्व

विपर्वम् विपर्वाणम् विगतसन्धिबन्धनं कृत्वा । व्यमर्दयत् विविधं मर्दितवान् । तम् पितुम् अन्नम् नु त्वरितं स्तोषम् स्तौमि । महः महतः धर्माणं धारयितारम् । तविषीम् तविषः इति विभक्तिव्यत्ययः । तविषीति बलनाम । तवतेः द्विकर्मणः बलस्य ॥ ७ ॥ अन्विदत् । एतस्यानुष्टुभः । अनुमन्यासै अनुमन्यस्व । इदितिनिपातः पादपूरणः । हे अनुमते । त्वम् ।

शंचसुखंच नःअस्माकम् क्वधिकुरु हेअनुमते । क्रत्वेक्रतवे संकल्पाय । दक्षायतत्समृद्धये संकल्पसिद्धयेच । नःअस्मान् हिनुगमय । प्रणआयूंषितारिषः । प्रतारिषः प्रवर्द्धयच नः अस्माकमायूंषि ॥ ८ ॥ अनुनः । अनुमन्यताम् । नःअस्माकम् अद्यअनुमतिः यज्ञम् देवेषुयज्ञियेषु । अग्निश्चअनुमन्यताम । हव्यवाहनः हविषोवोढा । भवतंभवतामितिपुरुषव्यत्ययः ।

स्मन्न्यासिशन्नंस्क्वधि ॥ क्रत्वेदक्षायनोहिनुप्रणऽआयूंषितारि षः ॥ ८ ॥ शतम् ॥ १८०० ॥ अनुनः ॥ अनुनोद्यानुमतिर्यज्ञन्देवे षुमन्न्यताम् ॥ अग्निश्चहव्यवाहनोभवतन्दाशुषेमयः ॥ ९ ॥ सि नीवालिपृथुष्टुके ॥ सिनीवालिपृथुष्टुकेयादेवानामसिस्वसा ॥

दाशुषेहवींषि दत्तवतेयजमानाय । मयःसुखरूपौ ॥ ९ ॥ सिनीवालि । सिनीवालीदेवपत्नी । हेसिनीवालि । हेपृथुष्टुकेपृथुसंयमितकेशभारे । माह्यास्तुतिर्वा पृथुष्टुका । यात्वंदेवानाम् असिभवसि स्वसाभगिनी । तांत्वांब्रवीमि । जुषस्व प्रीत्यापरिगृहाण हव्यंहविः । आहुतमभि-

हुतमग्नी । प्रजांच हेदेवविदिदिड्ढि । दिशचातिसृज देहि न.अस्मभ्यम् ॥ १० ॥ पञ्चनद्यः सरस्वतीम् । नदीदेवतायाः पञ्चनद्यः दृषद्वती शतद्रूश्चन्द्रभागाविपाशेरावती त्यादिकाः । सरस्वतीम् अपियन्तिअपिगच्छन्ति । सस्रोतसः । समानानिस्रोतांसि यासां तास्तथोक्ताः । सरस्वतीतु । तुशब्दोवधारणार्थः । सरस्वत्येवपञ्चधा । सोसाचस्वदेशेभवत् भवतिसरित् नदी ।

जुपस्वंहव्यमाहुतम्प्रजान्देवविदिदिड्ढिनः ॥ १० ॥ [ १० ] पञ्चनद्यः ॥ पञ्चनद्यः सरस्वतीमपियन्तिसस्रोतसः ॥ सरस्वतीतुपञ्चधासोदेशेभवत्सरित् ॥ ११ ॥ त्वमग्ने ॥ प्रथमोऽअङ्गिराऽऋषिर्देवो देवानामभवः शिवः सखा ॥ तवव्रतेकवयोविद्मनापसोजायन्तम

तस्त्वाभिमारस्वतानि सवाग्निभान्ति ॥ ११ ॥ त्वमग्ने । चतस्त्राग्नेय्यः । द्वेजगत्यौ अन्येत्रिष्टुब्नुष्टुभौ । हेअग्ने त्वम्प्रथमआद्यः अङ्गिराःऋषिः अभवः । त्वंचप्रथमः देव.देवानामभवः । शिवःकल्याणः सखासमनख्यानः । किञ्च तवव्रतेकर्मणिवर्त्तमानाः कवयःक्रान्तदर्शनाः । विद्मनापसः अपद्गतिकर्मनाम । विदितकर्माणः । अजायन्तसंहृताःमरुतः । भ्राजन्त्यः ऋष्टयःखड्गा-

येषांते भाजहृदयः। योह्यिगत्नूनजयति भ्राजन्तेतस्यायुधानि ॥ १२ ॥ त्वन्नः। विष मोयंमंत्रः साध्याहः। त्वंनःयस्माकम् हेश्रग्ने आश्रयइतिशेषः। अथैवंसति। तव हेदेव। पायुभिः पालनैः धैर्य्यावलम्बिभिः पालिताःसन्तः आस्महे। किञ्च मघोनोरत्त धनानिरत्त। तन्वः शरीराणिचरत्त। हेवन्द्य वंदितव्य। कस्मात्पुनस्त्वमेवमुच्यसे। यतःस्वभावतएवत्राताताोकस्यपु-

स्तोभ्राजदृष्टयः ॥ १२ ॥ त्वन्नः ॥ त्वन्नोऽअग्नेतवदेवपायुभिर्म्मघोनोरत्ततन्वश्चवन्द्य ॥ त्रातातोकस्यतनयेगवामस्यनिमेषꣳ रत्तमाणस्तवव्व्रते ॥१३॥ उत्तानायामव ॥ भराचिकित्वान्सद्यः प्रवीतावृषणञ्जजान ॥ अरुषस्तूपोरुशदस्यपाजऽइडायास्पुत्रोव्वयुनेज

वस्त। तनयेतनयस्यपौत्रस्यच। गवांचअसि। कथम्। अनिमेषम् रत्तमाणः। प्रमादमकुर्वन्रत्तमाः। एवंचेत् उदुष्टदयतमोसि। तवव्रतेतवकर्मणि वयंस्याम। अन्यादेवताः परित्यज्यत्वामेवपरिचरामइत्यभिप्रायः॥ १३ ॥ उतानायामव। द्वितीयोर्द्धर्चःप्रथमंव्याख्यायते योग्यत्वात्। योयम् अरुषस्तूपः। अग्निज्वालासंघातमूर्त्तिः। यस्यचास्य रुशत्पाजःदीप्तंबलम्। यश्च इडायाःपृथिव्याःपुत्रः।

यद्य वयुनेप्रज्ञाने कर्त्तव्येअजनिष्टजातः तमग्निम् । उत्तानायाम् अरण्याम्भवभर । अर्वाचीनंहर । चिकित्वान्जानानः अरण्यावीर्यमितिशेषः । किन्तद्वीर्यमितिचेत् । सद्यः प्रवीताहृषणंजजान । सद्यएवप्रवीताकामितासती हृषणंवर्षितारंसेक्तारं युवानंसर्वकर्मक्षमंजनयतीति ॥ १४ ॥ इडयास्त्वा । इडयाःपृथिव्याः त्वाम् । पदेदेवयजनाख्ये । वयमूनाभानाभौ पृथिव्याअधि । उतरनिष्ह

॥१४॥ इडायास्त्वा ॥ पदेव्वयन्नाभापृथिव्व्याऽअधि ॥ जातवेदो निधीमह्यग्नेहव्व्यायुव्वोढवे ॥ १५ ॥ प्रमन्न्महे ॥ शवसानायशुषमाङ्गूषङ्गिर्व्वणसेऽअङ्गिरस्वत् ॥ सुवृक्तिभिंस्तुवतऽऋग्मियायार्च्चा

वेद्य । नाभिकाभवति तद्विषयमेतत् । हेजातवेदः जातप्रज्ञान निधीमहिस्थापयामः । हेअग्ने हव्यायवोढवे हविषोवहनाय ॥ १५ ॥ प्रमन्महे । चतस्रऐन्द्र्यस्त्रिष्टुभः । प्रमन्महेप्रजानीमः । शवसानाय । बलमाविष्कुर्वते । शूषंबलम् । आङ्गूषम्आघोषंस्तोमम् । गिर्वणसेदेवाय । कथमिव । अङ्गिरस्वत् । अङ्गिरसातुल्यप्रज्ञानायच । सुवृक्तिभिःस्तुवते । सुवृक्ताभिःशो भनाभिः

स्तुतिभिः। स्तुवन्तीतिविभक्तिव्यत्यय.सामर्थ्यात्। ऋग्मियायऋङ्मयाय स्तुतिमयाय। अर्चनीयाय च। वयमृअर्चाम: अर्कम्उच्चारयाम.मंत्रम्। नरेन्द्ररूपाय। विश्रुताय। शौर्यवलदानादिलब्ध्यातये ॥ १६ ॥ प्रवः। सामर्थ्याद्द्वितीयोर्द्धर्चः प्रथमंव्याख्यायते। येनसाम्ना नःअस्माकम्। पूर्वेपितरःपदज्ञाः आत्मसत्तत्ववेदिनः। अर्चन्तःस्तुवन्तः अङ्गिरसःऋषयः गाःअविन्दन्। आदि-

मार्क्किन्नरेविश्श्रुताय ॥ १६ ॥ प्रवः ॥ प्रवोमहेमहिनमोभरद्ध्वमाङ्गूष्यꣳशवसानायसाम ॥ येनानःपूर्वेपितरःपदज्ञाऽअर्चन्तोऽअङ्गिरसोगाऽअविन्दन् ॥ १७ ॥ इच्छन्तित्वा ॥ सोम्यासःसखायःसुन्व

त्यरश्मीन्लब्धवन्तः। सह्सिमांलोकः। तत्साम। प्रभरध्वम्। आहरध्वम्। वःप्रथमाबहुवचनस्यस्थानेवआदेशः। यूयम् हेपुत्रपौत्रप्रपौत्राः। महेमहतेइन्द्राय। महिमहत्त्वम्। नमः अन्नम् आङ्गूष्यम् स्तोमस्यचहितम् साम। प्रभरध्वम्। सवसानाय। वलमभिलषमानाय ॥ १७ ॥ इच्छन्तित्वा। इच्छन्तित्वाम्। सोम्यास.सोमसंपादिनः। सखायःसमानख्यानाः। कथंसमान-

ध्याना: । श्रुतौ । द्वयावैदेवा: । अहैवंदेवा: । अथयेब्राह्मणा:शुश्रुवांसोनूचाना: तेमनुष्यदेवा-
इति । केनप्रकारेणइच्छन्ति । सुन्वन्तिसोमम् अभिषुण्वन्तिसोमम् । दधतिप्रयांसि । प्रयइत्य-
न्ननाम । धारयन्तिच हविर्लक्षणान्यन्नानि । किञ्च । तितिक्षन्तेअभिशस्तिंजनानाम् । मनोवा-
कायसंयता क्षान्तिपरा: । अभिशस्तिन्दुर्वचनंजनानांसहन्ते । अथैवंत्वामिच्छताम् हेइन्द्र । त्वत्
त्वत्त:सकाशात् आसमन्ताद्भावेन । क:चन । चनोनिपातोप्यर्थे । हिरनर्थक: । कोपि । प्रकेत:

न्तिसोमन्दधतिप्प्रयांऽसि ॥ तितिक्षन्तेऽअभिशस्तिञ्जनानामिन्द्र त्वदाकश्चनहिप्प्रकेतः ॥ १८ ॥ नते ॥ दूरेपरमाचिद्रजाऽस्यात्तुप्प्रयाहिहरिवोहरिभ्याम् ॥ स्थिरायवृष्णेसवनाकृतेमायुक्ताग्रा

प्रज्ञानविशेष: । अत्यर्थंभवति । यजमानानामितिशेष: ॥ १८ ॥ नते । नहितेतव दूरेपिपर-
मापरमाणिविप्रकृष्टदेशानि । रजांसिस्थानानि । एवंचेत् । आप्रयाहिआयाहि तुतूर्णम् । हेह-
रिव: हरिभ्यामश्वाभ्याम् । किमर्थम्स्थिरायदृढसौहृदाय । वृष्णेसेक्त्रे । सवनाकृतेमा । सवना-
निकृतानिइमानि । किञ्च । युक्ता:अभिषवकर्मणि । ग्रावाण: । समिधानेसमिध्यमानेच अग्नौ-

आह्वनीयाख्ये आहुतयःहोष्यन्ते। अतश्चआयाहि ॥ १९ ॥ अषाढंयुत्सु। अषाढम्असोढम्। युत्सुयुद्धेषु। पृतनासुसैन्येषु। पप्रिम्। पृपालनपूरणयोरित्यस्यैतद्रूपं नतुप्रापूरणइत्यस्य। पप्रिं-पालनशीलम्। स्वर्षाम्स्वर्दिवंसनोतिसतथातम्। अप्साम्अपःसनोतिसंभजते सतथातम्वृजन-स्यगोपाम्। बलस्यगोप्तारम्। भरेषुजाम्। जयतेरेतद्रूपंनतुजानतेः। संग्रामेषुजेतारम्। सुक्षि-

वाणः समिधानेऽअग्नौ ॥ १९ ॥ अषाढंयुत्सु ॥ पृतनासुपप्रिंस्व र्षामप्सांवृजनस्यगोपाम् ॥ भरेषुजासुंक्षितिंसुश्रवसञ्जयन्त न्त्वामनुमदेमसोम ॥ २० ॥ [१०] सोमोधेनुम् ॥ सोमोधेनुसोमोऽअ

तिम्। सुनिवासम्। श्रवसम्कल्याणकर्मकर्तृत्वेनप्रसिद्धम्। जयन्तंत्वाम्अनुमदेम। मदेर्मोदनार्थ-स्यग्रहणम्। परसैन्यानिजयन्तंत्वांदृष्ट्वा उत्साद्यन्ते तत्दृष्ट्वाप्रहृष्टाःस्याम-हेसोम॥ २० ॥ सोमोधे-नुम्। सोमःधेनुन्ददाति। सोमएवअर्वन्तमश्वम् आशुम्शीघ्रगतिंददाति। सोमएवचवीरंपु-त्रम् कर्मण्यम्कर्मणिसाधुं ददाति। तमेवविशिनष्टि। सादन्यंसदनेसाधुम्। विदथ्यंविदथेयज्ञे-

साधुम । सभेयम् सभामर्हतिसभेयस्तम् । पितृश्रवणम् पितुरनुशासनेचस्थितम् विनीतमित्यर्थः । य.यजमान.ददाशत्भक्त्यैसोमायहविः तस्मैसोमोधेन्वादीन्ददातीत्यभिसंबन्धः ॥ २१ ॥ त्वमिमाः । हेसोम त्वम् इमा.ओषधीः विश्वा.सर्वाः अजनयः जनितवानसि त्वम् अपःअजनयः । त्वङ्गाःअजनयः । त्वम्आततन्थ आततवानसि उरुविस्तीर्णमन्तरिक्षम् । त्वंज्योतिषावितमोववर्थ

वन्तमाशुᳬसोमोव्वीरङ्कर्म्मण्यन्ददाति ॥ सादन्न्यं व्विदत्थ्यᳬसभेयम्पितृश्श्रवणंय्योददाशदस्मै ॥ २१ ॥ त्वमिमाः ॥ त्वमिमाऽओषधीःसोमविश्श्वास्त्वमपोऽअजनयस्त्वङ्गाः ॥ त्वमाततन्थोर्व्वन्तरिक्षन्त्वञ्ज्योतिषाव्वितमोव्ववर्त्थ ॥ २२ ॥ देवेननः ॥ देवेननोमनसादेव

विवृणोषितमः । त्वमेवादित्यात्मनातमोपनयसि । सर्वात्मत्वेनस्तुतिः ॥ २२ ॥ देवेननः । दैवेनेतिप्राप्ते तद्धितलोपश्छान्दसः । दैवेनमनसासहनःअस्मभ्यम् । रायोभागन्धनस्यभागम् । सहस्रमशवःबलवन्नः सान्तः तत्र अकारागमश्छान्दसः । हेसहस्वन् अभियुध्य । युध्यतिर्गत्यर्थानांमध्ये-

पद्यते यत्नाभावितद्रव्यर्थं यस्य ग्रहणते। अभिगमयदेहीत्यर्थः। एवंदानप्रवृत्तन्त्वांकश्चित्प्रतिवध्नीयादित्य- तथाह। माचत्वाम् आतनत्। तनोति.प्रतिवन्धार्थः। प्रतिवधातु कुतस्त्वमेवमुच्यसइतिचेत्। ईशिषेवीर्यस्य यतस्त्वं स्वकीयस्ववीरकर्मणः ईशिषेईश्वरोयस्त्वमित्यभिप्रायः। किञ्चउभयेभ्यः प्रचिकित्सउभयलोकप्राप्त्यर्थं व्याधपगमंकुर्वित्यभिप्रायः। गविष्टौ गोशब्देनात्रद्युलोकोभिप्रेतः। स्वर्गैषणायाञ्चविषयभूतायाम् अस्मान् प्रचिकित्स। दैवंमनःप्राप्य लब्धधना अरोगाश्च यथा-

सोमरायोभाग᳚ संहसावन्नुभियुंध्य ॥ मात्वातंनदीशिषेवीर्य्यस्यो भयेभ्युःप्रचिकित्सागविष्टौ ॥ २३ ॥ अष्टौव्यि ॥ अष्टौव्यंक्वत्र ककुभः पृथिव्यास्त्रीधन्वुयोजनासुप्तसिन्धून् ॥ हिरण्याक्षः स

स्वर्गयास्मामस्तथाकुर्विंतिवाक्यार्थः ॥ २३ ॥ अष्टौव्यख्यत्। चतस्रःसावित्र्यः द्वितीयाजगतीत्रिष्टु- भोन्याः। यःअष्टौव्यख्यत् प्रकाशितवान्ककुभःदिशः। चतस्रोदिशः चतस्रोवान्तरदिशः। पृथिव्याः संवन्धिनीः। त्रीधन्व। त्रीणिधन्वानि इतिशब्दसमाधिः। धन्वइत्यन्तरिक्षनाम तदुपलक्षितावित- रावपिलोकौ गृह्येते। क्षत्रिणोयान्तीतियथा। यश्च त्रीन्लोकान्व्यख्यत्। यश्चयोजनाम् योजनग- व्यूतिक्रोशादीन मानविशेषान्व्यख्यत्। यश्चसप्तसिन्धून् यश्चसप्तसमुद्रान् व्यख्यत्। सोयंहिरण्याक्षः

हिरण्मयहूगाच: । यस्तत्हस्टिर्वा सविता देव: आभगात् आगतु । किंकुर्वन्नित्यतआह । दधत् स्थापयन् रत्नानि रत्नमयानि धनानि । दाशुषेहवींषि दत्तवतेयजमानाय । वार्याणि वरणीयानि ॥ २४ ॥ हिरण्यपाणि.सविता । सुवर्णपाणि. सविता । विचर्षणि: विविधंयष्टा कृताकृतप्रत्यवेक्षक: । उभेद्यावापृथिवी यन्त.अधिकरणश्रुतेर्योग्यक्रियायाअध्याहार: । मध्येस्थित: ईयतेएतियदा । अयतदा अपामीवाबाधते अमीवांव्याधिम । वेति विगतिकर्मा । गच्छति सूर्यंसूर्यरूपमवस्थाय ।

वि॒ता दे॒वऽआगा॑द्धद॒द्रत्ना॒दा॒शुषे॒ वार्या॑णि ॥ २४ ॥ हिर॑ण्यपाणिः स॒वि॒ता ॥ विच॑र्षणिरु॒भे द्यावा॑पृथि॒वीऽअ॒न्तरी॑यते ॥ अपामी॑वा॒म्बाध॑ते॒ वेति॒ सूर्य॑म॒भि कृ॒ष्णेन॒ रज॑सा॒ द्यामृ॑णोति ॥२५॥ हिर॑ण्यहस्तो॒ऽअसु॑रः ॥ सु॒नी॒थः सु॑मृडी॒कः स्ववा॑ँ यात्व॒र्वाङ् ॥ अ॒प॒सेध॑न्र॒क्षसो॑ यातु॒धाना॒नस्था॑

तरोप्तमनकाले । अभिकृष्णेनरजसाद्यामृणोति । अभिमृणोतिअभिव्याप्नोतिकृष्णेनरजसातमोलक्षणेन । द्याद्युलोकम् ॥ २५ ॥ हिरण्यहस्त: । द्वितीयोर्द्धर्च:प्रथमव्याख्यायतेसामर्थ्यात् । य:अपसेधन् अपगमयन् रक्षस यातुधानाञ्चअसुखकारकान् । अस्थात्उदस्थात् । देव: प्रतिदोषंगृणान: । श्रुतिस्मृतिविहितधर्मपराङ्मुखाना यावन्तोदोषास्तावत.स्तुवन् उच्चारयन् गणयन्

उपभोगार्थमित्यभिप्रायः। सोयंसविता हिरण्यहस्तः हिरण्यदानार्थंहस्तोयस्यसतथोक्तः। रूपेणा-वास्तुतिः। असुरःरादाने असून्प्राणान्ददातीत्यसुरः। सुनीथः नीथास्तुतिः। कल्याणस्तुतिः। सुमृडीकःसाधुसुखयिता। स्ववान् आत्मीयज्ञातिधनवचनः स्वशब्दः। यातुआयातु। अर्वाङ् अर्वागञ्च नःअस्मभ्यमभिमुखः ॥ २६ ॥ येतेपन्थाः। येतेतवपन्थाः पन्थानइतिवचनव्यत्ययः। हेसवितः

हेवः प्रतिष्ठोपङ्गृणानः ॥ २६ ॥ येते ॥ येतेपन्थाःसवितःपूर्व्यासो रेणवःसुकृताअन्तरिक्षे ॥ तेभिर्नोअद्यपथिभिः सुगेभीरक्षाच नोअधिचब्रूहिदेव ॥ २७ ॥ उभापिबतम् ॥ उभापिबतमश्विन

पूर्व्यासः पूर्वेष्वपिकालेषुभवाः। अरेणवः अपांशुलाः। सुकृताः साधुकृताः धात्रा। अन्तरिक्षे तेभिः तैः नःअस्मान् अद्यनयेतिशेषः। पथिभिः सुगेभिः साधुगमनैः अन्नपानप्रभूतैर्गच्छतः रक्षाच रक्षच नःअस्मान्। अधिचब्रूहि। अङ्गीकृत्यचब्रूहि। यथाएतेअस्मदीयाइति। यद्वा यद-स्माकं हितंपथ्यं तदधिब्रूहि उपदिश हेदेवदानादिगुणयुक्त ॥ २७ ॥ उभापिबतम्। आश्विन्य-

ष्तिसः एकागायवीद्धेविष्टुभौ। उभौसोमंपिबतम् हेअश्विनौ। पीत्वाचसोमम् उभावपि नःअस्मभ्यम् शर्मशरणं प्रयच्छतम्दत्तम्। किञ्च अविद्रियाभिः हविदारणे अविदीर्णाभिः अनवखण्डिताभिः ऊतिभिरवनैः रक्षतमितिशेषः ॥ २८ ॥ अप्नस्वतीम्। अप्नइतिकर्मनाम कर्मवतीम हेअश्विनौ वाचम् अस्मेअस्माकम् क्षतंकुरुतम्। किञ्च नःअस्माकम् हेदस्रौदर्शनीयौ हेवृषणौवर्षितारौ युवानावित्यर्थः। मनीषांमनसःसंबन्धिनीमिच्छांच। अप्नस्वतीमेवकृतम्। कस्मात्पुनरित्याह

नोभानुःशर्मयच्छतम् ॥ अविद्रियाभिरूतिभिः ॥२८॥ अप्नस्वतीमश्विना ॥ अप्नस्वतीमश्विनावाचमस्मेकृतन्नोदस्रावृषणामनीषाम् ॥ अद्यूत्येवसेनिह्वयेवांवृधेचनोभवतंवाजसातौ ॥ २९ ॥ द्युभिरक्तुभिः ॥ द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना

नरहमेवंब्रवीमि। यतःअद्यूत्येअवसे। द्यूतेभवमवसमन्नंद्यूत्यम्। दूरादागतं कारणंनभवति यतएवमुच्यते। अद्यूत्ये अन्ननिमित्तभूते। निह्वयेवामाह्वयामियुवाम्। आगत्यच। वृधेवर्द्धनायच नःअस्माकम्भवतम्। वाजसातौ वाजसंभजननिमित्तभूते संग्रामेच यज्ञेवावर्द्धनायैवभवतम् ॥ २९ ॥ द्युभिरक्तुभिः। द्युभिरहोभिः कारणभूतैः अक्तुभिः अक्तुरात्रिः रात्रिभिश्च कारणभूताभिः।

षधिकरणविवचाशा । कालेहि दूरपुरान्तिपुवा । परिसर्वंतःपातम् परिपालयतम् युवामस्म-
स्मान् । नकेवलनृदुर्यभिरक्तुभिः परिपातमस्मान् । किंतर्हि । अरिष्टेभिःअनुहिंसितैः हेअश्विनौ-
सौभगेभिः । भगइतिधननाम । शोभनैश्चधनैः । योजयतमित्यध्याहारः । तत् नःअस्माकम्मित्रः
वरुणश्च मामहन्तांपूजयन्ताम । अदितिश्चसिन्धुश्च पृथिवीचउतअपिचद्यौः ॥ ३० ॥ आकृष्णेनेतिव्या-

सौभगेभिः ॥ तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीऽउ
तद्यौः ॥३०॥ [१०] आकृष्णेन ॥ रजसावर्त्तमानोनिवेशयन्नमृतम्म
र्त्यञ्च ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ ३१ ॥
आरात्रि ॥ पार्थिवꣳरजः पितुरप्रायिधामभिः ॥ दिवꣳ सदाꣳसि

स्यातम ॥ ३१ ॥ आरात्रि । रात्रिदेवत्याबृहती । हेरात्रियात्वम् आअप्रायिआअपूपुरःआपूरयसि ।
पार्थिवंरजःपृथिवीसंबन्धिलोकम् पितुः मध्यमस्यलोकस्यधामभिःस्थानैःसह । याचत्वम् दिवःद्युलो-
कस्यसदांसिस्थानानि । बृहतीमहतीविति छसेआक्रामसि । यस्याश्चते । तथापिआवर्त्तते । त्वेषंस-

हाप्राग्भारंदीप्तंवातम.तांत्वांस्तुमः॥ ३२॥ उपस्तत्। उपोदेवत्यापरोष्णिक्। हेउषः तत्चित्रंचायनीयं महनीयंधनमृचाभर आहरअस्मभ्यम् हेवाजिनीवतिअन्नवति । येनधनेनतोकंच तनयंचपौत्रंच धामहे दधमहे ॥ ३३॥ प्रातरग्निम् वहुदेवत्याजगती। प्रातःशब्दो विप्सावचनः । प्रातःप्रातः पुनः

हहुतीत्रितिंष्ठसुऽआस्त्वेषंव्वंत्ततुतमः॥ ३२॥ उषस्तत्॥ उषस्तच्चित्रमाभेरास्मभ्यंव्वाजिनीवति॥ येनंतोकञ्चतनंयञ्चधामंहे ॥३३॥ प्रातरग्निम्॥ प्रातरग्निम्प्रातरिन्द्रंहवामहेप्रातर्म्मित्रावरुणाप्रातरश्विना॥ प्रातर्भगम्पूषणम्ब्रह्मणस्पतिम्प्रातः सोमंमुतरुद्रंहुवेम॥ ३४॥ प्रातर्जितम्भगम्॥ प्रातर्जितम्भगमुग्ग्रंहुवेमव्वय

पुनः। अग्निञ्च इन्द्रञ्च मित्रावरुणौच अश्विनौच । हवामहइतिप्रत्येकमभिसंबध्यते । प्रातःभगञ्च पूषणञ्च ब्रह्मणस्पतिञ्च प्रातःसोमम् उतअपिच रुद्रम् हुवेमआह्वयामः ॥३४॥ प्रातर्जितम् । पञ्चभगदेवत्यास्त्रिष्टुभः । योविधर्त्तेत्यादि मन्त्रोव्याख्यायते उद्दिश्यमानत्वात् ।यःभगः विधर्ताविधारयिता

सर्वस्यजगतः। आधश्चिद्यम् प्रतिषेधस्यदीर्घत्वंछान्दसम्। आध्रः भ्रैटमौ। अटम्रःबुभुक्षितः। अथ वाध्रियतेः आध्रःदरिद्रः चिच्छब्दोप्यर्थे। दरिद्रोपियंभगंमन्यमानः मन्यतेरर्चतिकर्मा। पूजयन्स्वा-र्थसिद्धये भगभक्षिइत्याह उदयम्भजयस्व भजस्वइत्याह। तुरश्चित् आडोध्याहारः। आतुरोपि आतुरोपि यंभगं मन्यमानःभक्षीत्याह। उदयंभजयस्वइत्याह। यद्वातुरशब्देन यमोभिधीयते। सहितूर्णंप्राणिनोहन्ति। यमोपि यंभगं मन्यमानः भक्षीत्याह। उदयंभजयस्वेत्याह। सहि-

प्रातर्जितम्भगमुग्रर्ठहुवेमव्वयम्पुत्रमदितेर्य्योविधर्त्ता ॥ आध्रश्चिद्यम्मन्यमानस्तुरश्चिद्राजाचिद्यम्भगम्भक्षीत्याह ॥ ३४ ॥ भगप्रणेतः ॥ भगप्रणेतर्भगसत्यराधोभगेमान्धियमुदवाददन्नः ॥ भगप्रनोजनयगोभिरश्वैर्भगप्र

दिवसान् प्राणिनोगणयति। राजाचित् राजापियंभगंमन्यमानः भक्षीत्याह उदयंभजयस्व भज-स्वेत्याह। तदुदयेहि राज्ञांवार्त्तासिद्धिः। तंप्रातर्जितम् प्रातर्जयिनंभगम् उग्रमुद्गूर्णदानम् हुवेमआह्वयामः। वयम् ऋषिरात्मानमाह। पुत्रम् अदितेः ॥ ३५ ॥ भगप्रणेतः। हेभग हेप्रणेतः प्रकर्षेणानयस्यकर्त्तः। हेभग हेसत्यराधः सत्यमविनाशिराधोधनंयस्य। सतथोक्तः।

हेभग इमांधियंप्रज्ञाम् उत्अवउद्गमय । यथासूक्ष्मानर्थान् पश्याम: तथाकुर्वित्यभिप्राय: । ददत् न:देहिअस्मभ्यम्धनम् । भगप्रनोजनयगोभिरश्वै: । हेभगप्रजनयन:अस्मान् गोभि: अश्वैश्च । हेभग नृभि:मनुष्यै: नृवन्त:स्याममभवेम ॥ ३६ ॥ उतेदानीम । उतअपिच इदानीं-भगवन्त: स्यामआदित्यप्रसादात् । उतअपिचप्रपित्वेप्राप्ते अस्तमनकाले भगवन्त:स्याम । उत-

न्नृभिर्नृवन्त॑: स्याम ॥ ३६ ॥ उतेदानीम् ॥ उतेदानीम्भग॑वन्त: स्यामोतप्र॑पित्वऽउतमध्ये॑ऽअह्ना॑म् ॥ उतोदि॑तामघवुन्त्सूर्य॑स्य व्वयन्देवाना॑ᳲसुमतौ॑स्याम ॥ ३७ ॥ भग॑ऽएव ॥ भग॑ऽएवभग॑वाँ२ऽअस्तुदेवा स्तेन॑व्वयम्भग॑वन्तःस्याम ॥ तन्त्वा॑भगसर्व्वऽइज्जोह॑वीतिसनो॑भगपु

अपिच मध्येमध्यन्दिने अन्हांभगवन्त:स्याम । उतोदिता उतअपिच उदिताउदयकाले हेम-घवन् धनवन् सूर्यस्यभगवत: प्रसादादेवव्वयम् देवानांसुमतौकल्याण्यांमतौस्याममभवेम ॥ ३७ ॥ भगएव । हेदेवा: भगएवभगवान्धनवान्अस्तु । किमन्यैर्देवताविशेषै धनयुक्तैरदात्रभिरित्यभि-

माय:। तेनभगप्रदत्तेन धनेनवयंभगवन्त:धनवन्त: स्यामभवेम । एकंवाक्यम्। द्वितीयेनार्द्धर्चेनद्वितीयम् एकवाक्यतायाअसंभवात्। तंत्वा। उपरितद्व्यवणात् यदोवृत्ति:। यंत्वाम्। हेभग सर्वइत् सर्वएवजोहवीति आह्वयतिकामसिद्धये। सन:अस्माकम् हेभगपुरएताअग्रयायी सर्वकार्येषुभवइह ॥ ३८ ॥ समध्वराय। समनमन्तप्रह्वीभवन्ति याउपस: अध्वराययज्ञाय। अग्निहोत्रादिकर्मणे कथमिव। दधिक्रावेव। यथादधिक्रावाअश्व: शुचयेपदाय। शुचिपदम् अग्न्या-

दऽएताभंवेह ॥ ३८ ॥ समंद्ध्वरायं ॥ समंद्ध्वरायोषसोनमन्तद धिक्क्रावेवशुचंयेपुदायं ॥ अर्व्वाचीनंव्वंसुविदम्भगंन्नोरथंमिवाश्वांव्वा जिनऽआवंहन्तु ॥ ३९ ॥ अश्वांवतीर्ग्गोमंतीः ॥ अश्वांवतीर्ग्गोमं

धानार्थंकर्त्तव्यमितिसन्नमते। एवंताउपस: । अर्वाचीनम्। अनन्यगतमनस्कम् । वसुविदंच । वसुधनंविन्दतीतिवसुवित् तंवसुविदम्। भगम् आदित्यम् न:अस्मान्प्रति। रथमिव। अश्वा: वाजिन: वेजनवन्त: अन्नवन्तोवा। आवहन्तु आगमयन्तु ॥ ३९ ॥ अश्वावती:। उपोदेवत्याविष्टुप्। अश्ववत्य:गोमत्य:न:अस्माकम्। उपास:वीरवत्य:सदम् सदाकालम् उच्छन्तु। उच्छी-

विनाशे। विवासवन्तु तमः। भद्राःभन्दनीयाः। घृतमवश्यायजलंदुहानाः। विश्वतः प्रपीताः। प्यायःपोष्याढ्याः। सर्वतःआप्यायिताः धर्मार्थकामैः। इदानीमत्त्रिग्विषयःप्रश्नः। यूयंपातपाल-यतस्वस्तिभिरविनाशैः सदानःअस्मान् ॥ ४० ॥ पूषन् तव। हे पौष्णगौ गायत्रीत्रिष्टुभौ। हेपू-षन् तवव्रतेकर्मणि वर्त्तमानावयम् नरिष्येमनविनश्येम कदाचनकदाचिदपि। अन्यच्च।

तीव्रन्नऽउपासोंवीरवतोऽसदंमुच्छन्तुभद्राः॥ घृतन्दुहानाव्विश्वतः प्रपीतायूयंपातस्वस्तिभिः सदांनः॥ ४० ॥ [ १० ] पूषन्तव॥ व्व्रते व्वयन्नरिष्येमकदाचन॥ स्तोतारस्तऽइहस्मसि॥ ४१॥ पथस्पथः परिपतिम्॥ पथस्पथः परिपतिंव्वचस्याकामेनकृतोऽअभ्यानडर्कम्॥

स्तोतारोपि। तेतव। इहस्मसि। स्म। इदन् तोमसि इतोकारउपजनः ॥ ४१ ॥ पथस्पथः। पथस्पथः मार्गान्यपरिपतिम् अधिपतिमित्युपसर्गव्यत्ययः। वचस्यावचनेन वेदोक्तेनअभिमुखी-कृतः। कामेनइच्छयाच अभिमुखीकृतः। अभ्यानट्। अनशिर्व्याप्तिकर्मा। अभिव्याप्नोति।

र्कम्। सः नःअस्मभ्यम् रासत्ददातु। शुरुधः। पूर्वपदान्तलोपः। शुचंसंतापंसाधनाभा-वकृतं यानिरुधन्ति साधनानिभवन्ति तानितथोक्तानिलिव्यच्यत्ययेन। चन्द्राग्राः। तान्येव-विधिपयन्ते। चायनीयाग्राणि। धियंधियंमीपधाति। कर्मकर्मवचनः प्रसाधयति। पूषा॥ ४२॥ त्रीणिपदा। वैष्णव्यौगायत्र्यौ। द्वाभ्यामेकवाक्यम्। यःविष्णुःयज्ञः त्रीणिपदानि। विचक्रमेक्रा-

सनोरासच्छुरुधश्चन्द्राग्राधियन्धियꣳसीषधातिप्रपूषा॥४२॥ त्रीणि पदाव्विचक्रमेव्विष्णुर्गोपाऽअदाब्भ्यः॥ अतोधर्म्माणिधारयन्॥४३॥ तद्विप्रासः॥ तद्विप्रासोव्विपन्यवोजागृवाꣳसꣳसमिन्धते॥ व्विष्णो

न्तवान् अग्निवाय्वादित्याख्यानि। गोपाःगोपायिताच समस्तस्यजगतः। अदाभ्यःअनुपहिंस्यः। अतःअस्मादेवपदत्रयात् धर्माणि। धर्मशब्दउभयलिङ्गः अर्द्धर्चादौहिगणेपठितः। धर्मान्धा-रयन्। कर्मपर्यायोत्र। अतः एभ्यःपदेभ्यः कर्माणिधारयन्॥ ४३॥ तद्विप्रासः। तस्यविष्णो-र्यत्तस्य यत्परमंपदं अ[illegible]लक्षणम्। तत्। विप्रासःब्राह्मणाः विपन्यवः मेधाविनः। जागृवांसः

असुप्ताः अप्रमत्ताः । ज्ञानकर्मसमुच्चकारिणः । समिन्धते । संदीपयन्ति उपासनैर्निर्मलीकुर्वन्ति ॥४४ ॥
घृतवती । द्यावापृथिवी याजगतो । येद्यावापृथिव्यौ घृतवत्यौ उदकवत्यौ । भुवनानामभिश्रिया ।
भूतजातानामभ्याश्रयणीये । उर्वीविस्तीर्णे । पृथ्वीपृथुले । मधुदुघे । मधूदकंतस्यदोग्ध्र्यौ । सुपे-
शसासुरूपे । तेचवरुणस्यादित्यस्यधर्मणा धारणेन । विष्कभिते । स्कभ्नोतिर्दृढीकरणार्थः । दृढी-

र्य॑त्पर॒मम्प॒दम् ॥ ४४ ॥ घृ॒तव॑तो॒ भुव॑नाना॒म् ॥ घृ॒तव॑ती॒ भुव॑नानाम

भिश्रि॒यो॒र्वी॒ पृ॒थ्वी म॑धु॒दुघे॑ सु॒पेश॑सा ॥ द्या॒वा॑पृथि॒वी वरु॑णस्य॒ धर्म॑णा

विष्क॑भिते अ॒जरे॒ भूरि॑रेतसा ॥ ४५ ॥ येन॑: स॒पत्ना॒ अप॑ते॒ भव॑न्त्विन्द्रा

ग्निभ्या॒मव॑ बाधामहे॒ तान् ॥ वस॑वो रु॒द्रा आ॑दि॒त्या उ॑परि॒ स्पृशं॑ मो

कृते । अजरेजरारहिते । भूरिरेतसा । बहुरेतस्के । सर्वभूतानांहिरेतांसि ताभ्यामेवोत्पद्यन्ते ॥४५॥
येनः । जगतीलिङ्गोक्तदेवता । येनःअस्माकम् सपत्नाःशत्रवः । अपतेभवन्तु । अपगतवीर्यानिरुद्यमा-
स्तेभवन्तु । ततः । इन्द्राग्निभ्याम् अवबाधामहे अवनाशयामः तान्शत्रून् । किञ्च वसवःरुद्राः

ष्पादित्या च। उपरिस्पृशम् उपरिस्थितःस्पृशतीति उपरिस्पृक् आधिपत्ये वर्त्तमानः पादेनस्पृशतीति उपरिस्पृक्तं उपरिस्पृशम् मास् उग्रं च। चेत्तारं ज्ञातारं चक्षुर्यस्य। अधिराजम् अधिपतिमीश्वरं च अक्रन् कृतवन्तःकुर्वन्तु वा। ४६॥ आनासत्या। आश्विनीजगती। आयातम् आगच्छतम् हेनासत्याव-श्विनौ। त्रिभिरेकादशैःवसुभिःवह्निदेवैः सहितौभूत्वा। तदुक्तम्। अष्टौवसवइत्यादि। इदमधुपेयम्।

ग्रञ्चेत्तारमधिराजमक्रन्॥ ४६॥ आनासत्या॥ त्रिभिर्देवेभिर्यातम्मधुपेयमश्विना॥ प्रायुस्तारिष्टन्नीरपांᳬसिमृक्षतᳬसेधतन्द्वेषोभवतᳬसचाभुवा॥ ४७॥ एषवः॥ एषवस्तोमोमरुतऽइ

मधुःसोमःसोमपानस्मति। एव्यच। प्रायुस्तारिष्टम्। प्रतारिष्टं प्रवर्द्धयतम् आयुः। नीरपांसिमृक्षतम्। मृजूप्रृणौ। रपःपापमुच्यते। निर्मृक्षतम्। निःशोधयतम् नाशयतम्। रपांसिपापानि। सेधतं द्वेषः। षिधुगत्याम्। गमयतम् दौर्भाग्यम् भवतंच। सचा भुवा सहभुवौ सर्वकार्येषुसंयुक्तौ॥ ४७॥ एषवः। मारुतीत्रिष्टुप्। हेमरुतः एषस्तोमः वः युष्माकम्

इयंवगी. सत्याच मियाच । मेम । मान्दार्य्यस्य ऋषेःसमेति । स्वस्वाभिसंवन्धम् । इयाती ति मान्दार्यः । यद्वा॰ । मान्दारयति मांदारयतीत्येवं यःसपत्नानां मत्ययंदधातिसमान्दार्यः तस्य । ममच । मान्यस्यमानार्हस्य । कारीः कर्तुः तंस्तोमंतांचगिरम् उपश्रुत्य । एषा-यासीष्ट । आइपायासीष्ट । आयासीष्ट । आयासीरन् इतिवचनव्यत्ययः आगच्छन । इषा-

यज्ञेभिर्मान्दार्यस्यमान्यस्यकारोः ॥ एषायासीष्टतन्वेवयांविद्यामेषंवृजनंजीरदानुम् ॥४८॥ सहस्तोमाःसहछन्दसः ॥ सहस्तोमाः सहछन्दसआवृतः सहप्रमाऋषयः सप्तदैव्याः ॥ पूर्वेषाम्पन्थां

अन्नेन निमित्तभूतेनाह्वयमानाः । तन्वेवयाम् । शरीरस्थित्यर्थम् वयोहढवातुम् । आयासीष्ट । किन्च । विद्याम लभेमहि । इषमन्नम् वृजनंबलंच जीरदानु जीवितदातृकर्मच ॥ ४८ ॥ सहस्तोमाः । ऋषिसृष्टिप्रतिपादिकात्रिष्टुप् । सहस्तोमाःस्तोमसहिताः । सहछन्दसः छन्दस्सहिताः । आवृतःआवृच्छब्देनकर्माभिधीयते । अग्न्यादिसत्वप्रधानानां कर्मणामनुष्ठातारः । सहप्रमाः ।

प्रमाणप्रमा । शब्दप्रमाणपरीक्षणतत्पराः ऋषयः सप्त । सप्तऋषयः इतिप्रसिद्धयः । भरद्वाज
कश्यप गौतमात्रिविश्वामित्र जमदग्नि वसिष्ठाः । दैव्याः प्रजापतेः प्राणाभिमानिनः एतेऽभि-
व्यज्यमानाः । पूर्वेषाम् अधस्तनकल्पोत्पन्नानां अवसिताधिकाराणाम् । पन्थाम् पन्थानम् ।
अनुदृश्य अवलोक्य । धीराः अन्वालेभिरे अन्वालभन्तः सृष्टवन्तः सृष्टियज्ञम् कथमिव । रथ्योनर-
श्मीन् । रथेसाधुः रथ्यः सारथिः । नञ्उपमार्थीयः । यथासारथिरिष्टदेशप्राप्त्यर्थं प्रथमसञ्चर-

मनुदृश्यधीराऽअन्वालेभिरेरथ्योनरश्मीन् ॥ ४९ ॥ आयुष्यं व्वर्च्च-
स्यम् ॥ आयुष्यं व्वर्च्चस्यꣳरायस्पोषमौद्भिदम् ॥ इदꣳहिरण्यंव्व
र्च्चस्वज्जैत्रायाविशतादुमाम् ॥५०॥ नतत् ॥ नतद्रक्षाꣳसिनपिशाचा

श्मीनालभते स्पृशति एवन्तेपिसृष्टियज्ञं सृष्टवन्तः ॥ ४९ ॥ आयुष्यम् । तिस्रः हिरण्यस्तुतिः उष्णि-
गनुष्टुब्विष्टुभः । यदिदं हिरण्यम् । आयुष्यम् आयुषेहितम् । वर्चसा वर्चसेहितम् ।
रायस्पोषम् धनस्यवर्द्धयितृ । औद्भिदम् उद्भेत्तृ । धनस्यस्वर्गमार्गा । वर्चस्वत् अन्नसंयुक्तम् ।
तत् जैत्रायविजयाय । आविशतात् आविशतु । उः पादपूरणार्थः । माम् । मय्यवस्थानं करोतु । ५० ॥

नतत् । नतन्हिरण्यंरक्षांसि नचपिशाचा: तरन्तिहिंसन्ति । देवानांप्रथमजम् श्रो जः हि-
एतत् । यतश्चदेवानामोजः प्रथमजम् अतः योबिभर्तिदाक्षायणं हिरण्यम् । दाक्षायणं
हिरण्यम् । दाक्षायणमित्यलंकारविशेषः । सदेवेषुदेवलोकेषु कुरुते दीर्घमायुः चिरंदेवलोकेव-
सतीत्यर्थः । समनुष्ये पुकुरुतेदीर्घमायुः । सचमानुष्यमायुरतिक्रम्यजीवतीत्यर्थः ॥ ५१ ॥ यदा-

स्तंरन्तिदेवानामोजः प्रथमजं ह्येतत्॥योबिभर्त्तिदाक्षायणं हि
रण्यं सदेवेषुकृणुतेदीर्घमायुः समनुष्येषुकृणुतेदीर्घमायुः ॥५१॥
यदाबध्नन् ॥ यदाबध्नन्दाक्षायणाहिरण्यं शतानीकायसुमनस्य

मानाः

बध्नन् । यत्हिरण्यम् आबध्नन्आबद्धवन्तः । दाक्षायणाः दक्षस्यापत्यानिवह्ननि । नडादिषा ।
ठात्फक् । शतानीकायराज्ञे । शतंबहूनिअनीकानिसेनायस्य सतथोक्तः तस्मै शतानीकाय ।
सुमनस्यमानाः शोभनेनमनसाध्यायन्तः । तत्हिरण्यम् । मेमयि । आत्मनीतिसम्प्रयुक्तिः ।
बध्नम् आनधामि । शतशारदाय । शतंशरदांजीवनाय । आयुष्मान्च जरदष्टिः जरामश्नुते

व्याप्नोतीतिजरदष्टिः। यथायेनप्रकारेण असंभूयासम् तथावध्नामीतिशेषः ॥ ५२ ॥ उतनः। वहुदेवत्याविष्टुप्। उतअपिच। नःअस्माकम्। वचांसि अहिर्बुध्न्यःशृणोतु। अजएकपात् रुद्रःप्राणोवाशृणोतु। पृथिवीचसमुद्रश्चशृणोतु। श्रुत्वाचअवन्तु। विश्वेचदेवाः ऋतावृधः सत्यवृधः यज्ञवृधोवा। हुवानाआहूयमानाः। स्तुताश्च। मन्त्राः मंत्रैरितिविभक्तिव्यत्ययः। कविशस्ताः

माना॑ ॥ तन्मऽआव॑ध्नामिश॒तशा॑रदायायु॑ष्मा॒ञ्जर॑दष्टि॒र्यथा॒सम् ॥ ५२ ॥ उतनः॑ ॥ उ॒तनो॒हिर्बु॑ध्न्यः॑ शृणो॒त्वजऽएक॑पात्पृथि॒वीस॑मु॒द्रः ॥ विश्वे॑दे॒वाऽऋ॑ता॒वृधो॑हुवा॒नास्तु॒ताम॒न्त्राः॑ क॒विश॒स्ताऽअ॑वन्तु ॥ ५३ ॥ इ॒मागिरः॑ ॥ इ॒मागिर॑ऽआदि॒त्येभ्यो॑घृ॒तस्नूः॑

क्तामेधाविगस्ताः अवन्तुपालयन्तु ॥ ५३ ॥ इमागिरः। आदित्यदेवत्यात्रिष्टुप्। याइमा गिरः वाचः आदित्येभ्यःघृतस्नूः। घृतप्रस्राविणीः घृतप्रसारिणीर्वा। घृतहोमसहचरिताः। सनात् चिरम्चिरकालम् राजभ्यःचिरराजभ्योवा। जुहोमि, चाजुहोमि। ताश्च। शृणोतुमित्रः अर्यमाच।

भगश्च न.श्रश्लाकम् । सुविजातश्चधाताच । सहिवन्हुश्च: प्रजायते । वरुणश्चदत्तश्च अंशश्च एतेसूर्यविशेषा. ॥ ५४ ॥ सप्तऋषय: । अध्यात्मवादिनीजगती । सप्तप्राणा: षडिन्द्रियानिमन: सप्तमानि । प्रतिहिता:प्रतिनिहिता: शरीरेव्यवस्थिता:येतएव । सप्तरचन्ति । सदसदा-कालम्शरीरम् । अप्रमादम् प्रमादमकुर्वाणा: । तेएवसप्तआप: आपना:व्यापना: । स्वपत:पुरु-

सुनाद्दाजंष्योजुहाजुहोसि ॥ शृणोतुमित्रोऽर्यमाभगोनस्तु विजातोवरुणोदक्षोऽअंशः ॥ ५४ ॥ सप्तऽऋषयः ॥ सप्तऽऋषयः प्रतिहिताः शरीरेसप्तरक्षन्तिसदमप्रमादम् ॥ सप्तापःस्व

पस्यलोकम्प्रयु: । लोकाब्दे विज्ञानात्माहृदयाकाशप्रतिष्ठितउच्यते । तत्रचत्तवि स्थाने: । तस्या-मेवावस्थायामजाग्रत.जागरणंकुर्वाते । अस्वप्नजौ । ययोर्नजायतेस्वप्न.तौतथोक्तौ । सत्रसदौ । सत्रेसतांनाशेमृतावस्थानौ । देवौजीवितदातारौ प्राणापानौ ॥ ५५ ॥ उत्तिष्ठ । तिस्रोब्राह्म-णस्तप. देवदृष्टौतृतीयात्रिष्टुप् । हेब्रह्मणस्पते उत्तिष्ठ उर्द्धोभवआरब्धकार्योभव । यस्मात्

देवयन्तः देवान्कामयमानाः यजमानाः त्वाभवन्तम् ईमहे । याचामहेआगच्छेति । अव-न्तमागच्छन्तम् उपप्रयन्तु उपसमस्पआगच्छन्तु । मरुतःसुदानवः कल्याणदानाः । त्वञ्च हेइन्द्र प्राशूःप्रकर्षेणशीघ्रोभव । सचा । सहसमनाय ॥ ५६ ॥ प्रनूनम । नूनमितिपादपूरणः । प्रव-दतिप्रोच्चारयति ब्रह्मणस्पतिः मन्त्रमुक्थ्यम् उक्थ्यमितिशस्त्रमुच्यते । तत्रसन्नमन्त्रःउक्थ्यः ।

पंतोलोकमीयुस्तत्त्वंजाग्रतोऽअस्वप्नजौसत्रसदौचदेवौ ॥५५॥ उत्ति॑ष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे ॥ उपप्रयन्तुमरुतः सुदानवऽइन्द्रप्राशूर्भवासचा ॥ ५६ ॥ प्रनूनम् ॥ प्रनूनम्ब्रह्मणस्पतिर्मन्त्रंव्वदत्युक्थ्यम् ॥ यस्मिन्निन्द्रोव्वरुणोमित्रोऽअर्य्यमादेवाऽओकांऽसिचक्रिरे ॥ ५७ ॥ ब्रह्मणस्पते ॥ ब्रह्मणस्पतेत्वमस्ययन्तासूक्त

कथंभूतोसौमंत्रः । यस्मिन्मंत्रे इन्द्रश्च वरुणश्च अर्यमाच अन्येदेवाश्च ओ कांसि । ओ कइति-निवासनाम । निवासानि चक्रिरेकृतवन्तः ॥ ५७ ॥ ब्रह्मणस्पते हेब्रह्मणस्पते । त्वम्अस्यजगतः

यन्ता । एवञ्चेत् विज्ञापयामि । सूताख्यसाधुवचनस्य वोधिबुधस्व अवगतार्थोभव । तनयश्च । अपत्यानिचजिन्व । जिन्वतिःप्रीतिकर्मा । प्रीणीहि । विश्वंच तत्भद्रं भन्दनीयम् अस्माकम् अस्तु । यत्अवन्तिपालयन्ति देवाःत्वत्प्रसादात् । बृहत्महत् ऊर्जितम् । वदेम । दीयताभु-

स्यंबोधितनयञ्चजिन्व ॥ विश्वन्तद्भद्रंय्यदवन्तिदेवाबृहद्वदेमविदथेसुवीराः ॥ यऽइमाविश्वाभुवनानिजुह्वद्विश्वकर्म्मायोनः पितान्नपतेन्नस्यनोदेहि ॥५८॥[१८] इतिसंहितापाठेचतुस्त्रिंशोऽध्यायः ॥३४॥

* अपेत: ॥ अपेतोयन्तुपणयो सुम्नादेवपीयवः ॥ अस्य

न्यतामिति । विदथेयज्ञे । सुवीराःकल्याणपुत्राःसन्तः । अथचतस्त्र प्रतीकोक्ताः । इमावि-श्वाभुवनानिजुह्वत् । विश्वाकर्माविमना । योनःपिता । अन्नपतेन्नस्यनोदेहीति ॥ ५८ ॥

इति उव्वटकृतौ मन्त्रभाष्ये चतुस्त्रिंशत्तमोध्यायः ॥ ३४ ॥

ओम् । अपेतः । (१) पित्र्योध्यायः । आदित्यस्यार्षं देवानांवा । गायत्रीव । पलाशशाखयाव्युहति ।

(१) वयस्मिन्नोऽध्याये मवमेधसम्बन्धिन कियतो मन्त्रानुक्ता प्रवायुमच्छेत्यारभ्य अनारभ्याधीतान्मन्त्रानुक्ता चतुस्त्रिंशोऽध्यायेता

* अपेतोदशापाद्य द्वादशहोत्राविशति ।

नेन समाप्येदानीं पञ्चविंशेऽध्याये पितृमेधसम्बन्धिनो मन्त्रा उच्यन्ते । स च पितृमेधो मृतस्य वर्षास्मरणे भवति वर्षमृतीतु विषमवर्षेषु भवति एकतारकनक्षत्रे चित्रादौ दर्शे वा ग्रीष्मे शरदि माघे भवति ॥ पितृमेध करिष्यता द्वि नेन कुम्भेऽस्थिसञ्चय कार्यं । मृतस्य च यावन्तोऽमात्यपुत्रपौत्रास्तावन्त कुम्भा कर्मदिने आनेया कुम्भेभ्योऽधिकानि छत्राणि च । ततोऽरण्ये कुम्भे कृतमस्थिसञ्चयन ग्रामसमीपे समानीय शय्याया कुम्भ संस्थाप्याहतवस्त्रेकदेशेन संवेष्ट्य षोडशवर्षादिश्रेष्ठपुत्रायमानेषु वीणाया च वाद्यमानाया मृतस्य पुत्रपौत्रा उत्तरीयैर्व्यजनैश्चास्थिकुम्भ विजयन्तस्त्रिस्त्रि प्रदक्षिण परियन्ति । स्त्रियोऽपीति केचित् । रात्रौ पूर्वमध्यापरभागेषु ताडन वस्त्रान्नदान कुर्वन्ति नृत्यगीतवादित्राणि च कारयन्ति अस्थिकुम्भायान्नमुपहरन्ति च । तत उषप्रातरस्थिकुम्भसहिता पूर्वोक्तान्कुम्भान छत्राणि चादाय ग्रामाद्दक्षिणस्या वहिर्गच्छन्त्यध्वर्युयजमानामात्या । श्मशानान्त कर्म कुर्वतो यथा रविरुदयेत्तथा रात्रावारभ्यम् तत्र वने गत्वा ग्रामान्मार्गादश्वत्थतिल्वकहरिद्रुस्फूर्जकविभीतकश्लेष्मान्तकार्कोविदारादिभ्यश्च दूरे अन्यद्गुल्मादिवृते ऊषरे वोदकप्रवणे दक्षिणप्रवणे समे वा सुखकारिणि रम्ये वनादुदकाद्वा पूर्वभागे उत्तरभागे वा वर्तमाने गर्तवति वीरणतृणवति प्रदेशे श्मशानाय दिक्कोण पुरुषप्रमाण क्षेत्र मिमीते । पैतृक्यां द्विपुरुष समचतुरस्रं कृत्वा करणीमध्ये तु शङ्कव स समाधिरिति शुल्बोक्तविधिना तच्चतुरस्रमुत्तत पश्च पृथुभवति । तत्र साधनप्रकार पूर्वदक्षिणपार्श्वयोर्नवाङ्गुलानि स्वस्वयोदशांशेनाङ्गुलचतुर्थभागसहितानि पुरुषप्रमाणमध्ये न्यूनानिकार्याणि प्राच्योत्तरपार्श्वयोस्तावन्ति पुरुषप्रमाणादधिकानि तथाहि पुरुषमात्रक्षेत्रस्वचणया प्राची कृत्वा तत्प्रान्तयो शङ्कू निखाय सार्धाष्टदशाङ्गुलहीनापुरुषद्वयप्रमाणामुभयत पाशा रज्जु मध्यमदेशे सल्लक्षणां कृत्वा पूर्वापरयो शङ्कोस्तस्या पाशौप्रतिमुच्य मध्यलक्षणेन दक्षिणत आयम्य दक्षिण कोण साधनीय तत सार्धाष्टदशाङ्गुलाधिका पुरुषद्वयप्रमाणा रज्जुमुभयत पाशा मध्यलक्षणयुता कृत्वा शङ्कौ पाशौ प्रतिमुच्य मध्यलक्षणेनोत्तरत आयम्योत्तरकोण साध्य इति । तत पूर्वादिकोणेषु पालाशशमीवारणाश्ममयाश्चत्वार शङ्कवो निखेयाः । एतत्कुर्वता निकटे कश्चिद्यजमानपुरुषस्तृणपूलकमुच्छ्रितं धारयेत् । कर्मसमाप्तौ गच्छसागता तं स्पृष्टेपूच्छयेत् प्रजाहसो । इत्यादि बौधाय ॥

अपेतोयन्तुपणयः । अपयन्तु इतःस्थानात् पणयःअसुराः । असुमाथ असुखकराः । देवपीयवः । पयतिर्हिंसाकर्मा । देवानांहिंसितारः देवद्विषः । किमिति । अस्ययजमानस्य लोकःस्थानमव सुतावतः सोमाभिषवंकृतवतः । परंयजुः । द्युभिरहोभिरक्तुभिः । द्युशब्देन श्रुतौक्तत्वउक्ताः अहतभिः अहोभिः अक्तुभिःरात्रिभिः व्यक्तंस्पष्टीकृतम । यमःददात अवसानम अवस्यत्यस्मिन्नि-

लोकः सुतावतः ॥ द्युभिरहोभिरक्तुभिर्व्यक्तं यमो ददात्ववसानमस्मै ॥१॥ सविता ते ॥ सविता ते शरीरेभ्यः पृथिव्यां लोकमिच्छतु ॥ तस्मै युज्यन्तामुस्रियाः ॥ २ ॥ वायुः पुनातु ॥ सविता पुनात्व

लवमानम । अस्मैयजमानाय ॥ १ ।जपति । सविताते गायत्री । सविता । तेतव शरीरेभ्यः शरीराणामितिविभक्तिव्यत्ययः । पृथिव्याम् लोकस्थानम् इच्छतु । नहिसविताऽननुज्ञातेनावस्थातुं शक्यते । द्वितीयवाक्यम । तस्मैचैवाय शरीरायसंस्कारार्थम् युज्यन्तांशरीरे उस्रियाःअनड्वाहः॥२॥ वायुःपुनातु । चतस्रःसीताःकर्षति । चतुर्भिर्यजुर्भिः । वायुः पुनातु विदारयतु । सवितापुनातुवि-

दारयतु अग्नेर्भ्राजसा दीप्त्याविदारयतु । सूर्यस्य वर्चसा भ्राजिष्णुतयाविदारयतु । विमुञ्चत्यनडुहः । निमुच्यन्तामुस्रियाः निमुच्यन्तां शरीरात् उस्रियाः । अनड्वाहः ॥३॥ अश्वत्थेवः इतिव्याख्यातम् ॥४॥
(१) शरीराणिनिवपति । सविताते । गायत्री । सविताते तव शरीराणि अस्थीनि । मातुः पृथिव्याः

स्नेर्भ्राजसासूर्य्यस्यवर्चसा ॥ विमुच्यन्तामुस्रियाः ॥ ३ ॥ अश्वत्थेवः ॥ अश्वत्थेवोनिषदनम्पर्णेवोवसतिष्कृता ॥ गोभाजइत्किलासथयत्सनवथपूरुषम् ॥ ४ ॥ सविताते ॥ शरीराणिमातुरुपस्थऽआवपतु ॥ तस्मैपृथिविशम्भव ॥ ५ ॥ प्रजापतौत्वा ॥ देवतायाम्

उपस्थेउत्सङ्गे आवपतु स्थापयतु । तस्मैअस्थिरूपाययजमानाय सवितात्मने । हेपृथिवि शम्भ-वसुखरूपाभव ॥ ५ ॥ प्रजापतौत्वा । यजुः कण्डिका । प्रजापतौत्वाम् देवतायाम् उपोदके उपसमीपे उदकंयस्यसतथोक्तः । लोकेस्थाने निदधामि । असावितिनामग्रहणम अनुदात्तत्वा-

(१) का० सविताते इति शरीराणि निवपति मध्ये इति । २१, ४, ८ । तस्य पुरुषमात्रस्य क्षेत्रस्य मध्ये शरीराणि मृतस्यास्थीनि राशीकरोति एतच्च सूर्योदयकालकर्तव्यम् ।

दामन्त्रितम् । तद्यथा हेदेवदत्त । अपनः शोशुचदघम् । अपेत्य नःअस्मान् अत्यर्थंदहतुपापम् हेष्टन् । यद्वा । प्रजापतिः अपशोशुचत् अत्यर्थंदहतु । नोस्माकमघंपापम् ॥ ६ ॥ प्रत्या-गतेजपति । परंमृत्योः त्रिष्टुप्मृत्युदेवत्या । हेमृत्यो परंपन्थानमाश्रित्य । अनुपराङेहि । परा-ङ्मुखोभूत्वा आगच्छ । तमङ्केनदर्शयति । योसौतेतवस्वभूतः अन्यःइतरः देवयानात्पितृ-

पोदकेलोकेनिदधास्यसौ ॥ अपनःशोशुचदघम् ॥६॥ परंमृत्यो ॥ परं मृत्योऽअनुपरेहिपन्थांयस्तेऽअन्यऽइतरोदेवयानात् ॥ चक्षुष्मते शृण्वतेतेब्रवीमिमानःप्रजाᳬरीरिषोमोतवीरान् ॥७॥ शंवातः ॥ शᳪहिनोघृणिःशन्तेभवन्त्विष्टकाःशन्तेभवन्त्वग्नयःपार्थिवासो

यानाख्यः । यपिचचक्षुष्मते शृण्वतेतेब्रवीमि । षष्ठ्यर्थेचतुर्थी । चक्षुष्मतःशृण्वतः तवब्रवीमि । अतिशयार्थवचनम् । नहितवादृष्टमश्रुतं चास्ति । माच नःअस्माकप्रजांरीरिषः । हिंसीथाः । मोतवीरान्पुत्रान् ॥ ७ ॥ यथार्थकल्पयतिं अनुष्टुप्बृहतीभ्याम् । शंवातः । सुखरूपो वातः तेभवतु । शहि तेघृणिः सुखरूपश्च तेघृणिर्भवतु । घृणिरित्यहर्नामहीतिस्वाध्यायार्थम् । सुख-

रूपाश्च ते नन्तुदृष्टकाः । सुखरूपाश्चतेभवन्तु अग्नयःपार्थिवाः पृथिव्यांभवाःपार्थिवासः । माच-
त्वाम् अभिशुशुचन् अभितापयन्तु ॥ ८ ॥ किञ्च । कल्पन्तांतेदिशः । क्लृप्तास्ते दिशोभवन्तु ।
तुभ्यम् आपःशिवतमाः भवन्तु । तुभ्यंभवन्तु सिन्धवःसमुद्राःशिवतमाः । अन्तरिक्षंशिवंतुभ्यं
भवतु । कल्पन्तांतेदिशः सर्वाः । आदरार्थं पुनर्वचनं कार्त्स्न्यार्थंवा ॥ ९ ॥ अश्मन्वतीरीयते ।

माऽत्त्वाभिशूशुचन् ॥ ८ ॥ कल्पन्तान्ते ॥ दिशस्तुभ्यमापः शिवत
मास्तुभ्यम्भवन्तुसिन्धवः ॥ अन्तरिक्षꣳशिवन्तुभ्यङ्कल्पन्तान्ते
दिशःसर्वाः ॥ ९ ॥ अश्मन्वतीरीयतेसꣳरभद्ध्वमुत्तिष्ठतप्रतर
तासखायः ॥ अत्राजहीमोऽशिवायेऽअसञ्छिवान्वयमुत्तरेमाभिवा

घरमन स्त्रीं स्त्रीन्विकिरन्ति ताश्रभ्युत्तरन्ति । त्रिष्टुब्वैश्वदेवी । अश्मन्वती पाषाणवती इयं-
नदीरीयतेगम्यते अस्माभिःविषमम् । अतोब्रवीमि । संरभध्वम् । संरम्भोत्तरणाय प्रयत्नक-
रणम् । उत्तिष्ठत अभिमुखाभवत । प्रतरत । हेसखायः । किमित्यादरः । अत्राजहीमः ।

परित्यजामः । अशिवा.अशान्ताः । येअसन् स्युः । शिवान्त्राजान् अन्नविशेषान् वयम्अभ्युत्त-रेम ॥ १० ॥ अपामार्गेणापमृजति । अपाघम । अनुष्टुप् । हेअपामार्गत्वम् अस्मत्अस्मतः । अपसुव अपगमयअघंपापंमानसम् । अपगमयच किल्विषंकीर्त्तिभेदकम्पापमेवकायिकम् । अपगमयच कृत्याम् अभिचारम् । अपगम यचरपः । रपोरिप्रमितिपापनामनीभवतः । वाचि-

जान् ॥१०॥ [१०] अपाघम् ॥ अपाघमपकिल्बिषमपकृत्यामपोरपः ॥ अपामार्गत्वमस्मदपदुःष्वप्न्यंसुव ॥ ११ ॥ सुमित्रियानः ॥ सुमित्रियानआपओषधयःसन्तुदुर्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चवयन्द्विष्मः ॥ १२ ॥ अनड्वाहमन्वारभामहेसौरभेयंस्वस्त

कस्मापम । अपगमयच दुःस्वप्न्यम दुःस्वप्नभवंफलम् दुःस्वप्न्यम् ॥ ११ ॥ सुमित्रियानइ-तिव्याख्यातम् ॥ १२ ॥ अनडुत्पुच्छमन्वारआआगच्छन्ति । अनड्वाहम् । आनडुहीअनुष्टुप् । उत्त-रोर्द्धर्चः प्रत्यक्षकृतःअतोयच्छब्दाध्याहारेणसामर्थ्यम् । यःत्वाम्अनड्वाहम्अन्वारभामहेआलभा-

मह्रे । सौरभयम्सुरभ्याअपत्यम् स्त्रीहीभ्योढक् । स्वस्तयेअविनाशाय । सत्वम् नःअस्माकम् इन्द्र-
इवादेवेभ्यः देवनामितिविभक्तिव्यत्ययः । वन्हिर्वोढासंतारणश्चभव ॥ १२ ॥ उद्वयमितिव्याख्या-
तम् ॥ १४ ॥ (१) मर्यादाया एवलोष्टमाहृत्यान्तरेणतोरणेनिदधाति । इमञ्जीवेभ्यः । त्रिष्टुप् मृत्यु-

र्य्ये ॥ सनुऽइन्द्रंऽइवदेवेभ्योव्वह्निंः सन्तारणोभव ॥१३॥ उद्वयम् ॥
उद्वयन्तमंसुस्परिस्वः पश्यंन्तुऽउत्तंरम् ॥ देवन्देवत्रासूर्य्यमगंन्म
ज्योतिंरुत्तमम् ॥ १४ ॥ इमञ्जीवेभ्यंः ॥ परिधिन्दंधामिमैषान्नुगा
दपंरोऽअर्त्थमेतम् ॥ शतञ्जीवन्तुशरदंः पुरूचीरन्तर्म्मृत्युन्दंधता

देवत्या । इमंलोष्टंजीवेभ्यः अर्थाय । परिधिम् परिधीयत इतिपरिधिः तम्परिधिम्, दधामि-
स्थापयामि । किमर्थमितिचेत् । मागात्मागच्छतु एषांजीवानांमध्ये अपरः नुचिप्रम् । वेदोक्ता-
दायुषोर्वाक् पितृलोकम् एतमर्थंपुरस्कृत्य सर्वथाशतंजीवन्तुशरदः । पुरूचीः बह्वञ्चनाः दाना-

(१) पाषाणमशालान्तरे मर्यादालोष्टं निदधातीम जीवेभ्य इति । सनिवामग्रामस्यचमध्ये मर्यादालोष्टं मध्ये तरं स्तम्बड निदधाति ॥

घायनयागानुकूला: । अन्तर्मृत्युन्दधताम् अन्तर्दधातुमृत्युम् पर्वतेनद्रवलोष्ठेन ॥ १५ ॥ जुहोतिद्वाभ्याम् । अग्नऽआयू ᳪ षि । व्याख्यातम् ॥ १६ ॥ आयुष्मानग्ने । वसुरन्तात्रिष्टुप् । इमान्स्वाहेतियजुः । हेअग्नेयःत्वम् आयुष्मान् तंत्वांब्रवीमि । हविषावृधानः वर्द्धमानः घृतप्रतीकः । प्रतीकंमुखम् । घृतयोनिः घृतसंमृष्टस्थानः एधिभव । उत्तरवेद्यांधारणाभिप्राय-

म्पर्व्वतेन ॥ १५ ॥ अग्नऽआयू ᳪ षि ॥ पवसऽआसुवोर्ज्जमिषंञ्चनः ॥
आरेवाधस्वदुच्छुनाम् ॥ १६ ॥ आयुष्मानग्ने ॥ हविषांव्वृधानोघृत
प्प्रतीकोघृतयोनिरेधि ॥ घृतम्पीत्वामधुचारुगव्व्यम्पितेवपुत्रमभिर
क्षतादिमान्स्वाहा ॥ १७ ॥ परीमे ॥ गामनेषतपर्य्यग्निमहृषत ॥

मेतत् घृतंचपीत्वा मधुमधुरसम् । चारुसुगन्धि । गव्यङ्गोविकारसम्भूतम् । पिताइवपुत्रम् अभिरक्षतात् । तुह्योस्तातङ्ङाशिषयन्यतरस्यामितितातङादेशः । अभिरक्ष इमान्जीवान् स्वाहासुहुतमस्तु ॥ १७ ॥ अथैषांपरिधीन्दधाति । अनुष्टुभा । परीमेगामनेषत । इमेजीवाः परि-

सर्वतः गामश्वनेपत । नयतेर्लुङि सिज्एतद्रूपम् परिणीतवन्तः गाम् अनडुत्पुच्छालम्बनाभि-
प्रायमेतत् । पर्यग्निनह्यत । पर्य्यह्यत हरतेरेतद्रूपम् । परिहृतवन्तः अग्निम् । यस्मि-
न्नग्नावेतत्कर्मक्रियते तमग्निंपरिहृतवन्तः । अद्वारेणोपासनं निरस्यतीत्येतदभिप्रायमेतत् ।
देवेपुत्त्वित्तु । अक्रत । अक्रुपतेतिप्राप्तेसिचोलोपश्छान्दसः ॥ अथ धनं दक्षिणालक्षणम् ।
अथेदानीम् कृतकृत्यान् द्रुमान् कः कोनाम । आदधर्षति । आधर्षयितुम् आक्रमि-

देवेष्वक्रतश्रवुः कऽइमाँ ॥ २ ॥ ऽआदधर्षति ॥ १८ ॥ क्रव्यादम-
ग्निम् ॥ क्रव्यादमग्निम्प्रहिणोमिदूरंयमराज्यंगच्छतुरिप्रवाहः ॥

तुम् शक्नुयात् अशक्यप्रतिक्रियाह्येतेवर्त्तन्त इत्यभिप्रायः ॥ १८ ॥ अद्वारेणोपासनं निरस्यति ।
क्रव्यादमग्निम् । त्रिष्टुप् । अथ येनपुरुषंदहति सक्रव्यात् । क्रव्यादमग्निम् । परिहिणोमि
प्रेषयामि दूरमपुनरागमनाय । यमराज्यं गच्छतु रिप्रवाहः । रिप्रमितिपापनाम । रिप्रं मृतं
वहतिप्रापयति भस्मीभावमितिरिप्रवाहः । जपति । इहैवायमितरः क्रव्यादादन्यः

जातवेदाः जातप्रज्ञानः देवेभ्यः हव्यं हविःवहतु । प्रजानन् स्वमधिकारम् ॥ १९ ॥ वपांजुहोति । वहवपाम् । त्रिष्टुप् । वहप्रापय वपाम् हेजातवेदः पितृभ्यः । यत्रयस्मिन्प्रदेशे एतान् पितॄन् वेत्थजानासि । निहितान्स्थापितान् पराकेपराक्रान्ते सुदूरेपि तस्माच्च वपायाः सकाशात् मेदसःकुल्याजद्यः निसृत्य । उपस्रवन्तु । तान्पितॄन प्रति । एषांचदातॄणाम सत्याअवितथाआशिषः संनमन्ताम्प्रह्वोभवन्तु । स्वाहेतियजुः ॥ २० ॥

ज्ज्हुहेनायमितंरोजातवेदादेवेभ्योहुव्यंव्वंहत्प्रजानन् ॥ १९ ॥ व्वंहवपाम् । व्वंहंव्वपाजातवेदः पितृभ्योयत्रैनान्वेत्थनिहिंतान्पराके । मेदंसः कुल्याउपतान्त्स्त्रंवन्तुसत्याएंषामाशिषः सन्नंमन्ताᳪ स्वाहा ॥२०॥ स्योनापृथिवि॥नोभवाऽनृक्षरानिवेशंनी॥यच्छांनुःशर्मसप्रथाः ॥

स्योनापृथिवि । पार्थिवीगायत्री । स्योनासुखरूपा हेपृथिविनःअस्माकम्भव । अनृक्षराच नृक्षराःकण्टकाः अनृक्षराअकण्टका । निवेशनीच । साधुप्रतिष्ठाना । किञ्च । यच्छानःप्रयच्छच नःअस्माकम् शर्मशरणम् सप्रथाःसर्वतःपृथुः । अपनःशो-

शुच दधमितिव्याख्यातम् ॥ २१ ॥ अस्मात्त्वम् । गायत्रीयजुरन्ता एवाब्राहुतिः । अनिरुक्ताग्नेयी । यस्माद्यजमानात् । हेअग्ने त्वम् अधिजातोसि यतःअतोब्रवीमि । अयंपुनर्जायमानः त्वत्त्वत्तः जायताम्उत्पद्यताम् । असावितिनामग्रहणम् तद्यथा देवदत्तः । स्वर्गायलोकाय स्वर्गलोकप्राप्त्य-

प्रथाः॥ अपनुशोशुचदघम् ॥२१॥ अस्मात्त्वम् ॥ अस्मात्त्वमधिजातो सित्त्वदयञ्जायताम्पुनः ॥ असौस्वर्गायलोकायस्वाहा ॥ २२ ॥ [१२]

इतिसंहितापाठेपञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

* ऋचंवाचम् ॥ ऋचंवाचम्प्रपद्येमनोयजुः प्रपद्येसामप्राण

र्थम् । त्वत्तोअयंजायमानः त्वहं अयएवस्वादित्यभि प्रायः । स्वाहेतिसंप्रदानमस्तु ॥ २२ ॥

इति उव्वटकृतौ मन्त्रभाष्ये पञ्चत्रिंशत्तमोध्यायः ॥ ३५ ॥

( १ ) इदानीं प्रवर्ग्याग्निकाश्वमेधोपनिषत्संज्ञामन्त्रा स्तान्व्याख्यास्यामः । तत्राग्निका उग्रश्चेत्ये-

( १ ) का॰ शान्तिकरणमाद्यन्तयोः । ऋचं वाचमिताध्यायेन शान्तिकरणं कार्यम् स्वाध्याये मन्त्रपाठे प्रवर्ग्य मन्वादावध्यायस्य दर्शनात् ॥

* ऋचंवाचषोडशधो शातिरष्टौहोचतुर्विंश॰श्रतिः ।

वमादय: । तान्पुन:परमेष्ठ्यपश्यत् । प्राजापत्योविमुखइति तस्यमंत्रगणस्यसंज्ञा । अग्निर्ठं॰हृद-
येनेत्याश्वमेधिका: आंत्यध्यायात् प्रजापतेरार्षम् । परिशिष्टं दध्यङाथर्वणोपश्यत् । दध्यङ्-
ङ्वा आथर्वणइत्येवमादिकया श्रुत्यातद्भावं प्रतिपद्यते । ऋचंवाचम् । प्रवर्ग्यस्यादावन्तेच
शान्तिकरणोध्याय: । विश्वेदेवा आग्निकानामाश्वमेधिकानांच मन्त्राणाम् इहसमाम्नातम
दिवाकीर्तिसामान्यात् । प्रथमकण्डिकायजु: । ऋचंवाचंप्रपद्ये प्रविशामियामिवा । एवं-

## मनः प्रपद्ये चक्षुः श्रोत्रम्प्रपद्ये ॥ वागोजः सहौजो मयि प्राणापानौ ॥ १ ॥ यन्मे ॥ छिद्रं चक्षुषो हृदयस्य मनसो वातितृण्णं बृहस्पतिर्मे तद्

मनोयजु: सामप्राणचक्षु. श्रोत्रमितिव्याख्येयम् । नहित्रयीविद्या प्रपन्नस्य प्रवर्ग्य आयुपोविना-
शंकुर्यात् । तथावाङ्मन: प्राण: चक्षु. श्रोत्राणि प्रपन्नस्य सप्तदशंह्येतत्प्रजापतेर्लिङ्गमुपलक्षि-
तम् । अथवेंसति । वाक् ओजोवलं मानसं धृष्टतानाम । पुनरोजोग्रहणमादरार्थम् ।
एतदुक्तंभवतिवाक्च अतिशयिकमोज: प्राणापानौच सहएकीभूता: मयिवर्त्तन्ते ऽत:प्रवर्ग्यो-
ऽस्मान्नहिनस्ति ॥ १ ॥ यन्मे वाहं स्पत्यापंक्ति: । यन्मे मम । छिद्रम्अवखण्डितम् चक्षुष.हृदय-

सत्वाहृदयग्रहणेनबुद्धिरुक्ता । मनमोवा अतित्वरणम् अतिहिंसितम् प्रवर्ग्याचरणेन । बृहस्पतिः मम तत्‌दधातु । अथ वंबृहस्पत्यनुगृहीतानाम् । शं नःसुखरूपोस्मकम् भवतु । भुवनस्य भूतजातस्य यःपतिः योधिपतिःप्रवर्ग्यरूपोयज्ञः ॥ २ ॥भूर्भुवःस्वः यजूंषि। तत्सवितुरिति कया-

धातु ॥ शन्नोभवतुभुवनस्ययस्पतिः ॥ २ ॥ भूर्भुवः ॥ भूर्भुवः स्वः ॥ तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात् ॥ ३ ॥ कयानः ॥ कयानश्चित्रआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ ४ ॥ कस्त्वा ॥ सत्योमदानाम्मंहिष्ठोमत्सदन्धसः ॥ दृढाचिदारुजेव्वसु ॥ ५ ॥ अभीषुणः ॥ सखीनामविताजरितॄणाम् ॥ शतम्भवास्यूतिभिः ॥ ६ ॥ कयात्वम् ॥ कयात्वन्नऊ

नस्तिसस्य व्याख्याताः । ऋटपिकृतोविशेषः ॥ ३ ॥ ॥ ४ ॥ ५ ॥ ६ ॥ कयात्वम् । गायत्री । ऐन्द्रीअनिरुक्ता । हेइन्द्र कयाऊत्या केनवागमनेन त्वम् नःअस्मान् अभिप्रमन्दसे अभिमो-

दयसि दर्पयसि । छेदपन्सेतः । कयाचऊत्या कीनवागमनेन स्तोतव्यः दातुं धनानि आभर । आहरसि । लडर्थेलोट् । तत्कथय । येनतथानुतिष्ठामः ॥ ७ ॥ इन्द्रोविश्वस्य द्विपदाविराट । योयंमहावीर इन्द्रआदित्योवा कस्याधिष्ठात्रीदेवता । विश्वस्यजगतः राजतिदेदीप्यते ईष्टेवा । अन्नो- तस्यप्रसादात् । अस्माकम् अस्तुद्विपदेशंचतुष्पदे । द्विपदाञ्चतुष्पदांचेतिविभक्तिव्यत्ययः ॥ ८ ॥ शन्नो-

त्याभिप्प्रमंन्दसेव्वृषन् ॥ कयांस्तोतृब्भ्यऽआभंर ॥ ७ ॥ इन्द्रोव्वि श्श्वंस्य ॥ राजति ॥ शन्नोऽअस्तुद्विपदेशञ्चतुंष्पदे ॥ ८ ॥ शन्नोंमि त्त्रःशंव्वरुणः शन्नोंभवत्त्वर्य्यमा ॥शन्नऽइन्द्रोबृहस्प्पतिः शन्नोव्वि ष्णुरुरुक्क्रमः ॥ ९ ॥ शन्नोव्वातः ॥ पवताᳪशन्नंस्तपतुसूर्य्यः ॥

मित्रः । द्वे अनुष्टुभौ । महावीरप्रसादात् आदौच । शंसुखरूपः नोस्माकंभवतु मित्रः । शंचनःवरु- णःभवतु । शंचन.भवत्वर्यमाशंचन.इन्द्रःबृहस्पतिः । शंचनःविष्णुःउरुक्रमःउरुविस्तीर्णःक्रमोय स्यसउरुक्रमः । शेषंदर्शितयाव्याख्येयम् ॥९॥ शन्नः । शंसुखरूपः नोस्माकम् वातःअपरूपः अव्या-

धिज्ञनकश्च । पवताम् वातु । शंसुखरूपः अदहन.भेषजरूपश्च नोस्माकंतपतुसूर्यः । शन्नःसुख-रूपश्चास्माकम् । पर्जन्योदेवः काशनिजाररहितंपवित्रमुदकम् भेषजकार्ट अभिवर्षतु । कनि-क्रदत् । स्तनयित्नुशब्दंकुर्वन् ॥ १० ॥ अहानिशम् द्विपदागायत्री । अहानिदिवसाः शंसु-खरूपा भवन्तु नोस्माकम् । शंसुखरूपा.रात्रीः प्रतिधीयताम् प्रतिदधात्वस्मासुमहावीरः ।

शन्नः कनिक्रदद्देवः पुर्जन्यो॑ऽअभिवर्षतु ॥१०॥ अहानिशम् ॥ अहानिशम्भवन्तुनः शᳬरात्रीः प्रतिधीयताम् ॥ शन्नऽइन्द्राग्नी भवतामवोभिः शन्नऽइन्द्रावरुणारातहव्या ॥ शन्नऽइन्द्रापूषणा वाजसातौशमिन्द्रासोमासुवितायशंय्योः ॥ ११ ॥ शन्नः ॥ शन्नो

शंसुखरूपौच इन्द्राग्नीभवताम् अवोभिःपालनैः सह । शन्नःसुखरूपौचास्माकम् इन्द्रावरुणा इन्द्रावरुणौ । रातहव्या दत्तहविष्कौभवताम् । शन्नःसुखरूपौचास्माकम् इन्द्रापूषणौभवताम् वाजसातौ अन्नसंभजनेनिमित्तभूते । शंसुखरूपौच इन्द्रासोमौभवताम् सुवितायसाधुगमनाय साधुप्रसवायवा । शयोः शमनायरोगाणाम् यावनायपृथक्करणायच भयानाम् ॥ ११ ॥ शन्नोदे

वी: । षड्देवत्यागायत्री । सुखरूपाअस्माकम् देवी:देव्या: अभिष्टयेअभिषेकाय अभीष्टायवा । आप:भवत । पीतयेपानायच । शंयो: शमनाय रोगाणाम्यावनंपृथक्करणम् पृथक्करणायभया-

देवीरभिष्टयऽआपोभवन्तुपीतये ॥ शंय्योरभिस्रवन्तुन: ॥ १२ ॥ स्योनापृथिवि॥नोभवान्नृक्षरानिवेशनी॥यच्छानःशर्म्मसप्प्रथाः॥१३॥ आपोहि ॥ ष्ठामयोभुवस्तानऽऊर्ज्जेदधातन ॥ महेरणायच चक्षसे ॥ १४ ॥ योवः शिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ १५ ॥ तस्म्माऽअरम् ॥ तस्म्माऽअरङ्गमामवोयस्यक्षयाययजिन्न्वथ ॥ आपोजनयथाचनः ॥ १६ ॥ [ १६ ] द्यौः शान्तिः ॥

नाया । षभिस्रवन्तुन:अस्माकम् ॥ १२ ॥ स्योनापृथिवीतिव्याख्यातम् ॥ १३ ॥ आपोहिष्ठेतितिस्रव्याख्याता: ॥ १४ ॥ ॥ १५ ॥ १६ ॥ द्यौ:शान्ति: । याद्युलोकरूपाशान्ति: याचान्तरि-

रूपाशान्तिः । याचपृथिवी । आपः ओषधयः । वनस्पतयः विश्वेदेवाः । ब्रह्मत्रयीलक्षणा परंवा । सर्वंशान्तिः । याचशान्तिरेवशान्तिः । याचस्वरूपतएवशान्तिः । सा । मामप्रशान्ति एधि । अस्त्वितिपुरुषव्यत्ययः । त्वत्प्रसादादित्यपेक्षा ॥ १७ ॥ दृतेदृंह० दृमा । दृतेयजुः ।

द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिः ॥ वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्वꣳशान्तिः शान्तिरेवशान्तिः सामाशान्तिरेधि ॥ १७ ॥ दृतेदृꣳहमामित्रस्यमाचक्षुषासर्वाणिभूतानिसमीक्षन्ताम् ॥ मित्रस्या

दृविदारणे विदीर्णेपिशरीरेजरया । दृꣳहदृढीकुरुमाम् । कथमितिचेत् । मित्रस्यमाचक्षुषासर्वाणिभूतानिसम् ईक्षन्ताम् पश्यन्तु । अहमपि । मित्रस्य चक्षुषासर्वाणिभूता निसमीक्षेपश्यामि । शान्तंहिमित्रस्यचक्षुः । नवैमित्रकञ्चनहिनस्ति । नमित्रं कश्चनहिनस्तीति ।

परमहिंस्यमाना अहिंसन्तश्च परस्परमद्रोहेण सर्वथा मित्रस्य चक्षुषा समीक्षामहे॥ १८॥ दृते दृꣳह। यजुः। दृते दृꣳह मा। अतिशयार्थं पुनर्वचनम्। ज्योक् चिरम् तेतव संदृशि संदर्शने। जीव्यासम् जीवेयम् आदरार्थम् पुनर्वचनम्॥ १९॥ नमस्ते हरसे इति व्याख्यातम्॥ २०॥ नमस्ते।

चक्षुषा सर्वाणि भूतानि समीक्षे॥ मित्रस्य चक्षुषा समीक्षामहे।१८।
दृते दृꣳह मा॥ ज्योक्ते सन्दृशि जीव्यासं ज्योक्ते सन्दृशि जीव्यासम्॥ १९॥ नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे॥ अन्याँस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव॥२०॥नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे॥नमस्ते भगवन्नस्तु यतः स्वः समीहसे॥२१॥

हे अनुष्टुभौ। नमः ते तुभ्यम् अस्तु। विद्युते विद्युद्रूपाय। नमस्ते स्तनयित्नवे स्तनयित्नुरूपाय नमः ते हे भगवन् अस्तु। यतः अस्मात् स्वः स्वर्गलोकं गन्तुम् समीहसे चेष्टसे। अमर्त्यं त्वामित्यभिप्रायः॥ २१॥

यतोयत । यतोयस्मात् दुश्चरितात् अपाकर्तुमसमीहसे चेष्टसे ततस्ततः न अस्माकम् अभयं-कुरु । किञ्च । नः अस्माकम् कुलप्रजाभ्यः अभयम् पशुभ्यः कुरु ॥ २२ ॥ इतउत्तरं यजूंषि व्याख्यायन्ते आश्वध्यायात् । तत्रसुमित्रियानइति व्याख्यातम् ॥ २३ ॥ तच्चक्षुः । योयजुषावीरो-

यतो॑यतः स॒मीह॑से॒ तत॑तो नो॒ऽअभ॑यङ्कुरु ॥ शन्नः॑ कुरु प्र॒जाभ्यो॒ऽभ॑यन्नः प॒शुभ्यः॑ ॥ २२ ॥ सु॒मि॒त्रि॒या नः॑ ॥ सु॒मि॒त्रि॒या न॒ऽआप॒ऽओष॑धयः सन्तु दु॒र्मि॒त्रि॒यास्तस्मै॑ सन्तु॒ योऽस्मान्द्वेष्टि॒ यञ्च॑ व॒यं द्वि॒ष्मः ॥ २३ ॥ तच्चक्षुः॑ ॥ तच्चक्षु॑र्दे॒वहि॑तम्पु॒रस्ता॑च्छु॒क्रमु॒च्चर॑त् ॥ पश्ये॑म श॒रदः॑ श॒तञ्जीवे॑म श॒रदः॑ श॒तᳪ शृणु॑याम श॒रदः॑ श॒तम्प्र ब्र॑वाम श॒रदः॑ श॒तमदी॑नाः

स्याभिस्तुत । तत् आदित्यरूपं चक्षु । देवहितम् देवैर्निहितं स्थापितम् देवानांवाहितम् । पुरस्तात्प्राच्यांदिशि । उच्च शुक्रम् असंसृष्टपाप्मभि । शोचिष्मद्वा । उच्चरत् उदितम् । तत्प्रसादाच्च । पश्येम शरदः शतम् । जीवेमशरदः शतम् । शृणुयामशरदः शतम् । प्रब्रवामशरदः शतम् अस्खलि-

तागिन्द्रियाभवाम: । अदीनाः स्याम शरदः शतम् भूयश्च शरदः शतात् ॥ २४ ॥

इति उव्वटकृतौ मन्त्रभाष्ये षट्त्रिंशोऽध्याय: ॥ ३६ ॥

स्यामशरदंः शतम्भूयंश्च शरदंः शतात् ॥ २४ ॥ [ ८ ]

इतिसंहितायांदीर्घपाठेषट्त्रिंशोऽध्याय: ॥ ३६ ॥

* देवस्यंत्वा ॥ सवितुःप्रंसवे ऽश्विनोर्बाहुभ्यांपूष्णोहस्ता

भ्याम् ॥ आदंदेनारिरसि ॥ १ ॥ युञ्जतेमनंः ॥युञ्जतेमनंऽउतयुंञ्जते

(१) महावीरसम्भरणम् अभ्रादानम् । देवस्यत्वेतिव्याख्यातम् नारिरसीतिविशेष: ॥१॥ आल-

( १ आ देवस्य त्वेत्यभ्रिमादायोदुम्बरीं वैकङ्कतीं वाऽरत्निमात्रीमूर्ध्वं कृत्वा दक्षिणेनालभ्य जपति युञ्जत इति । उदुम्ब-रफल्यां विकङ्कतफल्यां वा हस्तप्रमाणामभ्रिं देवस्यत्वा नारिरसीति मन्त्रेणादाय वामहस्ते तां कृत्वा दक्षिणहस्तेन स्पृष्ट्वा युञ्जतेमन इति मन्त्रं जपतीति सूत्रार्थ: ।

* देवस्यत्वादग्रयमायस्यैकादशानेकविंठ० सर्वत: ॥

भ्यजपति । युञ्जतेमन इतिव्याख्यातम् ॥ २ ॥ स्फ्यपिण्डान्परिगृह्णाति । देवीद्यावापृथिवी हेदेव्यौ द्यावापृथिव्यौ । मखस्ययज्ञस्य वांयुवाम् उपादाय । स्वदन्तोदकं वादायेत्यर्थः । अद्यशिरः राध्यासम् राधसाधसंसिद्धौ । संसाधयेयम् देवयजने देवाअस्मिन्निज्यन्ते इति देवयजनम् । पृथिव्याः मखाय यज्ञायत्वा परिगृह्णामि । ततोपितिशेषापेक्षायामाह । मखस्यशीर्ष्णेत्वांपरिगृह्णामीति ॥ ३ ॥

धियोविप्राविप्रस्यबृहतोविपश्चितः ॥ विहोत्रांदधेवयुनाविदेकइन्महीदेवस्यसवितुः परिष्टुतिः ॥ २ ॥ देवीद्यावापृथिवी ॥ मखस्यवामद्यशिरोराध्यासन्देवयजनेपृथिव्याः ॥ मखायत्वामखस्यत्वाशीर्ष्णे ॥ ३ ॥ देव्योवम्र्यः ॥ देव्योवम्र्योभूतस्यप्रथमजामखस्यवोद्यशिरोराध्यासन्देवयजनेपृथिव्याः ॥ मखायत्वामख

अथवल्मीकवपांगृह्णाति । देव्योवम्र्यः । हेदेव्यः वम्र्यः । उपजिह्विकाः सीमकाइतिपर्यायाः । या यूयंभूतस्य प्रथमजाः । पृथिवीभूतानां प्रथमजातत्संबन्धाद्वम्र्योपि प्रथमजा उच्यन्ते । मख-

स्रशिरः राध्यासम् अद्यत्रः ताःयुष्मान् उपादायेतिशेषः । देवयजन इत्यादि व्याख्यातम् ॥ ४ ॥ वराहविहतमादत्ते । इत्यग्रे युष्मद् संबन्धान्मध्यमोत्तमपुरुषः । यात्वम् इयतीप्रादेशमात्रा अभिनयेन निर्दिश्यते । अग्रे वराहस्योद्धरतः आसीत् आसोःअभूः । इयतीह वा इयमग्रे पृथिव्यास । प्रादेशमात्रीत्युपक्रम्य वराहउज्जघानेत्याह । तांस्त्वाब्रवीमि मखस्यते त्वामुपादाय अद्यशिरः

स्यंत्वाशीर्ष्णे ॥ ४ ॥ प्रातम् ॥ १९०० ॥ इयत्यग्रे ॥ इयत्यग्रऽआ सीन्मखस्यंतेद्यशिरोराध्यासन्देवयजनेपृथिव्याः ॥ मखायंत्वामख स्यंत्वाशीर्ष्णे ॥ ५ ॥ इन्द्रस्यौजः ॥ इन्द्रस्यौजस्थमखस्यंवोद्यशिरो राध्यासन्देवयजनेपृथिव्याः ॥ मखायंत्वामखस्यंत्वाशीर्ष्णे ॥ मखा यंत्वामखस्यंत्वाशीर्ष्णे ॥ मखायंत्वामखस्यंत्वाशीर्ष्णे ॥ ६ ॥ प्रैतु ॥

राध्यासम् देवयजने पृथिव्याः मखायत्वेति व्याख्यातम् ॥ ५ ॥ आदाय आदत्ते । इन्द्रस्यौजस्थ येयूयम् इन्द्रस्यौजोभवथ तान्युष्मान् अद्य उपादाय शिरः राध्यासमित्यादि व्याख्यातम् । अजाक्षीरमादत्त मखायत्वेत्युक्तम् । सम्भृतानभिमृशति मखायत्वेत्युक्तम् ॥ ६ ॥ परिश्रितमभिगच्छन्तोजपन्ति ।

मेत्विविततिव्याख्यातम् । स्वरे सादयति । मखायत्वेत्युक्तार्थम् स्थितिखण्डमादाय महावीरङ्करोति । मखा-
यत्वेत्युक्तम् ॥ ७॥ निष्ठितमभिमृशति । मखस्यशिरोसीत्युक्तार्थम् एवंहितोपस्तौवौ । गवेधुकाभिः

ब्रह्मणस्पतिः प्रदेव्येतुसूनृता ॥ अच्छावीरन्नर्यम्पङ्क्तिराधस
न्देवायज्ञन्नयन्तुनः ॥ मखायत्वामखस्यत्वाशीर्ष्णे ॥ मखायत्वाम
खस्यत्वाशीर्ष्णे ॥ मखायत्वामखस्यत्वाशीर्ष्णे ॥ ७ ॥ मखस्य
शिरः ॥ मखस्यशिरोसि ॥ मखायत्वामखस्यत्वाशीर्ष्णे ॥ मखस्य
शिरोसि ॥ मखायत्वामखस्यत्वाशीर्ष्णे ॥ मखस्यशिरोसि ॥ मखा
यत्वामखस्यत्वाशीर्ष्णे ॥ मखायत्वामखस्यत्वाशीर्ष्णे ॥ मखायत्वा
मखस्यत्वाशीर्ष्णे ॥ मखायत्वामखस्यत्वाशीर्ष्णे ॥ ८ ॥ अश्वस्य

स्नाप्यायति । मखायत्वेतित्रिभिर्मन्त्रैस्त्रीन्महावीरान् ॥ ८ ॥ अश्वशकृतावधूपयति । अश्वस्यत्वाम्

हिमचारीर हृप्य.सेतुः । शक्रा शंकाच्छन्दसयशकान्नादेशः । धूपयामि देवयजनेपृथिव्याः । मखायत्वा
मखस्यत्वाशीर्ष्णे । एवंद्वितीयतृतीयौ । धूपयतिलौम्महावीरान् त्रिभिर्मन्त्रैः मखायत्वेतिम-

न्त्रा ॥ वृष्णोः शुक्राधूंपयामिदेवयजंनेपृथिव्याः ॥ मुखायंत्वामुखस्यं
त्वाशीर्ष्णे॥ अश्वस्यत्वावृष्णः शुक्राधूंपयामिदेवयजंनेपृथिव्याः ॥
मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥ अश्वस्यत्वावृष्णः शुक्राधूंपयामिदेव
यजंनेपृथिव्याः ॥ मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥ मुखायंत्वामुखस्यंत्वा
शीर्ष्णे ॥ मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥ मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥८॥
ऋजवेत्वा ॥ साधवेत्वासुक्षित्यैत्वा ॥ मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥

तिमन्त्रम् ॥ ८ ॥ पश्चानुद्वरति । ऋजवेत्वेति प्रतिमन्त्रम् । ऋजवेत्वा असौवैलोकः ऋजुः ।
सत्यमेवतत्यौदित्यरक्षितम् । सत्यम्वाआदित्यः ऋजवेत्वा आदित्यायत्वाम् उद्धरामीतिशेषः ।

एषउप्रथमः प्रवर्ग्यः । साधवेत्वा अयंवैमाधुर्गोयु. । एषह्रीमान् लोकान् सिद्धोप्रतिष्ठित'पवते ।
एषउद्वितीय. प्रवर्ग्यः । सुचित्यैत्वा अयवैलोकः सुचित. । अस्मिन्हिलोके सर्वाणिभूतानि
चिरन्ति । अग्निर्हिवासुचित. । अग्निर्हि अस्मिन्लोके सर्वाणिभूतानि परिगृह्णवसति । एष-
प्रहतीय प्रवर्ग्यः । अत्रापयमापरि सिञ्चतिमहावीरान् मखायत्वेतिप्रतिमन्त्रम् । सहावीरा-
संभरण समाप्तम् ॥ १० ॥ महावीरप्रोचति । यमायत्वामखायत्वा सूर्यस्यत्वातपसे । प्रोक्षा

मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥ मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥१०॥
[ १० ] युमायंत्वा ॥ मुखायंत्वासूर्य्यस्यत्वातपसे । देवस्त्वांसवितास
ध्वानक्तुपृथिव्याः सꣳस्पृशस्पाहि ॥ अर्चिरसिशोचिरसितपोसि ॥ ११ ॥ अनाधृष्टापुरस्तात् ॥ अनाधृष्टापुरस्तादग्नेराधिपत्य

मीतिशेषः । महावीरमनक्ति । देवस्त्वासवितामध्वानक्तु इतिवाख्यातम् । रजतशतमानंखरे
उपगूहति । पृथिव्या सꣳस्पृशः । संस्पृशतीतिसंस्पृक् क्विबन्तस्यैतद्रूपम् । हेरजतपृथिव्याः संस्प-
र्शोराजमात् महावीरम्पाहिगोपाय । महावीरसाज्यमन्तं निदधाति । अर्चिरसियोचिरसि तपोसि
मटज्वर्यम् ॥ ११ ॥ अनाधृष्टेतिवाचयति प्रादेशमधराविधारयन् । हेपृथिवि यात्वम् अना-

घृष्टाग्रधर्पितारक्षोभिःपुरस्तात् तांत्वांब्रवीमि। अग्नेःआधिपत्ये सति आयुर्मेदाः देहि। यात्वं-पुत्रवतीदक्षिणतोभवसि। तांत्वांब्रवीमि इन्द्रस्याधिपत्ये मति प्रजाम्मेदाःमह्यंदेहि। यात्वंसुपदा स्वाखेया साध्वस्मिन्सीदतीतिसुपदा। पश्चाद्भवसि तांत्वांब्रवीमि। देवस्यसवितुः आधिपत्ये सतिच-क्षुर्मेदाः देहि। यात्वम् आश्रुतिः। आश्रयन्त्यस्मिन्यजमाना इत्याश्रुतिः। यज्ञियोह्यसौदेशः।

ऽआयुर्म्मेदाः पुत्रवंतीदक्षिणतऽइन्द्रस्याधिंपत्त्येप्प्रजाम्मेदाः ॥ सुखदां पश्चाद्देवस्यंसवितुराधिंपत्त्येचक्षुर्म्मेदाऽआश्श्रुतिरुत्तरतोधातुराधिंपत्त्येरायस्पोषंम्मेदाः ॥ व्विधृंतिरुपरिंष्ट्राद्बृहस्पतेराधिंपत्त्यऽओजोमेदाव्विश्वाब्भ्योमानाष्ट्राब्भ्यस्पाहिमनोरश्वासि ॥ १२ ॥

उत्तरतोभवसि। तांत्वांब्रवीमि। धातुराधिपत्ये मति रायस्पोषम् धनस्यपुष्टिम्मेदाः देहि। यात्वं-विधृतिः विधारिणीउपरिष्टाद्भवसि। तांत्वांब्रवीमि बृहस्पतेः आधिपत्ये सति ओजःमेदाः। दक्षिणतउत्तानेन पाणिनानिह्नुते। विश्वाभ्योमानाष्ट्राभ्यस्पाहि। सर्वाभ्यः मामार्त्तिभ्यः गोपायेति। इमामभिमृश्यजपति। मनोरश्वासि। अश्वाभूत्वा इयंभूत्वा मनुमुवाहेतिश्रुतिः ॥१२॥

विकङ्कतशकलैः परिश्रयति । स्वाहामरुद्भिः परिश्रीयस्व । हे प्रवर्ग्य यस्त्वं स्वाहाकारः तं त्वां ब्रवीमि । मरुद्भिःरश्मिभिः यद्वा विशोवैमरुतइतिश्रुतिः ताभिःपरिश्रीयस्व । कर्मणियक् । आश्रीयस्व । मरुतस्त्वामाश्रयन्त्वित्यर्थः । सुवर्णशतमानेनापिदधाति । दिवः दुग्लो । कस्य संस्पर्शनोरजसो महावीरं पाहि गोपाय । अथवा । दुग्लोकस्य संस्पर्शनकर्त्तॄन् देवांस्त्वं हे महावीर पाहि । पवित्रैराधुनोति । मधुमधुमधु । मधुमयो मधुसामान्यादुच्यते । सम्यं-

स्वाहामरुद्भिः॥परिश्रीयस्वदिवःसꣳस्पृशस्पाहि॥मधुमधुमधु॥१३॥ गर्ब्भोदेवानाम् ॥ गर्ब्भोदेवानाम्पितामतीनाम्पतिः प्रजानाम् ॥ सन्देवोदेवेनसवित्रागतसꣳसूर्य्येणरोचते ॥ १४ ॥ समग्निः ॥ समग्नि

गानारम्भः तं महावीरेसादयति ॥ १३ ॥ महावीरमुपतिष्ठते । गर्भोदेवानामित्यवकाशैः तेनत्वष्टमन्तद्दत्यतःप्राक् । योगर्भोदेवानाम् गृह्णातीतिगर्भः आदित्यात्मनामहावीरः । यश्च पितामतीनां गोपायितावुद्धीनाम् । यश्च पतिरधिपतिःप्रजानाम् । यश्च । संदेवोदेवेनसवित्रागत । संगत । संगच्छते देवःप्रवर्ग्यःदेवेनसवित्रासह । यश्च संरोचते घर्मःसूर्येणसह एकीभूतः तंवयंस्तुमइति वाक्यशेषः ॥ १४ ॥ समग्निः । अनुष्टुप्प्राह्णी । यश्च । संगतसंगच्छतेऽग्निःघर्मःअग्निनासूर्योज्यो-

नसह। यश्चसंगत संगच्छते दैवेनसविचासह । यश्चममरोचिष्ट मरोचतेदीप्यते सूर्येणसह-स्पर्द्धयन् । तंवयंस्तुम इतिवाक्यशेषः। स्वाहाकारः आदित्यप्रीणनार्थं। यश्चस्वाहा अग्निःसंगत। संगच्छते। तपसाआदित्य मंवह्निनासह। यश्चसंगत । संगच्छते दैव्येनसवित्रासह । यश्चसमरूरुचत। समरोचतसंरोचतेसूर्येणसह स्पर्द्धयन्। तंवयंस्तुमइतिवाक्यशेषः॥ १५॥ धर्ता-दिवः। जर्ध्वबृहती। घर्मस्तुतिः। योयंधर्ताधारयिता दिवःद्युलोकस्य। यश्चतपसः रश्मिजा-

रग्निनागतसन्दैवेनसवित्रासँसूर्य्येणारोचिष्ट॥ स्वाहासमग्निस्तपसागतसन्दैव्येनसवित्त्रासँसूर्य्येणारूरुचत॥ १५॥ धर्तादिवः॥ धर्तादिवो व्विभातितपसस्पृथिव्यान्धर्तादेवोदेवानाममर्त्यस्तपोजाः॥ व्वाचमस्मेनियच्छदेवायुवम्॥ १६॥ अपश्यङ्गोपाम्॥ अपं

तस्य धर्ता। विभातिचपृथिव्याम् अवस्थितः। धर्ताधारयिताच देवानाम्। स्वयंचदेवः अमर्त्यःमनुष्यधर्मरहितः। तपोजाः। तपःआदित्यः तस्माज्जायते। सोयम्वाचम् अस्मेअस्मासु। नियच्छ। नियच्छत्वितिपुरुषव्यत्ययः। निगृह्णातुस्थापयतु। देवायुवम्। यादेवान् यौतिमिश्रयति आगमयति सातथोक्तातांदेवायुवम्॥ १६॥ अपश्यन्। त्रिष्टुप्। आदित्यात्मनाघर्मस्तुतिः।

यमक्षमपश्यम् । गोपांगोप्तारम् । अनिपद्यमानम् अनालम्बनेअन्तरिक्षेगच्छन्नासौपतति । आचपराच पथिभिश्चरन्तम् । आचरन्तंच आगच्छन्तंच पराचरन्तंच । परागच्छन्तंच । पथिभिः देवैःसह । सस-ध्रीचीः । सएवससध्रीची. सहस्थसध्रिरादेशः । सहाञ्चनाः दिशोरश्मिन्वासहस्तम् । सविषूचीः । विषु इतिनिपातोनानावचनः । अञ्चतेःपरंक्विप् । नानाञ्चनाः दिशः नानाञ्चनान्वारश्मीन् । वसानः आच्छादयन् । आवरीवर्त्ति । पुन.पुनरावर्त्तते । भुवनेषु त्रिपुलोकेषु । अन्तर्मध्येत्रवस्थितः ॥ १७॥

प्र्यङ्गोपामनिंपद्यमानुमाचुपराचपुथिभिश्चरंन्तम् ॥ सुसध्रीचीःऽ स विषूचीर्वसानुऽआवरीवर्त्तिभुवनेष्वुन्तः ॥ १७ ॥ विश्वासाम्भु वाम् विश्वासाम्भुवाम्पते विश्वस्यमनसस्पते विश्वस्यव्वचसस्प

विश्वासांभुवाम् । सर्वासांपृथिवीनांपते हेप्रवर्ग्य । विश्वस्यमनसः सर्वस्यप्राण्याश्रयस्यमनसः पते । विश्वस्यवचसः सर्वस्यनयीलक्षणस्यवचसःपते सर्वस्यवचसः सर्वस्यलौकिकस्यवचसःपते । त्वां स्तुमइतिशेषः । यतश्च त्वंदेवश्रुत् देवैःश्रुतः अतोत्वांयाचे । हेदेवघर्मत्वंदेवःसन् देवान्पाहिगोपाय । अवप्रावीरनुवांदेववीतये । अतसत्वं अस्मिन्नवसरेवा । प्रावीरितिपुरुषव्यत्ययः । प्रावरतुत्पं यतु

वर्मः। नांयुनाम् ईयश्विनौ। अनुदेववीतये। ततोनन्तरम् देवतर्पणायनमस्करोत्त्विति वाक्यशेषः। मधुमाध्वीभ्याम्। मधुनामब्राह्मणंतद् श्विभ्यांददौदध्यङ्ङाथर्वणः। तदेतदुक्तम्। मधुमाधूचीभ्याम्। मधुब्राह्मणं मतिमन्तौगच्छतः ताताभ्यामध्वस्तनाभ्याम्। शेषंपूर्ववद्व्याख्येयम् ॥१८॥ हृदेत्वा। परोष्णिक्। हृदेत्वाहृदयार्थंत्वांस्तुमइतिशेषः। एवंमनसे त्वांस्तुमः। दिवे अर्थायते सर्वस्यवचसस्पते ॥ देवश्रुत्वन्देवघर्म्मदेवोदेवान्पाह्यत्र प्रावीरनुवान्देववीतये॥ मधुमाद्ध्वीभ्याम्मधुमाधूचीभ्याम् ॥१८॥ हृदेत्वा ॥मनसेत्वादिवेत्वा सूर्यायत्वा ॥ ऊर्ध्वोऽअद्ध्वरन्दिविदेवेषु धेहि ॥ १९ ॥ पितानः ॥ पितानोसिपितानोवोधिनमस्तेऽअस्तुमा त्वांस्तुमइतिशेषः। सूर्यायत्वा सूर्यतर्पणायत्वांस्तुमः। यस्माञ्च सर्वकार्यंपुत्वामेवस्तमः। अतो-त्रूनः। ऊर्ध्वः अनहितचितःसन् अध्वरन्दिविदेवेषु धेहिनिधेहि स्थापय। १९ ॥ पितानोसि। गायत्री। यतस्त्वम् पिता नःअस्माकमसिभवसि। अतोब्रवीमि। पितेवभूत्वा नःअस्मान् वोधियोग्यसर्वथा। नमः तेअस्तु मामाहिंसीः हिंसीवाः। पत्नीवाचयति महावीरनोचमाणाम्।

त्वष्टमन्तस्त्वा । यजुः । यतश्च त्वाष्टसंयुताः । त्वष्टाहि चेतसांविकर्त्ता । त्वामेवसपेम । सपतिः स्पृगतिकर्मा । मैथुनार्थमुपस्पृशामः । अत.पुत्रान् पशून्मयिधेहि स्थापय । प्रजाचभूयोभूय. अस्मासु धेहिस्थापय । किंच । अरिष्टाअनुपहिंसिताअहम् । सहपत्यासहभर्ताभूयासम् । आशी. ॥ २० ॥ रौहिणोनुहोति । अह केतुनाप्रज्ञया कर्मणावा । सहितम् जुषताम् परिगृह्णातु । कथमु-

मांहिंᳬसीऽ ॥ त्वष्टृमन्तस्त्वासपेमपुत्रान्पशून्मयिधेहिप्रजामस्मासुधेह्यरिष्टाहᳬसहपत्याभूयासम् ॥ २० ॥ अहः केतुना ॥ जुषताᳬसुज्योतिर्ज्योतिषास्वाहा ॥ रात्रिः केतुनाजुषताᳬसज्योतिर्ज्योतिषास्वाहा ॥ २१ ॥ [ ११ ]

इतिवाजसनेयसंहितायांदीर्घपाठेसप्तत्रिंᳬशोऽध्यायः ॥ ३७ ॥

तम् । यदहः सुज्योति. । ज्योतिषांशोभनज्योतिष्कम् केनज्योतिषास्वकीयेनेव । स्वाहासुहुतं चैतद्विभवतु । रात्रि केतुना । अधस्तनेनव्याख्यातम् ॥ २१ ॥

इति उव्वटकृतौ मन्त्रभाष्ये सप्तत्रिंशोध्यायः ॥ ३७ ॥

(१) अथधर्मं धुग्दोहनार्थं रज्जुमादत्ते ॥ देवस्यत्वेतिव्याख्यातम् । आददेगृह्णामि । यतस्त्वम् अदित्यैरास्नासि ॥॰१ ॥ गामाह्वयति । इडएहि । अतस्मिंस्तच्छब्द स्तदतिदेशार्थ. । हेइडे मानवि आइहि आगच्छ दोहाय । हेअदिते देवमातः एहि । हेसरस्वति वाक्एहि असावितिनामग्रहणा-

* देवस्यंत्वा॥देवस्यंत्वासवितुःप्प्रंसवे ऽश्विनोर्ब्बाहुब्भ्यांम्पूष्णोह स्ताब्भ्याम् आददेदिंत्यैरास्न्नासि ॥१॥ इडऽएहिं॥ इडऽएह्यदितऽ एहिसरंस्वत्येहिं ॥ असावेह्यसावेह्यसावेहिं॥२॥ अदिंत्यैरास्न्ना

न्निकर्षः । असौधवलेएहि । विः । आमन्त्रितस्येत्यादिरुदात्तः ॥ २ ॥ अत्यैरास्नासीति गांपशैनप्र- तिमुञ्चति अदित्यैरास्नासि । इन्द्राण्याउष्णीषः इन्द्राणी इन्द्रस्यपत्नी तस्याः शिरोवेष्टनं त्वमसि ॥

(१) का॰ देवस्यत्वेति रज्जुमन्दानमादायेडएहीति गमाह्वयति नाम्ना च त्रिरुच्चैस्तरेण गार्हपत्य गच्छन् । अध्वर्युर्दे- वस्यत्वेति रज्जुमन्दानमादाय गार्हपत्यस्य पश्चात्स्थान् इडएहीति वाक्यत्रयेण घर्मदुघां गामाह्वयति असावेहीति गोर्नाम्ना घोषेत्रिवारमाह्वयतीति सूत्रार्थः ॥

---

* देवस्यत्वाद्योपमायत्वाचनग्यलादगकौचयोद्दाचि ठ॰ ग्रति. ॥

वत्समुत्सृजति । पूषासि । यथापूषा वायुपुष्टिमाप्यायति । एवंत्वमपि प्रस्नावनेन जगदुत्पत्तिवीजंप-
यसाप्यायसि । वत्समुन्नयति । घर्मायदीष्व । दयसि । रूपदयाकर्मापि यसउपदयांकुरु मासर्वंमु-
पासीः ॥३॥ पित्वनेदोग्धि । अश्विभ्यांपिन्वस्व । अश्विभ्यामर्थाय पिन्वस्वप्यावयस्व । एवमेव सर-
स्वत्यैइन्द्रायच । विप्रुषाभिमन्त्रयते । स्वाहेन्द्रवदिति । यद्दुह्यमानं स्कन्नंतत्सुहुतमस्तु इन्द्रवत्

सीन्द्राण्याऽउष्णीषः ॥ पूषासिघर्मायदीष्व ॥३॥ अश्विभ्यांपिन्व
स्वसरस्वत्यैपिन्वस्वेन्द्रायपिन्वस्व ॥ स्वाहेन्द्रवत्स्वाहेन्द्रवत्स्वाहेन्द्र
वत् ॥ ४ ॥ यस्ते ॥ स्तनः शशयोयोमयोभूर्यैरत्नधावसुविद्यः

इन्द्रसंयुक्तमइतित्रिः ॥ ४ ॥ स्तनमालभते । यस्तेस्तनः । त्रिष्टुब्वाग्देवत्या । वाग्देवीसरस्वतीति-
श्रुतिः । यः तेतवस्तनः । कथंभूतः । शशयः । शीङ्स्वप्ने । सुप्तइवास्ते अनुपभुक्तोन्यैः । यश्च-
मयोभूः मयःसुखम्भावयति सर्वभूतानाम् । यश्चरत्नधाः । रमणीयानांधनानांधारयिता ।
यश्चवसु वित् वसुविन्दति । यश्चसुदत्रः कल्याणदानः । धनवानपिसन् कश्चिन्नोत्सहतेदातुम्

घृतएवंविधाते । येनविश्वा । येनच विश्वाविश्वानि पुष्यासिपुष्णासि वार्याणिवरणीयानि । हेमस्थति तंत्तनमृडह । धातवे । धेटपाने । पानाय । चकःकुरु । गच्छति । उर्वन्त-रिक्षमिति व्याख्यातम् ॥ ५ ॥ परीशासावादत्ते । गायत्रंछन्दोसि त्रैष्टुभंछन्दोसि ॥ ऋत्नु-मध्वीरंगृह्णाति । द्यावापृथिवीभ्यां त्वांपरिगृह्णामि । परीशासयोः द्यौश्चपृथिवीच अध्यास्तः

सुदत्त्रंः ॥ येनुव्विश्वाप्पुष्यंसिव्वार्य्याणिसवंत्वातितसिद्घातवेकं ॥ उर्व्वन्तरिंक्षमन्व्वेंसि ॥५॥ गायत्रञ्छन्दंः ॥ गायत्रञ्छन्दोसित्त्रैष्टुभ्म्छन्दोसिद्यावांपृथिवीभ्यान्त्वापरिंगृह्णाम्यन्तरिंक्षेणोपंयच्छामि ॥ इन्द्रांश्विनामधुंनःसारुघस्यंघुर्म्मम्पातवसंवोयजंतुव्वाट् ॥ स्वाहासर्यं

मण्वीरेत्यादित्यः । उपयमन्याउपगृह्णाति । अन्तरिक्षेणोपयच्छामि । अन्तरिक्षेण उपगृह्णामि । उपयमन्या अन्तरिक्षरूपेणसंस्तव: । पयसासिञ्चति ॥ इन्द्राश्विना । हेइन्द्र हेअश्विनौ । मधु-नःसारघस्य । सरघा मधुकृतः भ्रमराइवकृत्विजः तैःकृतस्यसारघस्य मधुनःघर्मंपातसंपि-बत । हेवसवः वासयितारः । यजतच वाट्वषट्कारेण । स्वाहासुहुतमस्तु । सूर्यस्यरश्मये ।

वृष्टिवनये। वृष्टे.संभक्त्रे दात्रेवा। सूर्यस्यहवा एकोरश्मिर्वृष्टिवनिर्नामेतिश्रुतिः ॥ ६ ॥ द्रुत-उत्तरं द्वादशवातनामानि यजत्यध्वर्युः। समुद्रायत्त्वेति। एतस्माद्वै समु द्रात्सर्वाणिभूतानि समुद्रवन्तीतिसमुद्रोवात.। समुद्राय त्वां हेप्रवर्ग्यवातायस्वाहा जुहोमि। एवमेवोत्तरत्रापि योजना। सरिराय। एतस्मात्सरिरात्सर्वाणिभूतानि लब्धकार्याणिसन्ति। सइर्द्दरतेगच्छति।

स्वर्प्रभ्रसर्येवृष्टिवनेये ॥ ६ ॥ सुमुद्रायत्वा ॥ वातायस्वाहांसरिरायत्वा वातायस्वाहा ॥ अनाधृष्यायत्वावातायस्वाहाप्रतिधृष्यायत्वा वातायस्वाहा ॥ अवस्यवेत्त्वावातायस्वाहाशिमिदायत्वावाताय स्वाहा ॥ ७ ॥ इन्द्रायत्वा ॥ वसुमतेरुद्रवतेस्वाहेन्द्रायत्वादित्यवते

अनाधृष्याय अशक्याय आधर्षितुम्। अप्रतिधृष्याय अशक्याय प्रतिधर्षितुम्। अवसवे अवन-शीलाय। 'अशिमिदाय। शिमीतिकर्मनाम। क्लेशात्मकञ्चैतत्। अक्लेशदाय ॥ ७ ॥ इन्द्रायत्त्वा। इन्द्रायत्वा वसुमतेरुद्रवतेस्वाहा। इन्द्रायत्त्वा आदित्यवतेस्वाहा। इन्द्रायत्वा अभिमातिघ्ने।

सपत्नोवा अभिमातिः। सवित्रे त्वा ऋभुमतेविभुमते वाजवतेस्वाहा। ऋभुर्विभुर्वाजइति सुध-न्वनआङ्गिरसस्य त्रयःपुत्राऋभुः। तेषामयंमंत्रवः। बृहस्पतयेत्वा विश्वदेव्यावतेस्वाहा ॥ ८ ॥ यमायत्वा। अंगिर स्वतेपितृमतेस्वाहा। उपयमन्याआसिंचति। स्वाहाघर्माय सुहुतोघर्माय-चैतत्स्यात्। स्वाहाघर्मः सुहुतोघर्म.पित्रे स्यादितिशेषः ॥ ९ ॥ वषट्कृतेजुहोति। विश्वा-

स्वाहेन्द्रायत्वाभिमातिघ्नेस्वाहा ॥ सवित्रे त्वंऽऋभुमतेंव्विभुमते व्वाजंवतेस्वाहाबृहस्पतंयेत्वाव्विश्वदेंव्यावतेस्वाहा ॥८॥ [८] यमा यत्वाङ्गिंरस्वतेपितृमतेस्वाहा ॥ स्वाहाघर्म्मायस्वाहाघर्म्मःपित्रे ॥९॥ व्विश्वाऽआशाः ॥ व्विश्वाआशादक्षिणसद्विश्वान्देवानयाडिह ॥

आशाः। अनुष्टुबाशिनीः। विश्वा.सर्वाः आशा:काष्टाः। दक्षिणसत्। दक्षिणसद इतिवचनव्य-त्ययः। दक्षिणासीदन्ति। कस्मात्। यतःविश्वान् सर्वान्देवान् अयाट्। यजतेरेतद्रूपम्। अयाक्षीत् इष्टवान्। इहस्थितः। दक्षिणतोहि स्थितआहुतीर्जुहोति। आहुतिश्चयज्ञः। यत-

एवमतो ब्रवीमि। दक्षिणतोग्नेरस्माभिः स्वाहाकृतस्य। वषट्कारानन्तरं स्वाहाकृतस्यघर्म-स्यमधोः पिबतम् मध्वास्वादस्यपिबतम् अश्विनौ ॥ १० ॥ निरुत्कंपयति। दिविधाः। द्युलोके स्थापय इमंयज्ञम् इमंयज्ञं दिविधाः। अस्यासीभूयांसमर्थमन्यते। अनुवषट्कृतेजुहोति। स्वाहा-ग्नये। सुहुतमस्तु अग्नयेयज्ञियाय यज्ञहिताय। शमुखंच यजुर्भ्यःसकाशात् अस्माकमस्त्वितिशेषः।

स्वाहाकृतस्यघर्मस्यमधोऽपिबतमश्विना ॥ १० ॥ दिविधाः ॥ दिविधाऽइमंयज्ञमिमंयज्ञन्दिविधाः ॥ स्वाहाग्नयेयज्ञियायशंयजुर्भ्यः ॥ ११ ॥ अश्विनाघर्मम् ॥ अश्विनाघर्म्मस्यातꣳ हार्दानमहं

यद्वा शंयजुर्भ्योदेहि ॥ ११ ॥ ब्रह्मानुमंत्रयते। अश्विनाघर्मम्। उष्णागाश्विनी हेअश्विनौ घर्मपा-तपिबतम् हार्दानम् हृदयस्यप्रियम् हृदयंवायोनुवर्त्तते। अहर्दिवाभिः। अहःशब्दः पूर्वाह्णव-चनः। दिवाशब्दस्तु सायाह्नवचनः। सन्धिप्रवर्ग्यकालः। एतत्कालोपलक्षिताभिः ऊतिभिः अवनैर्निमित्तभूतैः। तंत्रायिणी नमोद्यावापृथिवीभ्याम्। तंत्रायिणी। लोकिये प्रसारिताः

तन्तवः तुरीशलाकाप्रोताः ते तंत्रमित्युच्यन्ते। तन्तुनालिरिव सूत्रपूरणाय एतिनीन्लोकान्
सर्तत्रायीआदित्यः तस्मैनमः। उत्तरवाप्यनुषङ्गः। द्यावापृथिवीभ्याम् नमःअस्तु ॥ १२ ॥ यजमानो-
नुमंत्रयते। अपाताम्। आश्विनीककुप्। अपाताम् पीतवन्तौ अश्विनौघर्मम्। अनुद्यावापृथिवी
अमंसाताम्। तच्च घर्मपानमश्विनोः द्यावापृथिवीअपि अमंसाताम् अनुमतवत्यौ साध्वभूदिति।

हिंवाभिंरूतिभिंः ॥ तन्त्रायिणेनमोद्यावापृथिवीभ्याम् ॥ १२ ॥ अपा
तामुश्विना ॥ घर्ममनुद्यावापृथिवीऽअमंऽसाताम् ॥ इहैवरातयंः
सन्तु ॥ १३ ॥ इषेपिंन्वस्व ॥ इषेपिंन्वस्वोर्ज्जेपिंन्वस्वब्रह्मणेपि
न्वस्वक्षत्रायपिन्वस्वद्यावापृथिवीभ्यांपिन्वस्व ॥ धर्म्मासिसुधर्म्मा

यतएवमतोब्रवीमि। इहएव अवस्थितानामस्माकम् रातयःधनानिसन्तु ॥ १३ ॥ पिन्वमानमनुमं-
त्रयते। इषेपिन्वस्व। इष्टितर्पणायविप्रुषोमुञ्च। एवम् ऊर्ज्जेअन्नाय। ब्रह्मणेब्राह्मणेभ्यः। क्षत्रायक्ष-
त्रियेभ्यः द्यावापृथिवीभ्यांपिन्वस्वेति। उत्क्रामत्युत्तरपूर्वार्द्धम्। धर्मासिसुधर्म। धर्मासिधार-
णंसमन्तस्य जगतोस्याहुतिपरिणामद्वारेण। हेसुधर्म साधुधारणशील। खरेसादयति। अमेनि।

मिङहिंसायाम्। 'अहिंसन् अक्रुधान्। अस्मे अस्मासु। नृम्णानि। नृन्नमयन्तीति नृम्णानिधनानि। धारयस्थापय। ब्रह्मधारय क्षत्रं धारय विशम्धारय। तैर्वणिंकानस्मासुस्थापय ॥ १४ ॥ शकलैर्जुहोति। स्वाहापूष्णे। अयत्रैपूषा योयपवते। इतिवायुः। एषहीदंसर्वंपुष्यति। एषउप्राणः। प्राणमेवास्मिन्निदधाति। इत्थं तदुक्तम्। शरसे। अस्तिशरशब्दः। कारणवचनः। अस्तिचसान्तः दध्नउपरिस्नेह. शरइतियजमाना. प्राहुःतदभिप्रायेणैतदुच्यते। स्वाहाग्रावभ्यः प्राणेभ्यः विपयग्र-

मेऽन्व्युस्मेनृम्णानिधारयब्रह्मंधारयक्षुत्रन्धारयविशन्धारय ॥ १४ ॥ स्वाहापूष्णे॥ शरसेस्वाहाग्ग्रावभ्युःस्वाहाप्रतिरवेब्भ्यः॥ स्वाहापितृभ्यऽऊर्द्ध्वबर्हिब्भ्योघर्म्मपावब्भ्युःस्वाहाद्यावापृथिवीभ्याᳪस्वाहाविश्श्वेब्भ्योदेवेभ्यः ॥ १५ ॥ स्वाहारुद्रायरुद्द्रहूतयेस्वाहासञ्ज्यो

हणशीलेभ्यः। स्वाहाप्रतिरवेभ्यः। प्राणाःप्रतिरवाः तान्प्राप्यसर्वंजगद्रमते। स्वाहापितृभ्यःउर्द्ध्वबर्हिभ्यः। ऊर्ध्वमागयं बर्हिर्येषांतएवमुच्यन्ते। सोमपाश्चोतदुक्तवर्षः। घर्मपावभ्यःघर्मपातृभ्यः। स्वाहाद्यावापृथिवीभ्याम्। प्राणोदानौवैद्यावापृथिवी। स्वाहाविश्वेभ्योदेवेभ्यः। प्राणावैविश्वेदेवाः॥१५॥ स्वाहारुद्रायरुद्रहूतये। रुद्रइतिस्तोतृनामसु पठितम्। रुद्रैःस्तोतृभि राहूयतेसरुद्रहूतिः। महा-

वीरादुपयमन्यां प्रत्यानयति। स्वाहासंज्योतिषाज्योतिः। स्वाहासंगच्छतां ज्योतिषाज्योतिः। ज्योतिर्वा इतरस्मिन् वायौभवति। ज्योतिरितरस्यामितिश्रुतिः। अहःकेतुना रात्रिःकेतुना इतिचव्याख्यातम्। भक्षयति। मधुहुतम् यस्मान्मधु उत्कटरसम् हुतम्। क। इन्द्रतमेइन्द्रियवत्तमेवीर्यवत्तमे। प्रणीतवाक्याभिः व्रतमवशिष्टम् अश्यामव्याप्नुयामः भक्षयामः। तेतवाशन्

तिषाः॥ अहःकेतुनाजुषताᳪसुज्योतिर्ज्योतिषास्वाहा॥रात्रिःकेतुनाजुषताᳪसुज्योतिर्ज्योतिषास्वाहा॥ मधुहुतमिन्द्रतमेऽअग्नावश्यामतेदेवघर्म्मनमस्तेऽअस्तुमामाहिᳫसीः॥१६॥ अभीमम्॥ अभीमम्महिमादिवंव्विप्रोबभूवसप्प्रथाः॥ उतश्रवसापृथिवीᳪसᳫ

छेदेय घर्मसर्वयानमस्तेअस्तु। मामाहिंसीरित्यात्मनः परित्राणमाह॥१६॥ महावीरमासंद्यां करोति। अभीमम् गायत्रीबृहत्यौ। नचगायत्र्या अवसानमस्ति। अतिशक्करीवा आग्नेयी अभिबभूव अभिभवति। इमन्दिवं महिमायस्तव। कथंभूतः विप्रःमेधावी। सप्रथाःसर्वतःपृथुः

महिम्नोविशेषणद्वयम् । तंत्वांब्रवीमि उतश्रवसा । अपिच धनेनश्रवणीयेन वायशसा । पृथिवीम् अभिवभूवेत्यनुषङ्गः । संसीदस्वेतिव्याख्यातम् । रोचस्वदीप्यस्वेत्यनर्थान्तरम् ॥ १७ ॥ इतउत्तरे उत्पादनमन्त्राः । शलाकेपुजुहोति । याते तवहेघर्म । दिव्यादिविभवाद्युलोकं प्रविष्टा । शुक्

सीदस्वमुहाँ २ ॥ ऽअसिरोचस्वदेववीतमः ॥ विधूममग्नेऽअरुषम्मियेद्धसृजप्प्रशस्तदर्शतम् ॥ १७ ॥ यातेघर्म्मदिव्याशुग्ग्यागायत्र्याᳫं हविर्द्धाने ॥ सातऽआप्प्यायतान्निष्ट्यायतान्तस्यैतेस्वाहा ॥ यातेघर्म्मान्तरिक्षेशुग्ग्यात्त्रिष्टुब्भ्याग्नीध्रे ॥ सातऽआप्प्यायतान्निष्ट्यायतान्तस्यैतेस्वाहा ॥ यातेघर्म्मपृथिव्याᳫंशुग्ग्याजगत्त्याᳫंसदस्स्या ॥

दीप्तिः । याचगायत्र्यां प्रविष्टा । याचहविर्द्धानेप्रविष्टा । सातेतव आप्यायतान् वर्द्धताम् । निष्ट्यायताम् स्त्यैष्ट्यैशब्दसंघातनयोः । निष्ट्यानासंहताभवतु । तस्यैशुचे तुभ्यञ्च हेघर्मस्वाहा ।

याते अन्तरिक्षे त्रिष्टुभिआग्नीध्रे। समानमन्यत् यातेपृथिव्याम् जगत्याम् । सदस्या सदसि-
भवासदस्या। सदसिप्रविष्टा। समानमन्यत् ॥ १८ ॥ निःक्रामति। अवस्थत्वा महावीरोभिधी-
यते इहत्या। अवस्थसंबन्धिनः परस्पाय परस्पपालनाय । हेमहावीर अनुक्रामामेतिचतुर्थपादे
भविष्यतितस्येह संबन्धः। अनुक्रामाम। किञ्च ब्रह्मणः तन्वंशरीरंपाहि गोपाय। किञ्च विशः।

सातऽआप्यायतान्निष्ट्यायतान्तस्यैतेस्वाहा॥१८॥[१०] अवस्यत्वा॥
परस्पायब्रह्मणस्तन्न्वम्पाहि ॥ विशस्त्वाधर्म्मणाव्वयमनुक्रामा
मसुवितायनव्यसे ॥ १९ ॥ चतुःस्रक्तिर्न्नाभिः ॥ चतुःस्रक्ति

यज्ञोवैविशः यज्ञस्यधर्मणा धारणेननिमित्तभूतेन त्वात्वाम् हेमहावीरवयम् अनुक्रामाम अनु-
गच्छेम । सुवितायसुगतायसुप्रसूतायवा । नव्यसे नवतरायच कर्मणेअनुक्रामाम ॥ १९ ॥
महावीरंनिदधाति। चतुःस्रक्तिः । दिशोमहावीरस्य सक्तयःकोणाः । यःचतुःस्रक्तिः । यज्ञ-
नाभिः नहनम् ऋतस्यसत्यस्यवा यज्ञस्यवा। एवंसप्रथाः सर्वतःप्रथुः। सः नःअस्माकम् विश्वायुः

महिम्नोविशेषणद्वयम् । तंत्वांब्रवीमि उतश्रवसा। अपिच धनेनश्रवणीयेन वाश्रवसा। पृथिवीम् अभिबभूवेत्यनुषङ्गः । संसीदस्वेतिव्याख्यातम् । रोचस्वदीप्यस्वेत्यनर्थान्तरम् ॥ १७ ॥ द्रुतउत्तरे उत्पादनमन्त्राः। शलाकेपुजुहोति। याते तवहेघर्म। दिव्यादिविभवाद्युलोकं प्रविष्टा। शुक्-

सीदस्वमहाँ २ ॥ऽअसिरोचस्वदेववीतमः ॥ विधूममग्नेऽअरुषम्मियेद्ध्यसृजप्प्रशस्तदर्शतम् ॥ १७ ॥ यातेघर्म्मदिव्याशुग्ग्यागायत्र्याᳪं हविर्द्धाने ॥ सातऽआप्प्यायतान्निष्ट्यायतान्तस्यैतेस्वाहा ॥ यातेघर्म्मान्तरिक्षेशुग्ग्यात्रिष्टुब्भ्याग्नीध्रे ॥ सातऽआप्प्यायतान्निष्ट्यायतान्तस्यैतेस्वाहा ॥ यातेघर्म्मपृथिव्याᳪंशुग्ग्याजगत्त्याᳪंसदस्स्या ॥

दीप्तिः । याचगायत्र्यां प्रविष्टा । याचहविर्द्धानेप्रविष्टा । सातेतव आप्यायतान् वर्द्धताम् । निष्ट्यायताम् स्त्यैष्ट्यैशब्दसंघातनयोः । निष्ट्यानासंहताभवतु । तस्यैशुचे तुभ्यञ्च हेघर्मस्वाहा ।

याते अन्तरिक्षे त्रिष्टुभिआग्नीध्रे। समानमन्यत् यातेपृथिव्याम् जगत्याम् । सदस्या सदसि-
भवासदस्या। सदसिप्रविष्टा। समानमन्यत् ॥ १८ ॥ निःक्रामति। अत्रस्त्वा महावीरोभिधी-
यते गृहत्वा। अत्रस्यसंबन्धिनः परस्पाय परस्परपालनाय। हेमहावीर अनुक्रामामेतिचतुर्थपादे
भविष्यतितस्येह संबन्धः। अनुक्रामाम। किञ्च ब्रह्मणः तन्वंशरीरंपाहि गोपाय। किञ्च विशः।

सातुऽआप्यायतान्निष्ट्यायतान्तस्यैतेस्वाहा॥१८॥[१०] क्षुत्रस्यत्वा॥
परस्पायुब्रह्मणस्तन्वम्पाहि ॥ विशस्त्वाधर्म्मणाव्वयमनुक्रामा
मसुवितायुनव्यसे ॥ १९ ॥ चतुंःस्रक्तिर्नाभिंः ॥ चतुंःस्रक्ति

यत्तोवैविशः यज्ञस्यधर्मणा धारणेननिमित्तभूतेन त्वात्वाम् हेमहावीरवयम् अनुक्रामाम अनु-
गच्छेम। सुवितायसुगतायसुप्रसूतायवा। नव्यसे नवतरायच कर्मणेअनुक्रामाम ॥ १९ ॥
महावीरंनिदधाति। चतुःस्रक्तिः। दिशोमहावीरस्य स्रक्तयःकोणाः। यःचतुःस्रक्तिः। यज्ञ-
नाभिः नहनम् ऋतस्यसत्यस्यवा यज्ञस्यवा। एवंसप्रथाः सर्वतःप्रथुः। सः नःअस्माकम् विश्वायुः

सर्वस्यायुष दाता। सप्रथाःसर्वतस्सप्रथयिता अस्तु। मनःसर्वायुः सप्रथाः। अभग्रासिभूयांसमर्थ-मन्यन्ते। त्वत्प्रसादाञ्च। अपद्वेषः। अपगच्छतुद्वेषः अस्मत्तः। वीतरागाःस्यामेत्यभिप्रायः। अप-ह्वरः। ह्वरःस्खलचलने। अपगच्छतु ह्वर.चलनम् अस्मत्तः। जनित्वाम्रियते मृत्वाजायते इत्ये-तच्चलनमभिप्रेतम्। अन्यव्रतस्यसश्चिम। अन्यत् व्रतंकर्मयस्य मनुष्यकर्मणः सकाशात् जगद-

न्नाभिर्स्तस्यसुप्प्रथाऽ सनोविश्वायुं सुप्प्रथाऽसनं सुर्वायुंसुप्प्रथाऽ ॥ अपुद्वेषोऽअपुह्वुरोन्न्यव्व्रंतस्यसश्चिम ॥२०॥ घर्म्म तत् ॥ घर्मैतत्तेपुरीषुन्तेनुवर्द्धस्वचाचंप्प्यायस्व॥ वुर्द्धिषीमहिंचव्वुयमाचंप्प्यासिषीमहि ॥ २१ ॥ अचिक्कदुद्वृषाहरिम्महान्मित्रोनदर्शतः ॥ स

नुग्रहात्मकंयस्यसतथोक्तः। तस्यकर्मवयं सेवामहे सायुज्यंप्राप्ताःसन्तः ॥ २० ॥ पयसापूरयति। घर्मैतत्। अनुष्टुप्। घर्मउच्यत। हेघर्म एतत् पयः तेतवपुरीषम् पूरयितृ। तेनवर्द्धस्वेत्यादि-व्याख्यातम् ॥ २१ ॥ परिषिञ्चति। अचिक्रदत्पुरोष्णिक्। घर्मात्मना दिव्यःस्तूयते। योयंमहावीरः

प्रहज्यमानः अचिकदत् क्रन्दति.शब्दार्थं । पुनःपुनःशब्दमकरोत् । हपावर्षिता आकृतिपरि-
णामद्वारेण । हरि.हरितवर्णः हर्त्तावारसानाम् महान्प्रभावतः । मित्रोनदर्शतः मित्र-
इवदर्शनीयः । मित्रोहि सर्वस्यैवमित्रम् । संसूर्येणादिद्युतत् । संगत्यसूर्येण सहद्योततेसमा-

सूर्य्येणादिद्युतदुदधिर्न्निधिः ॥ २२ ॥ सुमित्रियानंः ॥ सुमित्रियानु ऽआपुऽओषधयः सन्तुदुर्म्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चवयन्द्विष्मः ॥ २३॥ उद्वयम् ॥ उद्वयन्तमसस्परिस्वः पश्यन्तुऽउत्तरम् ॥ देवन्देवत्रासूर्य्यमगन्म्मज्योतिरुत्तमम् ॥ २४ ॥ एधोसि ॥

नद्ध । उदधि.उदकधारणः । निधियसुखानाम् ॥ २२ ॥ सुमित्रियान उदय मेघोसीतिव्याख्या-
ताखयोर्मंत्रा. ॥ २३ ॥ २४ ॥ २५ ॥ दधिघर्मग्रहणाम् । यावतीद्यावापृथिवी । महाहृतीऐन्द्री-
यावतीयावत्परिमाणे द्यावापृथिव्यौ । यावच्चत्वम् सप्तसिन्धव. सप्तसमुद्राः वितस्थिरे व्याप्नुवन्ति ।

तारन्तम् हेइन्द्र तेतग्रगहम् ऊर्ज्जाअन्नेन सहगृह्णामि । अर्चितमनुपक्षीणम् । मयिगृह्णामि ।
मयीत्यधिकरणनिर्देशः । विज्ञानायेतिशेष. । गृह्णामीत्यादिव्याख्या तम ॥ २६ ॥ भक्षयति ।
मयित्यत् । पङ्क्तिः । यजमानाशी । मयित्यत् तत्इन्द्रियंवीर्यम । बृहत्महत् । अस्तु । मयिचदक्षः
संकल्पमपत्ति.अस्तु । मयिच क्रतु संकल्पः विशिष्टोस्तुः । मयिचधर्म. त्रिशुक् । तिस्र. शुचोसेरतिवि-

एधोस्येधिषीमहिं समिदंसितेजोंसितेजोमयिंधेहि ॥ २५॥ यावंतीद्या
वांपृथिवी ॥ यावंच्चसुप्तसिन्धवोवितस्थिरे ॥ तावंन्तमिन्द्रतेग्ग्रह
मूर्जागृह्णाम्म्यक्षितम्मयिंगृह्णाम्म्यक्षितम् ॥ २६॥ मयित्यत् ॥ मयि
त्यदिंन्द्रियम्बृहन्म्मयिदक्षोमयिक्क्रतुः ॥ घर्म्मस्त्रिशुग्ग्विराजतिव्विरा
जाज्ज्योतिंषासुहब्रह्मंणातेजंसासुह ॥ २७ ॥ पयंसोरेतंः ॥ पयंसो

शुक् । तास्वव्याख्याता शाकलमन्त्रेषु । विराजति विराजत्विति लकारव्यत्ययः । विराजाआ-
दित्याख्येन ज्योतिषासह । ब्रह्मणाब्याख्येन तेजसासह ॥ २७ ॥ किञ्च । पयसोरेतः ।
पयस.यत्रेतः जगदुत्पत्तिबीजम् । आभृतमाहृतम् । दशदोहमपूरणाम् । अग्नीमहिव्याम्वाम ।

उत्तरामुत्तरांसमाम्। उत्तरामुत्तरामिति वीप्सावचनम्। समाशब्दः संवत्सरवचनः। प्रतिसंवत्सरं च। अशीमहि। सदाकालंयायजूकाः स्यामेत्यर्थः। त्विषः संदृक्। सष्ठाव्रतीये भक्षयंद्धिधर्मस्य। यस्त्वम्। त्विषः। दीप्तेः। संदृक्। संपूर्वोदृशिः स्वीकरणेवर्त्तते। दीप्तेः स्वीकरणः। तस्यतव। क्त्वेक्तत्वोरिति विभक्तिव्यत्ययः। साधुक्रतुभूतस्य। दक्षस्य। संकल्पसिद्धिभूरेतऽआश्रंतुन्तस्यदोहमशीमहृत्युत्तरामुत्तराᳬसमाम्॥ त्विषःसंदृक्त्वेदक्षस्पतेसुपुस्मणास्पतेसुपुस्मणाग्निहुतः॥ इन्द्रंपीतस्यप्रजापतिभक्षितस्यमधुमतऽउपहूतऽउपहूतस्यभक्षयामि ॥२८॥ [१०]

## इतिअष्टात्रिंशोऽध्यायः ॥ ३८ ॥

तस्यच। सुपुस्मणस्य साधुसुखभूतस्य। हेसुपुस्म। सुसुखस्वभाव। तेसुपुस्मणाग्निहुतः। पद्यन्तमेतत्। अग्नौहूयतइत्यग्निहुत् तस्याग्निहुतः। अपिचइन्द्रपीतस्य प्रजापतिभक्षितस्य। मधुमतः रसवतः उपहूतः उपहूतस्य ग्रहस्यभक्षयामि ॥ २८ ॥

इति उव्वटकृतौमन्त्रभाष्ये अष्टात्रिंशत्तमोऽध्यायः ॥ ३८ ॥

इति महावीरावस्थान प्रतिपादिकाश्रुतिः ॥ ५ ॥ सविताप्रथमेऽहन्निसाग्न्यः । देवतासंवन्धवि-
धानाश्रुतिः । महावीरप्रायश्चित्तानि समाप्तानि ॥ ६ ॥ उग्रश्च । अग्निकण्डिका । अरण्यध्ययनसा-

प्रसंसिसन्नाश्यमाने व्वायव्व्योक्रियमाणऽ आग्नेयोहूयमानोव्वाग्घु
तः ॥ ५ ॥ सविताप्प्रथमे ॥ हन्नग्निर्द्वितीयेंव्वायुस्तृतीयऽआदित्य
श्चतुर्थेचन्द्रमाः पञ्चमऽऋतुः षष्ठेमरुतः सप्तमेबृहस्पतिरष्टमे ॥
मित्रोनवमेव्वरुणोदशमऽइन्द्रऽएकादशेव्विश्श्वेदेवाद्द्वादशे ॥ ६ ॥
उग्रश्च ॥ भीमश्चध्वान्तश्चधुनिश्च ॥ सासह्वाँश्चाभियुग्वा
चव्विक्षिपः स्वाहा ॥ ७ ॥ अग्निᳬहृदयेन ॥ अग्निᳬहृदयेनाशनिᳬ

मान्यदिक्पाठः । मारुतोगायत्री विमुखाख्या । भीमश्चध्वान्तश्च धुनिश्च । सासह्वांश्च । अभि-
युग्वाच । विक्षिपश्च । अत्रापिच कारःसमुच्चयार्थीय. । एवंसप्तमरुतः ॥ ७ ॥ अग्निंहृदयेन । आशु-

मेधिकम् आ अध्यायसमाप्तेः । अरण्येऽध्येयत्वादिहपाठः । (१) द्वे कण्डिके स्मृति दैवताऽध्याय

हृदयाग्ग्रेणांपशुपतिंकृत्स्नहृदयेनभवंयक्ना ॥ शर्व्वम्मतंस्नाभ्या

मीशानम्मन्युनामहादेवमन्तः पर्श्व्येनोग्ग्रन्देवंव्वनिष्ठहुनाव्वसि

ष्ठहनुः शिङ्गीनिकोश्याभ्याम् ॥ ८ ॥ उग्ग्रँलोहितेन ॥ मित्रꣳसौ

व्रत्यसंवन्धविधानात् ॥ ८ ॥ (२) स्पष्टार्थं. ॥ ९ ॥

(१) तत्रादिम हृदयेन उग्र लोहितेन द्वे कण्डिके ब्राह्मणरूपे देवताश्चावयवसम्बन्धविधानात् अरण्येऽध्येयत्वादिह पाठ । लोमादोन्यङ्गान्येव पठितानि आयासादयो देवता एव ॥ अथ मन्त्रार्थ हृदयेनाग्ने नाग्नि देवं प्रीणामि । हृदयस्याग्रभागेना-ग्नि देव प्रीणामि । समग्रहृदयेन पशुपति देव प्रीणामि । यकृद्यकृत्ता कालखण्डेन भव देव प्रीणामि यकृत इत्या-दिना यकृच्छब्दस्य यकन्नादेश । मतस्ने हृदयास्थिविशेषौ ताभ्या शर्व देव प्रीणामि । मन्युना यमसम्बन्धिक्रोधेन ईशान देव प्रीणामि । अन्तर्वर्तमानेन पर्शव्येन पार्श्वास्थिसम्बन्धिना मांसेन महादेव देव प्रीणामि पर्शव पार्श्वास्थो-नि । वनिष्ठु स्थूलान्त्र तेनोग्र देव प्रीणामि । वसिष्ठहनु वसिष्ठस्य देवस्य हनु कपोलैकदेशो ज्ञातव्य यद्वा वसिष्ठा या हनु कपोलाधो देश तत्परा हनुरित्यमर तत्परा कपोलाधोभागस्था चन्धाहारमिति हनु लिङ्गव्यत्याय वसि-ष्ठहन्वा कोश्याभ्या कोशौ हृदयकोश तत्स्थाभ्या मांसपिण्डाभ्या च शिङ्गीनि शिङ्गिसज्ञानि दैवतानि प्रीणामि ॥ ८ ॥

(२) लोहितेनासृजा उग्र देव प्रीणामि । शोभन व्रत कर्म यस्य स सुव्रतस्तस्य भाव सौव्रत्य शोभनव्रतादिकर्मकर्तृत्वम् ।

(१) इतउत्तरं मवर्ग्ये भेदंप्रायश्चित्तम् स्वाहाप्राणेभ्यः साधिपतिकेभ्यइति पूर्णाहुतिंयावत् ।

* स्वाहांप्प्राणेब्भ्यंः ॥ स्वाहांप्प्राणेब्भ्युः साधिपतिकेब्भ्यः ॥

पृथिव्व्यैस्वाहाग्नयेस्वाहान्तरिक्षायस्वाहांव्वायवेस्वाहां ॥ दिवेस्वाहा

सूर्य्यायस्वाहां ॥ १ ॥ दिग्भ्यःस्वाहां ॥ चन्द्रायस्वाहानक्षत्त्रेब्भ्युःस्वा

हाद्भ्यः स्वाहाव्वरुणायस्वाहां ॥ नाब्भ्यैस्वाहांपूतायस्वाहां ॥ २ ॥

व्वाचेस्वाहां ॥ प्प्राणायस्वाहां प्प्राणायस्वाहां ॥ चक्षुषेस्वाहाचक्षुषे

जुहोति । स्वाहाप्राणेभ्यः । मनोवैप्राणानामधिपतिः । सुहुतमस्तु । प्राणेभ्यः मनसासहितेभ्यः ।

(१) का० स्वाहाप्राणेभ्य साधिपतिकेभ्य इति पूर्णाहुतिमादायसुत्तमां च मनस काममाकूतिमिति । तदर्थोऽयम् अध्वर्युः भूमिर्भूमिम् यज्ञनेचिदिति मन्त्राभ्यां भग्न घर्ममभिमृश्य पुरस्तादिचतुस्त्रि यदाहुतीर्हुत्वा स्वाहाप्राणेभ्य इत्याद्या पूर्णाहुति हुत्वा पृथिव्यै स्वाहेत्याहुतिविंशतिं सकृद्गृहीतेन हुत्वा मनस इत्यन्त्या पूर्णाहुतिं करोतीति ॥

* स्वाहाप्राणेभ्य षड्यथयसर्वाश्नयोदश ।

पृथिव्यैस्वाहेत्यादिस्पष्टम् ॥ १ ॥ २ ॥ ३ ॥ मनसःकामम् । पूर्णाहुतिर्होमः । अनुष्टुप् श्रीदेवत्या यजमानाशीः । मनस्. कामं काममाशिः । आकूतिम् आकवनम् । आत्मनोधर्मो मनसः संयोगेसति जायते । वाचःसत्यम् । यष्टव्य मयेत्यादि । अशीय । प्राप्नुयाम् । अनयापूर्णाहुत्या । किंच । पशूनां-

स्वाहा श्रोत्रायस्वाहाश्रोत्रायस्वाहा ॥ ३ ॥ मनसः कामम् ॥ मन सः काममाकूतिं्वाचः सत्यमशीय ॥ पशूनाᳯरूपमन्नस्यरसोयशः श्रीः श्रयतांमयिस्वाहा ॥ ४ ॥ प्रजापतिः सम्भ्रियमाणः सम्म्रा ट्सम्भृतोवैश्वदेवः सᳯसन्नोघर्मः प्रवृक्तस्तेजऽउद्यतऽआश्विव नः पयस्यानीयमानेपौष्णोविष्यन्दमानेमारुतः क्लथन् ॥ मैत्रः

रूपम् पशुप्रकारः । अन्नमारसः । यशश्च । श्रीश्च श्रयताम् आश्रयन्तु । मयि । मामितिविभक्तिव्यत्ययोवा । यन्मशावीरभेदनेनापचितंतत्सर्वमुप चीयतामित्यर्थः ॥ ४ ॥ प्रजापतिः संम्रियमाण

(१) तथाचानुक्रमणी अग्निठं हृदयेनाश्वमेधिकात्तस्यैवापि लोमभ्यः स्वाहेतिप्रायश्चित्ताहुत

वन्नं॑त्र्येन॒रु॒द्रन्दौवल्ल॑त्र्येनेन्द्रंप्रक्क्रोडेनंम॒रुतो॒ब॑लेन॑साध्यान्प्र॒मुदा॑ ॥ भ॒वस्य॒कण्ठ्यं॑रु॒द्रस्या॑न्तःपार्श्व्यम्म॑हादे॒वस्य॒यक्र॑च्छ॒र्व॑स्य॑व्वनिष्ठुःपंशु॒पतेः॑ पुरीतत् ॥ ९ ॥ लोम॑भ्य॒ः स्वाहा॑ ॥ लोम॑भ्य॒ः स्वाहा॒त्वचे॒ स्वाहा॒त्वचे॒स्वाहा॒लोहि॑ताय॒स्वाहा॒लोहि॑ताय॒स्वाहा॒मेदो॑भ्य॒ःस्वाहा॒ मेदो॑भ्य॒ः स्वाहा॑ ॥ मा॒ꣳसेभ्य॒ः स्वाहा॑मा॒ꣳसेभ्य॒ः स्वाहा॒स्नाव॑भ्य॒ः स्वाहा॒स्नाव॑भ्य॒ः स्वाहा॒स्थभ्य॒ः स्वाहा॒स्थभ्य॒ः स्वाहा॑म॒ज्जभ्य॒ः योऽद्विचत्वारिं॑शत् ॥ १० ॥

तेनमित्र देव प्रीणामि । दुष्टं स्वजनोच्छलनादि व्रतं यथा स दुर्वतः तस्य भावो दौर्वताम् तेन रुद्र देव प्रीणामि । प्रकृष्ट क्रोडन प्रक्रोडं तेनेन्द्र देव प्रीणामि । बलेन सामर्थ्येन मरुतो देवान्प्रीणामि । प्रमुदा प्रकृष्टा मुत् हर्षः प्रमुत् तया साध्यान् देवान् प्रीणामि । भवस्य कण्ठाम् भव पष्ठ्यन्तो देव शब्द प्रथमान्तम् कण्ठ्यं कण्ठे भव मांस भवस्यास्तु विभक्तिव्यत्ययो वाकण्ठ्येन देवं प्रीणामि । एवमग्रेऽपि । पार्श्वसान्तर्मध्ये भव मांसमन्तः पार्श्वं तद्रुद्रस्यास्तु । यकृत् कालखण्ड महादेवस्यास्तु । वनिष्ठु स्थूलान्त्र शर्वस्यास्तु । पुरीतत् हृदयाच्छादकमन्त्रं पशुपतेर्देवस्यास्तु ॥ ९ ॥

(१) लोमभ्य स्वाहेति प्रायश्चित्ताहुतयो द्विचत्वारिंशत् । लोमादीन्यङ्गानि । लोमभ्य. स्वाहा लोमानि जुहोमीत्यर्थः त्वचे

स्पष्टार्थः (१) ॥ ११ ॥ (२) ॥ १२ ॥ (३) ॥ १३ ॥

स्वाहामुज्जभ्यः स्वाहा ॥ रेतसेस्वाहापायवेस्वाहा ॥ १० ॥ आयासायस्वाहा ॥ प्रायासायस्वाहासँयासायस्वाहावियासायस्वाहोद्यासायस्वाहा ॥ शुचेस्वाहाशोचतेस्वाहाशोचमानायस्वाहाशोकायस्वाहा ॥ ११ ॥ तपसेस्वाहा ॥ तप्यतेस्वाहातप्यमानायस्वाहातप्तायस्वाहाघर्म्मायस्वाहा ॥ निष्कृत्यैस्वाहाप्रायश्चित्त्यैस्वाहाभेषजायस्वाहा ॥ १२ ॥ यमायस्वाहा ॥ यमायस्वाहान्तकाय

लोहिताय मेदोभ्यः मेदो धातुविशेष मांसेभ्यः स्नावभ्यः स्नावानः स्नायवो नसाः अस्थभ्यः छन्दसापि दृश्यते इत्यस्थिभ्यः अस्थ्यादिविभक्तिष्वितानङ्डादेशः मज्जभ्यः मज्जा पष्ठो धातुः रेतसे रेतो वीर्यम् ॥ १० ॥ ( १ ) आयासाय आयासादयो देशविशेषाः प्रायासाय संयासाय वियासाय उद्यासाय शुचे शोचते शोचमानाय शोकाय ॥११॥ ( २ ) तपसे तप्यते तप्यमानाय तप्ताय घर्माय निष्कृत्यै प्रायश्चित्यै भेषजाय ॥१२॥ ( ३ ) यमाय अन्तकाय मृत्यवे ब्रह्मणे ब्रह्महत्यायै विश्वेभ्यो देवेभ्यः एते-

इति उवटकृतौ मंत्रभाष्ये एकोनचत्वारिंशत्तमोध्यायः ॥ ३९ ॥

समाप्तं कर्मकाण्डमिदानीं ज्ञानकाण्डं प्रस्तूयते । ईशावास्यम् । तिस्रोनुष्टुभः । दध्यङ्ङाथर्वणस्यापि स्वशिष्यपुत्रं वा गर्भाधानादिभिः संस्कारैः संस्कृतशरीरमधीत वेदमुत्पादितपुत्रं यथाशक्ति अनुष्ठितयज्ञमपापं निस्पृहं यमनियमवन्तम तिथिपूजापनीत किल्बिषं मुमुक्षुमुपसन्नं शिक्षयन्नाह ।

स्वाहा मृत्यवे स्वाहा ॥ ब्रह्मणे स्वाहा ब्रह्महत्यायै स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा द्यावापृथिवीभ्याᳬ स्वाहा ॥ १३ ॥

इति श्रीसंहितायां दीर्घपाठे एकोनचत्वारिंशोध्यायः ॥ ३९ ॥

* ॐ ईशावास्यम् ॥ ईशावास्यमिदᳬ सर्वं यत्किञ्च जगत्यां ज

ईशावास्यम् । इदं सर्वं ईशा । ईश ऐश्वर्ये तृतीयान्तमेतद्रूपम् । यदीशनेन । वासं वसनीयम् ममेदमित्यनया भावनया आच्छादनीयम् । इदं सर्वमिति प्रत्यक्षतो निर्दिश्यत इति यत्किञ्च यत्किञ्च शब्दो-

भो देवेभ्यः सुहुतमस्तु । एताहुतीर्हुत्वा द्यावापृथिवीभ्यां स्वाहेत्यन्त्यामाहुतिं जुहुयात् एतावता कर्मकाण्ड समाप्तम् ॥ १३ ॥

---

* ईशावास्यमष्टावधतमोनवकोसमदश ॥

भिन्नक्रमः। किञ्च। यत्जगत्यां पृथिव्यां जगत्जङ्गमादिस्वस्वामि संबन्धाभिलक्षितंस्यात्। तेनानेनसर्वेण। त्यक्तेन त्यक्तस्वस्वामिसंबन्धेन। भोगान्भुञ्जीथाः अनुभावयस्व। मागृधः। गृधुअभिकाङ्क्षायाम्। माभिकाङ्क्षीः ममेदमितिधियन्त्यज। कस्यस्विद्धनम्। स्विन्निपातो-वितर्कवचनः। कस्यपुनरेतद्धनम् नकस्यचिदपीत्यभिप्रायः। सर्वाण्ययथार्थानि हिद्रव्याण्युत्पद्यन्ते। तद्यथा। स्त्रियमिति अन्यथाभुक्त अन्यथापुत्रः अन्यथाप्रापूर्णकः। तथाकटककेयूरादीन्यलङ्करणा निअन्यंवान्यञ्च पुरुषमुपतिष्ठमानानिदृश्यन्ते। अतःसर्वार्थमायस्वस्वस्वामिसंबन्ध.सात्वविद्या। नि

गंत्॥ तेनत्यक्तेनभुञ्जीथामागृधः कस्यस्विद्धनम्॥ १॥ कुर्व

न्नेव॥ कुर्वन्नेवेहकर्माणिजिजीविषेच्छतꣳसमाः॥ एवन्त्वयिना

स्पृहस्ययोगेधिकार इतिवाक्यार्थः॥ १॥ निःस्पृहस्यापि योगिनोज्ञाननिमित्ते कर्मण्यधिका-रइत्ययेतमर्थमाह। कुर्वन्नेव। कुर्वन्नेवकर्माणि मुक्तिहेतुकानि। इहलोके। जिजीविषेत् जिजीविषेरिति पुरुषव्यत्ययः। प्रत्यक्षत्वान्मंत्रस्य। जीवितुमिच्छेः पथ्यहितमितभक्ष-णेन। शतंसमाः इत्युपलक्षणार्थम्। यावदायुः पर्यवसानमित्यर्थः। एवम्। त्वयितवेति-विभक्तिव्यत्ययः। मुक्तिरस्तीतिशेषः नान्यथेतोऽस्ति। इतःप्रकारात् अन्यथामुक्तिर्नास्ति। एतदुक्तंभवति। यथास्वर्गप्राप्तौनानाभूताः प्रकाराः सन्तिनतथा मुक्तावित्यर्थः। ननुकर्मणः

फलेनभवितव्य मथकथंमुक्तिप्राप्ति रित्येतदाशङ्क्याह। नकर्मलिप्यतेनरे। नहिसत्क्रियमाणां कर्मनरेमनुष्येसंवध्यते मुक्तिप्रदानेनो पक्षीणशक्तित्वात्। तथाच बृहदारण्यकम। तमेतंवेदानुवचनेन विविदिषन्ति। ब्रह्मचर्येणतपसाश्रद्धया यज्ञेनानाशकेनचेति। विविदिषन्ति वेदितुमिच्छन्ति। अनेनैतद्दर्शयति। यावदिच्छा मर्थास्ति तावत्कर्मस्वधिकारइति ॥ २ ॥ इदानीं स्वर्गादि प्राप्तिहेतुभूतानि कर्माणियेकुर्वन्तिते निन्द्यन्ते। आसुर्यानामेति। असुर्याः। परमात्म-

न्यथेतोस्तिनकर्म्मलिप्यतेनरे ॥ २ ॥ असुर्य्यानाम ॥ तेलोकाऽअन्धेनतमसावृताः ॥ तांस्तेप्रेत्यापिगच्छन्तियेकेचात्महनोजनाः ॥३॥ अनेजदेकम् ॥ अनेजदेकम्मनसोजवीयोनैनद्देवाऽआप्नुवन्पूर्व्वमर्शत्॥

भाव मद्वयमपेक्ष्य देवाअप्यसुराः। असुराणां स्वभूताअसुर्याः एवंसंज्ञकास्तेलोकाः अन्धेनतमसाअज्ञानलक्षणेनतमसाआवृता. सर्वतोवृता.। तान्लोकान्तेजनाः प्रेत्यमृत्वाअपिगच्छन्ति। येकेचात्महनोजना.। आत्मानघ्नन्तियेजनाः तेआत्मघ्नः आत्मानघ्नन्तियेस्वर्गप्राप्तिहेतूनिकर्माणिकुर्वन्ति। तेहिजनित्वामृयन्ते मृत्वाचजायन्ते। एवमहर्निशंनाशंप्राप्नुवन्ति ॥ ३ ॥ इदानीमधस्तनयमनियमवतामुमुक्षूणां यथाभूत परब्रह्मआत्मत्वेनोपास्यन्तदाह। उक्तञ्च। मर्हंब्रह्मा-

ग्निसंरुध्यदूर्दंसर्वंचस्वन्मयम 'व्रयंविद्यासमुद्दिष्टाविमुक्तिर्यन्निवन्धनीति ॥ अनेजदेकम् । त्रिष्टुप्
यत् अनेजत् अचलत्तत्वमस्ति एकामद्वितीयम् विज्ञानघनरूपेण । मनसोजवीयः । मनस्ता
यच्छीघ्रभवतिततोपिशीघ्रतरं प्रसवदानेनकारणभूतत्वात् नैनद्देवाआप्नुवन् । नचैतत्तत्वं देवा-
अपिप्राप्तुंगताः सूक्ष्मत्वात् । पूर्वम् अर्षत् । रिशतिर्हिंसाकर्मा । अविनश्यदास्ते । अना-
दिनिधनमित्यर्थः । तद्धावतः तदःस्थानेयदोष्टत्तिरुद्देश्यत्वात् । यच्चधावतः अन्यान् पुरुषादीन्
अत्येतिअतिक्रम्यगच्छति । तथाचतिष्ठत् सर्वत्रस्थितम् । सर्वशक्तित्वं मर्गगतत्वंचानेनव्याख्या-

तद्धावतोन्न्यानत्त्येतितिष्ठत्तस्मिन्नपोमातरिश्वादधाति ॥४॥ तदे
जति ॥ तन्नैजतितद्दूरेतद्वन्तिके ॥ तदन्तरस्यसर्वस्यतदुसर्वस्यास्य

यते । तस्मिन्नपः । अवापियदो वृत्तिमस्मिन्नापः कर्माणिमातरिश्वावायुः दधातिस्थापयति ।
सर्वाणिकर्माणियज्ञदानहोमादीनि समिष्टयजूंषिवायौस्थाप्यन्ते स्वाहावातेधाइतिवायोः प्रति-
ष्ठत्वाभिधात् । समष्टिव्यष्टिरूपोह्यसावितिवायुरपियस्मिन्कर्माणिस्थापयति । यागहोमादीनां
परमन्निधानमित्यर्थः ॥ ४ ॥ एवंकारणरूपमात्मानमुद्दिश्य । अथेदानींकार्यरूपेणोद्दिशति ॥ तदे-
जति । अनुष्टुभस्तिस्रः । तदेवसर्वप्राणिरूपेणावस्थितं सत्एजतिकम्पवद्भवति । क्रियावद्भवति

